काव्यमाला ६.



महाकविश्रीशेषकृष्णप्रणीतं

# कंसवधम् ।



मूल्यं ८ आणकाः ।

KĀVYAMĀLĀ. 6.



THE

# KAMSAVADHA

OF

# ŚEṢAKṚIṢṆA.

EDITED BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT DURGĀPRASĀDA

AND

KAS'ĪNATH PĀṆḌURANG PARAB.

REVISED BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Third Edition.

PUBLISHED

BY

PANDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA SĀGAR' PRESS,

BOMBAY.

1935.

काव्यमाला ६.



महाकविश्रीशेषकृष्णप्रणीतं

# कंसवधम्।



जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मज-
काशीनाथशर्मणा, पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा च संशोधितम्।

तृतीयं संस्करणम्।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम्।

शाकः १८५७, खिस्ताब्दः १९३५.

# काव्यमाला।

## महाकविश्रीशेषकृष्णप्रणीतं

# कंसवधम्।

### प्रथमोऽङ्कः।

प्रारम्भः शुभकर्मणस्त्रिभुवनक्लेशाभिचारागमः
कान्ताकर्षणकर्मकार्मणविधिः कामाद्वितीयश्रुतिः।
हुंकारो मदनस्य निर्वृतिवधूमञ्जीरशिञ्जाध्वनिः
श्रेयः संपदमातनोतु भवतः कंसारिवंशीरवः॥ १॥

अपि च।

वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती
नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि।
विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया
माया पायादपायादविदितमहिमा कापि पैताम्बरी वः॥२॥

---

१. अयं महाराष्ट्राभिजनः शेषोपनामको नृसिंहसूनुः श्रीकृष्णकविः अस्यामकबरबादशाहराज्यसमये ख्रिस्ताब्दीयषोडशशतकस्योत्तरभाग आसीत्. एतन्नाटकं चानेनाकबरमन्त्रिणो राजाटोडरमल्लनाम्नः पुत्रस्य गोवर्धनधारीत्यपरनाम्नो गिरिधारिणः प्रेरणया प्रणीतम्. अनेनैव कविना काशीपरिसरवर्तिताण्डवपुरनृपतेरनुजन्मनो नरोत्तमस्याभ्यर्थनया पारिजातहरणचम्पूरपि निरमायि. नाटकस्यास्य मुद्रणमस्माभिः पुस्तकद्वयाधारेणारब्धमस्ति. तत्र प्रथमं पुस्तकं प्रायःशुद्धमन्तिमपत्ररहितं शतवर्षप्राचीनमिवोपलक्ष्यमाणं जयपरराजवैद्यश्रीकृष्णरामकवेः

# काव्यमाला ।

## महाकवि[1]श्रीशेषकृष्णप्रणीतं

# कंसवधम् ।

### प्रथमोऽङ्कः ।

प्रारम्भः शुभकर्मणस्त्रिभुवनक्लेशाभिचारागमः
कान्ताकर्षणकर्मकार्मणविधिः कामाद्वितीयश्रुतिः ।
हुंकारो मदनस्य निर्वृतिवधूमञ्जीरशिञ्जाध्वनिः
श्रेयः संपदमातनोतु भवतः कंसारिवंशीरवः ॥ १ ॥

अपि च ।

वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती
नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि ।
विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया
माया पायादपायादविदितमहिमा कापि पैताम्बरी वः ॥२॥

---

१. अयं महाराष्ट्राभिजनः शेषोपनामको नृसिंहसूनुः श्रीकृष्णकविः कश्यामकबरबादशाहराज्यसमये ख्रिस्ताब्दीयषोडशशतकस्योत्तरभाग आसीत्. एतन्नाटकं चानेनाकबरमन्त्रिणो राजाटोडरमल्लनाम्नः पुत्रस्य गोवर्धनधारीत्यपरनाम्नो गिरिधारिणः प्रेरणया प्रणीतम्. अनेनैव कविना काशीपरिसरवर्तिताण्डवपुरनृपतेरनुजन्मनो नरोत्तमस्याभ्यर्थनया पारिजातहरणचम्पूरपि निरमायि. नाटकस्यास्य मुद्रणमस्माभिः पुस्तकद्वयाधारेणारब्धमस्ति. तत्र प्रथमं पुस्तकं प्रायःशुद्धमन्तिमपत्ररहितं शतवर्षप्राचीनमिवोपलक्ष्यमाणं जयपुरराजवैद्यश्रीकृष्णरामकवेः

## महाकविश्रीशेषकृष्णप्रणीतं

# कंसवधम्।

### प्रथमोऽङ्कः।

प्रारम्भः शुभकर्मणस्त्रिभुवनक्लेशाभिचारागमः
कान्ताकर्षणकर्मकार्मणविधिः कामाद्वितीयश्रुतिः।
हुंकारो मदनस्य निर्वृतिवधूमञ्जीरशिञ्जाध्वनिः
श्रेयः संपदमातनोतु भवतः कंसारिवंशीरवः॥ १॥

अपि च।

वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती
नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि।
विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया
माया पायादपायादविदितमहिमा कापि पैताम्बरी वः॥२॥

---

१. अयं महाराष्ट्राभिजनः शेषोपनामको नृसिंहसूनुः श्रीकृष्णकविः काश्यामकबरबादशाहराज्यसमये ख्रिस्ताब्दीयषोडशशतकस्योत्तरभाग आसीत्. एतन्नाटकं चानेनाकबरमन्त्रिणो राजाटोडरमल्लनाम्नः पुत्रस्य गोवर्धनधारीत्यपरनाम्नो गिरिधारिणः प्रेरणया प्रणीतम्. अनेनैव कविना काशीपरिसरवर्तिताण्डवपुरनृपतेरनुजन्मनो नरोत्तमस्याभ्यर्थनया पारिजातहरणचम्पूरपि निरमायि. नाटकस्यास्य मुद्रणमस्माभिः पुस्तकद्वयाधारेणारब्धमस्ति. तत्र प्रथमं पुस्तकं प्रायःशुद्धमन्तिमपत्ररहितं शतवर्षप्राचीनमिवोपलक्ष्यमाणं जयपुरराजवैद्यश्रीकृष्णरामकवेः सकाशादधिगतं **क**-चिह्नितम्. द्वितीयं चास्मदीयमेव नवीनं नातिशुद्धं च **ख**-चिह्नितमित्यवधेयम्.

अन्यच्च ।

मुञ्चामुं चण्डिमानं मयि भुजगफणारत्नसंक्रान्तकाय-
च्छायां प्रेक्ष्य स्वकीयामपि मनसि वृथा मा कृथा दुर्वितर्कम् ।
इत्युक्त्वा पादपद्मे सपदि निपततो मूर्ध्नि गङ्गाधरस्य
प्रेङ्खन्तश्चण्डिकायाः शतगुणितरुषः पान्तु वोऽपाङ्गभङ्गाः[1] ॥ ३ ॥

(नान्द्यन्ते ।)

**सूत्रधारः**—अलमतिविस्तरेण । अद्य खलु निखिल[2]वृन्दारकवृन्द-वन्द्यमानपादारविन्दस्य तुहिनगिरिनन्दिनीनयनानन्दनिःस्यन्दकन्दस्य सकलसुरासुरोरगनरकिंनरनिकरगीयमानत्रिपुरदहनावदानस्य त्रिभुवनभ-वनारम्भस्तम्भस्य चतुर्वर्गलक्ष्मीप्रतीक्ष्यमाणकृपाकटाक्षाञ्चलस्य भगवतः श्रीविश्वेश्वरस्य प्रासादपरिसर[3]सीम्नि महानेव कलकलः समुल्लसति । तदत्र यात्राप्रसङ्गसंगतैर्नानादिगन्तवास्तव्यैर्विविधानवद्यहृद्य[4]विद्याविनो-दमोदमानमानसैः सकलकलाकलापकौशलनिकषैर्विदग्धमिश्रैरुपस्थानी-यैर्भवितव्यम् । तद्यावदेतान्निजविज्ञानोपहारेणोपतिष्ठे । यतः ।

बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति
श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् ।
विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथाजर्यं सतां संगतम् ॥ ४ ॥

(परिक्रम्य पादान्तरे स्थित्वा । सविमर्षम् ।) कथमनाहूत एव रङ्गं प्रविश-न्नवज्ञापराहतो नोपहसनीयः स्याम् । यतः ।

---

१. 'भङ्गाः' इति क-पुस्तकपाठः. २. 'निखिल' इति क-पुस्तके नास्ति.
३. 'परिसर' इति क-पुस्तके नास्ति. ४. 'हृद्य' इति क-पुस्तके नास्ति.

नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते
नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते ।
ईर्ष्यारोषकषायिते हृदि घृणालेशोऽपि न स्पृश्यते
किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ ५ ॥

(निमित्तं सूचयित्वा । सहर्षम् ।)

स्पन्दते दक्षिणं चक्षुर्वक्षो विस्फार्यते यथा ।
सामाजिकास्तथा मन्ये नृत्याय त्वरयन्ति माम् ॥ ६ ॥

(आकाशे कर्णं दत्त्वा ।) किं ब्रूथ—'दूराध्वसंचारपरिश्रान्तस्वान्तानस्मान्केनचिदभिनवग्रथितवस्तुना प्रयोगेण भगवत्कृपानुबन्धिना विनोदय' इति । तद्यावदहं गत्वा गृहिणीमाहूय तथा करोमि । (नेपथ्याभिमुखमवलोक्य ।) अये, कथं

रात्रिजागरणायासकषायितविलोचना ।
अद्याप्येषा विशालाक्षी निद्रातन्द्रां न मुञ्चति ॥ ७ ॥

तथा हि ।

स्खलति शिथिलग्रन्थिर्गात्रादसौ (?) सिचयाञ्चलः
स्थगयति कुचौ वामः पाणिः परं धृतवासनः ।
गलति कबरी वक्त्रं लीलालकैः परिभूयते
तदपि नयनानन्दायैषा दशा हरिणीदृशः ॥ ८ ॥

(विमृश्य ।) सुखप्रसुप्तामप्येतां कालातिपातकातरः प्रबोधयामि तावत् । (प्रविश्य ।) आर्ये, कथमद्यापि निद्रासि । ननूदितभूयिष्ठ एव भगवान्किरणमाली । तथा हि ।

मीलत्कैरवलोचनां प्रविगलत्ताराच्छहारावलीं

अन्यच्च ।

मुञ्चामुं चण्डिमानं मयि भुजगफणारत्नसंक्रान्तकाय-
च्छायां प्रेक्ष्य स्वकीयामपि मनसि वृथा मा कृथा दुर्वितर्कम् ।
इत्युक्त्वा पादपद्मे सपदि निपततो मूर्ध्नि गङ्गाधरस्य
प्रेङ्खन्तश्चण्डिकायाः शतगुणितरुषः पान्तु वोऽपाङ्गभङ्गाः[1] ॥ ३ ॥

(नान्द्यन्ते ।)

सूत्रधारः—अलमतिविस्तरेण । अद्य खलु निखिल[2]वृन्दारकवृन्द-वन्द्यमानपादारविन्दस्य तुहिनगिरिनन्दिनीनयनानन्दनिःस्यन्दकन्दस्य सकलसुरासुरोरगनरकिंनरनिकरगीयमानत्रिपुरदहनावदानस्य त्रिभुवनभ-वनारम्भस्तम्भस्य चतुर्वर्गलक्ष्मीप्रतीक्ष्यमाणकृपाकटाक्षाञ्चलस्य भगवतः श्रीविश्वेश्वरस्य प्रासादपरिसर[3]सीम्नि महानेव कलकलः समुल्लसति । तदत्र यात्राप्रसङ्गसंगतैर्नानादिगन्तवास्तव्यैर्विविधानवद्यहृद्य[4]विद्याक्लिनो-द्मोदमानमानसैः सकलकलाकलापकौशलनिकषै[5]र्विदग्धमिश्रैरुपस्थानी-यैर्भवितव्यम् । तद्यावदेतान्निजविज्ञानोपहारेणोपतिष्ठे । यतः ।

बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति
श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् ।
विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथाजर्यं[6] सतां संगतम्[7] ॥ ४ ॥

(परिक्रम्य पादान्तरे स्थित्वा । सविमर्षम् ।) कथमनाहूत एव रङ्गं प्रविश-न्नवज्ञापराहतो नोपहसनीयः स्याम् । यतः ।

---

१. 'भङ्गाः' इति क-पुस्तकपाठः. २. 'निखिल' इति क-पुस्तके नास्ति. ३. 'परिसर' इति क-पुस्तके नास्ति. ४. 'हृद्य' इति क-पुस्तके नास्ति. ५. निकषः सुवर्णपरीक्षणपाषाणः. ६. न जीर्यतीत्यजर्यमिति संगतस्य विशेषणम्. ७. मैत्री.

नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते
नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते ।
ईर्ष्यारोषकषायिते हृदि घृणालेशोऽपि न स्पृश्यते
किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ ५ ॥

(निमित्तं सूचयित्वा । सहर्षम् ।)

स्पन्दते दक्षिणं चक्षुर्वक्षो विस्फार्यते यथा ।
सामाजिकास्तथा मन्ये नृत्याय त्वरयन्ति माम् ॥ ६ ॥

(आकाशे कर्णं दत्त्वा ।) किं ब्रूथ—'दूराध्वसंचारपरिश्रान्तस्वान्तानस्मान्केनचिदभिनवग्रथितवस्तुना प्रयोगेण भगवत्कृपानुबन्धिना विनोदय' इति । तद्यावदहं गत्वा गृहिणीमाहूय तथा करोमि । (नेपथ्याभिमुखमवलोक्य ।) अये, कथं

रात्रिजागरणायासकषायितविलोचना ।
अद्याप्येषा विशालाक्षी निद्रातन्द्रां न मुञ्चति ॥ ७ ॥

तथा हि[1] ।

स्खलति शिथिलग्रन्थिर्गात्रादसौ (?) सिचयाञ्चलः
स्थगयति कुचौ वामः पाणिः परं धृतवासनः ।
गलति कबरी वक्त्रं लीलालकैः परिभूयते
तदपि नयनानन्दायैषा दशा हरिणीदृशः ॥ ८ ॥

(विमृश्य ।) सुखप्रसुप्तामप्येतां कालातिपातकातरः प्रबोधयामि तावत् । (प्रविश्य ।) आर्ये, कथमद्यापि निद्रासि । ननूदितभूयिष्ठ एव भगवान्किरणमाली । तथा हि ।

मीलत्कैरवलोचनां प्रविगलत्ताराच्छहारावलीं
म्लायच्चन्द्रमुखीं विशृङ्खलतमःकेशां सशेषाम्बराम् ।

---

१. 'तथा हि' इति ख-पुस्तके नास्ति.

प्रातः सत्वरमित्वरीमिव बलादुद्गाढरागैः करै-
राकर्षन्निव यामिनीमनुपतत्यम्भोजिनीवल्लभः ॥ ९ ॥

अपि चातिपतति पुरंध्रीगृहाचारसमयः । नन्वेतामेव तावत्प्रभातवेलां पतिव्रताधर्ममनुवर्तमानां दिनकरकुलवधूं पश्यतु भवती । तथा हि ।

उद्बुध्य प्रथमं प्रसाध्य वदनं संमृज्य तारोत्करं
निर्माल्यावकरं ततोऽवतमसैरालिप्य सद्गोमयैः ।
सौरैः स्वस्तिकमण्डलानि किरणैरारम्य निर्मात्यह-
र्लक्ष्मीः स्त्रीसमयागतं सरसिजैः पुष्पोपहारं भुवः ॥ १० ॥

**नटी**—(सहसापसृत्य ।) *एस म्हि । आणवेदु अज्जो किंणिमित्तं महच्चे अ पच्चूसे सद्दाविद म्हि ।

**सूत्रधारः**—आर्ये, त्वरयन्त्येते नानादिगन्तागताः सकलकलाजलधिसांयात्रिका यात्रिकाः संगीतरङ्गप्रसङ्गाय माम् । तत्प्रसाध्यन्तां पात्राणि प्रवेशोचितवर्णिकापरिग्रहेण ।

**नटी**—†को उण एदाणं सामाजिआणं मज्झे णिग्गहाणुग्गहसमत्थो अज्झक्खो जस्स पुरदो णच्चामो ।

**सूत्रधारः**—आर्ये, अयमेव तावदखिलब्रह्माण्डमण्डपमहानटः सृष्टिस्थितिप्रलयनाटिकासूत्रधारः सूत्रात्मा विश्वसाक्षी भगवानिन्दु-

*एषास्मि । आज्ञापयत्वार्यः किंनिमित्तं महत्येव प्रत्यूषे शब्दायितास्मि ।
†कः पुनरेतेषां सामाजिकानां मध्ये निग्रहानुग्रहसमर्थोऽध्यक्षो यस्य पुरतो नृत्यामः ।

१. कुलटामिव. २. 'निपतति' इति क-पाठः. ३. 'सोपसृत्य' इति ख-पाठः. ४. 'मज्झे' इति क-पुस्तके नास्ति. ५. 'अज्झक्खो' इत्यस्य स्थाने ख-पुस्तके "अजउत्तो' इत्यस्ति. ६. 'अये' इति ख-पाठः.

शेखरः । तत्पादपद्मपरिचर्या[1]पर्याप्तप्राप्तसाम्राज्यधुरंधरो गोवर्धनधारिराजश्च ।

**नटी**—*को उण एसो गोवद्धनधारीति भणिज्जइ ।

**सूत्रधारः**—तदाकर्ण्यतां यदि कौतुकम् ।

अस्ति क्ष्मापालमौलिज्वलदमलमणिश्रेणिनिःश्रेणिरोह-
　द्रोचिर्वीचिप्रपञ्चच्छुरितपदनखप्रेङ्खदुधन्मयूखैः ।
येनाकालेऽपि बालारुणकरनिकरो जागरोज्जृम्भमाण-
　ज्योत्स्नाजालैर्जटालं स्फुटमजनि हरिच्चक्रवालान्तरालम् ॥ ११ ॥

अपि च ।

वापी पातालमूलं जलमुरगनदी कच्छपः स्वच्छकन्दः
　शेषो नालं दलानां विततिरपि फणाः कर्णिका शैवशैलः ।
तारास्ताराः परागा मधु च मधुमती केसरा दन्तिदन्ता-
　स्तस्मिन्यत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥ १२ ॥

तस्यास्ति तण्डनकुलामलमण्डनस्य
　श्रीतोडरक्षितिपतेस्तनयो नयज्ञः ।
नानाकलाकुलगृहं स विदग्धगोष्ठी-
　मेकोऽधितिष्ठति गुरुर्गिरिधारिनामा ॥ १३ ॥

तेन चाहं सबहुमानमाहूय ससमाजेनादिष्टोऽस्मि ।

**नटी**—†जइ एवं ता कीस चिन्तापज्जाउलहिअओ विअ चिरअन्तो चिट्ठसि ।

---

*कः पुनरेष गोवर्धनधारीति भण्यते ।

†यद्येवं तत्कस्माच्चिन्तापर्याकुलहृदय इव चिरयंस्तिष्ठसि ।

---

१. 'पर्याप्तप्राज्यसाम्राज्य–' इति क-पाठः.

**सूत्रधारः**—प्रिये, महदेव चिन्तास्थानं सभ्योपस्थानम्। तथा हि।

नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठा-
त्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥ १४ ॥

**नटी**—*अज्ज, जइ एव्वं ता किं ति अप्पा संकडे पाडिज्जइ ।

**सूत्रधारः**—आर्ये,

त्वरयति नृपगोष्ठीसंस्तवख्यातिलिप्सा
जडयति च विदग्धाराधनासाहसिक्यम् ।
इति न समधिकर्तुं रूपकं नो विरन्तुं
प्रभवति बत दोलारोहदुःस्थं मनो मे ॥ १५ ॥

**नटी**—†को उण उआओ विअद्धाराहणस्स ।

**सूत्रधारः**—प्रिये, ममाप्येष विमर्शश्चिरं चेतसि वर्तते । यतः ।

प्राचीं वाचामुदारां नवरसलहरीहारिबन्धान्प्रबन्धा-
नापीय श्रोत्रपात्रैरपहृतहृदया हन्त तर्षप्रकर्षात् ।
गुम्फैः संफुल्लमल्लीसरससुमनसां माधुरीमुद्गिरन्तः
सन्तः संतोषमन्तः कमपि सहृदयास्वाद्यमेते वहन्ति ॥ १६ ॥

अपि च ।

सारस्वते स्रोतसि दूरमग्नैः सुधीवरैरुद्धृतसूक्तिरत्ने ।
न तत्किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम् ॥ १७ ॥

---

*आर्य, यद्येवं तत्किमित्यात्मा संकटे पात्यते ।

†कः पुनरुपायो विदग्धाराधनस्य ।

अन्यच्च ।

निर्मज्याशु सुधीवरैः प्रतिपदं सारस्वतोदन्वतः
　प्रोद्धृत्यापहृतैर्दिगन्तसुलभैः सत्सूक्तिमुक्ताफलैः[1] ।
सद्वर्णैः परिपूर्णकर्णहृदया भूमीभुजोऽमी ततः
　किं मेताननुरञ्जयिष्यति वचोवाचालकाचावली ॥ १८ ॥

(स्मृतिमभिनीय । सहर्षम् ।) आर्ये, दिष्ट्या समासादितः खलु दुरन्तचिन्ताकान्तारसंतारहेतुः । तथा हि ।

पृथ्वीमण्डलमौलिमण्डनमणिः श्रीमन्नृसिंहात्मजः
　कृत्वा कृष्णकविः कुतूहलवशादस्मासु यन्न्यक्षिपत् ।
नाट्यं कंसवधाभिधानमधुना तस्य प्रयोगोद्यमं
　विद्वद्राजसमाजमानसमहानन्दाय विन्दामहे ॥ १९ ॥

**नटी**—(अपवार्य ।) *कहं सो वि कवीणं मज्झे संभाविज्जइ ।

**सूत्रधारः**—अयि मुग्धे, किमेवमाशङ्कसे । यतः—

　चतुर्दशसु विद्यासु परिकर्मितचेतसः ।
　कवितेति कियन्नाम तस्याश्चर्यं विपश्चितः ॥ २० ॥

**नटी**—†णं भणामि पसाअकविणो विअ तस्स वि पण्डिअकइणो वाणी विअद्धजणस्स पज्जुत्ता भोदि त्ति ।

**सूत्रधारः**—बाढम् । यतः—

---

*कथं सोऽपि कवीनां मध्ये संभाव्यते ।

†ननु भणामि प्रसादकवेरिव तस्यापि पण्डितकवेर्वाणी विदग्धजनस्य पर्युक्ता भवति ।

---

1. 'मुक्ताभरैः'. इति क-पाठः.

मौलौ मन्दारदामभ्रमदलिपटलीकाकलीं श्रोणिबिम्बे
कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरशिञ्जाम्।
उत्सङ्गे कीरगीतं स्तनभुवि मसृणं वल्लकीपञ्चमं वा
तत्काव्ये दत्तकर्णा शिवशिव मनुते भारती भारमेव ॥ २१ ॥

अपि च।

यः पीयूषमयूखधामनि सुधासाराच्छकच्छेऽपि यः
क्षुभ्यत्क्षीरसमुद्रसान्द्रलहरीलावण्यपूरेऽपि यः।
यः कान्ताधरपल्लवे मधुरिमा नासौ समुद्गाहते
श्रीविद्वत्कविकृष्णपण्डितवचोवीचीसमीचीनताम् ॥ २२ ॥

नटी—*अज्जउत्त, णं सुणीअदि सद्दाणुसासणे दिढं कदब्भासो एसो त्ति।

सूत्रधारः—आर्ये, भूषणमेतन्न दूषणं कवीनां व्याकरणकोविदतेति। तथा हि।

[1]रसालंकारसारापि वाणी व्याकरणोज्झिता।
[2]श्वित्रोपहतगात्रेव न रञ्जयति सज्जनान् ॥ २३ ॥

नटी—(सोद्वेगम्।) †अण्णं भणामि। विसविसमविसहरवइजीहासहस्सणीसरिअवक्ककक्कसविअडवअणोवण्णासणिच्चाहिओअफंसदूसिआ तस्स जीहा कहं महुरमहुर[3]रसलालसाइं रसिअजणमणाइं रञ्जइस्सदित्ति णत्थि मे हिअअस्स आसङ्को।

*आर्यपुत्र, ननु श्रूयते शब्दानुशासने दृढं कृताभ्यास एष इति।

†अन्यद्भणामि। विषविषमविषधरपतिजिह्वासहस्रनिःसृतवक्रकर्कशविकटवचनोपन्यासनित्याभियोगस्पर्शदूषिता तस्य जिह्वा कथं मधुरमधुररसलालसानि रसिकजनमनांसि रञ्जयिष्यतीति नास्ति मे हृदयस्यासङ्कः।

१. 'रसालंकारसंपन्ना' इति क-पाठः. २. 'श्वित्रोपहतगात्रेव' इति ख-पाठः. ३. 'रसालसाइं' इति क-पाठः. 'रसालसानि' इति तच्छाया.

**सूत्रधारः**—(विहस्य ।) अयि मुग्धे न खलु निसर्गमधुरोदारप्रकृतयो वाचः सांसर्गिकैर्दोषैरुपहन्यमाना अपि स्वाभाविकं[1] गुणमतिवर्तन्ते । पश्य तावत् ।

ध्माता भालतलानलैः कवलिता कण्ठोत्थहालाहलै-
रालीढाथ जटाटवीवलयितैराशीविषाणां गणैः ।
कीर्णा भस्मभिराहतास्थिपटलैर्विद्धा जटाग्रैरपि
स्वीयामुज्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥ २४ ॥

**नटी**—(सोत्प्रासम् ।) *अज्ज, एवं णेदम् । णं भणामि तह वि दुज्जणा अवज्जणिज्जा जह अणुमेत्ते वि अम्हाणं कुसीलवाणं खलिदे ण पडिहसन्ति ।

**सूत्रधारः**—आर्ये, अलमनया चिन्तया । निसर्गः खलु स तादृशां[2] नोपायसहस्रैरपि विपरिणमयितुं[3] शक्यः । यतः—

अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति ।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ २५ ॥

तदलं कालातिपातेन । प्रस्तूयतां प्रावेशिकं संगीतकम् ।

**नटी**—†कं उण समअं समस्सिअ गाइस्सम् ।

**सूत्रधारः**—नन्विममेवाचिरप्रवृत्तं सर्वसुखाकरं प्रावृट्समयमाश्रित्य गीयताम् । इह हि ।

---

*आर्य, एवमेतत् । ननु भणामि तथापि दुर्जना आवर्जनीया यथाणुमात्रेऽप्यस्माकं कुशीलवानां स्खलिते न प्रतिहसन्ति ।

†कं पुनः समयं समाश्रित्य गास्ये ।

---

१. 'स्वाभाविकगुणात्नातिवर्तन्ते' इति ख-पाठः. २. 'तादृशः' इति ख-पाठः. ३. 'विनिमयितुं' इति ख-पाठः.

मृदितमृदुमृदङ्गध्वानधिक्कारिमेघ-
ध्वनिमुदितमयूरीमन्द्रकेकोपगीताः ।
सजलजलद[1]जालानीलनेपथ्यलक्ष्य-
[2]क्षणरुचिरुचिराङ्ग्यः स्वैरमाशा नटन्ति ॥ २६ ॥

**नटी**—*तह । (इति गायति ।)

पणमह जलहरसमअं विज्जुज्जलसोम्मसामसुहअसिरिम् ।
[3]जं दट्ठूण दिसाणं कदम्बमउलेहिँ होन्ति पुलआइं ॥ २७ ॥

**सूत्रधारः**—(सहर्षम् ।) आर्ये, सम्यगुपलक्षितं भवत्या । स[4]कलमङ्गलालयः किलायं समयः । तथा हि ।

[5]वसुदेवदुःखहारी नारीनयनोत्सवो जलदकालः ।
शौरिरिव [6]सीरिमित्रं [7]कंसंमदविच्युतं कुरुते ॥ २८ ॥

(नेपथ्ये ।)

आः पाप, कोऽयमलीकवैतालिकः सकलसुरासुरचक्रचूडामणिमयूखमांसलप्रतापाग्निनिर्दग्धवैरिजातस्य त्रिभुवनजयलक्ष्मीविभ्रमावासमण्डपस्तम्भायमानप्रचण्डभुजदण्डस्य सकलवीरवंशावतंसस्य कंसस्यापि मदप्रच्यवमभिलषन्वाचाटतां प्रकटयति ।

---

*तथा ।

प्रणमत जलधरसमयं विद्युदुज्ज्वलसौम्यश्यामसुभगश्रियम् ।
यं दृष्ट्वा दिशां कदम्बमुकुलैर्भवन्ति पुलकानि ॥

---

१. 'जलदलीलानील' इति ख-पाठः. २. 'क्षणरुचिरुचिरम्याः' इति ख-पाठः. ३. 'जस्सिं दहदिसाणं' इति क-पाठः. 'यस्मिन्दशदिशां' इति तच्छाया. ४. 'सर्व' इति ख-पाठः. ५. वसुदेवः श्रीकृष्णजनकः. जलदकालपक्षे त्वस्फुटोऽर्थः. ६. सीरी बलदेवः; (पक्षे) सीरिणो हालिकाः कर्षका इति यावत्. ७. कंसः कृष्णमातुलः. तं मदविच्युतं निर्मलं कुरुते; (पक्षे) कं जनं संमदेन हर्षेण विच्युतं रहितं कुरुते. अपि तु न कमपि.

**नटी**—(सोत्कम्पम् ।) *अज्ज, को एसो जस्स आआलिअप्पलअवादविहडन्तबम्हण्डखण्डपप्फुरन्तघोरणिग्घोसबोलन्तदहदिहामुहो एक्ककालगज्जन्तदिग्गअविमुक्कविक्कारकक्कसो कण्ठधुणी सुणीअदि ।

**सूत्रधारः**—अये, ममाप्ययमपरिचितः । (निपुणं निरूप्य ।) नूनमसौ

असद्वचःप्रतिफलन्निजनामधेय-
　　वर्णावलीश्रवणरोषकषायिताक्षः ।
आभङ्गुरभ्रुकुटिभीषणभालपट्टः
　　कंसः[1] करालकरवालनिविष्टमुष्टिः ॥ २९ ॥

न तदस्य पुरतः स्थातुमस्माकमुचितम् । यतः ।

पितरं भगिनीं भामं[2] भागिनेयाञ्जिघांसता ।
तृणीकृता घृणा येन स किमस्मानुपेक्षते ॥ ३० ॥

तदेहि । अन्यतो गच्छावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशति यथानिर्दिष्टः कंसः ।)

**कंसः**—(साटोपं परिक्रम्य । सक्रोधम् ।) किमात्थ रे, किमात्थ 'कंसं मदविच्युतं कुरुते' इति । ननु रे, नाद्यापि विदितस्ते त्रिभुवनैकवीरो निर्मिताशेषदुर्मदध्वान्तध्वंसः कंसः ।

यद्दोर्दीप्यत्प्रतापानलबहलवलज्ज्वालजालावलीढः
　　शिश्ये शौरिः पयोधौ तुहिनगिरिदरीष्वन्धकारिर्[3] निलिल्ये ।

---

*आर्य, क एष यस्याकालिकप्रलयवातविघटमानब्रह्माण्डखण्डप्रस्फुरद्घोरनिर्घोषशब्दायमानदशदिङ्मुख एककालगर्जद्दिग्गजविमुक्तचीत्कारकर्कशः कण्ठध्वनिः श्रूयते ।

---

१. 'हस्ते' इति ख-पाठः.　२. भामं भगिनीपतिम्.　३. अन्धकारिः शिवः.

ब्रह्मा पद्मासनः सन्नमयति समयं तापसच्छद्मना त-
द्रक्षोयक्षोरगाणामिह बत कतमो वीक्षितं मे क्षमेत ॥ ३१ ॥

(हस्तौ निष्पीड्य ।) ननु रे,

कारागारनियन्त्रितासुरसुरस्त्रीनेत्रकादम्बिनी-
निर्यद्वारिसरिज्झरव्यतिकरैर्निर्वाप्यमाणोऽपि यः ।
उच्चैरौर्व इव प्रजिज्वलयिषुर्ब्रह्माण्डमुज्जृम्भते
कस्तं वा मम दोर्मदं दमयितुं जागर्ति लोकत्रये ॥ ३२ ॥

(नेपथ्ये ।)

आः, कथमित्थं विकत्थसे । ननु रे,

यस्ते मदं दमयिता दनुजेन्द्रकालो
बालः स कोऽपि भगवान्कचिदप्रमेयः ।
संवर्धते गिरिगभीरगुहाविहार-
तन्द्रालुकेसरिकिशोर इवाविभाव्यः ॥ ३३ ॥

कंसः—(सातङ्कम् ।) कथमियमाकाशे दुरुपश्रुतिः श्रूयते । न चाशरीरा दैवी वागर्थेन विसंवदते कथंचित् । संभावितश्चायमर्थः । निसर्गविद्वेषिणो हि देवा बहुधास्माभिः कदर्थिता वैरप्रतियातनाय स्वयमशक्ता अपि बहुधावतीर्णमेव पुराणपुरुषं पुनरवतारयिष्यन्तीति । कथितश्चायमर्थः । पूर्वमप्यन्तरिक्षचारिण्या वाण्या वसुदेवेन निवृत्तपाणिग्रहणां स्वसारं देवकीं प्रस्थापयतो मम । यथा—'अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध' इति । तदाकर्ण्य च ततः प्रतीपमाशङ्कमानेन मया देवकीवसुदेवौ दृढनिगडयन्त्रितौ कारागरमारोपितौ । तद्गर्भाश्चोत्पतन्त एव बहवो व्यापादिता एव । संप्रति

१. 'बहुधावतीर्णं तमेव' इति क-पाठः.

तु शिलातले निपात्यमानया दारिकया योगमायया हस्तादुत्प्लुत्य गगनतलमुत्पतितया प्रागुक्तमेव । नारदेनापि पुनरुक्तं यत्किल 'वसुंधराभारावताराय गृहीतवर्णिकान्तरः कपटपटुर्बटुनाटितकेन वैकुण्ठनाथः सपरिजनो गोकुले प्रच्छन्नरूपः संचरति' इति । तदस्यानर्थबीजस्य प्रतिक्षेपे नोपेक्षितुं युक्तम् । भवतु तावत् । (प्रकाशम् । नेपथ्याभिमुखम् ।) कः कोऽत्र भोः ।

(प्रविश्य ।)

**दौवारिकः**—*जयदु जयदु महाराओ । एसम्हि ।

**कंसः**—हेमाङ्गद, समाहूयतां महामात्यः ।

**हेमाङ्गदः**—[1]जं देवो आणवेदि । (इति निष्क्रम्य तेन सह प्रविश्य ।) इदो इदो महामच्चो । एसो महाराओ तुमं चिरं पडिक्खन्तो चिट्ठदि । ता उपसप्प णम् । (संकृतमाश्रित्य ।)

हेलोत्खातदिगन्तदन्तिदशनैः संस्त्यानदानद्रव-
द्रोणीश्यामलकान्तिभिर्विरचितं सिंहासनं मण्डयन् ।
रज्यल्लोचनकोणशोणकिरणं चन्द्रातपत्रं दध-
त्सर्वन्दीकरचामरैः परिचितो देवोऽयमास्ते पुरः ॥ ३४ ॥

**महामात्यः**—(पुरोऽवलोक्य । राजानं निर्वर्ण्य ।) कथमयं रसान्तरावेशविलक्ष इवालक्ष्यते । तथा हि ।

निःश्वासैः परुषैर्विशुष्यदसकृद्व्यादश्यमानाधरं
खिद्यद्भालकपोलरागमधिकं नेत्रेऽरुणिम्नार्जयन् ।

---

*जयतु जयतु महाराजः । एषोऽस्मि ।

[1]यद्देव आज्ञापयति । इत इतो महामात्यः । एष महाराजस्त्वां चिरं प्रतीक्षमाणस्तिष्ठति । तदुपसर्पैनम् ।

---

१. 'कपटपटुपटु–' इति ख-पाठः. २. 'नेत्रारुणिम्ना' इति क-पाठः.

वक्रं किंचिद्[1]वाञ्चयन्नुपरतव्यापारमन्तश्चिरं
चिन्ताकुञ्चितलोचनाञ्चलमहो देवः परिध्यायति ॥ ३५ ॥

तदत्र महता केनचिद्भयरोषद्वै[2]राज्यावेशबीजेन भवितव्यम् । भवतु परिज्ञास्यामि तावत् । (उपसृत्य ।) जयतु जयतु महाराजः ।

कंसः—महामात्य, इत आस्यताम् ।

महामात्यः—(उपविश्य ।) देव, दिष्ट्या वर्धसे ।

स्वैरास्वादितशत्रुशोणितमधुव्याघूर्णमानाङ्गया
बन्दीभूतसुरेन्द्रवृन्दवनिताबाष्पाम्बुभिः स्नातया ।
स्फूर्जत्पावककान्तकीर्तिवसनप्रान्तेन संवीतया
निर्व्याजं परिरभ्यते तव भुजस्त्रैलोक्यराज्यश्रिया ॥ ३६ ॥

तत्किमपि चिन्तानिमित्तं ज्ञातुमिच्छामि ।

कंसः—किमिह चिन्तास्थानम् । यतः ।

निष्कण्टकं विगतवैरमपास्तशङ्कं
दासीकृतामरगणं हृतदिक्करीन्द्रम् ।
त्रैलोक्यमेव विहितं दनुजेश्चिरं त-
च्चिन्तानिमित्तमिह नस्तु किमस्तु वस्तु ॥ ३७ ॥

तथापि दुरुपश्रुतिश्र[3]वणसंभवशङ्कापिशाचिका किमप्युत्तरलयति मे चेतः । तथा हि ।

रिपुरिति दुरुपश्रुतिः श्रुतिं मे व्यथयति यद्यपथातथं तथापि ।
जलधररसितं प्रकोपहेतुर्भवति हि बृंहितशङ्कया मृगारेः ॥ ३८ ॥

महामात्यः—महाराज, कासौ दुरुपश्रुतिः ।

---

१. 'इवाञ्चयन्' इति ख-पाठः. २. 'द्वैराज्यदोष-' इति ख-पाठः. ३. 'श्रवणशङ्कापिशाची' इति क-पाठः.

(कंसः 'यस्ते मदं दमयिता' इत्यादि पठति ।)

**महामात्यः**—(स्वगतम् ।)

नैषा मृषा भवितुमर्हति देववाणी
　नाणीयसीमपि नृपोऽर्हति हन्त चिन्ताम् ।
किं संप्रति प्रतिविधेयमिह प्रतीपे
　दैवे प्रयुक्तमखिलं खिलतां[1] प्रयाति ॥ ३९ ॥

भवतु तावत् । (प्रकाशम् ।) महाराज, अलमनया चिन्तया । यतः ।

दर्पोद्धुरेषु चतुरङ्गबलाधिकेषु
　भ्रूभङ्गमात्रपरिनिर्जितनिर्जरेषु ।
त्वत्पादमूलपरिवर्तिषु मादृशेषु
　नामापि शत्रुरिति हन्त कुतः[2] प्रसिद्धम् ॥ ४० ॥

या चेयं दुरुपश्रुतिरित्युदाहृता देवेन तन्न किंचिदेतत् । यतः ।

पदे पदे प्रस्खलता मोहोपहतचेतसाम् ।
सुरोपजीविनामित्थं[3] प्रलापा नहि दुर्लभाः ॥ ४१ ॥

अन्यच्च विज्ञापयामि—भूतार्थमेतदुदाहृतं देवस्य । नीतिशास्त्रं पुनरन्यादृशम् । तथा हि ।

नावज्ञेयो रिपुरिति लघुः क्षीणसत्त्वोऽपि विज्ञै-
　र्हन्तारण्यं दहति शनकैः संचिताङ्गः स्फुलिङ्गः ।
किं च न्यञ्चन्निभृतनिभृताकुञ्चिताङ्गो बिडालः
　कालापेक्षी ग्रसति सहसालक्षितोत्फालमाखुम् ॥ ४२ ॥

न च संप्रत्यव्यञ्जितविक्रिया इति विस्मृतवैराः संभावयितुमर्हाः । नीतिर्हि तादृशी भविष्णूनाम् । यदुदाहरन्ति—

---

१. व्यर्थत्वमित्यर्थः. २. 'न नः' इति क-पाठः. ३. सुराया मद्यस्य; (पक्षे) सुराणां देवानाम्.

'कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत् ।
प्राप्ते तु काले नीतिज्ञ उत्तिष्ठेत्कालसर्पवत्' ॥ ४३ ॥ इति ।
विशेषतश्च न बहुशोऽपक्रियमाणा विश्वसनीयाः । अविश्रमो हि वैरनिर्यातनाधिकारः । तथा हि ।

उदितमुदितं हन्ति ध्वान्तं सहस्रकरः करै-
र्निहतनिहतं भूयो भूयस्तमः परिजृम्भते ।
विरमति तमो नेदं नायं निषीदति भानुमा-
न्न खलु विकसद्वैरा धीराः कथंचिदुदासते ॥ ४४ ॥

तदत्रावश्यमकुतोभयेनापि संनिहितात्याहितेनेव देवेनावहितेन भवितव्यम् । यतः ।

क्रूराः केसरिणस्तुषारशिखरिद्रोणीषु संशेरते
नागेन्द्रा अपि संचरन्ति विकटे विन्ध्याटवीकोटरे ।
धत्तेऽसौ भुजगेश्वरोऽपि धरणिं पातालमूले वस-
न्न्यायः पौरुषभूषणा नयविदो जातु प्रमाद्यन्ति न ॥ ४५ ॥

**कंसः**—एवमेतत् । किं तु चिन्तयामि, कथममी प्रच्छन्नकौलिकाः कपटपटवः सर्व एकपद एव सुनिग्रहा इति ।

**महामात्यः**—(चिरं विचिन्त्य ।) महाराज,

यज्ञायत्तं जीवितं देवतानां यज्ञाः साङ्गा ब्राह्मणेष्वायतन्ते ।
ते चाप्येते धर्मकर्मैकमूला मूले छिन्नेऽस्तैव वार्तामराणाम् ॥ ४६ ॥

एषु च निगृहीतेषु सर्वनिदानमेकादशात्मा विष्णुरपि सुनिग्रहः । यत्स्मरन्ति—

---

१. 'कृष्णसर्पवत्' इति पञ्चतन्त्रादिधृतः पाठः. २. 'संनिहितमृत्याहितेनेव' इति ख-पाठः.

'विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ।
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनुः' ॥ ४७ ॥ इति ।

कंसः—ममाप्येष परामर्शः । (नेपथ्याभिमुखमवलोक्य ।) कः कोऽत्र भोः ।

वेत्रहस्तः पुरुषः—*जयदु जयदु भट्टा । एसोम्हि । आणवेदु भट्टा ।

कंसः—वेत्रधर, समादिश निदेशवर्तिनः[1]—

हन्यन्तां द्विजदेवसेवनपराः सर्वेऽपि वर्णाश्रमा
ध्वंस्यन्तां दमदानसत्यनियमस्वाध्याययज्ञादयः ।
पीड्यन्तां च तपोवनानि परितस्तीर्थानि पुण्याश्रमा
बध्यन्तामचिरात्सुरा हरिहरब्रह्मादयः सानुगाः ॥ ४८ ॥

वेत्रहस्तः—†जं भट्टा आणवेदि । (इति निष्क्रान्तः ।)

कंसः—महामात्य, त्वमपि स्वं नियोगमशून्यं कुरु । वयमप्यनन्तरकरणीयाय प्रयतामहे[2] ।

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

## द्वितीयोऽङ्कः ।

(ततः प्रविशति तालजङ्घः ।)

तालजङ्घः—आदिष्टोऽसि तत्रभवता महामात्येन यत्किल 'अस्मद्दुर्गनिसर्गवैरिणः पुराणपुरुषस्य नराकारधारिणः क्वापि[3] प्रच्छन्नः प्रभवः

---

*जयतु जयतु भर्ता । एषोऽस्मि । आज्ञापयतु भर्ता ।
†यद्भर्ताज्ञापयति ।

---

१. 'उपजीविनः' इति ख-पाठः. २. 'सज्जीभवामः' इति ख-पाठः.
३. 'क्वचित्' इति ख-पाठः.

श्रूयते । तत्प्रवृत्तिमुपाहर' इति । तत्किमत्र प्रतिपद्ये । यतः—

अन्विष्टा गिरिकंदरोदरसरित्कान्तारपुण्याश्रमाः
स्वःपातालमहीतलेषु परितश्चारैश्चरद्भिश्चिरम् ।
नाभूत्कर्णपथातिथिर्दितिकुलारातिप्रथा सर्वथा
तत्किं वाद्य निवेदयाम्यविदितादिष्टार्थसारः प्रभुम् ॥ १ ॥

(चिरं विचिन्त्य । दीर्घं निःश्वस्य ।) हन्त भोः,

अघटनघटनपटीयानेकः किल केवलं कालः ।
संभाव्यतेऽद्य डिम्भाज्जृम्भारिजितोऽपि यत्प्रभोर्भीतिः ॥ २ ॥

(स्मृतिमभिनीय सहर्षम् ।) अये, अस्ति किलैषा किंवदन्ती । यत्—

'यशोदया लाल्यमानो नन्दगोपस्य गोकुले ।
विडम्बयन्बाललीलां वासुदेवोऽभिवर्धते' ॥ ३ ॥ इति ।

तं चातिमानुषगुणाकृतिपौरुषाद्यै-
रद्यं पुमांसमनुमाय निहन्तुमेनम् ।
प्राक्प्रेषिताः शकटधेनुकपूतनाद्या
नाद्यापि हन्त विनिवर्तितुमुत्सहन्ते ॥ ४ ॥

भवतु । तावद्गोकुलपरिसरमेवानुसरामि । (इति परिक्रम्य पुरोऽवलोक्य ।) अये, कथमयं गोकुलनिवासी गोपानां सौवस्तिको[1] ब्राह्मण इत एवाभिवर्तते । तदस्मादेव निःशेषां प्रवृत्तिमुपालप्स्ये । (उपसृत्य ।) गर्ग, प्रणम्यसे ।

**गर्गः**—कुशली भव ।

**तालजङ्घः**—कियद्दूरं प्रस्थितोऽसि ।

**गर्गः**—नन्दादेशाद्गोकुलोत्पातानुपशमयितुं ध्रुवतीर्थं गच्छामि ।

**तालजङ्घः**—अथ किं गोकुले ।

---

१. स्वस्तिकृत्. पुरोहित इति यावत्.

**गर्गः**—महत्येव दुरवस्था हा कष्टं कष्टं समाधीयते[1] । तथा हि ।

वेतालग्रहपूतनाप्रभृतयो बालग्रहाः शान्तिकै-
नीता बल्युपहारमन्त्रमणिभिः शान्तिं कथंचिन्मया ।
उत्पाताः शकटासुरप्रभृतिभिर्दैत्यैः कृतास्ते पुन-
र्बालेनाद्भुतकर्मणा स्वयमहो कृष्णेन नीताः क्षयम् ॥ ५ ॥

**तालजङ्घः**—(स्वगतम् ।) तदेतत्प्रस्तूयते यदर्थोऽयमस्माकमायासः । (प्रकाशम् ।) स्पष्टं तावत्प्रपञ्चतां कः केन हत इति ।

**गर्गः**—

पूर्वं कौचिदुपस्थितौ तरुवरव्याजेन नन्दाङ्गणे
बुद्ध्वाकस्मिकमेष रिङ्गणपरो बालो विशालोर्जितः[2] ।
मात्रा मध्यनिबद्धदामकलितान्तोलूखलाकर्षणा-
दारुग्णौ[3] यमलार्जुनौ समहरद्दीर्घार्तघोरस्वरौ ॥ ६ ॥

**तालजङ्घः**—(स्वगतम् ।) तावेतौ नारदशापवशादवाप्ततरुभावौ नलकूबरमणिग्रीवौ भगवत्संनिधानैकोपनेयशापान्तौ कुबेरतनयौ । (पुनः सातङ्कम् ।) तन्नूनमयमेव भगवतोऽवतारो बाललीलामनुभवन्भविष्यति । भवतु । ज्ञास्यामि तावत् । (प्रकाशम् ।) अथापरमावेदय ।

**गर्गः**—

कंसादेशवशात्प्रविश्य शिबिरं नन्दाङ्गणेऽवस्थितं
पापिष्ठं शकटं विभाव्य कपटं बालोऽथ कालोपमः ।
तत्सौवस्तिकविप्रवाचनविधिव्यग्रीभवच्चिन्तया
मात्रा किंचन वञ्चितः क्षितितले क्षुत्क्षामदेहो लुठन् ॥ ७ ॥

**तालजङ्घः**—(साकष्टम्भम् ।) ततस्ततः ।

---

1. 'कष्टं कष्टं समास्थीयते' इति ख-पाठः. 2. 'विशालोर्जितौ' इति ख-पाठः. 3. 'आभुग्नौ' इति ख-पाठः.

गर्गः—

क्षीरस्यार्तिभरोत्क्षिप्तचरणाङ्गुष्ठनोदितम् ।
पर्यास्थच्छकटं कूटं जर्जराङ्गास्थिपञ्जरम् ॥ ८ ॥

तालजङ्घः—अहह, असमञ्जसमसमञ्जसम् । अथान्येषां को वृत्तान्तः ।

गर्गः—

वात्यावर्तविवर्तनव्यतिकरादादाय बालं बला-
दन्धीकृत्य जनं जवादुदपतद्दूरं तृणावर्तकः ।

तालजङ्घः—(साश्वासम्[1]।) ततस्ततः ।

गर्गः—

तं च क्ष्माधरभारभूरिगरिमा व्यालम्ब्य कण्ठे हठा-
दायच्छन्समपोथयत्पृथुशिलापट्टे निपात्यार्भकः ॥ ९ ॥

तालजङ्घः—अहो दुरवस्थेदानीं जेयास्था[2] ।

यस्मिन्धावत्यमरनगरीलुण्ठनोत्सर्पिदर्प-
स्फूर्जज्जङ्घाजवपरिणमच्चण्डवात्याविवर्तैः ।
उच्चैर्भ्राम्यन्नभसि निदधे शृङ्गमुत्पाट्य मेरोः
क्रन्दत्संक्रन्दनमधुकरं लूननालं यथाब्जम् ॥ १० ॥

तस्यापि ते मनुष्यगर्भादपीदृशी दशा ।

गर्गः—

रिष्टोऽपि दुष्टदिष्टाकृष्टः कण्ठावगुण्ठने तिष्ठन् ।
दष्टोऽच्युतेन दशनैर्दृष्टो[3] नष्टः क्षणार्धेन ॥ ११ ॥

---

१. 'साश्वासम्' इति ख-पुस्तके नास्ति. २. 'जयावस्था' इति क-पाठः.
३. 'दुष्टो' इति ख-पाठः.

तालजङ्घः—हा धिक्, कष्टं भोः । अथ पूतनायाः का वार्ता ।

गर्गः—यापरेषाम् । तथाहि ।

कृत्वा रूपं त्रिभुवनमनोमोहनं पाययन्ती
स्तन्यं हालाहलमयमथानेन निष्पीतसारा ।
हा धिक्कष्टं किमपि सहसा राक्षसी पर्यणंसीत्

तालजङ्घः—(सोत्साहम् ।) ततस्ततः ।

गर्गः—

क्रूराक्रन्दैर्बधिरितजगत्तत्क्षणाच्च व्यरंसीत् ॥ १२ ॥

तालजङ्घः—हा वत्से, अनूष्मणि शलभायितासि ।

घुणेन प्रोत्कीर्णा तदहह शिला वज्रघटिता
न शम्पासंपातात्किमपि शतधाशीर्यत तृणैः ।
विलिल्ये प्रालेयक्षितिरपि न खद्योतमहसा
यदाधत्से वत्से किमपि नरडिम्भादभिभवम् ॥ १३ ॥

(दीर्घमुष्णं च निःश्वस्य ।)

स्वाराज्यैकफले रिपुक्षयमखे देवद्विजाघारके[2]
कंसस्यानुशयानलेऽसुरयशःक्षीराहुतीर्जुह्वता ।
त्वं धाय्या[3] विहितासि हन्त विधिना वत्से न जाने पुनः
का पूर्णाहुतिरुत्तमा तदमुना क्रूरेण कारिष्यते ॥ १४ ॥

गर्गः—तदपि[4] नातिचिरादेव स्फुटीभावमुपैष्यति । अतिचपलः किल कालकौलेयको नास्तदुपेक्षा[5]क्षणक्षेपं क्षमते ।

तालजङ्घः—ततस्ततः ।

---

१. 'अथ' इति ख-पाठः. २. आघारो घृताहुतिविशेषः. 'देवद्विषद्याजके' इति क-पाठः. ३. अग्निसमिन्धनमन्त्रः. ४. 'तदप्यचिरादेव स्फुटीभवितु-मुपैष्यति' इति ख-पाठः. ५. 'उत्प्रेक्षा' इति ख-पाठः.

**गर्गः**—ततश्च तथा तथोत्पातपरम्परापराभूयमाना व्रजवासिन उपनन्दनाम्ना गोपवृद्धेनोपमन्त्र्य गोकुलादुदुष्य नातिदूरे निरामयं बहुलजलं मिलदुलपशबलं वृन्दावनमध्यमध्यूषुः।

तत्रापि वसता तेन सबलेनाघहारिणा।
लीलामात्रेण निहताः प्रलम्बबकधेनुकाः॥ १५॥

**तालजङ्घः**—(सवैक्लव्यम्।) हा वत्साः, कथमकस्मादेव दशमीं दशामापन्नाः स्थ। (सरोषम्।) कथमयमतिप्रसजति कालकालकौलेयकः। ननु रे कृतान्तहतक,

विद्राणेषु दिगीश्वरेषु समिति द्रागुल्लुतिभ्रष्टुत-
क्रुध्यत्कासरतुङ्गशृङ्गविधुतिव्याविद्धगात्रः पतन्।
कारागारनिकारमाशु गमितः संतर्ज्यमानो भटैः
काकुव्याकुलगीः कृपावशहृदा न त्वं मया मोचितः॥ १६॥

तदधुना न भविष्यति।

**गर्गः**—(स्वगतम्।)

अपि स्यादस्माकं किमपि कुशलं गोकुलभुवां

(निःश्वस्य।)

कुतो वा कल्याणं प्रकृतिकुटिले राजनि रिपौ।

(सावष्टम्भम्।)

अये शान्तं पापं यदि स भगवान्किंचन कृपा-
कटाक्षप्रक्षेपैः क्षपयति विपक्षप्रतिभयम्॥ १७॥

**तालजङ्घः**—क्व पुनरिदानीं निर्भराश्चर्यगर्भोऽर्भकाकारवर्णिकाप्रच्छन्नोऽघटनघटनापटीयान्नटवपुः साक्षादीक्षणातिथिः स्यात्।

**गर्गः**—श्रुतं मया नातिचिरादेव गोकुलोपशल्यमुपेयुषा यत्किल

---

१. 'गोकुलाददूरे बहुलजलं' इति ख-पाठः. २. 'नटपटु' इति क-पाठः.

धनुर्यज्ञोत्सवे कृष्णं सबलं मातुलः किल ।
निनीषुर्मथुरामेष क्रूरोऽप्यक्रूरमादिशत् ॥ १८ ॥

तालजङ्घः—सखे, यथादिष्टमनुष्ठीयताम् । अहमपि वृन्दावनपरिसर एवैनमनुसरामि । (इति निष्क्रम्य ।) तदेतद्वृन्दावनम् । अन्वेषयाम्येनम् । (इति परिक्रामति ।)

(नेपथ्ये ।)

रे रे व्रजवासिनः, सावधाना भवत । नन्वयमनुपतति नेदीयानेव
कोपाटोपातिवल्गद्विकटखुरपुटप्रस्फुटद्भूमिपृष्ठा-
दुत्तिष्ठद्भिर्गरिष्ठैर्व्रजजननयनान्यन्धयन्धूलिजालैः ।
कुर्वन्द्यामेष हेषारवशतबधिरां वालधिं[1] प्रोद्धुनान-
श्चूडावालान्तरालप्रणिहितकपिलक्रूरतारस्तुरंगः[2] ॥ १९ ॥

तालजङ्घः—(सातङ्कम् ।) आः, किमेतत्स्यात् ।
न खलु सुरभिसैरभीसमृद्धे[3] शिशुचलकर्णकतर्णकावकीर्णे[4] ।
अतिचकितजनव्रजे व्रजेऽस्मिन्ननुपधिरेष[5] तुरंगमप्रचारः ॥ २० ॥

(पुनर्नेपथ्ये ।)

धावन्धीरं धरायां क्षणमथ विदधद्धौरितं[6] धूतमूर्धा
चञ्चच्चञ्चत्खुराग्रक्षणधरणिरजोधोरणीदुर्विभाव्यः ।
चित्रं चङ्क्रम्यमाणश्चिरमथ सहसा संभ्रमं बिभ्रदुर्वी-
गर्वाखर्वादखर्वाद्विरजति जनताः सर्वतः पर्वताभः ॥ २१ ॥

तालजङ्घः—(निपुणं निरूप्य ।) नूनमनेन महाराजनिर्दिष्टेनाश्ववर्णिकाप्रच्छन्नमूर्तिना विविधमायावेषपटीयसा केशिना भवितव्यम् ।

---

१. पुच्छम्. २. 'चूला' इति क-पाठः. ३. गोमहिषीसंपन्ने. ४. सद्योजातवत्सव्याप्ते. ५. निश्छलः. ६. धौरितमश्वगतिविशेषः.

(सहर्षम् ।) तदनेन सकलसुरासुरचक्रदुःसहपराक्रमेण तत्क्षणादेवास्मत्प्रतिपक्षः सपक्षो व्यापादयिष्यते । साधु रे केशिन्, साधु । कृतकृत्योऽसि । यतः—

दर्पोद्धुरेषु निहतेषु निशाचरेषु
मायासु मायिनि[1] खिलत्वमुपेयुषीषु[2] ।
कंसस्य भृत्यनिवहैरिह यद्विपक्ष-
पक्षक्षयक्षमतयाद्य विभावितोऽसि ॥२२॥

(पुनर्नेपथ्ये ।)

रे रे गोपालाः, दिष्ट्या जीविताः स्थ ।

परित्यजत साध्वसं भजत धीरतां नेत्रयो-
र्जहीत विनिमीलिकां भवत भूबिलेभ्यो बहिः ।
विदीर्णमुखकंदरोदरनिविष्टमुष्टिक्षत-
क्षरद्रुधिरधोरणिः स निहतो वयस्येन[3] नः ॥ २३ ॥

**तालजङ्घः**—(ससंभ्रमम् ।) कथं सत्यमेव निहतः । (निपुणं निरूप्य ।) अहह,

वमति रुधिरधारां नासिकानालरन्ध्रा-
ल्लुठति धरणिपीठे क्ष्मां खुराग्रैः क्षुणत्ति ।
घुरति किमपि घोरं केसराण्युद्धुनीते
तदणुमपि विलम्बं न क्षमन्तेऽसवोऽस्य ॥ २४ ॥

हन्त भोः, वज्रसाराणि हृदयानि जीवलोकस्य । यदेवमनेकधा कुलक्षयमध्यक्षयन्नपि प्राणिमि । तदस्मिन्निहते नूनमासन्नमत्याहितं महाराजस्य दैवैकचिकित्सनीयमालोकयामि । यतः—

---

१. श्रीकृष्णे. २. निष्फलत्वम्. ३. श्रीकृष्णेन.

वाचा नाचरितं दृशा न कलितं कर्णेऽपि नाकर्णितं
चित्तेनापि न चिन्तितं न च पुनः स्वप्नेऽपि संभावितम् ।
दैवज्ञैर्न निवेदितं न पिशुनैराशङ्कितं कर्हिचि-
त्तत्ताहग्व्यसनं विधिर्घटयति क्रूराशयः प्राणिनाम् ॥ २५ ॥
तदेनं वृत्तान्तमुपहरामि महामात्यस्य । (इति निष्क्रान्तः ।)

इति द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

(ततः प्रविशति रथारूढोऽक्रूरः सारथिश्च ।)

अक्रूरः—(दीर्घमुष्णं च निःश्वस्य ।) हन्त भोः,

असारे संसारे विषविषमपाकेऽनृतसुखे
कृतान्तेनाक्रान्ते प्रकृतिचपले जीवितबले ।
ध्रुवापाये काये विषयमृगतृष्णाहतहृदः
परप्राणैः प्राणानहह परिपुष्णन्ति कुधियः ॥ १ ॥

अहो, अस्य दितिजकुलकलङ्कस्य कंसस्य निर्विवेकता निर्घृणता च । यतः—

स्वस्त्रीयेषु हतेषु सप्तसु मनाङ् नाद्यापि निर्विद्यते
तादृक्चेदयमष्टमोऽपि किमितस्त्रासेन संभ्रम्यते ।
कस्त्रातुं प्रभवेद्भवेद्यदि हरिर्हन्तावतीर्णः स्वयं
मृत्यौ जन्मवतां ध्रुवे च मरणं श्रेयः परं श्रीपतेः ॥२॥

(विमृश्य ।) अथवा किमेनमासुरीमतिदारुणां प्रकृतिमाश्रितमुपालभे । ननु तावदहमात्मानमेव तादृशे नृशंसे कर्मणि प्रवर्तमानमाकलयामि । तथा हि—

---

१. 'संभाव्यते' इति ख-पाठः.

राजाराधनतत्परेण सहसा स्वीकुर्वता चासनं
कृत्याकृत्यविचारवञ्चितधिया धर्मोऽपि नापेक्षितः ।
स्पृष्टा नैव घृणा तृणाय च मतो लोकस्त्रपाप्युज्झिता
धिक्कुक्षिंभरिणा मयाद्य कृपणाः प्राणाः परं पोषिताः ॥ ३ ॥

सूतः—आयुष्मन्, कथमयं महाराजो जानन्नपि स्वजनसंबन्धमतिस्नेहपर्याकुलहृदयेन भवता वत्सौ रामकृष्णावुपनिनीषति ।

अक्रूरः—सूत, सोऽयं कुटिलनीतिपण्डितः परस्परमस्मासु विरोधमुत्पाद्य सुन्दोपसुन्दन्यायेन सर्वानेवास्मान्संजिहीर्षति । तथा हि ।

नानेष्ये यदि तौ ध्रुवो[1] मम वधस्तच्छासनातिक्रमा-
दाहर्तुं यदि यामि वक्ष्यति तदा[2] को वा न मां सौनिकम्[3] ।
निन्देन्नन्दनविप्रयोगविवशो मां नन्दगोपो जर-
ञ्ज्ञातिर्द्वेक्ष्यति वा चिरादहरहः शप्स्यन्ति गोपाङ्गनाः ॥ ४ ॥

सूतः—आयुष्मन्, अपि नाम महाराजाज्ञागौरवनियन्त्रणात्कथमपि तथोपसीदन्तं तत्रभवन्तं भगवान्वासुदेवो न प्रतीपमाशङ्किष्यते ।

अक्रूरः—सूत, सत्यमात्थ ।

दुर्जनवशवर्तिनमिह चिरतरविरहेण लुप्तसौहार्दम् ।
न प्रत्येति स्वजनं मृग इव मृगयूपसर्पिणं हरिणम् ॥ ५ ॥

तथापि ।

सर्वान्तरात्मा भगवान्सर्ववृत्त्यवबोधकः ।
न मामनन्यशरणमन्यथा प्रतिपत्स्यते ॥ ६ ॥

---

१. 'ध्रुवं' इति ख-पाठः. २. 'ततः' इति ख-पाठः. ३. हिंसकम्. ४. वृद्धः. ५. 'मृगयूथसर्पिणं' इति क-पाठः. मृगयुर्व्याधः. ६. 'मूर्त्यवबोधकः' इति ख-पाठः.

सूतः—आयुष्मन्, प्रत्यासीदति सायंतनः समयः । तत्त्वर्यताम् । रामकृष्णावलोकनेन नयने सफलयावः ।

अक्रूरः—(क्षणं ध्यात्वा सहर्षम् ।) हन्त भोः, स एष दारुणतरे दारकाहरणकर्मणि नियुञ्जानेन महाराजेन प्रयुक्तो निग्रहोऽप्यनुग्रहायैव कल्पिष्यते मयि । अद्य खलु

कुवलयदलदामश्यामकान्तिः कलावा-
न्नयनचुलुकनीयः कोऽपि पीयूषराशिः ।
व्रजपरिसरधूलीकेलिलोलः किशोरा-
कृतिकृतिपरिचेयो द्रक्ष्यते ब्रह्मसारः ॥ ७ ॥

सूतः—(प्रतीचीमवलोक्य ।) आयुष्मन्, पश्य[1] ।

अहरखिलमशेषज्योतिषामेकशेषः
सकलभुवनवृत्तीः कर्मसाक्षी निरीक्ष्य ।
रथतुरगरजोभिः काञ्चनैः क्रान्तकायो
जलधिमभिनिमङ्क्तुं[2] भानुमानाजिहीते ॥ ८ ॥

अक्रूरः—(सहर्षम् ।) सखे, साधु समुन्नीतम् ।

अधिवनमभिधावद्गोखुरोद्धूतधूली-[3]
शबलविमलगात्रः स्फीतपीताम्बरश्रीः ।
व्रजपरिसरमेष्यञ्ज्योतिषां ज्योतिरेकः
सफलयति कदा नश्चक्षुरिन्दीवराक्षः ॥ ९ ॥

सूतः—

अस्तं यतापि[4] किल मस्तकवर्तिनासा-
वस्ताचलोऽहिमरुचा रुचिमभ्यलम्भि ।

१. 'पश्य तावत्' इति क-पाठः. २. 'अधिनिमङ्क्तुं' इति क-पाठः. ३. 'अभिवन' इति ख-पाठः. ४, गच्छतापि.

प्रायः परोपकृतये कृतिनोऽनपेक्ष्य
स्वार्थं विपत्कवलिता अपि संघटन्ते ॥ १० ॥

अक्रूरः—(निपुणं निरूप्य । सानन्दम् ।)

अहिमकरमरीचिधातुरागैः शबलितमम्बुदमण्डलं दधानः ।
अनुहरति गिरिस्तुलां मुरारेर्वलयितचित्रशिखण्डमण्डनस्य ॥ ११ ॥

सूतः—अहह, असमञ्जसम् ।

अयमुदयमहीभृन्मस्तकन्यस्तपादः
खरतरकरदुःस्थां प्रौढिमाढौकमानः ।
दिवसमणिरथोच्चैर्द्राक्परां प्राप्य काष्ठा-
महह विधिविरोधादम्बुधौ मज्जतीति ॥ १२ ॥

अक्रूरः—सूत, साधूत्प्रेक्षितम् । तथा हि ।

निर्मज्ज्याधिपयोधि भर्तरि रुचां लोकान्तरं प्रस्थिते
संध्याग्निं विशति प्रमीलति [1]निजेऽम्भोजे दिनश्रीरियम् ।
यत्काष्ठाकर एष रज्यति तमोधूमोऽश्नुते रोदसी
संक्रन्दन्ति खगाः समेत्य ददते विप्राश्च तोयाञ्जलीन् ॥ १३ ॥

(पुनः सूतं प्रति ।) अये, बंहीयानतिवाहितः पन्थाः । तदधुनापि कियदन्तरं नन्दवाटस्य ।

सूतः—आयुष्मन्, इतो नेदीयानेव लक्ष्यते । [2]तदुपगतप्रायानेवास्मानवगच्छ । तथाहि निरूपयत्वायुष्मान् ।

अधितरणितनूजातीरवानीरपाली-
परिसरमतिकाली भाति तालीवनाली ।
विलसति तददूरेऽतुच्छतापिच्छगुच्छा-
वलिवलयितवल्लीवेल्लिता नन्दपल्ली ॥ १४ ॥

---

१. 'निजाम्भोजे' इति ख-पाठः. २. 'तदुपात्तप्राया' इति ख-पाठः.

अक्रूरः—(निपुणं निरूप्य । ससंभ्रमम् ।) सूत, संभावयामि तावत् ।

गिरिशिखरविरूढप्रौढहिन्तालमाला-
पिहितगगनगर्भभ्राम्यदूर्जध्वजाग्रः ।
विहगविहतवेगव्यग्रशाखाकराग्रै-
स्त्वरयति परिरब्धुं नन्दघोषः किमस्मान् ॥ १५ ॥

सूतः—(किंचिदन्तरं गत्वा रथवेगं नाटयन् । पुरोऽवलोक्य ।) आयुष्मन्,

उपवनतरुखण्डहिण्डमानाण्डजततिभिर्गृहमेधिहोमधूमैः[1] ।
अपि च शिशुपशूद्धतै रजोभिः किमपि पुरस्तिमिराद्वयं चकास्ति ॥ १६ ॥

(पुनः सविषादम् ।) हन्त भोः,

अस्तमिते दिननाथे चिरयति चन्द्रे स्फुटासु तारासु ।
सहसा तमःप्रधानैर्व्याकुलितं हन्त भूतलं तरलैः ॥ १७ ॥

तथा हि ।

तमःश्यामे व्योम्नि स्फुटकनकलेखाङ्कुरचय-
प्रभा विद्योतन्ते निकष इव खद्योतनिकराः ।
सहस्रांशोरंशा इव चरमशैलव्यतिकरा-
द्विशीर्णाः पर्यस्ताः पथिकपृथुनिःश्वासपवनैः ॥ १८ ॥

अक्रूरः—सूत, साधु समर्थितम् । तथा हि ।

मेचकद्युतिदलान्तरलीनज्योतिरिङ्गण[2]चमत्कृतिरम्याः ।
पादपा इव चकासति मेरोः क्ष्मां गता इव हरिन्मणिकूटाः ॥ १९ ॥

(कर्णं दत्त्वा । सहर्षम् ।) हन्त भोः,

स्नेहप्रस्नुतपीवरस्तनभरप्राग्भारभूरिक्षर-
त्क्षीरक्षालनपिच्छिलैः प्रतिपदं मार्गैर्निषिद्धत्वराः ।

---

१. भ्रमत्पक्षिसमूहैः. २. 'खद्योतो ज्योतिरिङ्गणः.'

हर्षोत्पुच्छयमानतर्णकरवोत्कर्णा व्रजायोत्सुका
गोसंघाः प्रतिहुंकृतैरिह मुहुः श्रोत्रोत्सवं कुर्वते ॥ २० ॥

सूतः—आयुष्मन्,

चारणेन परिचर्य समन्तादद्रिकाननदरीः परिपूय ।
संप्रति प्रतिनिवर्तयितासौ गोधनानि किल गोकुलनाथः ॥२१॥

तथा हि । आकर्णयत्वायुष्मान् ।

चम्पे[1] चन्दनि चन्द्रिके चमरिके चन्द्रावलि श्यामले
गङ्गे गोमति गौरि गीतरसिके गायत्रि गोदावरि ।
धीरे धीवरि धूसरे धवलिके कालाक्षि कालीति च
व्याहाराः परितो हरन्ति हृदयं हैम्बा[2]रवाश्राविणः ॥ २२ ॥

अक्रूरः—(कर्णं दत्त्वा । सानन्दम् ।) सूत, इतोऽपि रमणीयमाकर्ण्यते ।

अनुसृतकरतालैर्वेणुवीणानुयातै-
र्मुखरितकलशृङ्गैर्डिम्भडम्फा[3]भिरामैः ।
मधुरमधुरगीतैर्हुंकृतैर्गोधनाना-
मिदमुदयति नादाद्वैतमानन्दसान्द्रम् ॥ २३ ॥

(पुनः कर्णं दत्त्वा ।)

क्षीरस्यावेगधावद्भसनिपतितस्तन्यपानोर्जदोजः-
कूर्दद्वत्सावरोधव्यसनिशिशुशताकूतकोलाहलाढ्यः ।
गम्भीराभीरकुम्भीकुहरपरिणमद्धीरगोक्षीरधारा-
ध्वानोऽध्वन्यध्वगेभ्यः पिशुनयति चिरादेष गोष्ठस्य गोष्ठीः ॥ २४ ॥

सूतः—(सोत्साहम् ।) अहह, संप्रति

---

१. चम्पे इत्यादीनि धेनुसंबोधनानि. २. हम्बा धेनुशब्दः. ३. झल्लडम्फादयो वाद्यविशेषाः.

हुंकृतभांकृतहीहीहीकृतधुंधुंधुमारवैर्मुखराः ।
व्याकुलबालकगोकुलवत्सकुलैः संकुलाः ककुभः ॥ २५ ॥

**अक्रूरः**—सूत, समासादितप्रायास्तदिदानीं नन्दघोषोपशल्यभूमयः । तत्संयम्यन्तां प्रग्रहाः । यावद्रामकृष्णचरणनलिनविन्यासपूतपांसुसंपर्कादात्मानं पवित्रयन्तौ पादचारेण गोपुरपरिसरशिखरमारुह्य नन्दनन्दनानुगमनमनुपालयावः ।

**सूतः**—साधु मन्त्रितमायुष्मता । तदेते संयता वाजिनः । समवतरत्वायुष्मान् ।

(इति रथादवतरणं नाटयतः ।)

**अक्रूरः**—(पुरतो निरूप्य । सवितर्कम् ।) अये, कथमियं

व्रजपरिसरभूमिष्वापतद्गोखुराग्र-
क्रथनसिकतिलासु व्यक्तपद्मध्वजश्रीः ।
समविषमनिपाता शैशवं व्यञ्जयन्ती
स्मरयति पदपङ्क्तिः कापि कस्यापि पुंसः ॥ २६ ॥

(ध्यानं नाटयित्वा । स्वगतम् ।)

एतद्रूढं सत्समूहैरमूढैर्योगारूढैर्यत्कथंचित्समूढम् ।
लीलोन्मीलड्डिम्भदम्भस्य विष्णोर्वन्दे वेदान्तैकवेद्यं पदं तत् ॥ २७ ॥

(नेपथ्ये कलकलः ।)

**अक्रूरः**—(कर्णं दत्त्वा ।) अये, कथमयमिदानीं[1]

कासांचिन्नयनाञ्चलं विचलयन्नाभारिवामभ्रुवां
दोर्वल्लीरिह दोहते विकलयन्मौलिं मुहुर्दोलयन् ।
अन्तः कन्दलयन्नमन्दममलामानन्दकन्दावलीं[2]
विघ्नौघं दलयन्मुरारिमुरलीनालीरवः श्रूयते ॥ २८ ॥

---

१. 'अथेयम्' इति ख-पाठः. २. 'मनसां' इति ख-पाठः.

(परिभाव्य, स्वगतम् ।)

तावन्माध्वीक साध्वी भवतु तव कथा क्षीरपूरासि वन्द्य-
स्तावत्तावच्चकोरी चुलुकयतु चिरं शीतरोचिर्मरीचीन् ।
तावत्पीयूषयूषैर्विदधतु विबुधास्तोषपोषं कथंचि-
द्यावन्नाकर्णितैषा मधुरिपुमुरलीमाधुरीसाधुरीतिः ॥ २९ ॥

(सहसा परावृत्य पुरोऽवलोक्य । सहर्षम् ।) अये, कथमियमित एव

मुखरितकलभृङ्गीमाधुरीसाधुरीति-
क्षरदधरमधूलीमोहिताशेषविश्वः ।
अमलतमतमालश्यामलः कोमलाङ्गः
समुपसरति नेत्रानन्दनो नन्दसूनुः ॥ ३० ॥

(चिरं विभाव्य ।) कथमयमतिमानुषपौरुषो बाललीलाकलेवरावृतोऽप्यनावृतब्रह्मास्वादसोदरानन्दमेदुरामुदञ्चयति चेतसो वृत्तिम् । (नेत्रे निमील्य ध्यानं नाटयन् ।)

त्वं क्षीराम्बुनिधिं ममन्थिथ जगत्रातुं जघन्यासुरा-
न्दंष्ट्राग्रेण समुज्जहर्थ धरणिं सुष्वप्थ शेषे सदा ।
दूरे तस्थिथ किं च वाङ्मनसयोः किं त्वेष नः भाक्तनैः
पुण्यैरद्य पचेलिमैः किल बलात्पुंभावमालम्बसे ॥ ३१ ॥

सूतः—आयुष्मन्, पश्यैतत् । प्रातः प्रोषितयो रामकृष्णयोः प्रत्यागमनमनुपालयन्तौ जरन्तौ यशोदानन्दगोपौ संभृतातिथ्यसंभारावित एवाभिवर्तेते । तदेतयोः प्रत्यनन्तरीभूय यथेष्टगोष्ठीसमागमसुखमनुभवावः ।

अक्रूरः—सूत, एवमेतत् । तदेहि । गोपुरपरिसरमेवानुसरामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति तृतीयोऽङ्कः ।

---

१. 'पीयूषपानैः' इति ख-पाठः. २. 'भगवन्' इति ख-पाठः.

## चतुर्थोऽङ्कः ।

(ततः प्रविशति वेत्रपाणिः पुरुषः ।)

**पुरुषः**—आदिष्टोऽस्मि तत्रभवता पुरोधसा गर्गेण[1] यत्किल मातुलालयाय प्रवत्स्यतोर्वत्सयो रामकृष्णयोस्तारानुकूल्यं परिज्ञातुं दैवज्ञमाज्ञापयेति । तदेनमनुसरामि[2] । (नेत्रे निमृज्योर्ध्वमवलोक्य ।) अये, विभातप्राया विभावरी । तथा हि—

तमस्तोमज्योत्स्नारुणकिरणकिर्मीरितरुचि-
नभोलक्ष्मीरेषा जयति जगदुज्जीवनकरी ।
निशाकल्पे लीनं पुनरपि सिसृक्षोस्त्रिभुवनं
विधातुः सृष्ट्यादौ प्रकृतिरिव वर्णत्रयमयी ॥ १ ॥

(पुनर्निरूप्य ।)

इतः शुक्ला चन्द्रद्युतिभिरिह रक्तारुणकरै-
स्तमिस्रैरप्यन्तःस्खलितगतिभिर्मेचकरुचिः ।
प्रभातश्रीरेषा विलसति पुरःस्था सुकृतिनां
मिमङ्क्षूणां[3] जह्नुद्युमणिविधिजासंगम इव ॥ २ ॥

(पुरोऽवलोक्य ।) कथमयं दैवज्ञः प्राचीन[4]गोपुरशिखरमध्यमध्यारूढो मित्रोदयं प्रतीक्षमाण आस्ते । तद्यावदुपसर्पामि । (गतिवैकल्यमभिनीय । स्वगतम् ।)

न जराजर्जरैरङ्गैरेतां सोपानपद्धतिम् ।
आरोढुमवरोढुं वा मनागुत्सहते मनः ॥ ३ ॥

अहह, कथं दुर्दैवेन दुःस्थामेनामवस्थां प्रतिलम्भितोऽस्मि । तथा हि—

---

१. 'गार्ग्येण' इति क-पाठः. २. 'अनुसरामीति' इति ख-पाठः. ३. जह्नुद्युमणिविधिजा गङ्गायमुनासरस्वत्यस्तत्संगमे प्रयागे मिमङ्क्षूणां स्नातुमिच्छताम्. ४. 'प्राचीनप्राची' इति क-पाठः.

अन्यत्रेहितमन्यतो निपतति क्लेशादुदस्तं पदं
मुष्टिर्न क्षमते क्षणं कलयितुं यष्टिं पृथोर्वेपथोः।
न श्रोत्रे शृणुतश्चिराय परितस्तारस्वरं व्याहृतं
धिक्कष्टं जरसातुरस्य मरणं मन्ये महानुत्सवः॥ ४॥

हन्त भोः,

गलति वदने लाला वाचः स्खलन्त्यपरिस्फुटाः
स्रवति सततं चक्षुर्नासं न संचरतः पदे।
मुखमदशनं दृष्टिः शून्या वृथा च विचेष्टितं
शिव शिव जरा बाल्यं भूयः प्रसौति नवं नवम्॥ ५॥

अपि च।

अन्योक्त्या परिचिन्वते परिजनान्संचार्यमाणाः परं[1]-
स्कन्धन्यस्तभुजाश्चिरेण चरणाक्षेपं[2] समातन्वते।
न स्वेनैव कृतं स्मरन्ति सहसा क्रुध्यन्ति निष्कारणं
वृद्धव्याधितभूभुजः किल समावस्था विधात्रा कृताः॥ ६॥

तदिहस्थ एवैनमाहूय निवेदयामि पुरोधसो निदेशम्। (इति बाहुमुत्क्षिप्याह्वयति[3]।)

(प्रविश्य।)

दैवज्ञः—(सहर्षं स्वगतम्।) कथं क्षणमपि व्याक्षेपासहिष्णवो महतां मनोरथाः। यतः प्रस्थानोत्सुकयोर्वत्सयो रामकृष्णयोरतिप्रशस्ततरो यात्रामुहूर्त उपस्थेव समुपस्थितः। तथा हि—

चन्द्रः पुष्पगतस्तृतीयभवने सिद्धिप्रदो दक्षिणः
केन्द्रस्थाः कथयन्ति सौम्यखचरा योगाधियोगं शुभम्।

---

१. 'परं' इति क-पाठः. २. 'चरणाक्षेपे समारम्भिणः' इति क-पाठः. ३. 'बाहू' इति ख-पाठः

अम्भःसंभृत एष कुम्भनिवहो वेश्याशिरःस्थः पुरः
　　प्रस्थाने कथयन्ति शात्रववधं सर्वेऽर्थसिद्धिं तथा ॥ ७ ॥

तत्सत्वरमुपसृत्य यात्रोचितमङ्गलाचारोपकरणान्युपाहरामि । (इति ससंभ्रममवतीर्य पुरोऽवलोक्य ।) अये, कथमयमन्तःपुरप्रतीहारो रत्नापीड इत एवाभिवर्तते । तदस्मान्निशीथवृत्तं नन्दाक्रूरयोः संवादमवगच्छामि । (इत्युपसर्पति ।)

दैवज्ञः—अये रत्नापीड, कथमर्धोन्मीलितलोचन एव संचरन्नतिघूर्णमानानामङ्गानामनीश्वर इवावलक्ष्यसे ।

रत्नापीडः—किं भणामि । कष्टात्कष्टतरः खलु परप्रेष्यभावः । यतः—

　　श्रान्तोऽपि हन्त रजनीगुरुजागरेण
　　　　कार्यातिपातचकितो न शये क्षणार्धम् ।
　　भ्रूभङ्गवीक्षणवितर्कितचित्तवृत्ति-
　　　　र्नित्यानुवृत्तिनिरतः प्रभुवृत्तमीक्षे ॥ ८ ॥

दैवज्ञः—तत्कथय कारणं रात्रिजागरणस्य ।

रत्नापीडः—सखे, किं न जानासि ।

　　अक्रूरागमसंभ्रमादुपहृतैरातिथ्यसंभावना-
　　　　संभारैरतिवाहितो न विदितः पूर्वोऽर्धरात्रो मया ।
　　विश्लिष्यत्सुतसंज्वरातुरजरद्गोपप्रमीलामिल-
　　　　च्छोकस्त्रीपरिसान्त्वनैर्नयनयोरेव प्रभाता निशा ॥ ९ ॥

दैवज्ञः—हन्त भोः, कथं हर्षस्थाने विषादावसरः । यतः प्रिया-

१. 'तस्मात्' इति ख-पाठः.　२. 'अभिलक्ष्यसे' इति क-पाठः.

त्प्रियं[1]मतः किल मातुलावासवासो भागिनेयानाम्, भगिनीनां च भर्तृपक्षात्पितृपक्षे पक्षपातो बहीयानेव।

**रत्नापीडः**—आः कथमनेकधाध्यक्षयन्नप्यमीषां प्रेमबन्धपरिपाकमनभिज्ञ इव पृच्छसि। न जानासि किं मातुलवर्णिकाप्रतिच्छन्नोऽयमसुरोत्तंसः कंसो वासुदेवाय द्रुह्यन्वसुधामधिवसति। तदेवं तयोरप्रतीकारमत्याहितमुपस्थितमवगच्छामि।

**दैवज्ञः**—सत्यमात्थ, किं तु न संभावयामि परमभागवतेन मनीषिणा प्रियसुहृदाक्रूरेण प्रत्यनन्तरीभूय नीयमानयोरनयोः किमप्यमङ्गलम्। न खल्वयमणुमपि राज्ञो दुराशयमवगत्य विपाकदारुणं दूत्यकर्माङ्गीकुर्यात्।

**रत्नापीडः**—आः, कथमविदग्धमुग्धमतिरसि। न[2]ह्यस्त्यकर्तव्यं नाम परप्रेष्यभावमापन्नानाम्। राजानुवर्तिनां पुनर्विशेषेण। ते हि राजानुरञ्जनमेव बहुमन्यमानाः—

क्षमां सत्यं दयां धर्मं घृणां लोकभयं दमम्।
विस्मृत्य केवलं [3]राजरञ्जनं पर्युपासते॥ १०॥

**दैवज्ञः**—महाशयः [4]खल्वक्रूरो न दुराशयमनुसरिष्यति।

**रत्नापीडः**—(विहस्य।) किं न [5]पश्यसि।

अन्तर्मलिनसंसर्गाच्छ्रुतवानपि दुष्यति।
यच्चक्षुःसंनिकर्षेण कर्णो[6]ऽभूत्कुटिलाशयः॥ ११॥

**दैवज्ञः**—(निमित्तं सूचयित्वा।) शान्तं पापम्। प्रतिहतममङ्गलम्। स्वस्त्यस्तु गोकुलवासिभ्यः।

---

१. 'प्रियतरः' इति ख-पाठः. २. 'नह्यस्त्यकर्मविचारणं नाम' इति ख-पाठः. ३. 'राज्ञां रञ्जनं' इति ख-पाठः. ४. 'खल्वसौ' इति ख-पाठः. ५. 'पश्यामि' इति क-पाठः. ६. 'कुटिलाश्रयः' इति ख-पाठः.

( नेपथ्ये कलकलः । )

**रत्नापीडः**—(सादरमाकर्ण्य । प्रकाशम् ।) सखे, अवधीयताम्[1] । यथायं मधुरमुरजवेणुवीणाशङ्खकाहलबहलकोलाहलान्तरालोन्मीलत्प्रचुरपुरपुरंध्रीसमाजमङ्गलाचारगीतध्वनिरुपगोपुरमुच्चैरुच्चरति, तथा तर्कयामि प्रस्थितौ रामकृष्णाविति । तद्यावत्प्रत्यनन्तरीभूय प्रास्थानिकोपदासंपत्संपादनेन सपुत्रौ गोपवृद्धौ परिचरावः ।

(इति निष्क्रान्तौ ।)

प्रवेशकः[2] ।

---

(ततः प्रविशतो रामकृष्णौ, सुदामाक्रूरावलम्बितौ यशोदानन्दगोपौ च ।)

**यशोदानन्दगोपौ**—

हा वत्स राम रमणीयमुखारविन्द
　हा कृष्ण वृष्णिकुलकैरवकाननेन्दो ।
क्व स्थः समेत्य सहसा परिरभ्य गाढ-
　मङ्गानि शीतलयतं परितप्तयोर्नौ ॥ १२ ॥

(इति मूर्च्छां नाटयतः ।)

**अक्रूरः**—(वसनाञ्चलेन वीजयन् ।) गोपवृद्धौ, समाश्वसितम् । अनवसरः[3] खल्वयं शोकस्य । ननु प्रवत्स्यतोर्वत्सयोः प्रवर्त्यतां मङ्गलाचारः ।

**गोपवृद्धौ**—(समाश्वस्य । सोपालम्भम् ।) हन्त भोः,

उत्पत्तिप्रभृति प्रतिक्षणमतिप्रीत्या मयाराधिता
　यूयं बल्युपयाचितव्रतमहादानोपदानैः सुराः ।
धिक्कष्टं कथमेष तस्य विषमः पाकः पुरः प्रोतभू-
　द्यद्वत्सौ समुपाहरामि बलये कंसाय विश्वद्रुहे ॥ १३ ॥

---

१. 'विधीयताम्' इति ख-पाठः.　२. 'प्रस्तावना' इति क-पाठः.　३. 'नावसरः खल्वेष शोकावेशस्य' इति ख-पाठः.

(रामकृष्णावुपसृत्य पादयोः पततः ।)

अक्रूरः—गोपवृद्धौ, प्रवत्स्यन्तौ रामकृष्णौ भवन्तावभिवादयेते । तत्प्रस्थानोचिताभिराशीर्भिरभिवर्धयतमेतौ ।

गोपौ—(सास्रवर्षम् ।) हा वत्सौ, क्व वर्तेथे । न खलु कथंचित्परिभावयितुमीशावहे युवाम् ।

शोकोद्वेलविलोलबाष्पसलिलप्रम्लिष्टदृष्टी जरा-
जीर्णावुज्झितपाटवेन्द्रियगणावन्धौ निमग्नौ शुचि ।
आवां सौनिकदारुणेन विधिना प्रस्थापयन्तौ युवां
हस्तेनाप्यतिवेलवेपथुभृता न स्प्रष्टुमीशावहे ॥ १४ ॥

(रामकृष्णावुपसृत्य पित्रोरङ्कमधिरोहतः । तयोर्नयने उन्मार्जयन्तौ ।)

आगर्भसंभवादस्मच्चिन्तासंतापितान्तयोः ।
पित्रोः क्लेशाय नौ जन्म केवलं किल गोकुले ॥ १५ ॥

तदद्य भवन्तौ सप्रणयप्रणाममनु प्रार्थयावहे ।

संमान्य मातुलादेशं द्रक्ष्यामो न चिरेण वाम् ।
युष्मद्बाष्पाम्भसा यस्मादभिषिक्तौ तदास्पदे ॥ १६ ॥

वृद्धगोपौ—यथाभिरुचितमायुष्मतोः ।

वाता वान्तु शिवा दिशश्च विदिशः सन्तु प्रसन्नाः सदा
नद्यः शीतजलाः स्रवन्तु तरवः पुष्णन्तु सत्संपदः ।
पन्थानः सिकतोत्तरा विदधतु क्षेमं च निष्कण्टका
देवश्चक्रधरश्च तत्रभवतोर्विघ्नान्विजेघ्नीयताम् ॥ १७ ॥

अक्रूरः—प्रतिगृह्यतामाशिषः पित्रोः । अतिपतति यात्रामुहूर्तवेला ।

रामकृष्णौ—शिरसा गृहीताः । (इति निष्क्रान्तौ ।)

---

१. 'प्रश्लिष्ट' इति ख-पाठः. २. शोके. ३. 'ईहामहे' इति क-पाठः. ४. 'बाष्पभरैः' इति ख-पाठः.

**नन्दः**—(चिरं दूरमवलोक्य।) आर्ये, कथमतिक्रामतो लोचनपथं वत्सौ। तदिदानीमनीशोऽस्मि शोकविक्लवान्यङ्गानि वोढुम्। (इति मूर्च्छितः पतति।)

**यशोदा**—*अज्ज, समस्ससिहि समस्ससिहि। अजुत्तं दाणिं सोइउम्। अमङ्गलं खु एदं पवसिदाणम्। ता वड्ढावेहि सुहासीहिं। मणावह कुलदेवदाओ। अच्चिअन्दु सोत्थिवाअणिआ बम्हणा। दिज्जन्तु वायणाइं सोहग्गिणीणम्। जह वच्छाणं कल्लाणमप्पडिहदं भोदि। ता गच्छामो लहु लहु घरसंणिवेसम्। (इति नन्दमवष्टभ्य प्रतिष्ठते।)

**नन्दः**—अये,

दूरं गतोऽपि हृदये विनिविष्ट आस्ते
संवीक्ष्यते च पुरतः परितः प्रसर्पन्।
तत्किं ममैष मतिविभ्रम एव वा स्या-
द्यत्प्रस्थितो मधुपुरीं मधुभित्सरामः॥ १८॥

(स्मृतिमभिनीय।)

मर्माण्युच्चैर्व्यथयति मनो हन्त मथ्नाति यत्ना-
द्धैर्यग्रन्थिं श्लथयति सखे किं च मुष्णाति तृष्णाम्।
कष्टं दृष्टिं तिरयति हरेर्बालकेलीकलापो-
ऽकस्मादसत्स्मृतिशतशिरःशेखरीभूय भूयः॥ १९॥

---

*आर्य, समाश्वसिहि समाश्वसिहि। अयुक्तमिदानीं शोचितुम्। अमङ्गलं खल्वेतत्प्रवसितानाम्। तद्वर्धापयस्व शुभाशीर्भिः। मानयस्व कुलदेवताः। अर्च्यन्तां स्वस्तिवाचनिका ब्राह्मणाः। दीयन्तां वायनानि सौभाग्यवतीनाम्। यथा वत्सानां कल्याणमप्रतिहतं भवति। तद्गच्छावो लघु लघु गृहसंनिवेशम्।

**यशोदा**—(संस्कृतमाश्रित्य ।) आर्य, दुष्प्रवेशः खल्वेष घोरतरो घोषप्रदेशः । तथा हि—

नार्यो रुदन्ति न रुवन्ति पतंगसंघा
गावस्तृणानि न चरन्ति न वान्ति वाताः ।
भृङ्गाः पिबन्ति न मधूनि हरौ प्रयाते
निर्जीविता इव दिशः प्रतिभान्ति शून्याः ॥ २० ॥

तदद्य वत्सप्रवासशोकावेशविक्लवमात्मानमात्मनैवावष्टभ्य व्रजवासिनो लोकान्परिसान्त्वयावः ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशतो रामकृष्णौ ।)

**रामः**—(प्राचीमवलोक्य ।) कथमुदितभूयिष्ठ एव भगवान्किरणमाली । तद्यावदेनमुपतिष्ठे । (अञ्जलिं बद्ध्वा ।)

दिवसश्रीविजयजयन्मणिमयनीराजनामलस्थानम् ।
दिनकरमङ्कुरितांशुं विकचजपापुञ्जमञ्जुलं वन्दे ॥ २१ ॥

**कृष्णः**—आर्य, कथमयं गगनपथपान्थो भगवानतिदूरमुज्जिहासमानोऽप्युदयगिरिविरहपर्युत्सुक इव मन्थररथारोहणसुखमनुभवति । तदुत्प्रेक्षे—

मधुरमधुरभृङ्गीगीतसङ्गीतभङ्गी-
समसमुदयमङ्गीकृत्य सन्मङ्गलानि ।
त्रिभुवनमभिषेकात्पङ्किलं कुङ्कुमाद्भिः
समुपसरति मन्दं मन्दमम्भोजबन्धुः ॥ २२ ॥

**रामः**—अहं पुनरेवमुत्प्रेक्षे—

निशामशेषामुपभुज्य वारुणीं प्राचीमुपेत्याथ तयावधीरितः ।
तदङ्घ्रिलाक्षारसरञ्जिताङ्गको मन्दं विनिर्याति तदङ्गणाद्बहिः ॥ २३ ॥

अथवा ।

तारा: पारदगोलका इह नभःकाचोच्चकुप्यां क्षणं
न्यस्ताः संहतिमेत्य सान्द्रकिरणैश्चन्द्रभ्रमं कुर्वते ।
अप्येताः सकलां निशां परिपतद्दीपाग्निपाकक्रमा-
त्प्राप्ताः सिद्धरसात्मना परिणमन्त्यादित्यबिम्बच्छलात् ॥ २४ ॥

(परितोऽवलोक्य सहर्षम् ।) कथममी तरुणतरणिकिरणरञ्जितशिखरराजि-राजितशाद्वलभोगभासिनो भूमिभागाः । तथा हि—

तरणिकिरणलेशाः शक्रगोपप्रकाशा-
स्तरुणतृणशलाका श्लेषिणः संविभान्ति ।
अभिनवरविबिम्बस्पर्धयार्द्रापराधा
इव मरकतशूलेष्वर्पिताः पद्मरागाः ॥ २५ ॥

**अक्रूरः**—(समन्तादवलोक्य । सकौतुकम् ।) भगवन्कृष्ण, इतः पश्यतु भवान् ।

सजलजलदनीलं त्वामुदीक्ष्योर्ध्वकण्ठा-
नटति विततबर्हं मण्डली बर्हिणानाम् ।
मधुरमधुरकेकाराविणी बन्धुबुद्ध्या
समुपसरति बर्हापीडिनं संभ्रमेण ॥ २६ ॥

**सुदामा**—इदमपरमुदीक्ष्यतामायुष्मान् ।

उत्कर्णतर्णककुलाकुलितानि दोग्धुं
संदानितान्यपि भवन्तमनुद्रवन्ति ।

---

१. 'सौरकिरणैः' इति क-पाठः. २. 'शाद्वलभाग' इति ख-पाठः. ३. 'इत इतः' इति क-पाठः. ४. 'भगवान्' इति ख-पाठः.

उत्पुच्छमुन्मुखमुदश्रु कृतार्तनाद-
मात्मानपेक्षमभितः किल गोधनानि ॥ २७ ॥

रामः—(परितोऽवलोक्य । सहर्षम् ।) आयुष्मन्, इतोऽवलोक्यताम् ।

नेदीयांसस्तरणितनयातीरवानीरकुञ्जा
गुञ्जन्मञ्जुस्वरमधुकराराविणः स्वागतेन ।
पान्थानस्मानुचितमतिथीनाह्वयन्तीव शाखा-
हस्तन्यस्तैः फलकिसलयैरानमन्तः समन्तात् ॥ २८ ॥

(किंचिदन्तरं गत्वा चिरं निरूप्य ।) इदं चापरमनुरूपं निरूपयत्वायुष्मान् ।

अधिरजनि निरुद्धोद्भ्रान्तभृङ्गीतगुञ्जा-
रवमुखरितगर्भा भान्त्यमी पद्मकोषाः ।
निभृतमनुभवन्तोऽनाहतं नादमन्त-
र्विजितपवनवेगाः किं नु योगाधिरूढाः ॥२९॥

कृष्णः—(कलिन्दनन्दिनीं विलोक्य निर्वर्ण्य सोन्मादम् ।) सखे सुदामन्,

पश्यन्नेतां चपलशफरीलोचनां पङ्कजास्यां
कोकद्वन्द्वस्तनभरनतां बालशैवालकेशीम् ।
भृङ्गश्रेणीमधुरवचनां राजहंसप्रचारां
व्यासक्तोऽपि क्षणमिह पुनः प्रेयसीं स्मारितोऽस्मि ॥ ३० ॥

(तीरवनराजिं विलोक्य सविश्रब्धम्[1] ।)

मधुरमधुरमेतत्कूजितं कोकिलानां
किमथ नगरनारीमञ्जुमञ्जीरनादः ।

---

1. 'सविभ्रमम्' इति ख-पाठः.

इयमपि नवगुच्छस्वच्छवक्षोजकान्तिः
सलयकिसलया वा कापि कान्ता लता वा ॥ ३१ ॥

सुदामा—इत इतस्तमालमालाविलोकनेन मनो विनोदयत्वायुष्मान् ।

कृष्णः—(समन्तादवलोक्य ।) सखे,

उद्यच्छिलीन्ध्रमरविन्दसुगन्धबन्धु-
मन्दानिलं निचुलकुञ्जमिलन्मिलिन्दम् ।
उत्पश्यतो भवति हन्त दुरन्तचिन्ता-
संतापसंततिनिदानमिदं वनं मे ॥ ३२ ॥

सुदामा—(स्वगतम् ।) कथमत्यावेगो विरहस्य । तदेनं रहस्यविश्रम्भालापैर्विनोदयिष्यामि । (प्रकाशम् ।) आयुष्मन्, अतिदूरमारूढः प्रौढप्रतापस्तपनः । तदस्मिन्विविक्ते बालशैवालशीतले शिलातले समुपविश्य ललाटंतपां माध्याह्निकीं वेलामतिवाहयामः ।

कृष्णः—साधु संविहितम् । ममाप्येष मनोरथः । तत्पुरोभूय निर्दर्शय[1] सोपानपथम् । आर्यमक्रूरं[2] मद्वचनेन विज्ञापय, यदतिक्रामति माध्याह्निकी संध्या तदनुष्ठीयतां तदुचितं कर्मेति । तदुपरोधापराधपरिहाराय परिपालयामि[3] तीरपरिसरसरसदेशपरिशीलनेन । आर्यबलदेवश्च देवपूजोपयोग्यानि[4] तिलकुशकुसुमादीन्युपाहरन्भवन्तं परिचरिष्यति । तावदहमपि सुहृद्वियोगविक्लवमात्मानं सुदाम्ना वयस्येन समं स्वजनकथालापलीलाभिर्विनोदयिष्यामीति ।

सुदामा—यदादिशत्यायुष्मान् । (इति तथा करोति ।)

---

१. 'निदेशय' इति क-पाठः. २. 'आर्य मद्वचनेनाक्रूरं' इति क-पाठः. ३. 'परिपालयिष्यामि' इति क-पाठः. ४. 'योज्यानि' इति ख-पाठः.

(ततः प्रविशति कृष्णः सुदामा च ।)

**कृष्णः**—सखे,

निजजनविरहव्यथा यथास्माननुकलमुत्तपति प्रतिप्रतीकम् ।
अपि सखिसुहृदस्तथा कथंचित्स्मरयति नः कुतुकप्रसङ्गतोऽपि ॥ ३३ ॥

**सुदामा**—आयुष्मन्, त्वदेकजीवितानां त्वन्मात्रदेवतानां च कथमित्थमपि संभाव्यते । अथवा कथं न स्मरिष्यन्ति यदि जातिस्मरा भविष्यन्ति ।

**कृष्णः**—कुत एतत् ।

**सुदामा**—

आबालवृद्धवनितं पशुपक्षिवृक्ष-
गुल्मोलपप्रभृतयः किल गोकुलस्थाः ।
त्वद्विप्रयोगजनितार्तिकुकूलवह्वा-
वापाकपाकपरिपाकमिवोद्वहन्ति ॥ ३४ ॥

किं बहुना ।

प्रहीणप्राणेव प्रमुषितनिधानेव तमसि
प्रविष्टेव प्रत्यस्तमितरविचन्द्रद्युतिरिव ।
दवाग्नौ मग्नेवाचिरविरहखिन्नेव विषमा-
मवस्थां प्रस्थानप्रभृति भवतो नन्दवसतिः ॥ ३५ ॥

(प्रविश्यापटीक्षेपेण ।)

**दूती**—(ससंरम्भम् ।) भगवन्भुवनभागधेय,

अनन्यशरणामेतां त्वदेकायत्तजीविताम् ।
विरहार्तिवलद्वाधां राधां कथमुपेक्षसे ॥ ३६ ॥

---

१. प्रत्यङ्गम्. २. 'मग्नेवाशनिविनिहतेवेति' इति क-पाठः. ३. 'चलद्बाधां' इति क-पाठः.

**कृष्णः**—(ससंभ्रमं परिवृत्य ।) कथमियं राधासहचरी विलासवती विवशहृदयेवात्याहितमिवावेदयति प्रेयस्याः । तन्निपुणमवगच्छामि तावत् । (प्रकाशम् ।) विलासवति, अथ[1] किमवस्था तत्रभवती मज्जीविताधिदेवता राधा ।

**विलासवती**—

सजलैर्नलिनीदलैर्मृणालैः सुमनोभिर्नवपल्लवैः पटीरैः ।
शतशः परिशीलितापि शीतैरुपचारैः प्रतिबुध्यते न राधा ॥३७॥

अपि च ।

अपि मरणमुपैति सा मृगाङ्के विलसति कैव कथा रसान्तरस्य ।
अपि कथमधुना दधातु शान्तिं विषमशरज्वरतीव्रदेहदाहः ॥३८॥

**कृष्णः**—(सुदामानं प्रति ।) सखे, किमाह विलासवती ।

**सुदामा**—आयुष्मन्, कथमसंभावना[2] बहुधानुभूतस्वभावायामस्यां च विश्रम्भणीयवचनायाम् ।

**विलासवती**—न खल्वन्यथा कथयामि । यत इदानीं त्वयि प्रस्थिते—

माला व्यालानुकारा परिमलबहुलस्निग्धचम्पा नु शम्पा
पम्पाकम्पानिलोऽस्या मलयजनिलयाशीविषोद्गारघोरः ।
न स्यादस्या विभाव्यज्वरमिह कतमस्योत्थकम्पानुकम्पा-[3]
झम्पासंपातजाग्रत्तुहिनकरहरिप्रोद्गमोत्रासभाजः[4] ॥ ३९ ॥

**कृष्णः**—सत्यम् । संभावितमेतत् । सा किल—

---

१. 'कथय किमवस्था' इति ख-पाठः. २. 'कथमियं भावना' इति ख-पाठः.
३. 'कतरस्य' इति ख-पाठः. ४. 'तुहिनकरकर' इति क-पाठः.

मां विना न क्षणं प्राणान्क्षामाङ्गी रक्षितुं क्षमा ।
न चन्द्रेण विना चान्द्री प्रभा भवितुमर्हति ॥ ४० ॥

(सुदामानं प्रति । सनिःश्वासम् ।) सखे, अपि प्रयाणावसरे संभ्रमातिवेगेन गृहाद्बहिर्निर्गच्छता मया न साधु संबोधिता प्रेयसीति परितप्यते मे हृदयम् । तथा हि—

श्रुत्वा यान्तं कथमपि रहो लब्धुमुत्कण्ठमाना
यावद्यावत्किमपि गदितुं मां पुरः स्थातुमैच्छत् ।
यावत्तावन्नयनसलिलं संभृतं संवरीतुं
यातायातैरहह दयिता केवलं वञ्चितैव ॥ ४१ ॥

अपि च ।

एकेनालोकयन्ती सभयमुभयतो ज्येष्ठदृष्टिप्रचारं
शून्येनानुव्रजन्ती प्रियमतिऋजुना लोचनेनापरेण ।
बाला कालातिपाताकलनविरचितानल्पसंकल्पदुःस्था
चित्रन्यस्तेव तस्थौ मयि निहितमना लोचनागोचरेऽपि ॥ ४२ ॥

(लोचने निमील्य चिरं[1] ध्यात्वा सोत्कण्ठम् ।)

सान्द्रसान्द्र[2]पुलकाङ्कुरपालीदन्तुरान्तुरभुजान्तरगूढः ।
कान्तया पुनरहं चिरचिन्तातान्तया बत कदा [3]परिरभ्ये ॥ ४३ ॥

(उच्चैर्निःश्वस्य ।) हंहो दैवहतक, कथं वञ्चितोऽसि ।

सा बिम्बाधरमाधुरी निरवधिः सा केलिकोपाकुला
वाचः काचन चातुरी परिचितोदञ्चद्विपञ्ची च या ।
किं च व्यञ्जितपञ्चबाणविजयास्ताः सालसा दृष्टयो
भूयो गोचरतां व्रजन्त्यपि विधे तस्याः कुरङ्गीदृशः ॥ ४४ ॥

---

१. 'परिभाव्य' इति क-पाठः. २. 'पुलकान्तर' इति ख-पाठः. ३. 'परिरप्स्ये' इति ख-पाठः.

सुदामा—शान्तं पापम् । कथमनाश्वासः । नन्वचिरादेव तत्रभवान्समीहितभाजनं भविष्यति ।

कृष्णः—हन्त भोः,

मद्वियोग[1]कृताबाधा राधा नोपेक्षितुं क्षमा ।
अनतिक्रमणीयं च मातुलस्योपसर्पणम् ॥ ४५ ॥

तत्किमत्र प्रतिपद्यताम् ।

सुदामा—(चिरं विचिन्त्य । प्रकाशम् ।) आयुष्मन्, उभयमप्यविरोधेन समाधीयताम् ।

कृष्णः—(सादरम् ।) कथमिव ।

सुदामा—तदाकर्ण्यतामवधानेन । अस्ति किल नातिदूरेऽधितरणितनयातीरपरिसरनिरस्तसमस्तोपसर्गमपास्तकलिकालकलुषम[2]वधीरितविविधाधिबाधमगाधगुणगरिमसंभारगम्भीरं विश्वविश्वंभराभोगभूषणीभूतप्रभूतवैभवं दरदलितललितकमलकुलगलदमन्दमकरन्दगन्धबन्धुरपरागधारान्धीकृतपुष्पंधयधोरणीदोधूयमानमाधवीलतावनद्धं विविधतरुकुसुमकह्लारमधुरमधुपानमत्तमधुकरीकलरवमुखरीकृतदिगन्तरं मन्दानिलाधूतनूतनचूतमञ्जरीनरीनृत्यमानपिकसुन्दरीसहस्रकलकलाकुलिततरुणतरुशिखरं तरणितनयोत्तुङ्गरिङ्गत्तरङ्गप्रसङ्गसंगतानङ्गरङ्गकूलकूजद्विहंगपुंगवद्वन्द्वानुभूयमानकल्लोलदोलाखेलनकुतूहलम[3]तिचपलगोपालबालिकाकलितकरतालिकातरलवलयावलीकलकनककिङ्किणीचरणमणिनूपुरक्वणितवेणुवी[4]णारवानुगतमृदुमृदङ्गध्वनिजनितहर्षप्रकर्षप्रकटिताकाण्डताण्डवाडम्बरोद्दण्डशिखण्डिमण्डलीमण्डितस्थण्डिलमतिविशदशशधरविस्र-

१. 'कृतां बाधां' इति ख-पाठः. २. 'अवधूत' इति क-पाठः. ३. 'अतिचलद्गोपाल' इति ख-पाठः. ४. 'वीणानकानुगत' इति क-पाठः.

मरकरनिकरचारुक्षीरधाराधोरणीधौतधरणिमण्डलमसमशरशरनिकरपरवशीकृतसुरनरमृगखगप्रमुखजीवजातसमुपजातशान्तमदनमहीपतिक्रीडावनं वृन्दावनं नाम ।

**कृष्णः**—(स्मृतिमभिनीय ।) अये, साधु स्मारितोऽस्मि । परिशीलितपूर्वमेतदस्माभिः । यत्किल—

वाचालैः शुककेकिकोकिलकुलैरारब्धकोलाहलं
वातान्दोलनलोलपल्लवलतालावण्यलीलागृहम् ।
उन्मीलन्मकरन्दतुन्दिलदलद्वासन्तिकासुन्दरं
शश्वन्मामकमत्तचित्तकरिणः संरोधसंदानकम् ॥ ४६ ॥

अपि च ।

अतिचित्रैः सुमनोभिः सुमनोभिर्योगिनामिवोपचितम् ।
शीलितमगमैरगमैर्निगमैरिव योगमारूढैः ॥ ४७ ॥

**सुदामा**—एवमेतत् । तदत्रैव राकानिशाकरकरनिकरकरम्बिताशेषदिक्चक्रवाले परमोदाररमणीये समये तरणितनयातटोपशोभिवंशीवटोपान्तवेदिकाविहारमण्डलीमण्डनीभूय निभृतनिभृतमधरसुधापूरितमधुरमुरलीरवाहूतनूतनाभिसारिकासहस्रसविभ्रमारब्धसरभसपरीरम्भसंभ्रमो विरहविधुराभीरकामिनीसमाजमावर्जयन्नतिविततबाधां राधामप्याराधयत्वायुष्मान्[1] । इत्थमनुभावितरासरसातिरेकपरम्परापचेलिमनिर्भरानन्दाद्वयविस्मृत[2]रसान्तरमपरिचितोचितानुचितविचारचातुरीचमत्कारमपलपितपरापरादरगौरवव्यवहारं[3] तिरोहितवहिरुपाधिसंस्कारं रासक्रीडामहोत्सवं निर्वर्त्य, निवर्त्य च सकलसुन्दरीसमाजं प्रभातायां रजन्यां राजधानीमनुसरिष्यामः ।

---

१. 'इत्थमनुभवति' इति ख-पाठः. २. 'विस्मृतपदम्' इति ख-पाठः. ३. 'व्यवहारतिरोहित' इति ख-पाठः.

कृष्णः—साधु पर्यालोचितम् । तद्विसर्जयैनां राधासमाराधनाय । उपाहरतु चैनां संदेशसंग्रहकारिकाम्—

त्वत्संकल्पप्रणयि हृदयं पञ्चभिः पञ्चबाणो
बाणैरेणीचपलनयने पञ्चतां नेतुमैच्छत् ।
कालक्षेपं यदयमदयोऽप्यद्य यावद्विधत्ते
तत्कर्तव्यार्पकृतिविपरीतार्थताशङ्कयैव ॥ ४८ ॥

सुदामा—विलासवति,

अलमिह तवोपचारैः प्रत्युतसंतापसंततिनिदानैः ।
अयमचिरादपनेष्यति भगवानस्या रसेन संतापम् ॥ ४९ ॥

निभृतं च कर्णे कथय—यदद्य रासरसोत्सवाय मुरलीरवमाकर्ण्य तूर्णमेव वंशीवटविहारभूमावुपस्थातव्यमिति ।

कृष्णः—अथवा सर्व एव गोकुलवासिनः समायातनीयाः । उचितं च प्रथमनिवसतौ सुहृदां प्रस्थितानुव्रजनम् ।

विलासवती—यदादिशति देवः । (इति निष्क्रान्ता ।)

कृष्णः—सखे, अक्रूरमुपसृत्य विज्ञापय—भगवन्, अतिकठोरकिरणस्तपति तपनः । तन्नातिदूरे वृन्दावनोपवनेऽद्य विश्रम्य श्वोभूते मातुलालयमुपसरिष्यामः । उदाहरन्ति च जरन्तः—

'प्रथमा वसतिः स्वल्पसंचारा चेत्सुखावहा ।
यदस्यां पीतमशितं तत्सर्वत्रोपतिष्ठते' ॥ ५० ॥

वृन्दावनदिदृक्षा चास्मानुत्तेजयति निशि निवस्तुम् । तदद्य पुरःसरीभूय राज्ञेऽस्मदागमनमावेदयत्वार्यः । यावदेनमस्मदागमनोत्कण्ठा नोत्तरलयति ।

---

१. 'अपहृति' इति ख-पाठः. २. 'षट्कर्णमेव' इति क-पाठः.

**अक्रूरः**—(सुदामोक्तमाकर्ण्य ।) यथाभिलषितमायुष्मते । (इति निष्कान्तः ।)

**कृष्णः**—(प्राचीमवलोक्य ।) कथमुपनत एव सायंतनः समयः । तथा हि—

कासारे कलहायिता इव मिथः सद्यः पराङ्गानना[1]:
स्वैरं चक्रचकोरपद्मकुमुदव्राताश्चिरादासते ।
प्रत्यक्सिन्धुनिमज्जदुष्णकिरणालातोत्थधूमैरिव
प्रध्मातोदरमेतदम्बरमितो ध्वान्तैः पराभूयते ॥ ५१ ॥

**सुदामा**—आयुष्मन्, एवमेतत् ।

प्राचीं कैरविणीगणाः परिणमच्छीतांशुगर्भामिव
स्वैरं स्मेरमुखाः पुरः प्रसविनीं[2] व्याख्यान्ति भृङ्गारवैः ।
किं चोदञ्चितचञ्चु चन्द्रमभितो मार्जन्ति जिह्वाञ्चलैः
सद्यः स्यूत[3]जरायुवल्करकणव्रातं चकोराङ्गनाः ॥ ५२ ॥

**कृष्णः**—तदिदमनर्थान्तरम् । तथा हि—

एष प्रोषितभर्तृकाकुलमिलत्प्राणप्रयाणे पुरः
प्रत्यूहप्रतिघातपूर्णकलशश्चन्द्रः समुज्जृम्भते ।
तत्कालप्रतिबुद्धकैरववनीसंभ्रान्तभृङ्गाङ्गना-
भेरीभूरिरवाः[4] स्फुरन्ति मदनप्रस्थानसौवस्तिकाः ॥५३॥

अपि च ।

विशदकरवरत्रानद्धगोत्राद्रिकीलं
शिबिरपटकुटीरं चान्द्रमुच्चैर्वितत्य ।

---

१. पराङ्मुखा इत्यर्थः. २. 'सुखप्रसविनीं' इति ख-पाठः. ३. 'सूत' इति ख-पाठः. ४. 'भृङ्गरवाः' इति ख-पाठः.

रतिपतिरतिरोषाचारकापुष्पबाणै-
स्तुदति युवमनांसि ध्वान्तदन्तावलाढ्यः ॥ ५४ ॥

तदेहि । शशधरकरनिकरपरितप्यमानमात्मानं वृन्दावनतरुतिरस्कारिणीनिरस्तचन्द्रिकासंपर्कं परित्रास्यामहे ।

सुदामा—यथाभिरुचितमायुष्मते ।

(इति वृन्दावनप्रवेशं नाटयन्ति ।)

इति चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः ।

(ततः प्रविशति सुनन्दनामा गोपालः ।)

सुनन्दः—आदिष्टोऽस्मि तत्रभवता घोषवृद्धेन नन्दगोपेन, यत्किलाक्रूरागमनगौरवेण रणरणकोपजातदाक्षिण्यसाध्वसावेशविवशतयाविमृश्यकारिणा रामकृष्णौ प्रस्थापयता मया नोदर्कशुद्धमालोचितमिति परितप्यते मे चेतः । यतः—

क्रूराशये कुटिलनीतिनिविष्टबुद्धौ
वैरानुबन्धपरिशङ्कितचित्तवृत्तौ ।
व्रीडाविवेकविधुरे मधुरे हितेऽपि
कंसे न विश्वसिति मे हृदयं नृशंसे ॥१॥

तद्यावदेनं नानाविधोपायनपाणिभिर्घोषवासिभिः सबालदारैः शिथिलीकृतानुशयं करोमि, तावद्वत्साभ्यां वृन्दावनविहारकौतुकव्याजेन कियच्चिरं विलम्ब्यास्मदनुयाताभ्यां महाराजो द्रष्टव्य इति । तदनुसरामि तावत् । क्वेदानीं रामकृष्णौ द्रक्ष्यामि । (इति परिक्रम्यावलोक्य च ।)

---

१. 'निविष्टतुष्टौ' इति ख-पाठः. २. 'तावद्वत्साभ्यां महाराजो न द्रष्टव्यः' इति क-पाठः.

अये, कथमयं सुदामा तयोः सहचर इत एवाभिवर्तते। तदस्मात्प्रवृत्तिमुपलप्स्ये। (प्रविश्य।) सुदामन्, क्व प्रस्थितोऽसि।

सुदामा—

'रासोत्सवपरिश्रान्तं कान्ताजनकदम्बकम्।
निवेश्य गोकुले पित्रोः प्रवृत्तिं समुपाहर' ॥ २ ॥

इति प्रेषितोऽस्मि तत्रभवद्भ्यामार्याभ्याम्।

सुनन्दः—तदलं गोकुलगमनावेशेन।

सुदामा—कथमिव।

सुनन्दः—निर्जनमिदानीं गोकुलम्।

सुदामा—(ससाध्वसम्।) स्पष्टं तावत्कथय।

सुनन्दः—किं न श्रुतवानसि। प्रस्थितयो रामकृष्णयोरनु तन्मानसो नन्दगोपः सुहृद्भिः सह संमन्त्र्य विशदचन्द्रचन्द्रिकाधवलायां रजन्यां ससुहृत्समाजः शकटाधिरोपितविविधोपढौकनिकसहस्रसनाथीकृतगोधनगोपगोपीप्रधानं शिबिरं वृन्दावनराजधान्योरन्तराले निवेशितवान्। स्वयं चेदानीं राजकरमुपाहर्तुं नगरमुपागतः।

सुदामा—कथय तावत्, किमस्याकूतम्।

सुनन्दः—किं कथ्यताम्। ननु तेनैव व्यक्तमुक्तम्—('क्रूराशये' इत्यादि पठति।)

सुदामा—यद्येवं तत्किमिव तत्प्रतिविहितं[1] मन्यते गोपवृद्धः।

सुनन्दः—बाढमयं हि तस्याशयः।

साम्ना दानेन भेदेन चेदयं नोपशाम्यति।
ततः पुरःसरीभूय नियोत्स्ये वत्सयोरहम् ॥ ३ ॥

---

१. 'तावत्प्रतिविहितं' इति क-पाठः.

सुदामा—उचितमेवैतत्पुत्रिणां पुत्रवात्सल्यस्य ।

यदपरविषयेभ्यः प्रीतिपात्रं स्वगात्रं
गुरुतरमपुतोऽपि प्राणिनां प्राणमात्रम्[1] ।
प्रियतममिह तस्मादप्यपत्यं न कृत्यं
परमिह मनुजानामस्त्यतः[2] पुत्रलाभात् ॥ ४ ॥

किं तु ।

अनपेक्षितात्मशक्तिप्रतिपक्षे रक्षसां पक्षे ।
व्यवसितमिदमेतस्य क्षेमाय न किं तु चित्तखेदाय ॥ ५ ॥

सुनन्दः—आः, कथमेवमुच्यते । यतः—

को वेद दैवचरितं येन ब्रह्माण्डकोटयः सृष्टाः ।
निमिषार्धेन क्षपिता दशाननब्रह्मरुद्रेन्द्राः ॥ ६ ॥

सुदामा—अलमिदानीमुक्तिप्रत्युक्तिभिः कालातिपातेन शिबिरसंनिवेश एव स्त्रैणं निवेश्य रामकृष्णावनुसरामि ।

सुनन्दः—क्व पुनरिदानीमिमौ द्रष्टव्यौ । यदहमपि नन्दगोपस्य निदेशादेतौ सहसा राजधानीप्रवेशाद्विरमयितुं त्वरया प्रस्थितोऽस्मि ।

सुदामा—(विहस्य ।) रे मुग्धाशयोऽसि[3] ।

यन्मातुलालयविलोकनकौतुकेन
प्रातस्तरामनुगतौ स्ववयोभिरेतौ ।
संप्रस्थितौ किल कलिन्दसुतातितुङ्ग-
रिङ्गत्तरङ्गसुभगेन पथा विहर्तुम् ॥ ७ ॥

सुनन्दः—(सविषादम् ।) अहह, कथमविमृश्यकारितया नन्दादेशप्रतीपमेवाचरितमाभ्याम् । हन्त भोः,

---

१. 'तत्कलत्रम्' इति ख-पाठः. २. 'ननु जाने नास्त्यतः' इति क-पाठः.
३. मुग्धाशय 'मुग्धाशयोऽसि' इति ख-पाठः.

न तादृशः कोऽपि सखा न वृद्धो न गोपिता नापि पिता न माता ।
बाल्यादिमौ यच्चपलौ निरुध्यात्तदत्र दैवं शरणं प्रतीमः ॥ ८ ॥
(प्रकाशम् ।) तदागच्छ । आवामपि तपनतनयातीरपरिसरविहरणशीला-
वेतावनुसरावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

(ततः प्रविशतो रामकृष्णौ ।)

**रामः**—अहो रमयतितरां प्राभातिकी तरणितनयातीरशोभा अचि-
रोषिताभिर्वर्षाभिः कृतोपद्रवापि पुनः प्रकृतिमापन्ना । तथा हि—

भग्नास्तीरमहीरुहः सहचराः प्रोत्सारिताः पक्षिणः
कालुष्यं हृदये कृतं सहभुवस्त्यक्ताः प्रसादादयः ।
स्रोतोभिर्जलदप्रमुक्तसलिलैरासाद्य वृद्धिं क्षणा-
त्किं किं नापकृतं बलाद्विकुरुते लक्ष्मीमदः क्षुद्रकान् ॥ ९ ॥

**कृष्णः**—एवमेतत् । संप्रति तु सुविहितं शरदा । तथा हि—

व्योमापध्वस्तमेघावरणमपसरत्पङ्कशङ्काकलङ्कः
पन्था निस्तन्द्रचन्द्रा रजनिरपि सरिद्राजहंसावतंसा ।
फुल्लद्राजीवराजीबहलपरिमलोद्गारधीरः समीरः
क्ष्मापालांश्चित्तवृत्तिश्चपलयति चिराज्जैत्रयात्रोत्सवाय[1] ॥ १० ॥

**रामः**—(पुरो निरूप्य सहर्षम् ।)

कालिन्दी मन्दमन्दानिलचलदमललोलकल्लोलमाला-
दोलाखेलन्मरालैरविरलकमलालंकृतेवावभाति ।
मज्जन्मातङ्गगण्डस्थलगलितमदामोदलोभाक्रमद्भि-
र्भृङ्गैर्नीरन्ध्रितोर्ध्वं कुवलयवलया द्वैतमाविष्करोति ॥ ११ ॥

---

1. 'यात्रोद्यमाय' इति ख-पाठः.

**कृष्णः**—(स्पर्शसुखमभिनीय सहर्षम् ।)

एते पाटीरवाटीनवविटपनटीलास्यशिक्षातिदक्षा
दोलाखेलत्पुरंध्रीश्रमजलकणिकाजालपानातिपीनाः ।
सौरभ्यादापतद्भिर्मधुकरपटलैः पृष्ठतोऽनुप्रयाताः
कामाग्नेर्वान्ति धाय्याः[1] पथिककुलवधूबद्धवैराः समीराः ॥१२॥

**रामः**—आयुष्मन्, कथं विविधकलाकलनकौतुकाक्रान्तचित्तत्यानधिगताध्वसंचारखेदा न चिरादेव राजधानीमुपगताः स्मः । तथा हि—

उपवनतरुखण्डहिण्डमानाण्डजकुलकाकलिकाकुलीकृताशाः ।
परिनदितशिखण्डमण्डलीका ददति सुखं मथुरोपशल्यदेशाः ॥१३॥

अपि च ।

वाताधूतमधूकपूगनिवहैर्जम्बीरजम्बूचयै-
र्वन्यैश्चापि कदम्बनिम्बकुटजैः कम्भारिरम्भाभरैः ।
यद्वाटी वटपर्कटीचलदलश्रीदाडिमश्रीफलैः
खर्जूरीपनसादिभिर्विजयते नारङ्गरङ्गस्थली ॥ १४ ॥

(पुनः साश्चर्यम् ।)

माकन्दा मकरन्दविन्दुनिवहैरानन्दितेन्दिन्दिराः
किं वामन्दमरन्दकुन्दनिचया मन्दानिलान्दोलिताः ।
सौराज्येऽप्यधुना भवन्ति न यदा ते वाटपाटच्चराः
पान्थानां किमतःपरं परिचितास्ते चम्पकाकम्पकाः ॥ १५ ॥

---

1. अग्निसमिन्धनर्क्.

(नेपथ्ये कलकलः ।)

(उभौ ससंभ्रममाकर्णयतः ।)

(पुनर्नेपथ्ये ।)

*हद्धि हद्धि । अणिसोम्हि दाणिं संवुत्तो । अअं जणो पसुमारं मारिज्जइ । ता पलित्ताअध महाणुभाआ ।

**उभौ**—आः, कोऽयमन्यैः परिबाध्यमानोऽशरणोऽस्मासु पूत्करोति ।

(प्रविश्य संभ्रान्तः पुरुषः ।)

**पुरुषः**—आयुष्मन्तौ, युष्मत्पादपद्मोपजीवी कुब्जको नाम रामानुचरः ।

**उभौ**—अथ किं तस्य ।

**पुरुषः**—स राज्ञश्चैलनिर्णेजकेन व्यापाद्यमानो मयानुनीय कथं कथमप्यनुमोचितो नाद्यापि प्रत्यवस्थानाद्विरमति ।

**कृष्णः**—तदागच्छ तावत् । प्रत्यनन्तरीभूय तस्यापराधकारणं निभृतमवगच्छामः ।

(इति नेपथ्यान्तरितौ तिष्ठतः ।)

(ततः प्रविशति कुब्जको रजकश्च ।)

**कुब्जकः**—†अले अले लजअआ, देहि अम्हाणं सामिणं लाअपुलप्पवेशजोग्गाइं वशणाइं निवशिदुम् ।

**रजकः**—‡अले दासीए पुत्तआ, को तुमं, के उण तुज्झ सामीओ ।

---

* हा धिक् हा धिक् । अनीशोऽस्मीदानीं संवृत्तः । अयं जनः पशुमारं मार्यते । तत्परित्रायेथां महानुभावौ ।

† अरे अरे रजकक, देह्यस्माकं स्वामिनो राजपुरप्रवेशयोग्यानि वसनानि निवसितुम् ।

‡ अरे दास्याः पुत्रक, कस्त्वम् । कौ पुनस्तव स्वामिनौ ।

**कुब्जकः**—*हग्गे णन्दगोअकुमालाणं लामकण्हाणं पलिचालए चेलधाअए।

**रजकः**—(सरोषम्।)† अरे दुव्विणीदआ, सच्चं गामेलो सि। ण होसि णाअरिओ। ता लहु णिहुअं गच्छ, जाव एदे राआणुअरा तुमं ण पेक्खन्ति।

**कुब्जकः**—‡पेक्खिअ किं करिस्सन्ति।

**रजकः**—§जइ दे ईरिसं वअणं सुणिसन्ति, ता तुमं ण होसि।

**कुब्जकः**—¶कीस कालणादो।

**रजकः**—$अणुइदं खु जप्पसित्ति।

**कुब्जकः**—‖किं एत्थ अणुइदं भणिदम्। णं माणुसा एव्व अंसुआइं णिवसन्ति ण उण पसुआ।

**रजकः**—(साधिक्षेपम्।) ⁂अरे, सुणस। राइणो खु एदाइं अंसुआइं ण जुज्जन्ति गामेलाणं णिवसिदुम्।

---

* अहं नन्दगोपकुमारयो रामकृष्णयोः परिचारकश्चेलधावकः।

† अरे दुर्विनीतक, सत्यं ग्रामीणोऽसि। न भवसि नागरिकः। तल्लघु निभृतं गच्छ, यावदेते राजानुचरास्त्वां न पश्यन्ति।

‡ प्रेक्ष्य किं करिष्यन्ति।

§ यदि ते ईदृशं वचनं श्रोष्यन्ति, तत् त्वं न भविष्यसि।

¶ कस्मात्कारणात्।

$ अनुचितं खलु जल्पसीति।

‖ किमत्रानुचितं भणितम्। ननु मानुषा एवांशुकानि निवसन्ति न पुनः पशवः।

⁂ अरे, शृणुष्व। राज्ञः खल्वेतान्यंशुकानि न युज्यन्ते ग्रामीणानां निवसितुम्।

कुब्जकः—*णं भणामि जइ अहं ण जोग्गो ता किं अम्हाणं सामीणं पि ण जुज्जन्ति ।

रजकः—†अरे, ण एत्थ तुमं अवरज्झसि । किं उण तुह सामीओ जेव्व, जेहिं तुमं इमस्सिं दुल्लहब्भत्थणे कम्मम्मि अणुप्पेसिदो ।

कुब्जकः—(सरोषम् ।) ‡कहं ले, इमस्सिं बह्मण्डमण्डले किं अत्थि जं अम्हाणं पहूणं ण सुलहम् । पेक्ख दाव—

जेहिं सो सअडासुरो विदलिओ जेहिं हदा पूअणा
जेहिं जेव्व सिलाअले विणिहदो तिह्णो तिणावत्तओ ।
जेहिं धेणुअकेसिकालिअबआरिट्ठा गरिठ्ठा हदा
हन्तव्वा अवरे दइच्चनिवहा ते जेव्व पत्ता इमे ॥ १६ ॥

रजकः—(स्मृतिमभिनीय सरोषम् ।) §अरेरे पांसुलापुत्त, कहं इत्थं विअत्थणेण कदत्थेसि सामीणं पुलिसत्थम्, जाणं सत्त भाअरा सिलापट्टेसु अम्हकेरेहिं किंकरेहिं उप्पाडिआ । तत्थ भअसङ्किदेहिं

---

* ननु भणामि यद्यहं न योग्यस्तत्किमस्माकं स्वामिनोरपि न युज्यन्ते ।

† अरे नात्र त्वमपराध्यसि । किं पुनस्तव स्वामिनावेव, याभ्यां त्वमस्मिन्दुर्लभाभ्यर्थने कर्मण्यनुप्रेषितः ।

‡ कथं रे, अस्मिन्ब्रह्माण्डमण्डले किं तदस्ति यदस्माकं प्रभ्वोर्न सुलभम् । पश्य तावत्—

याभ्यां स शकटासुरो विदलितो याभ्यां हता पूतना
याभ्यामेव शिलातले विनिहतस्तीक्ष्णस्तृणावर्तकः ।
याभ्यां धेनुककेशिकालियबकारिष्टा गरिष्ठा हता
हन्तव्या अपरे दैत्यनिवहास्तावेव प्राप्ताविमौ ॥

§ अरेरे पांसुलापुत्र, कथमित्थं विकत्थनेन कदर्थयसि स्वामिनोः पुरुषार्थम्, ययोः सप्त भ्रातरः शिलापट्टेष्वस्मदीयैः किंकरैरुत्पोथिताः । तत्र

एदेहिं माअरं पिअरं अ उवेक्खिअ नन्दपल्लीं पलाइअ णिलीअट्ठिदम् । लगुडहत्थकम्बलणिवसणादिहिं नट्ठचरिदेहिं दिणाइं अइवाहीअन्ति । तदवलाहेण जेव्व ताणं मादरपिअरा अम्हाणं रण्णा रूसिअ काराघरम्मि णिअडबन्धणे णिजुत्ता । एदं सव्वं सुणिअ सहन्ता वि जीअन्ति । ण उण हिअअं उब्भिणिअ जीइअं परिच्चअन्ति । दाणिं उण महाराएण दे वि खेत्तपालबलिं कादुं इह जेव्व आणीदा त्ति सुणीअदि ।

**रामः**—कृष्ण, किमतःपरमपि श्रोतव्यम् । यदीदृशा अप्यधिक्षिपन्ति ।

**कृष्णः**—आर्य,

मदकलकरिकुम्भोद्भेदनव्यग्रबुद्धिं
व्यथयति न मृगेन्द्रं फेत्कृतं फेरवस्य ।
तरलयति भवन्तं हा कथं रोष एष
प्रलयदहनकल्पस्तावकः कक्षदाहे ॥ १७ ॥

**रामः**—आयुष्मन्, प्राप्तावसरमेतन्नोपेक्षितुं क्षमम् ।

आगर्भसंभवदिनं परिरक्षितस्य
कंसापराधशतकैश्चिरसंभृतस्य ।

---

भयशङ्किताभ्यामेताभ्यां मातरं पितरं चोपेक्ष्य नन्दपल्लयां पलाय्य निलीयस्थितम् । लगुडहस्तकम्बलनिवसनादिभिर्नष्टचरितैर्दिनान्यतिवाह्यन्ते । तदपराधेनैव तयोर्मातापितरावस्माकं राज्ञा रुषित्वा कारागृहे निगडबन्धने नियुक्तौ । एतत्सर्वं श्रुत्वा सहमानावपि जीवतः । न पुनर्हृदयमुद्भिद्य जीवितं परित्यजतः । इदानीं पुनर्महाराजेन तावपि क्षेत्रपालबलिं कर्तुमिहैवानीताविति श्रूयते ।

क्रोधाभिधस्य दितिजक्षयकालवह्नेः
संदीपनाय रजकः प्रथमाहुतिर्नः ॥ १८ ॥

**कृष्णः**—यथाभिरुचितमार्यस्य। (इति परिक्रम्योपसर्पति ।) रेरे रजक,

भागिनेयौ नृपस्यावां पुरीं यावो निमन्त्रितौ ।
देहि योग्यानि वासांसि श्रेयस्तत्ते भविष्यति ॥ १९ ॥

**रजकः**—(सोपहासं संस्कृतमाश्रित्य ।)

ईदृश्येव वनेचरा निवसते वासांसि वां पूर्वजा-
स्तद्योग्यानि तु दुर्लभान्यविकुले[1]ष्वन्विष्यमाणान्यपि ।
येन प्राघुणिकीकृतौ नरपतिः सोऽद्यैव वां दास्यति
त्यक्त्वा बालिशतां निलीय निभृतं कंचित्क्षणं जीवतम् ॥ २० ॥

**कृष्णः**—(किंचित्स्मित्वा ।) कुब्जक, किमद्यापि विलम्बसे । उत्पो-थ्यतामेष दुर्मुखोऽस्मिन्नेव शिलातले ।

**कुब्जकः**—*जं महापहू आणवेदि । (इति परिकरं बद्ध्वा तथा करोति ।)

(नेपथ्ये कलकलः ।)

अव्वह्मण्णं अव्वह्मण्णम् ।

†अहह गहिअ पाये भूरि भम्मादिकाणं
पिठुलसिलतलम्मि प्पोथिदो पाडिऊण ।

---

* यन्महाप्रभुराज्ञापयति ।

† अब्रह्मण्यमब्रह्मण्यम् ।

अहह गृहीत्वा पादे भूरि भ्रामयित्वा
पृथुलशिलातले पोथितः पातयित्वा ।
क्षोभितदशादिगन्तः क्रन्दन्नतिमात्रं
नरपतिप्रियदासो जम्बुको रङ्गकारः ॥

---

1. 'अपि कुले' इति ख-पाठः.

खुहिददहदिअन्तो पुक्करन्तोऽतिमेत्तं
नरवइपिअकेरो जम्बुओ रङ्गआरो ॥ २१ ॥

रामः—
रे रे गोपा हतपरिजनान्वस्त्रकोषान्विमुच्य (?)
स्वैरं चीरोच्चयमतिमृदुं मुक्तशङ्कं वसीध्वम् ।
स्वेच्छोपात्तैः कुसुमवसनैर्भूषिता गन्धधूपै
रथ्यावीथ्या नगरमभितः संभ्रमेण भ्रमामः ॥ २२ ॥

(प्रविश्य ।)

पुरुषः—
कनकभुवि सुजातौ रत्नकिर्मीरिताभै-
र्निरुतममलसूत्रैर्विश्वकर्मप्रणीतम् ।
[1]मदुपहृतममुष्मै भूभृते वस्त्रजातं
वसितुमिह भवन्तावर्हतस्तत्तु नान्यः ॥ २३ ॥

कृष्णः—साधु भोः, साधु ।
उचितज्ञोऽनुरक्तोऽसि भक्तोऽसि कुशलोऽप्यसि ।
कृतकृत्यो भवेदानीमैहिकामुष्मिकश्रिया ॥ २४ ॥

पुरुषः—गृहीतः प्रसादो मनोरथातीतः । अनुगृह्यन्तामिमानि दिव्यानि वसनानि ।

रामकृष्णौ—यथाभिलषितं भवते । (इति परिदधाते ।)

रामः—आयुष्मन्, अस्य दिव्यवस्त्ररचितस्य वेषस्यानुरूपेण दिव्यगन्धानुलेपनेन भवितव्यम् ।

कृष्णः—आर्य, यात्रामुहूर्त एव सर्वसमीहितं संघटयिष्यति । (परिक्रम्य पुरतोऽवलोक्य ।) आर्य, कथमयमुपलब्धास्मदागमनवृत्तान्तः

---

१. 'यदुपहृत' इति क-पाठः.

सुदामा नाम मालाकारः प्रीतमनाः संभृतासत्पूजोचितसंभारोऽस्मदा-गमनायोत्कण्ठमान इत एवाभिवर्तते ।

(प्रविश्य ।)

**सुदामा**—भगवन्तौ, एष भृत्यापसदः सुदामा पादयोः पतति ।

**रामकृष्णौ**—समीहितभाजनं भूयाः । अये, कुशल्यसि ।

**सुदामा**—

जगतः कुशलायैव भवतोरयमुद्यमः ।

[1]भक्तानुग्राहिणौ दृष्ट्वा भवेयं कुशली न किम् ॥ २५ ॥

**रामकृष्णौ**—सुदामन्, राजानमनुचरन्नप्यस्मासु नित्यानुरक्तो भक्तश्च भवानिति श्रुतपूर्वमस्माभिः । तेन चातितरां त्वयि प्रीताः स्मः ।

**सुदामा**—यद्येवमिदमत्यासन्नं मदीयं भवनं क्षणं विश्रम्यानुगृह्यताम् ।

(श्रीकृष्णो राममुखमीक्षते ।)

**रामः**—को विरोधः । क्रियतामस्य समीहितम् ।

(इति प्रविशन्ति ।)

**सुदामा**—इदमासनमिदं पाद्यमिदमर्घ्यमेतानि चाचमनीयभक्ष्यभोज्यलेह्यपेयपानकताम्बूलगन्धकुसुमाम्बरादीन्यनुगृह्यन्ताम् । अपि च—

एतास्ता नवमल्लिकापरिमलप्राग्भारलोभ[2]भ्रम-

द्भृङ्गीझांकृतिभूरिपूरितहरित्प्रत्युच्चरत्सौरभाः ।

चञ्चच्चम्पकदामकोमलमिलत्सौदामनीसंपदः

सत्सौगन्धिकगन्धबन्धमधुराः श्रेयः सृजन्तु स्रजः ॥२६॥

**रामकृष्णौ**—(विहस्य ।) अये, महाराजपूजोपकरणान्येतानि । नार्हसि ग्रामीणेभ्यो वनेचरेभ्य उपहारीकर्तुम् ।

---

१. 'भक्तानुग्राहिणोर्दृष्ट्या' इति क-पाठः. २. 'लोलभ्रम' इति ख-पाठः.

**सुदामा**—भगवन्तौ, नाहमविदिततत्त्वो रजकः । यो नाज्ञासीत्

भूमेर्भारावताराय चरन्तौ बाललीलया ।
अनादिनिधनौ पूर्णौ मूर्तिभेदमुपाश्रितौ ॥ २७ ॥

**कृष्णः**—(सोत्प्रासहासम् । करेण करं गृहीत्वा ।) तदेहि । (इति निष्क्रान्तः । पुरोऽवलोक्य साश्चर्यम् ।) सुदामन्,

राकाचन्द्रप्रतिममुदितभ्रूलतालास्यमास्यं
वेणीं श्रेणीमिव मधुलिहामावहन्ती कुचाग्रे ।
पृष्ठोदञ्चद्गडु[1]विनिहितग्रीवमुत्प्रेक्षमाणा
रथ्यावीथ्या कथय पुरतः केयमायाति वक्रम् ॥२८॥

**सुदामा**—उपनतप्रायैव सा, पृच्छ्यताम् । स्वयमेव वक्तव्यं[2] वक्ष्यति ।

(प्रविश्य ।)

**कुब्जा**—(परिक्रम्य साकूतम् ।)

*रूअविणिज्जिदमारो णन्दकुआरो [अ] कुसुमसुउआरो ।
सुणिअदि गुज्जरिजारो सवणेहिं ण उण णअणेहिं ॥ २९ ॥
सो एत्थ आअदो त्ति ज्झति पउत्तिं सुणीअ अन्तउरे ।
उक्कण्ठिदह्मि दट्ठुं णाअरिआजीअसव्वस्सम् ॥ ३० ॥

ता कहिं दाणिं पेक्खिस्सम् (पुरोऽवलोक्य सहर्षम् ।) अम्महे,

---

*रूपविनिर्जितमारो नन्दकुमारः [च] कुसुमसुकुमारः ।
श्रूयते गुर्जरीजारः श्रवणाभ्यां न तु नयनाभ्याम् ॥
सोऽत्रागत इति झटिति प्रवृत्तिं श्रुत्वान्तःपुरे ।
उत्कण्ठितास्मि द्रष्टुं नागरिकाजीवसर्वस्वम् ॥

तत्कुत्रेदानीं प्रेक्षिष्ये । अम्महे,

---

१. गडुः कुब्जानां पृष्ठदेशस्थो मांसपिण्डः.　२. 'व्यक्तं' इति क-पाठः.

एसो दीसइ पुण्डरीअणअणो णीलुप्पलस्सामलो
पाआलम्बिअकण्ठमालसुहओ पीअम्बराडम्बरो ।
गोरङ्गेण अ भाउणा अणुगदो णीलम्बरुब्भासिणा
गङ्गासोतसमागदो व्व जउणापूरो जसोदासुओ ॥ ३१ ॥

(इति चिरं विलोकयन्ती तिष्ठति ।)

**कृष्णः**—(उपसृत्य ।) अये,

कासि त्वं कुत[1] आयासि कस्य वासि परिग्रहः ।
किं वा कस्योपनयसि नयसिद्धिरिवेहिता ॥ ३२ ॥

**कुब्जा**—*सुणादु महाणुआहो । अहं ह्मि तत्थभवदो महाराअकंसस्स अन्तेउरपरिचारिआ सेरन्धी तिवङ्कुणी नाम । तस्स कए णं उअहरामि दिव्वङ्गराअक्खमं जक्खकद्दमक्खोदम् । जदो मए उवणीदं जेव्व कुसुमवसणाणुलेअणतम्बोलप्पहुदि तस्स रण्णो बहुमदं भोदि, ण उण अण्णेण ।

**कृष्णः**—(सोत्प्रासम् ।) उचितमेवैतत् ।

भवादृशी कापि किमस्ति सृष्टौ यया वशीभावमनायि राजा ।
न राजतुल्योऽस्ति जनो गुणज्ञो यस्त्वामहो कामयते त्रिवक्राम् ॥३३॥

---

एष दृश्यते पुण्डरीकनयनो नीलोत्पलश्यामलः
पादालम्बितकण्ठमालासुभगः पीताम्बराडम्बरः ।
गौराङ्गेण च भ्रात्रानुगतो नीलाम्बरोद्भासिना
गङ्गास्रोतःसमागत इव यमुनापूरो यशोदासुतः ॥

*शृणोतु महानुभावः । अहमस्मि तत्रभवतो महाराजकंसस्यान्तःपुरपरिचारिका सैरन्ध्री त्रिवक्रा नाम । तस्य कृते एनमुपहरामि दिव्याङ्गरागक्षमं यक्षकर्दमक्षोदम् । यतो मयोपनीतमेव कुसुमवसनानुलेपनताम्बूलप्रभृति तस्य राज्ञो बहुमतं भवति, न पुनरन्येन ।

---

१. 'कुत्र वा यासि' इति क-पाठः.

कुब्जा—*अलं उवहासेण ।

कृष्णः—नायमुपहासः । किं तु कथयामि—न खलु रसिकानामाकृतिष्वादरः, अपि तु गुणेषु । अथवा प्राग्भवीयसंस्काराहितः कचिदेव कस्यचित्प्रेमातिशयो न गुणपरीक्षामपेक्षते । तथा हि—

यद्यपि दिशि दिशि बहवस्तरवः सन्त्येव कुसुमसंपन्नाः ।
तदपि च कोकिलयूनोऽनूनो रागो रसालमालायाम् ॥ ३४ ॥

कुब्जा—†देवकअं मह आकिदीए वङ्कुणत्तणम् । तत्थ मए किं कादुं सक्कम् ।

सुदामा—यद्येवं तर्हि देवानामपि देवं भगवन्तं भजस्व । येन तवैहिकमामुष्मिकं च शुभं भवति ।

कुब्जा—(संस्कृतमाश्रित्य ।) किमद्याप्येतदुपदेष्टव्यम् । यतः ।

अनेकजन्मार्जितपुण्यपाकैः परं निधानं भगवन्तमाप्य ।
न जातु हातुं वलते मनो मे स्वर्गापवर्गादिषु वीतरागम् ॥ ३५ ॥

‡ता पसीदतु भअवं । अणुगेह्णादु एदं दिव्वं जक्खकद्दमं अङ्गराअं इमाइं कुसुमतम्बोलादीइं ।

कृष्णः—अये, अतितीव्रप्रकृतिकोपनो नरपतिस्त्वयास्मासूपकल्पितमिदमाकर्ण्य त्वामस्मांश्च समूलघातं हनिष्यति ।

कुब्जा—भगवन्, अचिन्त्यानुभावं भवन्तमनुगतानां नास्ति कृतान्तादपि भयशङ्का, किं पुनरस्मान्मनुष्यकीटात् ।

रामः—आयुष्मन्, किमेवमतिवाह्यतेऽनुरक्तो लोकः । संपाद्यतां समीहितमस्याः ।

---

* अलमुपहासेन ।

† दैवकृतं ममाकृतेर्वक्रत्वम् । तत्र मया किं कर्तुं शक्यम् ।

‡ तत्प्रसीदतु भगवान् । अनुगृह्णात्वेतद्दिव्यं यक्षकर्दममङ्गरागमेतानि कुसुमताम्बूलादीनि ।

**सुदामा**—भगवन्, यद्यस्या गाढोऽनुरागबन्धस्तर्हि स्वहस्तेनैव युवयोरङ्गानुलेपनं करोतु । एवं हि वयं नापराधभाजनं भविष्यामः । इयं तु राज्ञोऽनुरोधविरोधौ विचिन्त्य यथोचितमाचरतु[1] । किं नस्तया चिन्तया ।

**रामः**—साधूत्प्रेक्षते सुदामा ।

**कुब्जा**—(विहस्य ।) *अम्महे, जह मे वङ्कुणी पिट्ठी एव्वं तुह वङ्कुणी बुद्धिः ।

**सुदामा**—(अपवार्य ।) अयि मुग्धे, एवं हि कृते प्रसन्नो भगवानेवालिङ्ग्य त्वामतिऋजुं करिष्यति ।

**कुब्जा**—(प्रकाशम् ।) †अणुमदो तुज्झ मन्तोपदेसो । (इति तथा करोति ।)

(नेपथ्ये ।)

‡अच्चरिअं अच्चरिअम् । अम्हहे,

एसा कंसस्स दासी कसणकससिलाहेमरेहाभदेहा
दीहा छीणङ्गलट्ठी थणभरणमिआ कण्णजाहच्छिलच्छी ।
दुल्लक्खा चन्दणच्चापविअरणकलामेत्तसंतोसिएणं
कह्णेणं ही तिवङ्का कह विअ णिमिसद्धेण उज्जू करिज्जा ॥३६॥

---

* अम्महे, यथा मम वक्रं पृष्ठमेवं तव वक्रा बुद्धिः ।

† अनुमतस्तव मन्त्रोपदेशः ।

‡ आश्चर्यमाश्चर्यम् । अम्महे,

एषा कंसस्य दासी कषणकषशिलाहेमरेखाभदेहा
दीर्घा क्षीणाङ्गयष्टिः स्तनभरनमिता कर्णमूलाक्षिलक्ष्मीः ।
दुर्लक्षा चन्दनार्चाप्रवितरणकलामात्रसंतोषितेन
कृष्णेन हि त्रिवक्रा कथमिव निमिषार्धेन ऋजुः कृता ॥

---

1. 'यथोचितं चरतु' इति क-पाठः.

सुदामा—भगवन्, यद्यस्या गाढोऽनुरागबन्धस्तर्हि स्वहस्तेनैव युवयोरङ्गानुलेपनं करोतु। एवं हि वयं नापराधभाजनं भविष्यामः। इयं तु राज्ञोऽनुरोधविरोधौ विचिन्त्य [1]यथोचितमाचरतु। किं नस्तया चिन्तया।

रामः—साधूत्प्रेक्षते सुदामा।

कुब्जा—(विहस्य।) *अम्महे, जह मे वङ्कुणी पिट्ठी एव्वं तुह वङ्कुणी बुद्धिः।

सुदामा—(अपवार्य।) अयि मुग्धे, एवं हि कृते प्रसन्नो भगवानेवालिङ्ग्य त्वामतिऋजुं करिष्यति।

कुब्जा—(प्रकाशम्।) †अणुमदो तुज्झ मन्तोपदेसो। (इति तथा करोति।)

(नेपथ्ये।)

‡अच्चरिअं अच्चरिअम्। अम्हहे,

एसा कंसस्स दासी कसणकससिलाहेमरेहाभदेहा
दीहा छीणङ्गलट्ठी थणभरणमिआ कण्णजाहच्छिलच्छी।
दुल्लक्खा चन्दणच्चापविअरणकलामेत्तसंतोसिएणं
कह्णेणं ही तिवङ्का कह विअ णिमिसद्धेण उज्जू करिज्जा ॥३६॥

* अम्महे, यथा मम वक्रं पृष्ठमेवं तव वक्रा बुद्धिः।

† अनुमतस्तव मन्त्रोपदेशः।

‡ आश्चर्यमाश्चर्यम्। अम्महे,

एषा कंसस्य दासी कषणकषशिलाहेमरेखाभदेहा
दीर्घा क्षीणाङ्गयष्टिः स्तनभरनमिता कर्णमूलाक्षिलक्ष्मीः।
दुर्लक्षा चन्दनार्चाप्रवितरणकलामात्रसंतोषितेन
कृष्णेन हि त्रिवक्रा कथमिव निमिषार्धेन ऋजुः कृता ॥

1. 'यथोचितं चरतु' इति क-पाठः.

नप्रत्यासन्नप्रतोलीष्वापणिका नानाविधपण्योपायनपाणयोऽस्मदागमनाय त्वरमाणाः श्रेष्ठिश्रेष्ठपुरःसराः पुरः समुपसर्पन्ति । तदत्र वयमेवोपसृत्य रथ्याशोभां पश्यामः ।

**रामः**—एवमस्तु ।

(इति परिक्रामन्ति ।)

**रामः**—(रथ्याशोभां निर्वर्ण्य ।) अहो, महदाश्चर्यम् ।

चञ्चच्चन्दनसारसौरभभरभ्राम्यद्द्विरेफावली-
व्यालीढान्घनसारपूरनिकरान्कस्तूरिकाविभ्रमान् ।
क्रीणन्त्यापणिकास्तथा मधुकरव्रातैः सहोच्चोलिता-
न्कस्तूरीप्रकरान्विविच्य सुचिराज्जानन्ति गुञ्जारवैः ॥ ४० ॥

इतश्च—

नानावर्णमणिप्रभाव्यतिकरप्रोन्मीलदिन्द्रायुधाः
संभ्रान्तभ्रमरावलीघनघटा व्याविद्धसूर्यातपाः ।
धारायन्त्रविमुक्तचन्दनरसासारातिसान्द्रीकृता
रथ्या वार्षिकयामिनीभ्रममहो नक्तंदिवं तन्वते ॥ ४१ ॥

(अन्यतो विलोक्य, सानुक्रोशम् ।) अहह ।

स्फटिकभवनभाभिश्चन्द्रिकाभ्रान्तिभाजः
स्फुरदरुणमणीभिर्दत्तसूर्यांशुशङ्काः ।
दिनरजनिविवेकव्याकुलाः कोकलोकाः
क्षणमपि न लभन्ते शोकनिर्मोकमस्याम् ॥ ४२ ॥

**रामः**—आयुष्मन्, पुरः प्रत्यासीदति राजभवनद्वारम् । यत्किल

अधिरजनि निरस्तध्वान्तशङ्काकलङ्कै-
र्मणिगणकरजालैर्दुर्विभाव्यप्रवेशम् ।
कनकशिखरशृङ्गोत्तुङ्गरिङ्गत्पताका-
कुलचलकरशाखातर्जितस्वर्गलोकम् ॥ ४३ ॥

सुदामा—भगवन्, पुरतो निरूप्यताम् ।

एताः पश्य पुराङ्गनाः प्रविगलद्धम्मिल्लमल्लीस्रजो
　व्यस्तं व्यस्तविभूषणाः सरभसं त्यक्तान्यकार्योच्चयाः ।
लीलालोलविलोचनैरुभयतः सौधावलीमाननैः
　स्वर्गङ्गामिव दर्शयन्ति शफरीपर्यस्तपङ्केरुहाम् ॥ ४४ ॥

कृष्णः—अलमिदानीं नगरालोकनकौतुकव्यासङ्गेन । त्वरयतितरां पित्रोः पादपद्मदर्शनोत्कलिका । (नेत्रे निमील्य चिरं विभाव्य सप्रत्याशं प्राकृतमाश्रित्य ।)

*सो वि क्खणो हुविस्सदि जस्सिं तादस्स पाअकमलम्मि ।
भम्मन्तभमरविब्भमपडिलम्भो भोदि [मह] मत्थस्स ॥ ४५ ॥

(पुनर्ध्यानं नाटयन् ।)

उम्मीलिअपुलआइं फारिअलच्छीइँ पेम्मतरलाइं ।
भूओ बन्धुमुहाइं सुहाइँ मे देन्ति सुचिरदिट्ठाइं ॥ ४६ ॥

रामः—आयुष्मन्, अलमनया चिन्तया । कथमप्यनाश्वासः । ननूपनत एवास्य दितिजकुलकलङ्कस्य कंसस्यावसानसमयः । अनतिलङ्घनीयः खलु खलानां दुर्वृत्तदुर्विपाको न चिरादेव परिपच्यते । पश्य—

अम्भोधिः शतयोजनोऽस्य परिखा सालः सुवेलाचलो[1]
　रक्षोभिः परिरक्षितानधिगतातङ्का च लङ्कापुरी ।

---

*सोऽपि क्षणो भविष्यति यस्मिंस्तातस्य पादकमले ।
भ्रमद्भ्रमरविभ्रमप्रतिलम्भो भवति [मम] मस्तकस्य ॥
उन्मीलितपुलकानि स्फारितलक्ष्मीनि प्रेमतरलानि ।
भूयो बन्धुमुखानि सुखानि मे दास्यन्ति सुचिरदृष्टानि ॥

---

१. 'पटीराचलो' इति ख-पाठः.

पुत्रः शक्रजिदुग्र एष वरदो भृत्यास्तथेन्द्रादय-
स्तस्याप्यस्य दशाननस्य भुवने वार्तापि न श्रूयते ॥ ४७ ॥

तदेहि । राजकुलमेव प्रविशामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

(ततः प्रविशति वेत्रपाणिपुरुषः ।)

पुरुषः—(स्वगतम् ।) अहो अस्य नरपतेर्नैर्दाक्षिण्यं नैर्घृण्यं च । तथा हि—

कति कति निहता न भागिनेया न च कतिधानुजयानुनीत एषः ।
तदपि न विरमत्यनल्पशक्तिः स्वजनवधादफलात्खलः प्रकृत्या ॥ १ ॥

(पुनः सनिर्वेदम् ।) हन्त भोः,

एषातितृष्णा कृष्णाहिर्भूभुजां हृद्बिलेशया ।
परप्राणानिलैरेव प्रायः प्राणिति नान्यथा ॥ २ ॥

(निःश्वस्य ।) अहो अस्य दुर्मतेः प्रकृतिविरोधः ।

तथा हि—

राज्यं निर्जितनिर्जरोर्जितबलं संतर्जिताशागजं
दिक्पालामलमौलिलालितपदं स्वर्बन्दिभिर्वीजितम्[1] ।
संप्राप्याप्यकुतोभयं दितिकुलालंकारतामश्नुव-
न्नात्मानं हतमेव पश्यति शिशुप्रायैरपि प्राकृतैः ॥ ३ ॥

तदिदानीमस्येदृशं समारम्भं न शुभोदर्कं[2] तर्कयामि । यदुदाहरन्ति—

'प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते' ॥४॥ इति ।

---

१. 'वर्जितम्' इति ख-पाठः. २. 'शुभोदयं' इति ख-पाठः.

अपि चायमनेककालार्जितमूर्जितं यशो भोजभूमीभुजामनुकलं कलङ्कयति । तदिह सर्वथा—

प्रत्यर्थिक्षितिपालबालवनितासीमन्तसिन्दूरिका-
लुण्ठाकप्रकटप्रतापदहनज्वालावलीसोदरे ।
त्रैलोक्योत्तरकर्मनिर्मितिपरिप्राप्तोदये हन्त भोः
सोऽयं भोजकुलस्य कीर्तिकदलीकण्ठे कुठारायते ॥ ५ ॥

अथ वा किमनेन ममारण्यरुदितेन । प्रेष्यवर्गेण हि राज्ञामाज्ञानुवर्तनं[1] सुशकम्, न पुनरुपदेशः । तद्यथोपदिष्टमनुतिष्ठामि । (इति परिक्रम्य ।) भो भोः पर्यन्तवर्तिनः सामन्ताः, तत्रभवान्[2]महाराजः समाज्ञापयति—यथा इयन्तं कालं वासुदेवः स्वजनगौरवादतिदीन इति बाल इति चोपेक्षितः । स चेदानीं दितिजकुलकालतया परिणममानो नोपेक्षाक्षणक्षेपं क्षमते ।

तथा हि—

प्रमादादज्ञानाद्दुरितपरिपाकादतिमदा-
द्विनश्यत्त्वावेशाद्यदपकृतमेतेन शिशुना ।
कथंचित्तत्सोढं पुनरयमिदानीं मधुपुरीं
प्रमश्नात्यध्यक्षं तदिदमविषह्यं भवति मे ॥ ६ ॥

तदिदानीमप्रमत्ताः सज्जा भवत[3] ।

रक्ष्यन्तां पुरतोरणाः कुवलयापीडः[4] पुरः[5] प्रेर्यतां
मल्लाः संनिपतन्तु युद्धकुशला योधाश्च घोरायुधाः ।
रच्यन्तां मखवीक्षणाय परितो मञ्चाश्च किं चोच्चकै-
र्हन्यन्तां दितिजारयः सरभसं प्राप्ता[6] निजं गोचरम् ॥ ७ ॥

---

१. 'राज्ञामनुवर्तनं' इति क-पाठः. २. 'तत्रभगवान्' इति ख-पाठः. ३. 'भवथ' इति ख-पाठः. ४. कुवलयापीडः कंसस्य मत्तो हस्ती. ५. 'पुरतो' इति ख-पाठः. ६. 'प्राज्ञा' इति ख-पाठः.

(पुनः सानुक्रोशम् ।) अहो अनयोर्नन्दकुमारयोरात्मानपेक्षं चेष्टितम्[1] । यतः—

वृद्धस्तातः समज[2]वसतिर्गोपबालाः सहाया
यष्टिः शस्त्रं शयनमवनिः पाशुपाल्यं च वृत्तिः ।
सत्येतस्मिंस्त्रिभुवनमिलद्वीरवंशावतंसे
कंसे राजन्ययमविनयश्चेत्तयोर्हा प्रमादः ॥ ८ ॥

(नेपथ्ये कलकलः ।)

**वेत्रधारः**—(कर्णं दत्त्वा ।) आः, कथमयमसमयाशनिनिपातस्फूर्जदूर्जस्वलवज्रनिर्घोषभीषणप्रकटविकटकडकडारावभीषणः कोलाहलः समुल्लसति ।

(प्रविश्यातिविवशः ।)

**प्राकोष्ठिकः**—अरेरे नगरवासिनः, पलायध्वं पलायध्वम् । अयमिह परापतित एव कंसकुलकालानलो हरिः । य एष—

निष्पिष्यैकेन वज्रादतिकठिनतरं मुष्टिनायःकवाटं
हत्वा रक्षान्भयार्तद्रवदखिलजनान्योन्यनिष्पेषदुःस्थम् ।
रुष्टाम्बष्ठ[3]प्रणुन्नाभिमुखकुवलयापीडमुत्पीडयिष्य-
न्बर्हापीडावनाहं द्रढयति मनसारब्धझम्पानिपातः ॥ ९ ॥

**वेत्रहस्तः**—अये, कोष्ठपाल, स्थिरो भव तावत् । यावदावां कृष्णकुवलयापीडयोर्नियुद्धं दूरादेव स्थित्वावगच्छामः ।

**कोष्ठपालः**—(समाश्वस्य ।) तथा कुर्मः ।

(इति क्रीडापर्वताधिरोहणं नाटयतः ।)

**वेत्रहस्तः**—(पुरो निरूप्य साश्चर्यम् ।) कोष्ठपाल, इदं तावदवलोकय ।

---

१. 'चरितम्' इति ख-पाठः. २. समजः पशुसमूहः. ३. 'दुष्टाम्बष्ठ' इति ख-पाठः, अम्बष्ठो हस्तिपकः.

धाराभिर्दानवारां क्षितितलमखिलं पङ्किलं निर्मिमाणः
कुर्वाणो बृंहितेन प्रलयजलधरध्वानधिक्कारमारात् ।
अश्रान्तो दन्तकुन्तग्रथितघनघटास्फालनोद्धूतमूर्धा
क्रोधोत्क्षिप्ताग्रहस्तः प्रपतति रभसादुन्नदन्नेष दन्ती ॥ १० ॥

**कोष्ठपालः**—आयुष्मन्, एवमेतत्—

उन्मूल्यालानभूमीरुहमतितरसोत्खण्डितान्दूवितानान्
न्याकर्षन्नेष पादैर्मदजलकलुषः क्षिप्तनक्षत्रमालः ।
शुण्डादण्डाभिघातैर्नभसि विदलयन्पुष्करावर्तकादी-
न्धावत्याधूतमूर्धा हरिमभिरभसा दैवनुन्नः करीन्द्रः ॥११॥

**वेत्रधारः**—(ससंरम्भम् ।) कोष्ठपाल, इतः पश्य नन्दशिशोः कृत-हस्ततालाघवातिशयम् ।

हन्तुं दन्तैरभीष्टः प्रविशति पदयोः शुण्डयाकृष्यमाणः
पश्चार्धान्निष्प्रपद्य भ्रमयति कलयन्पुच्छमेनं कराभ्याम् ।
उत्प्लुत्यारुह्य कुम्भं दलयति सृणिना वञ्चयित्वास्य दृष्टिं
मुष्टिभ्यां संपिनष्टि द्रुतमभिचलतोऽस्थीनि सव्यापसव्यम् ॥१२॥

(पुनः सविस्मयम् ।)

कृष्ण क्रीडसि किं चिरस्य विरम व्याहन्यते प्रस्तुतं
किं वा पौरुषमत्र ते पशुवधादित्यग्रजेनोदितः ।
पाणिभ्यां परिपीड्य हस्तमभितः संभ्रम्य पश्चां गले
निर्मृद्योदहरद्धसन्निव हरिर्दन्तान्सहैवासुभिः ॥ १३ ॥

**कोष्ठपालः**—अहह, असमञ्जसम् । कथंविनिहत एव कुवलया-

---

१. 'दैवनुन्नः करीन्द्रः' इति ख-पाठः. २. अन्दू पादशृङ्खला. ३. 'रभसात्' इति ख-पाठः. ४. अङ्कुशेन.

पीडः । कुवलयापीडो महाराजविजयवैजयन्ती । तदिदानीं नाशंसे भोजकुलकुशलाय ।

**वेत्रहस्तः**—शान्तं पापम् । किमेतावता एकेनानेन विफलीकृतेन । नन्वस्ति प्रतिविधानान्तरं रचितम् । येन न चिरादेव माहाराजो निष्कण्टकां महीमुपभोक्ष्यते ।

**कोष्ठपालः**—किं तत् । कथय तावत् । येन मे हृदयं समाश्वसिति ।

**वेत्रहस्तः**—तन्निभृतमाकर्ण्यताम् । प्रागेव राज्ञा मन्त्रितमेतत् । यत्किल कथंचिद्यदि कुवलयापीडोऽपि पीड्येत ततो मल्लयुद्धरङ्गप्रसङ्गं प्रस्ताव्य तद्दर्शनव्याजेन नानादेश्यान्वीरभटानुपढौकयिष्यामः । तद्दिदृक्षाकुतूहलादस्मदा[1]कारणगौरवाद्गर्वोत्सेकाच्च तत्रोपसीदन्तौ रामकृष्णौ मल्लरङ्गकौतुकव्याजेन व्यापादयिष्याम इति । तदादेशाच्च मया प्रागेव सर्वं सुविहितम् । तथा हि—

प्राकारैः प[2]रिखावटैरुपचितः प्राग्रङ्गवाटः कृतः
कापट्ये पटवो भटाश्च विकटाः कूटादयो ढौकिताः ।
विन्यस्ताः शलतोशलप्रभृतयो द्वारेषु मल्लाः खलाः
सर्वेषामुपरि स्वयं विजयते कंसः समं बन्धुभिः ॥ १४ ॥

**कोष्ठपालः**—(सहर्षम् ।) साधु भोः कुटिलनीतिपण्डित, साधु । संविहितमेतत् । उदाहरन्ति च—

'सुप्तं निशि प्रमत्तं वा घातयन्ति रिपुं नृपाः ।
विषेण वह्निना वापि च्छलेन च बलेन च ॥१५॥' इति ।

**वेत्रधारः**—तदागच्छ । मल्लरङ्गभूमिपरिसरमेवानुसृत्यानयोः पौरुषं प[3]रीक्षिष्यावहे ।

---

१. आकारणमाह्वानम्. २. परिखारूपगर्तैः. ३. 'परीक्षिष्यामहे' इति क-पाठः.

**कोष्ठपालः**—एवमस्तु ।

(इति निष्क्रान्तौ ।)

(प्रवेशकः[1] ।)

(ततः प्रविशतो रामकृष्णौ चाणूरमुष्टिकाभ्यां प्रत्यवतिष्ठमानौ ।)

**कृष्णः**—

रे रे द्वारावरोधं जहिहि वितर नो रङ्गवाटे प्रवेशं

**चाणूरः**—

शूरा एव प्रवेश्या न तदितर इति क्ष्मापतिर्नः प्रशास्ति ।

**कृष्णः**—(विहस्य ।)

शूरं मां वेत्ति कंसो न किमिह

**चाणूरः**—

कुलतो वेत्ति नो कर्मतस्तत्

**कृष्णः**—

मैवं वादीरपार्थं न दधति कुलजा मामका नामधेयम् ॥ १६ ॥

**मुष्टिकः**—चाणूर, सत्यमेतदाह कृष्णः । यतः श्रुतपूर्वमस्माभिर्महाराजेन च, यत्किल गोकुले महाबलैर्गोपालैः सह मल्ललीलाविनोदमनुभवन्तौ नि शेषितानेकवीरवर्गौ निसर्गदुर्मदोत्सिक्तौ मथुरामण्डलं मण्डयत इति । एतदेव चोपश्रुत्य वीरसमरदिदृक्षाकुतूहलिना महाराजेन सबहुमानमानायितावेतौ । प्रवर्तितश्च रङ्गप्रसङ्ग एतयोः प्ररोचनार्थम् । तदेताभ्यामप्यस्य राज्ञो मनोरथः संपादयितुमुचित एव । (कृष्णमुद्दिश्य ।)

राजाज्ञानुनिवर्तनं हि परमो धर्मः प्रजानामयं
　लाभख्यातिमहत्त्वसंपदपरो दोर्दण्डकण्डूमृजा ।
तन्मे दर्शय युद्धकौशलकलां मत्प्रत्ययादेव हि
　प्रीयेत प्रभुरन्यथा तु भवतोः प्रत्यागतिर्दुःशंका[2] ॥ १७ ॥

---

१. 'प्रवेशकः' इति पुस्तकद्वयेऽपि नास्ति.　२. 'दुर्लभा' इति ख-पाठः.

कृष्णः—

नो युक्ता युद्धचर्चा समरविजयिभिर्वीरगोष्ठीगरिष्ठै-
र्युष्माभिर्बल्लवानां वनभुवि वसतां राजदण्डोचितानाम् ।
नो चेत्त्वामन्तरेण प्रतिहतगतयः शक्नुमो हन्त गन्तुं
तद्यूयं युद्धशिक्षां वितरत कृपया सिद्धविद्याप्रदानात् ॥१८॥

चाणूरमुष्टिकौ—(सहर्षम् ।) अनुमतमेतत् । तद्बध्यतां परिकरः ।

रामकृष्णौ—(तथा कृत्वा उभौ प्रति ।)

यथासंख्येन[1] युवयोरस्त्वाचार्यकमावयोः[2] ।
कृतहस्तौ यथा शीघ्रं तोषयामोऽद्य मातुलम् ॥ १९ ॥

चाणूरः—साधु मन्त्रितम् । मुष्टिक, त्वं तावदेनं बालशिक्षया दीक्षय । अहमप्येनम् ।

(इत्यन्योन्यं पाणी परामृशतः ।)

रामकृष्णौ—आचार्य,

बालौ च बालिशौ चावां न विद्मो युद्धकौशलम् ।
किं तु
भवच्चेष्टानुकरणं करिष्यामः कियच्चिरम् ॥ २० ॥

चाणूरमुष्टिकौ—(स्वगतं सहर्षम् ।) अहो महाभाग्यं महाराजकंसस्य । महांश्चासौ बुद्ध्यतिशयः । यदशक्यप्रतीकारावप्यनेनोपायेन सुनिग्रहाविति विचिन्त्य तथा संविधानं व्यधत्त । असद्भाग्यवशाच्चेता[3]वप्यत्यन्तानभिज्ञौ दैवेन पशूकृत्योपहृतौ । तदेतावकृच्छ्रेणैव करतलेन मत्कुणाविव संमृद्य राज्ञः पारितोषिकमाहरिष्यामः । (प्रकाशम् ।) रामकृष्णौ, साधु मन्त्रयेथे ।

---

१. 'यथासंख्यं न' इति ख-पाठः. २. 'आर्ययोः' इति ख-पाठः. ३. 'भागधेयवशात्' इति ख-पाठः.

आदावावां यद्यदङ्गमभिहन्मो यथा यथा ।
तथा तथानुवर्तेथां शिक्षायामेष हि क्रमः ॥ २१ ॥

**रामकृष्णौ**—यथादिशतमाचार्यौ । (इति द्वन्द्वयुद्धमनुकुरुतः ।)

तथा हि—

अंसेनांसं मुष्टिनामुष्टिमुरू हत्वोरुभ्यां वक्षसा चापि वक्षः ।
शीर्षं शीर्ष्णा चाथ पादौ पदाभ्यां दोर्भ्यां दोषौ जघ्नतुस्तौ यथेष्टम् ॥२२॥

**चाणूरमुष्टिकौ**—(स्वगतम् ।) अहो बालयोरप्येतयोर्घनघात्यान्यतिकठोरतराण्यङ्गानि । येषां प्रहारो वज्रादप्यतिदुःसहोऽस्माकं मर्माणि पीडयतितराम् । (पुनर्निर्वर्ण्य ।) कथमस्य वीररसरभसोत्सेकतुङ्गान्यङ्गानि प्रतिक्षणमुपचीयमानप्रभावातिशयदुष्प्रेक्षणीयानि लक्ष्यन्ते ।

तथा हि—

ऐन्द्रो वज्रः किमथ दहनो वाडवः कालकूटः
किं वा कूटः प्रलयजलदः पुष्करावर्तकः किम् ।
किंस्वित्पुञ्जः प्रलयतडितां द्वादशार्कोदयः किं
यस्यालोके भवति नितरामिन्द्रियाणां प्रमोषः ॥ २३ ॥

तदस्माकं नास्ति जीवन्मुक्तिप्रत्याशा । परममुक्तिमेव तु निर्विवादं निश्चिनुमहे । तथापि न युद्धादुपरमामः । यतः—

दैवाधीनः समिति विजयश्चेदुपस्थास्यतेऽस्मां
स्तद्भूभर्तुः प्रथितयशसो वल्लभाः स्याम नूनम् ।
मृत्युर्वा चेत्त्रिदशतरुणीचामरव्यग्रहस्त-
प्रेङ्खद्भूषारणितसुभगं स्वर्गराज्यं भजेम ॥ २४ ॥

(प्रकाशम् ।) रे रे गोपालबाल दुर्ललित, नेदानीं भविष्यसि ।

**कृष्णः**—(विहस्य ।) सत्यमात्थ । ननु रे, नहि नित्यभूतः पुनर्भवति ।

(नेपथ्ये ।)

जङ्घाबन्धभ्रमणपतनस्थानकश्येनपात-
ग्रीवास्कन्दप्लुतनिलयनैर्मेषयुद्धप्रचारैः ।
उत्क्षिप्योच्चैः क्षितिमधिजवात्पातितः केशवेन
क्षीणप्राणः शिव शिव लुठत्येष चाणूरमल्लः ॥ २५ ॥

**वेत्रधरः**—(सावेगम् ।) कथमसौ निहत एव । तथा हि—

उद्भिन्नोदरकंदरोद्गिरदसृग्धाराकरालाननः
क्रोधाध्मानविघूर्णमानतरलक्रूराक्षितारोत्करः ।
नासा[1]रोकपरीक्ष्यमाणकृपणप्राणप्रयाणक्षणो
नष्टाशेषविचेष्टितो गिरिरिवाध्यास्ते क्षितिं कम्पयन् ॥२६॥

**कोष्ठपालः**—हा धिक् कष्टं भोः ।

मुष्टिभिर्मुष्टिकोऽप्येष प्रलम्बरिपुणा हतः ।
कुतोऽद्य कृतहस्तोऽपि कृतान्तसदनातिथिः ॥ २७ ॥

**वेत्रधरः**—अहह, असमञ्जसमसमञ्जसम् ।

निर्दोषाविव दोषौ[2] जयश्रियो राज्यमण्डपस्तम्भौ ।
चरणौ नीतेर्नयने सिद्धेरिव यद्धतावेतौ ॥ २८ ॥

तदिदानीं दुरवस्था जयास्था ।

(पुनर्नेपथ्ये कलकलः ।)

हन्त भोः,

हत्वा दौवारिकाणां नियुतमसिभृतां मुष्टिनैकेन पिष्ट्वा
कूटं कूटप्रवीणं शलमपि कुशलं संगरे तोशलं च ।
भित्त्वा द्वारावरोधं दलितकुवलयापीडदन्तैकशस्त्रौ
मध्येरङ्गं प्रविष्टौ मदकलकलभोद्भासिनौ रामकृष्णौ ॥ २९ ॥

---

1. नासारन्ध्र. 2. 'भुजौ'.

**वेत्रधरकोष्ठपालौ**—(आकर्ण्य सातङ्कम् ।) तदिदमिदानीमनर्गलं[1] कंसस्य स्वशरीरमात्रचिकित्सनीयमत्याहितमुपस्थितम्[2] । न पुनरत्र कंचित्प्रतीकारं पर्यालोचयावः । भवतु तावदिमं पूर्ववृत्तं वृत्तान्तं महाराजाय निवेद्यावहितौ प्रत्यनन्तरीभूय प्राणव्ययेनापि स्वामिभक्तिव्रतमनुवर्तावहे । (इति निष्क्रान्तौ ।)

(ततः प्रविशतो रामकृष्णौ )

**कृष्णः**—(सर्वतो निरूप्य सहर्षम् ।) अहो रमणीयता रङ्गवाटस्य[3] । यतः—

प्राकारा मणकुट्टिमैरुपचिताः स्थूलेन्द्रनीलोपल-
प्रायाः प्राङ्गणभूययः सितशिलासंदर्भगर्भोज्ज्वलाः ।
मुक्ताहीरकतारहारतरलस्रग्गन्धदीपाम्बर-
प्रोद्धूता[4]गुरुसारधूमशबलाश्चास्थानिका मण्डपाः ॥ ३० ॥

**रामः**—(निर्वर्ण्य साश्चर्यम् ।) अये, विश्वविलक्षणैवैषा सृष्टिः । तथा हि—

न स्रष्टा सृष्टिमेतां विरचयितुमलं विश्वकर्मापि नैत-
त्कर्माभिज्ञो न सुज्ञः प्रतिहतविबुधा[5]शेषमायो मयोऽपि ।
नायं लोको बलारेर्न च बलिनिलयो नापि वैकुण्ठपीठी
नाप्यन्यस्यानुबिम्बः किमयमुदयते दृष्टिबन्धः प्रबन्धः[6] ॥३१॥

(उच्चैर्मञ्चान्निरूप्य ।) अये, कथममी स्वस्वकाष्ठामधिष्ठिता नानादिगन्तागता दिक्पाला इव भूपालाः सदा रङ्गमण्डलं मण्डयन्ति । तथा हि—

---

१. 'तदिदानीं' इति ख-पाठः. २. 'स्वशरीरमात्रं' इति क-पाठः. ३. 'यज्ञवाटस्य' इति ख-पाठः. ४. 'प्रोद्भूता' इति क-पाठः. ५. 'विविधाशेष' इति क-पाठः. ६. 'दृष्टिबन्धप्रबन्धः' इति क-पाठः.

लीलादोलायमानोन्नमदमलशिरःशेखरश्रेणिरोह-
द्रोचिर्वीचिप्रपञ्चच्छलवलदमितोद्भ्रान्तकान्तप्रतापाः ।
एते राजन्यगोष्ठीव्यतिकररभसोत्सर्पिदर्पप्ररोह-
प्राग्भारस्फारवक्षस्तटविकटलुठल्लोलमाला नृपलाः ॥३२॥

(अत्युच्चैरवलोक्य कृष्णं प्रति ।) आयुष्मन्, कथमयं सप्तभूमिप्रासादशिखरशेखरीभूतां क्रीडाभवनवलभीमसद्दिदृक्षोत्कलिकाकुलो मातुलोऽलंकरोति । तदस्याकुण्ठोत्कंठोपशमाय सत्वरमुपसर्पामः ।

(इति सोपानारोहणं नाटयतः ।)

**कंसः**—(दूरादवलोक्य सोद्वेगं ससंभ्रमं च सहसोत्थाय ।) रे रे सामन्ताः सदस्याः,

निःसार्यतामिमौ पापौ कुलाङ्गारौ मदोद्धतौ ।
मच्चक्षुःसंनिपाताग्नौ यावन्न शलभायितौ ॥ ३३ ॥

**सभ्याः**—(सर्वे समाकर्ण्य सादरमवलोक्य सानन्दम् ।) अयमयं भोः,

मल्लक्रीडाश्रमजलकणाकीर्णमुग्धाननश्रीः
पीतस्फीताम्बरपरिकरो बर्हपिच्छावतंसः ।
कण्ठोल्लुण्ठत्कमलवलयामृष्टवक्षोऽङ्गरागः
स्कन्धासक्तद्विरददशनः साग्रजोऽग्रेऽभ्युपैति ॥ ३४ ॥

(पुनः परिभाव्य सानुक्रोशहर्षम्[1] ।) अहह, कथमिमौ सुकुमारतराकृती नन्दगोपकुमारौ निरीक्षमाणानामस्माकमन्तरात्मा प्रशान्तपावनत्वमवगाहते । तथा हि—

राकासुधाकरसुधाकरचारुवक्र-
मिन्दीवरोदरसहोदरमेदुराङ्गम् ।

---

१. 'सानुक्रोशं सहर्षम्' इति क-पाठः.

कृष्णं बलं च घनसारपरागगौरं
दृष्ट्वा सुधाम्बुधिनिमज्जनमेति चेतः ॥ ३५ ॥

(पुनः सानुक्रोशम् ।) हन्त भोः, कथमयं महाराजस्य महान्धर्मव्यतिक्रम उपस्थितः । यतः—

बालस्वभावचपलावज्ञातगुणदूषणौ ।
नयनानन्दनिःष्यन्दौ कूटयुद्धैर्जिघांसति ॥ ३६ ॥

अपि च । न केवलमिह महाराज एवापराध्यति, अपि तु तद्दाक्षिण्यादनिवारयन्तः सदस्या अपि । यदुदाहरन्ति—

न योध्याः स्त्रीबालस्थविरकृशषण्ढासमबला
न मत्तोन्मत्तार्ता न कृपणगिरो नापि विमुखाः ।
अतिक्रामन्नेतत्पतति नृपतिस्तस्य सचिवा-
न्ससभ्यानभ्येति द्विगुणितमधर्मोऽनुसरतः ॥ ३७ ॥

अपि च—

न वारणो यस्य निवारणाय न वा रणो दोर्मदवारणाय ।
अलं बभूवास्य निरोधनाय कथं भवेमाद्य विरोधनाय ॥ ३८ ॥

तदेतत्सराजकं राष्ट्रं प्रहीणप्रायमपि परिहातुमस्माकमुचितम् ।

(पुनर्नेपथ्ये ।)

अरे रे, कथमिमावतिक्रम्यास्मच्छासनमकुतोभयाविवेत एवाभिवर्तेते । तदेतौ राजद्रोहिदण्डरीत्या आततायिवधेन च नातिदूरेण निग्रहीतव्यौ । (पुनः सरोषम् ।) हंहो, किमतः परमपि दाक्षिण्यसंरक्षणेन ।

वध्यन्तां व्रजवासिनः सतनया नन्दादयः सत्वरं
हन्तव्यः प्रतिपक्षतामनुसरन्किं चोग्रसेनः पिता ।
बन्धव्यौ निगडैर्दृढैश्च भगिनीभामौ निकारोचितौ
निग्राह्यौ नितरां चिराय विविधैर्दण्डाभिघातोद्यमैः ॥ ३९ ॥

रामः—(कृष्णं प्रति ।) आयुष्मन्, किमद्यापि प्रतीक्ष्यते पश्य ।

रोषावेशप्रदष्टाधरमलिकतटभ्रूकुटीभङ्गभीमः
क्षुभ्यत्तारारुणाक्षः सयविधुतशिरःशेखरस्रस्तकेशः ।
कुक्षेराक्षिप्य कौक्षेयकमलघुलसत्कालजिह्वाकरालं
देवारिर्योद्धुमस्मानयमतिरभसादासनादुज्जिहीते ॥ ४०

कृष्णः—(विहस्य ।) आर्य,

रजसान्धमनात्मज्ञं स्वजनं मातुलं नृपम् ।
हन्तुं मनो न वलते कारुण्यप्रवणं मम ॥ ४१ ॥

रामः—(सरोषम् ।)

आः क्षत्रियात्मज नैष विमर्षकालः
क्षत्रस्य संगरमुपेयुष एष धर्मः ।
विश्वद्रुहः किल खलानखिलान्निहन्तुं
विश्वाश्रयस्य भवतो भवतोऽवतारः ॥४२॥

कृष्णः—(सविचिकित्सम् ।) अनतिक्रमणीय आर्यादेशः सत्वरमुपसर्पति ।)

(नेपथ्ये कलकलः ।)

हन्त भोः,

क्रोधोद्धूतासिधेनूद्धृतपरिघगदापट्टिशप्रासकुन्त-
प्रोद्यच्चर्मासिचक्राक्रमजघनघनक्वाणघोरीकृताशम् ।
क्षिप्त्वा योधाक्षोभं हरिरिव कलभं रक्षिलक्षस्य कुक्षे-
र्मञ्चात्तुङ्गै[illegible]कचः कंसमाकर्षति क्ष्माम् ॥४

अपि च—

अगणितपरपक्षः श्येनपातं पतित्वा
चटकमिव गृहीत्वा कंसमुच्चैः कचेषु ।
अनुपतति शिलायां पोथितं पातयित्वा
व्यसुमपि गुरुवैराद्धन्त मृद्गाति पद्भ्याम् ॥४४॥

(सर्वे सातङ्कमाकर्णयन्ति ।)

कृष्णः—(निपुणं निरूप्य, साश्चर्यम् ।) अहो, महदद्भुतमेतत् ।

शृण्वानस्याद्वितीयं निरवधिसहजानन्दसंवित्स्वरूपं
मन्वानस्यातिचित्राकृतिप्रतिधिषणाशक्तिरूपोपपत्त्या ।
विश्वं कृष्णाद्वितीयं भयचकितधिया ध्यायतश्चान्तकाले
ज्योतिर्ज्योतिःस्वरूपे भगवति विशतिब्रह्मरन्ध्रं विभिद्य ॥४५॥

(रामः सत्वरमुपसृत्य कृष्णमालिङ्ग्य मूर्धानमाजिघ्रति । कृष्णो विमना इवाधोमुखस्तिष्ठति ।)

रामः—आयुष्मन्, न युक्तं हर्षस्थाने वैमनस्यम् । पश्य तावत्स्वर्वासिनामप्युत्सवम् । यतः—

उच्चैर्दुन्दुभयो नदन्ति परितो नृत्यन्ति वाराङ्गनाः
पाथोदाः पथि सेचनाय मधुरं वर्षन्ति गर्जन्ति च ।
सद्यो दैत्यवधप्रहृष्टहृदया देवाश्च गन्धोद्धुरं
स्वर्नारीकरलूनपुष्पनिकरं मुञ्चन्ति भक्त्यास्त्वयि ॥ ४६ ॥

कृष्णः—(सस्मितम् ।) आर्य, स्वजनघातपातकक्लिन्नमात्मानं नाभिनन्दामि । गुरुलज्जाभराक्रान्तमाननं च नोन्नमयितुमीशे । तज्ज्ञाविमर्षकृतसाहसात्परितप्यते मे चेतः ।

**रामः**—आः, कथमतिमुग्धोऽसि । न खलु समरविहारिणो वीरा-न्हत्वा हिंसादोषेण लिप्यन्ते । विशेषतस्त्वाततायिवधे । यत्स्मरन्ति—

'आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥४७॥' इति ।

तदेहि । राजापायविरहशोकावेशविवशं राजावरोधं परिसान्त्वयितु-मन्तःपुरं प्रविशामः ।

**कृष्णः**—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे ।)

**इति षष्ठोऽङ्कः ।**

---

**सप्तमोऽङ्कः ।**

(ततः प्रविशति विश्वकर्मा ।)

**विश्वकर्मा**—आदिष्टोऽस्मि तत्रभवता वासुदेवेन भगवता । यथा किल—

निःशल्या निरमायि यद्यपि मही संहृत्य दैत्याधमा-
न्भोजानां कुलमुज्ज्वलं विरचितं भिन्नाश्च कारागृहाः ।
स्वर्बन्धः प्रतिमोचितः क्रतुभुजश्चासन्कृतार्थास्तथा-
प्येतद्राष्ट्रमराजकं न हृदयस्वास्थ्याय कल्पिष्यते ॥ १ ॥

तदद्य तदीये पदे तत्पितरमुग्रसेनमस्मन्मातामहमभिषेक्तुमिच्छामि । तदत्र सबहुमानमाहूयन्तां तस्य पापीयसो भिया पलायिता अस्मदनुरागिणः पौराः । संनिपात्यन्तां च भोजवृष्ण्यन्धककुकुरप्रभृतयो राजानश्च । निर्मीयन्तां पुराट्टालगोपुरप्रासादपरिसरोद्यानविहारभूमयः । प्रसाध्यन्तां

---

१. 'विशिष्य त्वाततायि' इति 'क'-पाठः. २. 'भित्त्वा च कारागृहान्' इति 'ख'-पाठः. ३. 'कुकुरप्रभृतयो' इति 'ख'-पाठः.

च राजपथनगरवीथीद्वारतोरणसौधशिखरप्राकारप्रकराः[1] । प्रवर्त्यन्तां च मङ्गलाचारगीततूर्यरवाः । उद्घोष्यन्तां च सौविस्तिकब्राह्मणमन्त्रघोषाः । प्रनर्त्यन्तां[2] च सर्वासिवाराङ्गनासहस्राणि । संभ्रीयन्तां च राज्याभिषेकोचिताः संभाराः । आघोष्यन्तां[3] च दिण्डीरवाः । यत्किल—

'रच्यन्तां राजमार्गाः प्रशमितरजसः स्वर्गवाटीपटीरै-
　र्बध्यन्तां तोरणानि त्रिदशपतिधनुर्मण्डलोड्डामराणि ।
उच्छ्रीयन्तां पताकाः सुरपुरतरुणीखेदविच्छेददक्षाः
　सृज्यन्तां भूरिभेरीमुखरवमुखरा भूर्भुवःस्वर्गलोकाः ॥२॥ इति'

तदिह तावदपरं सर्वं मयैव सुविहितम् । अभिषेकसंभारसंभरणं तु ब्राह्मणैर्विधेयम् । तदत्रभवन्तं कुलाचार्यं शाण्डिल्यनामानमन्वेषयामि यावत् । (इति पुरः सर्पति ।)

(प्रविश्य ।)

**शाण्डिल्यः**—आयुष्मन्विश्वकर्मन्, क्व प्रस्थितोऽसि ।

**विश्वकर्मा**—आर्य, भवन्तमेवान्वेष्टुम् ।

**शाण्डिल्यः**—तदुच्यतां प्रयोजनम् ।

**विश्वकर्मा**—

कंसं निहत्य दनुजाननुजांश्च सप्त
　निष्कण्टकां भुजबलेन विजित्य पृथ्वीम् ।
मातामहाय भगवान्विनिवेद्य तस्य
　राज्येऽभिषेक्तुमसुमिच्छति[4] विश्वगुप्त्यै ॥ ३ ॥

**शाण्डिल्यः**—विश्वकर्मन्, कुतः पुनरयं भगवानात्मतन्त्रे जगति

---

१. 'प्रासादप्रकराः' इति ख-पाठः. २. 'प्रनृत्यन्तां' इति क-पाठः. ३. 'आघोष्यतां च डिण्डीरवः' इति क-पाठः. ४. 'अभिषेक्तुमिच्छति' इति ख-पाठः.

निजभुजबलार्जितमपि प्राज्यं राज्यमन्यस्मै प्रतिपादयति । न पुनः स्वय-
मेवाभिषिच्यते ।

**विश्वकर्मा**—अये, बालिशोऽसि । यतः—

स्वाराज्यादिसुखानि यस्य सहजानन्दाम्बुधेर्विप्रुषो
ब्रह्माण्डानि वसन्ति यस्य कुहरे रोम्णः परार्धात्परम् ।
लीलाबालतनोश्चराचरगुरोराश्चर्यचिन्तामणे-
र्विक्षेपाय न चेतसः प्रभवति क्षुद्रेदृगर्थैषणा ॥ ४ ॥

**शाण्डिल्यः**—ननु भणामि ।

षट्पञ्चाशत्कोटयो यादवानां
व्याप्याशेषं विश्वमध्यावसन्ति ।
तेष्वेवैकः कोऽपि किं नाभिषिक्तो
भक्तः शक्तो जातु नार्हत्युपेक्षाम् ॥ ५ ॥

**विश्वकर्मा**—अस्त्यत्र किंचिन्निगूढं बीजम् ।

**शाण्डिल्यः**—तन्निभृतं कथय ।

**विश्वकर्मा**—ययातिदत्तो यदोः शापः । न तद्वंश्या राज्यभाजनं
भवन्तीति महतीयं कथा पुराणेषु गीयते । अपि च—

निहते सहजे कंसे देवकी विमनीभवेत् ।
इति तत्परितोषाय तत्तातमभिषिञ्चति ॥ ६ ॥

तदास्तामप्रस्तुतमेतत् । प्रकृतमनुवर्त्यताम् ।

**शाण्डिल्यः**—क पुनरिदानीं भगवान् ।

**विश्वकर्मा**—मामस्मिन्कर्मणि नियुज्य स्वयं देवकीवसुदेवयो-
र्निगडभेदनाय कारागारं सहाग्रजेन प्रविष्टः ।

---

१. 'अभिषिच्यते' इति क-पाठः. २. 'विमना भवेत्' इति ख-पाठः.

शाण्डिल्यः—तर्हि तत्रैवैनमनुसरामि ।

(इति निष्क्रान्तौ ।)

प्रवेशकः[1] ।

(ततः प्रविशतो रामकृष्णौ देवकीवसुदेवौ च ।)

**देवकीवसुदेवौ**—(पुत्रावालिङ्ग्य मूर्धन्यवघ्राय च सास्रम् ।) हा वत्सौ,

अद्याभूतां भवन्तौ वयमपि तदिमे जीवलोकं प्रविष्टा

व्युष्टा[2] शोकत्रियामा समजनि सुचिरात्प्रेत्यभावो[3]ऽस्मदक्ष्णोः ।

संसारोऽभूत्ससारः समुदितमहिमज्योतिषायैव दिष्ट्या

यैर्दृष्ट्यालम्भि[4] युष्मद्वदनशशिसुधापूरदूरावगाहः ॥ ७ ॥

**देवकी**—

नोत्सङ्गे परिशायितौ न च कराङ्गुल्यापि संचारितौ

न स्तन्यं परिपायितौ न मधुरैर्गीतैश्च संलालितौ[5] ।

सस्नेहं न निरीक्षितौ स्खलितया वाचापि नोल्लापितौ

वन्ध्याया इव वासरा मम गता लब्ध्वा, भवन्तौ सुतौ ॥८॥

**रामकृष्णौ**—

आ जन्म प्रतिवासरं बहुविधेनासत्कृतेनागसा

दैत्येन्द्रेण विबाधितौ किल युवां नानाविधैर्बन्धनैः ।

नावाभ्यां तनयोचितं विरचितं किंचित्कदाचित्ततो

वात्सल्यादपराध्यतोरविनयं क्षन्तुं युवामर्हथः ॥ ९ ॥

(इति साष्टाङ्गपातं पादयोः पततः । पितरावुत्थाप्य चिरमालिङ्गतः ।)

**कृष्णः**—(सभयमञ्जलिं बद्ध्वा ।)

---

१. 'प्रवेशकः' इति पुस्तकद्वयेऽपि नास्ति. २. शोकरूपा रात्रिः प्रभातेत्यर्थः. ३. प्रेत्यभावः पुनरुत्पत्तिः. ४. 'यद्दृष्ट्या' इति ख-पाठः. ५. 'संलापितौ' इति ख-पाठः.

मातस्ते निहतो भ्राता दुरात्मा कुलदूषणः ।
मन्तुमेनं न मे मन्तुं परं तु क्षन्तुमर्हसि ॥ १० ॥

**देवकी**—वत्स, मैवं वादीः ।

उपभुङ्क्ते निजं कर्म शुभं वा यदि वाशुभम् ।
इहामुत्र च सर्वोऽपि न तत्रान्योऽपराध्यति ॥ ११ ॥

**कृष्णः**—(सानन्दम् ।) उज्जीवितोऽस्मीदानीं शापशङ्कातङ्कसंतापात् । (पुनः साञ्जलिबन्धनम् ।) जनकौ, यद्यनुगृहीतोऽस्मि तत्किंचिद्विज्ञापयामि । यत्किल दैवकृतात्प्रामादिकाद्वापराधात्संप्रत्यराजकं जगदिदमास्ते । न चाराजकं राष्ट्रमिष्टानिष्टप्राप्तिपरिहारयोः प्रभवति । यदुदाहरन्ति—

'अनायका विनश्यन्ति नश्यन्ति बहुनायकाः ।
स्त्रीनायका विनश्यन्ति नश्यन्ति शिशुनायकाः ॥ १२ ॥' इति ।

तन्नास्मदभिजनेषु बहुषु संनिहितेष्वप्यस्मन्मातामह उग्रसेन एव तदास्पदेऽभिषेक्तव्य इति जायते मे मनोरथः । यदि पितरावनुमन्येते ।

**देवकीवसुदेवौ**—प्रथमः कल्पः । अनुमतमेतदावयोरपि ।

**कृष्णः**—यद्येवं तर्हि भवत्पुरःसरा मातामहाभिषेकमहोत्सवमनुवर्तामहे ।

**रामः**—तदिह सर्व एव वयं कृतस्नानप्रसाधनादिमङ्गलाः श्रममपनीयाभिषेकमण्डपपरिसरमध्यास्य कृताकृतमवेक्षमाणाः समाजकौतुकमनुभवामः ।

**सर्वे**—एवमस्तु । (इति मन्यन्ते ।)

**कृष्णः**—(रामं प्रति ।) आर्य, यावत्पितरौ कृतप्रसाधनौ राज-

---

1. अपराधम्.

द्वारमुपसीदतस्तावदावां कृताभिषेकं महाराजमुपासीना पित्रोरागमनमावेदयावः ।

रामः—यथाभिरुचितमायुष्मते ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशत्युग्रसेनो रामकृष्णौ च ।)

रामकृष्णौ—महाराज, देवकीवसुदेवौ भवन्तं द्रष्टुकामा प्रतीहारभूमिमुपासाते ।

राजा—(ससंभ्रमम् ।) आः, किमत्रावेदनविलम्बेन । अहमेव गत्वा तौ प्रवेशयामि । (इति सहसोत्थातुमिच्छति ।)

रामकृष्णौ—महाराज, न युक्तमिदानीमभिषिक्तस्य सर्वेश्वरपदे प्रतिष्ठितस्य स्वविधेयासु प्रजासु प्राकृतस्येव बाह्योपचाराचरणम् । तदावामेव महाराजानुज्ञया प्रवेशयावः ।

राजा—नात्र किमप्युत्तरं प्रतिभाति । अतिमानार्हौ खल्वेतौ न विलम्बमर्हतः प्रियसमागमस्य ।

(रामो निष्क्रम्य पितृभ्यां सह प्रविशति ।)

देवकीवसुदेवौ—(पुरो निरूप्य ।) अये, कथमयमुग्रसेनोऽप्युग्रोत्कण्ठापूर्णकण्ठस्तूर्णोपकल्पितानल्पार्हणोपकरणोऽतिरभसचलितेनान्तःकरणेनोत्तिष्ठमानोऽपि परिसरोपसन्नसेवागतानेकराजलोकोपदिष्टाभिषिक्ताचारविरोधनिरुद्ध इवास्ते । (निपुणं निरूप्य ।)

अयमुदयमहीभृत्तुङ्गशृङ्गाग्रसङ्गी
दिनमणिरिव दीव्यत्युच्चसिंहासनस्थः ।

---

१. 'राजानं' इति ख-पाठः. २. 'निवेदयामः' इति ख-पाठः. ३. 'रामकृष्णौ' इति पुस्तकद्वयेऽपि नास्ति. ४. 'वलितेन' इति क-पाठः. ५. 'उपपन्न' इति ख-पाठः.

कलितकनकवेत्रेणाच्युतेनाग्रभूमौ
सविनयमतिदूरं वारितामात्यभूपः ॥ १३ ॥

तदुपसर्पावस्तावत् ।

**कृष्णः**—महाराज, एतौ देवकीवसुदेवौ भवन्तमभिवादयेते ।

**राजा**—आः, कथं देवकीवसुदेवौ । दिष्ट्या जीवलोकं प्रविष्टोऽस्मि । (इति संरभसमुपसृत्यालिङ्गति । सास्रम् ।) हन्त भोः,

बाष्पोत्पीडः स्थगयति दृशौ गद्गदः कण्ठपीठं
शोकावेगो दहति हृदयं चेतनामुच्छिनत्ति ।
कृच्छ्रान्मुक्तौ कथमपि चिरात्संगतौ वां न चेशे[1]
वाचा संभावयितुमिह हा चक्षुषा चेतसा वा ॥१४॥

**देवकीवसुदेवौ**—देव, दैवायत्ते साधारणे च विषये नार्हस्यात्मानं विषादयितुम् । (इत्यन्योन्यमश्रूणि परिमृजन्ति[2] ।)

**राजा**—इत आस्यताम् । (इत्यर्धासने समुपवेशयितुमाकर्षति ।)

**देवकी**—नोचितमस्मद्विधैरिदमीदृशमासनमध्यासितुम् ।

**राजा**—(विहस्य ।) अये, कथमहं रामकृष्णाभ्यामीदृशे कर्मणि नियुञ्जानाभ्यां स्वजनव्यवहारबाह्यः कृतोऽस्मि । (इति स्वसंनिहित आसने समुपवेशयति ।)

**देवकी**—महाराज, यदीदानीमपि ज्ञातेयमनुरुध्यते तर्हि वत्सयो रामकृष्णयोः कृतागसोर्दुर्ललितयोरपि परेभ्यो महाराजेन भक्तावनुरक्तावनुचरौ ज्ञाती इति वा संरक्षणं करणीयम् ।

**राजा**—किमुच्यते संरक्षणमिति । यतः—

---

१. 'शोचे' इति ख-पाठः. २. 'समामृजन्ति' इति ख-पाठः.

विश्वाधीशस्त्रिभुवनगुरुः सर्वगः सर्वशक्तिः
साक्षी साक्षान्निरवधिपरानन्दसंदोहकन्दः ।
लीलाबालः परमपुरुषः क्लेशकोषाद्यपेतः
कुक्षौ यस्य त्रिभुवनमिदं को नु तं त्रातुमीष्टे ॥१५॥

अपि च ।

एष क्रीडनकैः स्वयं विरचितैरस्मादृशैः क्रीडति
प्रज्ञाया निधिरैन्द्रजालिक इव व्यालादिभिर्मायिकैः ।
आत्मानं लघुवत्परांश्च गुरुवत्संदर्शयंल्लीलया
पुत्रभ्रातृसुहृत्सखिव्यतिभिदाभ्रान्त्याभितो भासते ॥ १६ ॥

देवकी—देव, स एष प्रेमोद्गारः ।

तथा हि—

जडोऽपि क्षीणोऽपि प्रकृतिकुटिलोऽपि प्रविगल-
त्कलोऽपि द्राग्दोषाकरवपुरपीशेन विधृतः ।
मृगाङ्कश्चेन्मौल्यै द्विजपतिधिया तद्ध्रुवमहो
महोदाराः प्रायो लघुमपि नयन्त्येव गुरुताम् ॥ १७ ॥

कृष्णः—(प्रविश्य सप्रश्रयावनामम् ।) महाराज,

एतच्छीतरुचेर्मरीचिनिचयं स्रोतः सुरस्रोतसः
स्फूर्जद्बालमृणालजालकमिभाधीशस्य दन्तद्युति ।
निर्मोकं भुजगेश्वरस्य विशदं प्रालेयधारागृहं
पार्श्वस्थो विधुनोति चामरयुगं श्रीसिंहलाधीश्वरः ॥१८॥

रामः—महाराज,

अम्भोजं विजयश्रियो निलयनं शीतांशुबिम्बं दिवः
सेवायै प्रणतं स्वतोऽत्रभवतो मूर्तं यशोमण्डलम् ।

स्फारस्फाटिकसौधमेतदमलं युष्मत्प्रतापार्चिषः
श्वेतच्छत्रमयं बिभर्ति निभृतं श्रीकामरूपेश्वरः ॥ १९ ॥

अपि च—

आस्ते कलिङ्गाधिपतिर्गजानां कोटीः प्रदाय प्रवहन्मदान्धाः।
गौडेश्वरोऽपि प्रतिपाद्य सर्वं संसेवते संप्रति संप्रतीतः ॥ २० ॥

कृष्णः—कथं वा प्रतिपुरुषं निवेदयामः। [1]संक्षेपतोऽवधार्यताम्

त्वङ्गत्तुङ्गतुरंगपुंगवगलद्दानद्विपद्वीपजो-
दञ्चच्चारुपदार्थसार्थरमणीचञ्चन्मणीनां गणैः।
क्षोणीपाः समुपासते परिजनान्विज्ञापयन्तो बहि-
र्द्वारे कोट्यधिका नतेरवसरं लब्धुं दिगन्तागताः ॥२१॥

राजा—(सहर्षम्।) वासुदेव, भवदनुगृहीतानां भवत्सहायान
कियदेतत्।

तथा हि—

येषां त्वं दयसे हरे कियदिदं तेषां कृपायाः फलं
राज्यप्राज्यगजादिसंपदियती खद्योतविद्योतिका।
ब्रह्मेन्द्रादिपदानि यस्य करुणालेशानुषक्तेः फलं
यस्याः सर्वपुमर्थमस्तकमणेर्विभ्राय सिद्ध्यष्टकम् ॥ २२ ॥

अपि च—

शीतं चन्दनचन्द्रिकापरिचयात्स्फीतं नभोमण्डला-
द्गीतं किंनरकामिनीपरिषदापीतं सुधाम्भोधिना।
उन्नीतं सकलोपकारकरणाद्भीतं परीवादतः
श्रीदामोदर किं भणामि भवतः सौजन्यजन्यं यशः ॥२३॥

---

1. 'अन्यदप्येवमवधार्यताम्' इति ख-पाठः.

तद्भवानेव सर्वानेतान्समागतान्यथोचिताचारचतुरवचनादिभिः स्वयमेव संभावयतु । किमत्रान्यैरुपदेष्टव्यम् ।

कृष्णः—यदादिशति महाराजः । (इति बहिर्निष्क्रम्य तोरणपरिसरे स्थित्वा दक्षिणं बाहुमुद्यम्योच्चैःस्वरम् ।) भो भो नानादिगन्तागताः ससामन्ताः सकलभूपालाः, सजानपदाः पौरजनाश्च, सावधानाः समाकर्णयत महाराजस्य श्रीमत उग्रसेनस्य शासनम् । यत्किल—

स्वेषु स्वेषु पदेषु तिष्ठत चिरान्नित्योत्सवैर्नन्दत
　व्यावर्तध्वमनध्वनः परहितैर्मोदध्वमाध्वंपथि ।
राज्ञः शासनमाद्रियध्वमुचितं दद्भ्वं पृथिव्याः करं
　सेवध्वं विविधोपदाभिरनघं यद्यात्मनोऽभीप्सथ ॥ २४ ॥

(पुनः प्रविश्य ।) महाराज, यथादिष्टमनुष्ठितम् । आघोषितं च राजानुशासनं पुरनगरजनपदेषु । अनुकूलिताश्च प्रसाददानादिभिर्लोकपालाः, किं पुनर्भूपालाः । अधिकृताश्च पदे स्वामिहितैषिणो लोकाः । परितोषिताश्च सकलजनपदाः । किं ते भूयः प्रियमुपकरोमि ।

राजा—वासुदेव, किमतःपरमपि कर्तव्यमवशिष्यते । यतः—

उत्पत्तिप्रभृतिक्रमेण दितिजाः सर्वेऽपि निःशेषिताः
　स्वर्बन्धः पितरौ वयं च निगडे बद्धाश्चिरान्मोचिताः ।
त्रातं गोकुलमिन्द्रतः प्रकुपितादुद्धृत्य गोवर्धनं
　प्राज्यं राज्यमकण्टकं भुजबलेनावर्ज्य मय्यर्पितम् ॥ २५ ॥

तथापीदमस्तु—

भूपालाः परिपालयन्तु विधिवद्धर्मेण वर्णाश्रमा-
　न्पृथ्वी कामफला भवत्वविरतं वर्षन्तु काले घनाः ।

ईर्ष्यामुज्झतु दुर्जनः परगुणेष्वासज्जतां सज्जनः

सत्काव्यामृतवर्षिणीकविमुखे वाणी चिरं नन्दतु ॥ २६ ॥

अपि च—

साहित्यामृतसिन्धुसान्द्रलहरीनिर्व्याजमज्जन्मनो

मज्जानः परिशीलितामलकलामोदेन मेदस्विनः ।

उद्यत्काव्यकथाप्रबन्धमधुरद्राक्षासदृक्षाक्षराः

स्वैरं कंसवधं बुधाश्चिरतरं गायन्तु कृष्णानुगाः ॥ २७ ॥

कृष्णः—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ।

# काव्यमाला मासिकांत छापलेले ग्रंथ.



| | | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|---|
| १ | आर्यासप्तशती—गोवर्धनाचार्यविरचित.... ... | १ | ४ | ० | ४ |
| २ | काव्यालंकार—रुद्रटकृत, नमिसाधुकृत टीकासहित. | १ | ८ | ० | ४ |
| ३ | श्रीकण्ठचरितकाव्यम्—श्रीमङ्खकविकृत. ... | २ | ८ | ० | ६ |
| ४ | कर्पूरमञ्जरीसट्टक—राजशेखरकृत. ... ... | १ | ० | ० | ४ |
| ५ | अनर्घराघव नाटक—मुरारिकृत. ... ... | २ | ० | ० | ४ |
| ६ | कंसवधनाटक—पं० दुर्गाप्रसादकृत.... ... | ० | ८ | ० | २ |
| ७ | कर्णसुन्दरीनाटिका—महाकविश्रीबिह्लणकृत. ... | ० | ८ | ० | २ |
| ८ | धर्मशर्माभ्युदयकाव्य—महाकविश्रीहरिचन्द्रविरचित. | १ | ० | ० | ४ |
| १० | समयमातृकाकाव्य—क्षेमेन्द्रविरचित. ... | ० | १० | ० | २ |
| ११ | कादम्बरीकथासारकाव्य—श्रीमदभिनन्दकृत. | ० | १० | ० | २ |
| १२ | रसगङ्गाधर—महाकविश्रीजगन्नाथपण्डितरायविरचित. | ३ | ८ | ० | ८ |
| १३ | साम्बपञ्चाशिका—साम्बकविप्रणीत. ... ... | ० | ४ | ० | १ |
| १४ | पारिजातहरणचम्पू—शेषकृष्णविरचित. ... | ० | ७ | ० | २ |
| १५ | काव्यालंकारसूत्राणि—वामनविरचित. ... | ० | १२ | ० | ३ |
| १६ | मुकुन्दानन्दभाण—श्रीकाशीपतिविरचित. ... | ० | ८ | ० | २ |
| १७ | उन्मत्तराघवप्रेक्षाणक—भास्करकविविरचित. | ० | ३ | ० | १ |
| १८ | अमरुशतक—अमरुककविविरचित. ... ... | ० | १२ | ० | ४ |
| १९ | सूर्यशतक—मयूरकविविरचित. ... ... ... | ० | ५ | ० | १ |
| २० | लटकमेलकप्रहसन—शंखधरविरचित. ... | ० | ५ | ० | १ |
| २१ | गाथासप्तशती—हालोपनामकसातवाहनसंकलित. | ३ | ० | ० | १२ |
| २४ | काव्यप्रदीप—महामहोपाध्यायश्रीगोविन्दविरचित. | २ | ० | ० | ६ |
| २५ | ध्वन्यालोक—आनंदवर्धनाचार्यविरचित. ... | २ | ० | ० | ४ |
| २६ | दशावतारचरितकाव्य—क्षेमेन्द्रविरचित. ... | १ | ० | ० | ४ |
| २७ | जीवानन्दनाटक. ... ... ... ... | ० | १२ | ० | ३ |
| २८ | दूताङ्गदछायानाटक—श्रीसुभटकविविरचित. ... | ० | ३ | ० | १ |
| २९ | भर्तृहरिनिर्वेदनाटक—श्रीहरिहरोपाध्यायकृत. | ० | २॥ | ० | १ |

| | | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|---|
| ३० | **चन्द्रप्रभचरित**—महाकवि वीरनन्दिविरचित. | १ | ० | ० | ४ |
| ३१ | **विष्णुभक्तिकल्पलता**—पुरुषोत्तमविरचित. ... | ० | १० | ० | १ |
| ३२ | **सहृदयानन्दकाव्य**—कृष्णानंदविरचित. ... | ० | १० | ० | ३ |
| ३३ | **श्रीनिवासविलासचम्पू**—वेङ्कटेशकविप्रणीत. | ० | १४ | ० | २ |
| ३६ | **वृत्तिवार्तिक**—श्रीमदप्पय्यदीक्षितप्रणीत. ... | ० | ३ | ० | १ |
| ३७ | **रससदनभाण**—युवराजकविविरचित. ... ... | ० | ८ | ० | २ |
| ३८ | **चित्रमीमांसा**—श्रीमदप्पयदीक्षितप्रणीत. ... | १ | ० | ० | ३ |
| ३९ | **विद्यापरिणय**—आनन्दरायमखिविरचित. ... | ० | ९ | ० | १ |
| ४० | **रुक्मिणीपरिणय**—श्रीरामवर्मवञ्चियुवराजविरचित. | ० | ६ | ० | २ |
| ४३ | **काव्यानुशासन**—श्रीमद्वाग्भटविरचित.... ... | ० | ७ | ० | २ |
| ४४ | **शृङ्गारतिलकभाण**—श्रीरामभद्रदीक्षितविरचित. | ० | ६ | ० | १ |
| ४६ | **वृषभानुजानाटिका**—श्रीमथुरादासविरचित. ... | ० | ७ | ० | १ |
| ४८ | **वाग्भटालंकार**—श्रीवाग्भटप्रणीत. ... ... | ० | ८ | ० | २ |
| ५० | **अलंकारशेखर**—श्रीकेशवमिश्रकृत. ... ... | ० | १२ | ० | ३ |
| ५१ | **पतञ्जलिचरित**—श्रीरामभद्रदीक्षितप्रणीत. ... | ० | १० | ० | २ |
| ५२ | **मन्दारमरन्दचम्पू**—कृष्णकविविरचित. ... | १ | ८ | ० | ४ |
| ५३ | **वाणीभूषण**—श्रीदामोदरमिश्रविरचित.... ... | ० | ८ | ० | १ |
| ५४ | **धनंजयविजय**—श्रीकाञ्चनाचार्यविरचित. ... | ० | ३ | ० | १ |
| ५५ | **अद्भुतदर्पणनाटक**—महादेवविरचित. ... ... | ० | १२ | ० | २ |
| ५७ | **राघवनैषधीयकाव्य**—हरदत्तसूरिकृत. ... | ० | १० | ० | १ |
| ५८ | **शृङ्गारभूषणभाण**—वामनभट्टबाणविरचित. ... | ० | ३ | ० | १ |
| ५९ | **अमृतोदयनाटक**—गोकुलनाथकृत. ... ... | ० | ८ | ० | २ |
| ६० | **युधिष्ठिरविजय**—महाकवि श्रीवासुदेवविरचित. | ० | १२ | ० | ४ |
| ६१ | **हरचरितचिन्तामणिकाव्य**—राजानकजयरथकृत. | १ | १२ | ० | ४ |
| ६५ | **भारतमञ्जरीकाव्य**—महाकविश्रीक्षेमेन्द्रविरचित. | ५ | ० | ० | १२ |

**पांडुरंग जावजी,**
निर्णयसागर छापखान्याचे मालक,
२६-२८, कोलभाट लेन, मुंबई नं० २.

# विक्रेयाणि संस्कृतपुस्तकानि ।

| पुस्तकम् | मू. रू. | डा. |
|---|---|---|
| अद्भुतदर्पणनाटकम्—श्रीमहादेवकविविरचितम्. ... | ।।। | ०= |
| अभिज्ञानशाकुंतलनाटकम्—कालिदासकृतं—राघवभट्टकृत-अर्थद्योतनिकाटीकासहितम्. ... ... ... ... ... ... | १॥ | । |
| अमृतोदयनाटकम्—श्रीमद्गोकुलनाथकृतम्. ... ... | ॥ | ०- |
| अनर्घराघवनाटकम्—श्रीमुरारिकृतं, रुचिपत्युपाध्यायकृत-टीकासहितम्.... ... ... ... ... ... ... | २ | ॥ |
| उत्तररामचरितम्—महाकविश्रीभवभूतिप्रणीतं, वीरराघवकृतया टीकया समेतम्. ... ... ... ... ... ... | १ | ०≡ |
| उन्मत्तराघवप्रेक्षाणकम्—भास्करकविविरचितम्. ... | ०≡ | ०- |
| कर्पूरमञ्जरीसट्टकम्—श्रीराजशेखरकृतं, वासुदेवकृतटीकासहितं बालभारतनाटकं च ... ... ... ... ... | १ | । |
| जीवानन्दम्—आनन्दरायमखिप्रणीतम्. ... ... ... | ।।। | । |
| कर्णसुन्दरी नाटिका—महाकविश्रीबिल्हणकृता. ... ... | ॥ | ०= |
| चैतन्यचन्द्रोदयं नाटकम्—श्रीकविकर्णपूरविरचितम्. ... | १। | । |
| दूताङ्गदं नाटकम्—श्रीसुभटकविविरचितम्. ... ... | ०≡ | ०॥ |
| प्रसन्नराघवं नाटकम्—श्रीजयदेवकविविरचितम्. ... | ।।।= | ०= |
| मृच्छकटिकं नाटकम्—पृथ्वीधरकृतया व्याख्यया समेतम्. | १। | । |
| मालविकाग्निमित्रं नाटकम्—कालिदासकृतं, काटयवेमकृत-टीकासहितम्. ... ... ... ... ... ... | ।।। | ०= |
| रत्नावली नाटिका—श्रीहर्षदेवकृता, गोविन्दकृतटीकासहिता. | १। | । |
| विद्यापरिणयः—आनन्दरायमखिविरचितः. ... ... | ॥- | ०= |
| रुक्मिणीपरिणयं नाटकम्—श्रीरामवर्मवञ्चियुवराजकृतं.... | ।= | ०- |
| लटकमेलकप्रहसनम्—शंखधरविरचितम्. ... ... | ।- | ०- |
| विदग्धमाधवम्—(नाटकं) श्रीरूपगोस्वामिप्रणीतम्. ... | १। | । |
| पार्वतीपरिणयनाटकम्—महाकविबाणभट्टप्रणीतम्. ... | ।- | ०= |
| वृषभानुजा नाटिका—श्रीमथुरादासविरचिता. ... ... | ।= | ०= |
| सत्यहरिश्चन्द्रनाटकम्—प्रबंधशतकर्तृमहाकविरामचंद्रकृतम्. | ॥ | ०= |

# सुश्रुतः ।

सूत्र-निदान-शारीर-चिकित्सा-
कल्पो-त्तरतन्त्रकल्पितः ।

॥ आयुर्वेदः ॥

भगवता धन्वन्तरिणोपदिष्टः ।
सुश्रुतनामधेयेन तच्छिष्येण विरचितः

बि, ए, उपाधिधारिणा
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण
संस्कृतः

कलिकाताराजधान्याम्

द्वैपायन यन्त्रे
मुद्रितः ।

ई° १८७३ ।

# सूत्रस्थानस्य सूचीपत्रम्।

---

## निदानस्थानस्य सूचीपत्रम्।

| | पृष्ठायां | पंक्तौ |
|---|---|---|

## शारीरस्थानस्य सूचीपत्रम् ।



## चिकित्सितस्थानस्यसूचीपत्रम् ।

कल्पस्थानस्य सूचीपत्रम् ।



उत्तरतन्त्रस्य सूचीपत्रम् ।

## ॥ सुश्रुतः ॥

### ॥ सूत्रस्थानम् ॥



### ॥ प्रथमाध्यायः ॥



नमो ब्रह्मप्रजापत्यश्विबलभिद्धन्वन्तरिसुश्रुतप्रभृतिभ्यः ॥

अथातो वेदोत्पत्तिं नामाध्यायं व्याख्यास्यामः ॥ यथोवाच भगवान् धन्वन्तरिः सुश्रुताय। अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनव वैतरणौरभ्रपौष्कलावत करवीर्य्य गोपुर रक्षित सुश्रुतप्रभृतय ऊचुः। भगवन् शारीरमानसागन्तुस्वाभाविकै र्व्याधिभिर्व्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथ वद्विचेष्टमानान् विक्रोशतश्च मानवा नभिसमीक्ष्य मनसि नः पीड़ा भवति तेषां सुखैषिणां रोगोपशमार्थमात्मनः प्राणयात्रार्थञ्च प्रजाहितहेतोरायुर्व्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम्। अत्रायत्तमैहिकमामुष्मिकञ्च श्रेयः। तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति। तानुवाच भगवान् स्वागतं वः। सर्व्व एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः। इह खल्वायुर्व्वेदो नाम यदुपाङ्गमथर्व्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशत-

हस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्व-
मल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्॥

तद्यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमा-
रभृत्य मगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति॥

अथास्य प्रत्यङ्गलक्षणसमासः॥

तत्र शल्यंनाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थि
ालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्नि-
णिधान व्रणविनिश्चयार्थञ्च॥

शालाक्यंनाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदन-
ाणादिसंश्रितानां व्याधीनामुपशमनार्थम्॥

कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वराती
ाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम्॥

भूतविद्या नाम देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाचनागग्र-
हाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम्॥

कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं
दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम्॥

अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविष-
व्यञ्जनार्थं विविधविषसंयोगविषोपहृतोपशमनार्थम्॥

रसायनतन्त्रं नाम वयः स्थापनमायुर्मेधाबलकरं रोगाप-
हरण समर्थञ्च॥

वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्या-
यन प्रसादोपचयजननिमित्तं प्रहर्षजननार्थञ्च॥ एवमय-
मायुर्वेदोऽष्टाङ्ग उपदिश्यते॥

अत्र कस्मै किमुच्यतामिति । त ऊचुः । अस्माकं सर्व्वेषा-
मेव शल्यज्ञानमूलं कृत्वोपदिशतु भगवानिति । स उवाचैवम-
स्त्विति । त ऊचु र्भूयोऽपि भगवन्तम् । अस्माक मेकमतीना
मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति । अस्मै चोपदि
श्यमानं वयमप्युपधारयिष्यामः ॥ स होवाचैवमस्त्विति ।
वत्स सुश्रुत इह खल्वायुर्व्वेदप्रयोजनं व्याध्युपसृष्टानां
व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च । आयुरस्मिन्विद्यते ऽनेन
वा आयुर्व्विन्दतीत्यायुर्व्वेदः । तस्याङ्गवरमाद्यमागमप्रत्यक्षा
नुमानोपमानैरविरुद्धमुच्यमान मुपधारय । एतद्ध्यङ्गं प्रथमं
प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च । श्रूयते हि
यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनाव-
भिगम्योचुः । भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः ।
भवद्भ्यां यज्ञस्य शिरःसन्धातव्यम् । तावूचतुरेवमस्त्विति ।
अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन् । ताभ्यां
यज्ञस्य शिरःसंहितमिति । अष्टास्वपि चायुर्वेदतन्त्रेष्वेत-
देवाधिक मभिमत माशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्निप्रणि-
धाना त्सर्व्वतन्त्रसामान्याच्च । तदिदं शाश्वतं पुण्यं स्वर्ग्यं
यशस्यमायुष्यं वृत्तिकरञ्चेति ॥

ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मादश्विना-
वश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहित-
हेतोः ॥ भवति चात्र ।

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् ।
शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥

अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया सोऽधिष्ठानं कस्माल्लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च। द्विविधात्मक एवाग्नेयःसौम्यश्च तद्भूयस्त्वात्। पञ्चात्मको वा। तत्र चतुर्विधो भूतग्रामः। स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः। तत्र पुरुषः प्रधानं तस्योपकरणमन्यत्। तस्मात्पुरुषोऽधिष्ठानम्। तद्दुःखसंयोगा व्याधय इत्युच्यन्ते। ते चतुर्व्विधा आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ताः। शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः। मानसास्तु क्रोधशोकभय हर्ष विषादेर्ष्याभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति। स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः॥ त एते मनःशरीराधिष्टानाः। तेषां संशोधनसंशमनाहाराचाराः सम्यक् प्रयुक्ता निग्रहहेतवः॥ प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च स षट्सु रसेष्वायत्तो रसाः पुनर्द्रव्याश्रयाः। द्रव्याणि पुनरोषधयस्ताः द्विविधाः स्थावरा जङ्गमाश्च। तासां स्थावराश्चतुर्विधाः। वनस्पतयो वृक्षा वीरुध ओषधय इति। तास्वपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः। प्रतानवत्यः स्तम्बिन्यश्चवीरुधः। फल पाकनिष्ठा ओषधय इति। जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्र-

गोपमण्डूकप्रभृतय उद्भिज्जाः॥ तत्र स्थावरेभ्यस्त्वक्पत्र-पुष्पफल मूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तो जङ्गमे-भ्यश्चर्म्मनख रोम रुधिरादयः॥ पार्थिवाः सुवर्णरजतमणि-मुक्तामनःशिलामृत्कपालादयः। कालकृतास्तु प्रवातनि-वातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमास-र्त्वयनादयःसम्वत्सरविशेषाः। त एते स्वभावत एव दोषाणां सञ्चय प्रकोप प्रशम प्रतीकार हेतवः प्रयोजनवन्तश्च॥

भवन्तिचात्र॥

शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः।
चये कोपे शमे चैव हेतुरुक्तश्चिकित्सकैः॥
आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि।
मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया॥
शरीरपतितानान्तु शारीरवदुपक्रमः।
मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः॥

एवमेतत्पुरुषो व्याधिरौषधं क्रियाकाल इतिचतुष्टयं समासेन व्याख्यातम्॥ तत्र पुरुषग्रहणात्तत्सम्भवद्रव्यसमूहो-भूतादिरुक्त स्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांससिरास्नायु-प्रभृतयः। व्याधिग्रहणा द्वातपित्तकफ शोणित सन्निपात वैषम्यनिमित्ताः सर्व्व एवव्याधयो व्याख्याताः। औषधि-ग्रहणाद्द्रव्यगुणरसवीर्य्यविपाकप्रभावाणामादेशः। क्रिया ग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्म्माणिव्याख्यातानि। कालग्रहणात्सर्व्वक्रियाकालानामादेशः॥ भवतिचात्र।
बीजं चिकित्सितस्यैतत्समासेन प्रकीर्त्तितम्।

सविंशमध्यायशतमस्य व्याख्या भविष्यति ॥

तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रस्थाननिदान शारीरचिकित्सित कल्पेष्वर्थवशात्संविभज्योत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः ॥ भवति चात्र ।

स्वयम्भुवा प्रोक्तमिदं सनातनं
पठेद्धि यः काशिपतिप्रकाशितम् ।
सपुण्यकर्म्मा भुवि पूजितो नृपै-
रसुक्षये शक्रसलोकतां व्रजेत् ॥

---

## द्वितीयाध्यायः ॥

अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥ ब्राह्मण क्षत्रियवैश्यानामन्यतममन्वयवयः शीलशौर्य्यशौचाचारविनय शक्ति बलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत् ॥

उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिल मुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पै र्लाजभक्तै रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्रह्माणं स्थापयित्वाग्नि मुपसमाधाय खदिरपलाशदेवदारुबिल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभि र्दार्वीहोमि-

मिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात् । सप्रणवाभिर्महाव्याहृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारञ्च कुर्य्यात् शिष्यमपि कारयेत् ॥ ब्राह्मणस्त्रयाणां वर्णाना मुपनयनं कर्त्तु मर्हति राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति । शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके ॥ ततोऽग्निं त्रिःपरिणीयाग्नि साक्षिकं शिष्यं ब्रूयात् । कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा नीचनखरोम्णा शुचिना कषायवाससा सत्यव्रत ब्रह्मचर्य्याभिवादनतत्परेणाऽवश्यं भवितव्यं मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्त्तितव्य मतोऽन्यथाते वर्त्तमानस्याधर्म्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति । अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामे नोभाग्भवेय मफलविद्यश्च । द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मवान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्य मेवं साधु भवति ॥ व्याध शाकुनिक पतित पापकारिणां न च प्रति कर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्म्मार्थकामांश्च प्राप्नोति ॥ भवतश्चात्र ।

कृष्णेऽष्टमी तन्निधनेऽहनी
द्वे शुक्लेतरेऽप्येवमहर्द्विसन्ध्यम् ।
अकालविद्युत्स्तनयित्नु घोषे
स्वतन्त्र राष्ट्रक्षितिपव्यथासु ॥
श्मशानयानायतनाहवेषु
महोत्सवौत्पातिकदर्शनेषु ।

नाध्येय मन्येषुच येषु विप्रा नाधीयते
नाशुचिनाच नित्यम् ॥

---

तृतीयाध्यायः ।

अथातोऽध्ययनसंप्रदानीयमध्यायं व्याख्यास्यामः ॥ प्रागभिहितं सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्र-स्थानमध्यायाःषट् चत्वारिंशत् । षोडश निदानानि । दश शारीराणि । चत्वरिंश च्चिकित्सितानि । अष्टौ कल्पाः । तदुत्तरं षट्षष्टिः ॥

वेदोत्पत्तिः शिष्यनयस्तथाध्ययनदानिकः ।
प्रभाषणाग्रहरणाहृतुचर्य्याथ याम्लिकः ॥
शस्त्रावचारणं योग्या विशिखा चारकल्पनम् ।
अग्निकर्म्म जलौकाख्यावध्यायौ रक्तवर्णनम् ॥
दोषधातुमलाद्यानां विज्ञानाध्याय एव च ।
कर्णव्यधामपक्वैषावालेपो व्रणगमनम् ॥
हिताहितौ व्रणप्रश्नौ व्रणास्रावश्च यः पृथक् ।
कृत्याकृत्यविधि र्व्याधिसमुद्देशीय एव च ॥
विनिश्चयः शस्त्रविधौ प्रनष्टज्ञानिकस्तथा ।
शल्योद्धृतिर्व्रणज्ञानं दूतस्वप्ननिदर्शनम् ॥
पञ्चेन्द्रियं तथाच्छाया स्वभावाद्वैकृतं तथा ।
वारणी युक्तसेनीय आतुरक्रम मिश्रकौ ॥
भूमिभागो द्रव्यगणः संशुद्धौ शमने च यः ।

द्रव्यादीनाञ्च विज्ञानं विशेषो द्रव्यगोऽपरः ॥
रसज्ञानं वमनार्थमध्यायो रेचनाय च ।
द्रवद्रव्यविधि स्तद्वदन्नपानविधिस्तथा ॥
सूचनात्सूत्रणाच्चैव सन्धानाच्चार्थसन्ततेः ।
षट्चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥ १ ॥
वातव्याधिकमर्शांसि साश्मरिश्च भगन्दरः ।
कुष्ठमेहोदरा मूढविद्रध्यः परिसर्प्पणम् ॥
ग्रन्थि वृद्धि भग्नशूक क्षुद्राश्च मुखरोगिकम् ।
हेतुलक्षणनिर्द्देशान्निदानानीति षोडश ॥ २ ॥
भूतचिन्ता रजःशुद्धि गर्भावक्रान्तिरेवच ।
व्याकरणञ्च गर्भस्य शरीरस्य च यत् स्मृतम् ॥
प्रत्येकं मर्म्मनिर्द्देशः सिरावर्णनमेवच ।
सिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा ॥
निर्द्दिष्टानि दशैतानि शारीराणि महर्षिणा ।
विज्ञानार्थं शरीरस्य भिषजां योगिनामपि ॥ ३ ॥
द्विव्रणीयो व्रणः सद्यो भग्नानां वातरोगिकम् ।
महावातिकमर्शांसि साश्मरिश्च भगन्दरः ॥
कुष्ठानां महताञ्चापि मैहिकं पैडिकं तथा ।
मधुमेहचिकित्साच तथाचोदरिणामपि ॥
मूढगर्भचिकित्साच विद्रधीनां विसर्पिणाम् ।
ग्रन्थिवृद्ध्युपदंशानान्तथाच क्षुद्ररोगिकम् ॥
शूकदोषचिकित्साच तथाच मुखरोगिणाम् ।
शोफस्यानागतानाञ्च निषेधो मिश्रकान्तथा ॥

वाजीकरञ्च यत्तच्चीर्णे सर्व्वाबाधशमोपिच ।
मेधायुष्करणञ्चापि स्वभावव्याधिवारणम् ॥
निवृत्तसन्तापकरं कीर्त्तितञ्च रसायनम् ।
स्नेहोपयौगिकः स्वेदो वमने सविरेचने ॥
तयोर्व्यापच्चिकित्सा च नेत्रवस्तिविभागिकः ।
नेत्रवस्तिविपत्सिद्धिस्तथाचोत्तरवस्तिकः ॥
निरूहक्रमसंज्ञश्च तथैवातुरसंज्ञकः ।
धूमनस्यविधिश्चापशाश्चत्वारिंशदिति स्मृताः ॥
प्रायश्चित्तं प्रशमनं चिकित्सा शान्तिकर्म्मच ।
पर्य्यायास्तस्य निर्द्दिष्टाश्चिकित्सास्थानमुच्यते ॥ ४ ॥
अन्नस्य रक्षा विज्ञानं स्थावरस्येतरस्यच ।
सर्पदष्टविषज्ञानं तस्यैवच चिकित्सितम् ॥
दुन्दुभेर्मूषिकानाञ्च कीटानां कल्प एवच ।
अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥ ५ ॥
अध्यायानां शतं विंशमेवमेतदुदीरितम् ।
अतःपरं स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥
अधिकृत्य कृतं यस्मात्तन्त्रमेतदुपद्रवान् ।
औपद्रविक इत्येष तस्याशत्वान्निरुच्यते ॥
सन्धौ वर्त्मनि शुक्लेच कृष्णे सर्व्वत्र दृष्टिषु ।
संविज्ञानार्थमध्याया गदानां तु प्रति प्रति ॥
चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः ।
पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैवच ॥
लेख्यभेद्यनिषेधीच छेद्यानां वर्त्मदृष्टिषु ।

क्रियाकल्पोऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम् ॥
घ्राणोत्थानाञ्च विज्ञानं तद्वत्प्रतिषेधनम्।
प्रतिश्यायनिषेधश्च शिरोगदविवेचनम्।
चिकित्सा तद्गदानाञ्च शालाक्यं तन्त्रमुच्यते ॥
नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम्।
अपस्मारशकुन्योश्च रेवत्याश्च पुनःपृथक् ॥
पूतनायास्तथान्धाया मण्डिका शीतपूतना।
नैगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा।
कौमारतन्त्रमित्येतच्छारीरेषुच कीर्त्तितम् ॥
ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि।
पाण्डूनां रक्तपित्तस्य मूर्च्छाया: पानजाश्च ये ॥
तृष्णायाश्छर्द्दिहिक्कानां निषेधः श्वासकासयोः।
स्वरभेदचिकित्साच ह्यन्युदावर्त्तिनोः पृथक् ॥
विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः।
इति कायचिकित्सायाः शेषमत्र प्रकीर्त्तितम् ॥
अमानुषनिषेधश्च तथापस्मारिकोऽपरः।
उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते ॥
रसभेदाः स्वस्थवृत्ति र्युक्तयस्तान्त्रिकाश्च याः।
दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः ॥
श्रेष्ठत्वादुत्तरं ह्येतत्तन्त्रमाहुर्महर्षयः।
बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरञ्चापि पश्चिमम् ॥
शालाक्यतन्त्रं कौमारं चिकित्सा कायिकीच या।
भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते ॥

वाजीकरचिकित्सासु रसायनविधिस्तथा।
विषतन्त्रं पुनः कल्पाः शल्यज्ञानं समन्ततः॥
इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्।
विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि॥

एतद्वश्यमध्येयमधीत्यच कर्म्माप्यवश्यमुपासितव्यमुभयज्ञो हि भिषग्राजार्हो भवति॥

भवन्ति चात्र। यस्तुकेवलशास्त्रज्ञः कर्म्मस्वपरि निष्ठितः।
स मुह्यत्यातुरम्प्राप्य प्राप्य भीरुरिवाहवम्॥
यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रवहिष्कृतः।
स सत्सु पूजां नाप्नोति वधं चार्हति राजतः॥
उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि।
अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ॥
ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः।
भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्जयेत्॥
छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च कर्म्मसु।
स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः॥
यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने।
आहवे कर्म्म निर्वोढुं द्विचक्रः स्यन्दनो यथा॥

अथ वत्स तदेतदध्येशं यथा तथोपधारय मया प्रोच्यमानम्। अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा तेच पदपादश्लोका भूयः क्रमेणानुसन्धेया एवमेकैकशोवटयेदात्मनाचानुपठेत्। अद्रुतमविलम्बित मविशङ्कितमननु-

नासिकं व्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवोष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेन्नचान्तरेण कश्चिद्व्रजे-त्तयोरधीयानयोः ॥

भवतश्चात्र ॥ शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्जितः ।
पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥
वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्म्मनैपुणे ।
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥

---

## ॥ चतुर्थोऽध्यायः ॥

अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः ॥

अधिगतमप्यध्ययनमप्रभाषितमर्थतः ।

खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति ॥

भवति चात्र ॥ यथा खरश्चन्दनभारवाही
भारस्य वेत्ता नतु चन्दनस्य ।
एवं हि शास्त्राणि बहून्यधीत्य
चार्थेषु मूढाः खरवद्वहन्ति ॥

तस्माद्विंशमध्यायशतमनुपदपादश्लोकमनुवर्ण-यितव्यमनुश्रोतव्यञ्च ॥ कस्मात्सूक्ष्मा हि द्रव्यरसगुणवीर्यवि-पाकदोषधातुमलाशयमर्म्मसिरास्नायुसन्ध्यस्थि गर्भसम्भवद्र-व्यसमूहविभागास्तथा प्रनष्टशल्योद्धरणव्रणविनिश्चयभग्नवि-कल्पाःसाध्ययाप्यप्रत्याख्येयताच विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धेरपि

बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः। तस्मादवश्यमनुपद-पादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च॥ अन्य शास्त्रविषयोपपन्नानाञ्चार्थानामिहोपनिपतितानामर्थवशात्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं कस्मान्नह्येकस्मिन् शास्त्रे शक्यः सर्व्वशास्त्राणामवरोधः कर्त्तुम्॥

भवन्ति चात्र॥ एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम्।
तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः॥
शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत्।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः॥
औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम्।
शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत्॥

---

॥ पञ्चमाध्यायः॥

अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः॥ त्रिविधं कर्म्म। पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति तद्व्याधिं प्रति प्रत्युपदेक्ष्यामः। अस्मिन् शास्त्रे शस्त्रकर्म्मप्राधान्याच्छस्त्रकर्म्मैव तावत् पूर्व्वमुपदेक्ष्याम स्तत्सम्भारांश्च॥ तत्र शस्त्रकर्म्माऽष्टविधम्। तद्यथा। छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति॥

अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि तद्यथा यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्बवोष्ठपिचुप्रोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलत-

र्पणकषायालेपनकल्कव्यजनशीतोष्णोदक कटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः। ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्या-दापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम्। तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः।

भवति चात्र। आयतश्च विशालश्च सुविभक्तो निराश्रयः।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते॥
शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू।
असंमोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते॥

एकेन वा व्रणेनाशुध्यमानेनान्तराबुद्ध्यावेक्ष्यापरान् व्रणान् कुर्य्यात्।

भवति चात्र। यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च।
तत्र तत्र व्रणं कुर्य्याद्यथा दोषो न तिष्ठति॥

तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः।

चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान्॥

अन्यथा तु सिरास्नायुच्छेदनमतिमात्रं वेदना चिराद्व्रणसंरोहो मांसकन्दीप्रादुर्भावश्चेति। मूढगर्भोदरार्शोऽश्म-

रीभगन्दरमुखरोगेष्वभुक्तवतः कर्म्म कुर्व्वीत। ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात्परिपीड्याङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेणक्षीतेनोदकमादाय तिलकल्कं मधुसर्पिःप्रगाढामौषधयुक्तां वर्त्तिं प्रणिदध्यात्। ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां घनाङ्कवलिकान्दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपै धूपयेद्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत। ततोगुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत्। आज्यशेषेण चास्य प्राणान् समालभेत। उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म्म कुर्य्यात्तद्वक्ष्यामः।

कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम्॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः॥
पान्तु त्वां मुनयो ब्राह्मा दिव्या राजर्षयस्तथा।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः॥
अग्नीरक्षतु ते जिह्वां प्राणान् वायुस्तथैव च।
सोमो व्यानमपानं ते पर्जन्यः परिरक्षतु॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः।
बलमिन्द्रो बलपतिर्मनुर्मन्येमतिं तथा॥
कामांस्ते पान्तु गन्धर्व्वाः सत्वमिन्द्रोऽभिरक्षतु।

प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ।
आकाशं खानि ते पातु देहं तव वसुन्धरा ॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ ॥
एता देहे विशेषेण तव नित्या हि देवताः ।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्व्वताम् ।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ।
पितामहकृता रक्षा स्वस्त्यायुर्व्वर्द्धतां तव ॥
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ।

इति स्वाहा ॥ एतैर्व्वेदात्मकैर्म्मन्त्रैः कृत्याव्याधिविनाशनैः ।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत् । ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्वस्त्रपट्टेन नचैनं त्वरमाणोऽपरिमोचयेत् । द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति तीव्ररुजश्च भवति । अत ऊर्द्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात् । नचैनं त्वरमाणः सान्तर्दोषं रोपयेत् स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति ॥

भवन्तिचात्र। तस्मादन्तर्व्वहिश्चैव सुशुद्धं रोपयेद्व्रणम्।

रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत्।
हर्षं क्रोधं भयञ्चापि यावदास्थैर्य्यसम्भवात्॥
हेमन्ते शिशिरेचैव वसन्तेचापि मोक्षयेत्।
त्र्यहाद्द्व्यहाच्छरद्ग्रीष्मवर्षास्वपिच बुद्धिमान्॥
अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक्।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम्॥

या वेदना शस्त्रनिपातजाता तीव्रा शरीरं प्रदुनोति जन्तोः।
घृतेन सा शान्तिमुपैति सिक्ता कोष्णेन यष्टीमधुकान्वितेन॥

---

## षष्ठाध्यायः।

अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः॥ कालोहि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः। तस्य सम्वत्सरात्मनोभगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्वयनसम्वत्सरयुगप्रविभागं करोति॥ तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठा॥ त्रिंशत्काष्ठाः कलाः। विंशति कलोमुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च तौ मासः॥

तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षड्ऋतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षा। इषोर्जौ शरत्। सहःसहस्यौ हेमन्त इति॥ त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्याय्यते सोमोऽम्ललवण मधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्याय्यतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तोभवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमपहीयते॥

भवतिचात्र॥ शीतांशुः क्लेदयत्युर्व्वीं विवस्वान् शोषयत्यपि।
तावुभावपि संश्रित्य वायुः पालयति प्रजाः॥

अथ खल्वयने द्वे युगपत्सम्वत्सरो भवति। ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादियुगपर्य्यन्तः कालश्चक्रवत्परिवर्त्तमानः कालचक्रमुच्यत इत्येके॥

इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड्ऋतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा। भाद्रपदाश्वयुजौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाख ज्यैष्ठौ ग्रीष्मः। आषाढश्रावणौ प्रावृडिति। तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते

जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्ट-
ब्धाग्नीनां विदह्यन्ते विदाहात्पित्तसञ्चयमापादयन्ति स
सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरण-
प्रविलापितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः
कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्या-
पश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यम्ला उपयुज्यमाना मन्दकि-
रणत्वाद्भानोः सतुषार पवनोपस्तम्भितदेहानां देहिनामवि-
दग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमा-
पादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्त-
ब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता
एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्या-
पश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां
रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः
प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां
शीतवात वर्षेरितो वातिकान् व्याधीन् जनयति। एवमेष
दोषाणां सञ्चय प्रकोपहेतुरुक्तः।

तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्त-
प्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम्। तत्र पैत्ति-
कानां व्याधीनामुपशमो हेमन्ते श्लैष्मिकाणां निदाघे वाति-
कानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोपशमा
व्याख्याताः।

तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे
प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपल-

क्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमै र्जानीयात्।

तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां व्यापदोऽदृष्ट कारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः कदाचिदव्यापन्नेष्व प्यृतुषु कृत्यापिशाचरक्षः-क्रोधाधर्म्मैरुपध्वस्यन्ते जनपदाः। विषौषधीपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्य विशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्व्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्व्वा। तत्रस्थानपरित्यागशान्तिकर्म्म प्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति।

ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः।
वायुर्व्वात्युत्तरः शीतो रजोधूमाकुला दिशः।
छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥
दर्पिता ध्वाङ्क्षखङ्गाह्वमहिषोरभ्रकुञ्जराः।
रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ १॥
शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः।
शेषं हेमन्तवत्सर्व्वं विज्ञेयं लक्षणं बुधैः॥ २॥

दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः ॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ।
दक्षिणानिलसम्बीताः सुमुखाःपल्लवोज्ज्वलाः ॥
ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैरृतोऽसुखः ।
भूस्तप्ता सरितस्तन्वी दिशः प्रज्वलिता इव ॥
भ्रान्तचक्राह्वयुगलाः पयः पानाकुला मृगाः ।
ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः ॥ ४ ॥
प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ।
अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः ॥
कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्ज्जकेतकिभूषिता ॥ ५ ॥
तत्र वर्षासु नद्यम्भःपूरोत्क्रान्ततटद्रुमाः ।
वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः ॥
भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ।
नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ ६ ॥
बभ्रुरुणः शरद्यर्कः श्वेताभ्रविमलं नभः ।
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः ।
वाणसप्ताह्वबन्धूककाशासनविराजिता ॥ ७ ॥
स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ।
विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥
हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ।

वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्॥

---

## सप्तमोऽध्यायः।

अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः॥ यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ। किं कारणम्। यस्माद्धस्ताद्दृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्मणाम्। तत्र मनःशरीराबाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि॥ तानि षट् प्रकाराणि। तद्यथा। स्वस्तिकयन्त्राणि। सन्दंशयन्त्राणि तालयन्त्राणि। नाड़ीयन्त्राणि। शलाकायन्त्राणि। उपयन्त्राणि चेति॥

तत्र चतुर्व्विंशतिः स्वस्तिकयन्त्राणि। द्वे सन्दंशयन्त्रे। द्वे एव तालयन्त्रे। विंशतिर्नाड्यः। अष्टाविंशतिः शलाकाः। पञ्चविंशति रुपयन्त्राणि॥ तानि प्रायशो लौहानि भवन्ति तत्प्रतिरूपकाणि वा तदलाभे। तत्र नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि तस्मात्तत्सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत्।

समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च।
सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत्॥

तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंहव्या-घ्रवृकतरक्ष्वृक्षद्वीपिमार्ज्जारशृगालमृगैर्व्वारुककाककङ्ककुर-रचासभास शशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजा-

ञ्जलिकर्णावभञ्जन नन्दिमुखमुखानि मसूराकृतिभिः कीलैरवबद्धानि मूलेऽङ्कुशवदावृत वारङ्गाण्यस्थिविनष्टश-ल्योद्धरणार्थमुपदिश्यन्ते ।

सनिग्रहोऽनिग्रहश्च सन्दंशौ षोडशाङ्गुलौ भवतस्त्व-ङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालुवदेकतालद्वितालके कर्णनासा नाडीशल्यानामाहरणार्थम् ॥

नाडीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखा-न्युभयतो मुखानि च तानि स्रोतोगतशल्योद्धरणार्थं रोग-दर्शनार्थमाचूषणार्थं क्रियासौकर्य्यार्थञ्चेति तानि स्रोतोद्वा-रपरिणाहानि यथा योगपरिणाहदीर्घाणि च ॥

भगन्दरार्शोऽर्वुदव्रणवस्त्युत्तरवस्तिमूत्रवृद्धिदकोदरधूम-निरुद्ध प्रकशसन्निरुद्धगुदयन्त्राण्यलावूशृङ्गयन्त्राणि चोपरिष्टा-द्वक्ष्यामः ॥

शलाकायन्त्राण्यपि नानाप्रकाराणि नानाप्रयोजनानि यथा योगपरिणाहदीर्घाणि च तेषां गण्डूपदशरपुङ्खसर्पफणब-डिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुपदिश्येते । मसू-रदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थम् । षट्कार्पासकृतोष्णीषाणि प्रमार्जनक्रियासु । त्रीणि दर्वा-कृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम् । त्रीण्यन्यानि-जाम्बववदनानि त्रीण्यङ्कुशवदनानि षडग्निकर्म्मण्यभिप्रे-तानि । नासार्बुदहरणार्थमेकं कोलास्थिदलमात्रमुखं खल्ल-तीक्ष्णोष्ठम् । अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकु-

लायम् । मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥

उपयन्त्राण्यपि रज्जुवेणिकापट्टचर्म्मान्तवल्कललतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति ॥

एतानि देहे सर्वस्मिन् देहस्यावयवे तथा ।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत् ॥

यन्त्रकर्म्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्ज्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः ॥

स्वबुद्ध्या चापि विभजेद्यन्त्रकर्म्माणि बुद्धिमान् ।
असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं मृदुमुखं मृदुपाशमिति द्वादश यन्त्र दोषाः ॥

एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम् ।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्म्मसु योजयेत् ॥
दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः ।
निर्हरेत्तु शनैः शल्यं शस्त्रयुक्तिव्यपेक्षया ॥

विवर्त्तते साध्ववगाहते च शल्यं निगृह्योद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वविकारि चैव ॥

## अष्टमाध्यायः॥

अथातःशस्त्रावचारणीयमध्यायं व्याख्यास्यामः॥

विंशतिः शस्त्राणि। तद्यथा। मण्डलाग्रकरपत्रवृद्धिपत्रनख शस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्च्चककुठारिकाव्रीहिमुखारावेतसपत्रकवडिशदन्तशङ्क्वेषण्य इति। तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्च्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूचीच। वडिशं दन्तशङ्कुश्चाहरणे। एषण्येषणे आनुलोम्ये च। सूच्यः सीवने। इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः। तेषामथ यथायोगग्रहणसमासोपायः कर्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाच्छेदनान्येवं सर्वाणि। वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्य्यं वृन्ताग्रे विस्रावणानि। विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्च्चकेन विस्रावयेत्। तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम्। कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्याङ्गुष्ठविष्टब्धयाभिहन्यात्। आराकरपत्रैषण्यो मूले। शेषाणि तु यथायोगं गृह्णीयात्। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले सूच्यो वक्ष्यन्ते।

वडिशी दन्तशङ्कू चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे। एषणी गण्डूपदाकारमुखी।

प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका। दशाङ्गुला शरारीमुखी साकर्त्तरीति कथ्यते। शेषाणि तु षडङ्गुलानि।

तानि सुग्रहाणि सुलौहानि सुधाराणि सुरूपाणि सुसमाहित मुखाग्राण्यकरालानि चेति शस्त्रसम्पत्।

तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्व मित्यष्टौ शस्त्रदोषाः। अतो विपरीतगुणमाददीतान्यत्र कर पत्रात्तद्धि खरधारमस्थिच्छेदनार्थम्।

तत्र धारा भेदनानां मासूरी। लेखनानामर्द्धमासूरी। व्यधनानां विस्रावणानाञ्च कैशिकी। छेदनानामर्द्धकैशिकीति। तेषां पायना त्रिविधा क्षारोदकतैलेषु तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु तैलपायितं सिराव्यधनस्नायुच्छेदनेषु। तेषां निशाणार्थं श्लक्ष्णशिला माषवर्णा। धारासंस्थापनार्थं शाल्मलीफलकमिति।

भवति चात्र। यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्

सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्॥

अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षार नखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति।

शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्।

त्वक्सारादि चतुर्व्वर्गं छेद्ये भेद्ये च बुद्धिमान्॥

आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत्।

विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम् ॥
ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ।
गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥
एष्येष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः ।
शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु ।
कारयेत्करणैः प्राप्तं कर्म्मारं कर्म्मकोविदम् ॥
प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ।
तस्मात्परिचयः कार्य्यः शस्त्राणामादितः सदा ॥

---

## नवमाध्यायः ।

अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥

अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्याङ्कारयेत् । छेद्यादिषु स्नेहादिषु च कर्म्मपथमुपदिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो भवति । तत्र पुष्पफलालावूकालिन्दकत्रपुसैर्व्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेदुत्कर्त्तन-परिकर्त्तनानि चोपदिशेत् । दृतिवस्तिप्रसेवकप्रभृतिषूदक-पङ्कपूर्णेषु भेद्ययोग्याम् । सरोम्णि चर्म्मण्यातते लेख्यस्य । मृतपशुसिरासूत्पलनालेषु च वेध्यस्य । घुणोपहतकाष्ठवेणुनलनालीशुष्कालावुमुखेष्वेष्यस्य । पनसविम्बीविल्व फल-मज्जमृतपशुदन्तेष्वाहार्य्यस्य । मधूच्छिष्टोपलिप्ते शाल्म-लीफलके विस्राव्यस्य । सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्म्मान्त-योश्च सीव्यस्य । पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम् ।

मृदुमांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम् । मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम् । उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणिधानवस्तिव्रणवस्तिपीडनयोग्यामिति ।

भवतश्चात्र । एवमादिषु मेधावी योग्यार्हेषु यथाविधि ।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु ॥
तस्मात्कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्म्मसु ।
यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत् ॥

## दशमाध्यायः ।

अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ।

अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्म्मणा कृतयोग्येन शास्त्रार्थनिगदता राज्ञानुज्ञातेन नीचनखरोमणा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखानुप्रवेष्टव्या ।

ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभिगम्योपविश्यातुरमभिपश्येत् स्पृशेत् पृच्छेच्च । त्रिभिरेतैर्विज्ञानोपायैरोगाः प्रायशो वेदितव्या इत्येके । तत्तु न सम्यक् । षड्विधो हि रोगाणां विज्ञानोपायः । तद्यथा पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति । तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः

सशब्दो निर्गच्छतीत्येवमादयः । स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयो ज्वर शोफादिषु । चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबल वर्णवि-कारादयः । रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः । घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः । प्रश्नेनच विजानीयाद्देशं कालं जातिं सात्म्य-मातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलं दीप्ताग्नितां वात-मूत्रपुरीषरजसां प्रवृत्त्य प्रवृत्ती कालप्रकर्षादींश्च विशेषान् । आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात् ।
भवति चात्र । मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैवच ।
तथा दुःपरिमृष्टाश्च मोहयेयुश्चिकित्सकम् ॥

एवमभिसमीक्ष्य साध्यान् साधयेद्याप्यान् यापयेदसा-ध्यान्नोपक्रमेत् परिसम्वत्सरोत्थितांश्च विकारान् प्रायशो वर्ज-येत् । तत्र साध्या अपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा-भवन्ति। तद्यथा । श्रोत्रियनृपतिस्त्रीबालवृद्धभीरुराजसेव-ककितवदुर्ब्बलवैद्य विदग्धव्याधिगोपकदरिद्रकृपणक्रोधव-तामनात्मवतामनाथानाञ्चैवं निरूप्य चिकित्सां कुर्व्वन् धर्म्मार्थकामयशांसि प्राप्नोति।

भवति चात्र॥ स्त्रीभिः सहास्यां संवादं परिहासञ्च वर्जयेत् ।
दत्तञ्च ताभ्यो नादेयमन्नादन्यद्भिषग्वरैः ॥

## एकादशाध्यायः ।

अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः ॥

शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमश्छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च । तत्र क्षरणात् क्षणनाद्वा क्षारः । नानौषधिसमवायात्त्रिदोषघ्नः शुक्लत्वात्सौम्यस्तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा स खल्वाग्नेयौषधिगण भूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः क्रम्यामकफकुष्ठविषमेदसामुपहन्तापुंस्त्वस्य चातिसेवितः । स द्विविधः प्रतिसारणीयः पानीयश्च । तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रण नाडीचर्मकीलतिलकालकन्यच्छव्यङ्गमशकवाह्यविद्रधिक्रिमिविषार्शःसूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम् ॥ पानीयस्तु गरगुल्मोदराग्निशूलाजीर्णारोचकानाहशर्कराश्मर्य्याभ्यन्तरविद्रधि क्रिमिविषार्शस्सूपयुज्यते । अहितस्तु रक्तपित्तज्वरितपित्तप्रकृति बालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवम्विधेभ्यः । तस्येतरक्षारवद्दग्ध्वा परिस्रावयेत्तस्य विस्तारोऽन्यत्र । स च त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च । तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्यप्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वाभिमन्त्रयानेन मन्त्रेण ।

अग्निवीर्य्य महावीर्य्य मा ते वीर्य्यं प्रणश्यतु ।

इहैव तिष्ठ कल्याणि मम कार्य्यं करिष्यसि।
मम कार्य्ये कृते पश्चात् स्वर्गलोकं गमिष्यसि॥

श्वेतपुष्परक्तपुष्पसहस्रं जुहुयात्। खण्डशः प्रकल्प्यग्राव-पाटत्र निर्व्वाते देशे निचितं कृत्वा सुधाशर्कराश्च प्रक्षिप्य ति-लनालैरादीपयेद् दथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्म-शर्कराश्च। अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभ-द्रकविभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमाल-वृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्नि-मन्थगुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत्। ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मुत्रैर्व्वा यथोक्तैरे-कविंशतिवारान् विस्राव्य महति कटाहे शनैर्दर्व्या विघट्ट-यन् विपचेत्॥ स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिल-श्च तमादाय महति वस्त्रे परिस्राव्येतरं विभज्यच पुनरग्नाव-धिश्रयेत्। तत एव च क्षारोदकात् कुडवमध्यर्द्धं वापनयेत्। ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वायसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्वि-द्रोणेऽष्टपलसंमितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सत-तमप्रमत्तश्चैनमवघट्टयन् विपचेत्। स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत। अथैनमागतपाकमवता-र्य्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेषमध्यमः। एष एवाप्रतीवापः पक्वः संव्यूहिमो मृदुः। प्रति वापे यथा-लाभं दन्तीद्रवन्तीचित्रकलाङ्गलकीपूतिकप्रवालतालपत्री विडसुवर्चिकाकनकक्षीरीहिङ्गुवचाविषाः समाः श्लक्ष्णचूर्णाः

शुक्ति प्रमाणः प्रतिवापः । स एव सप्रतीवापः पक्कः पाक्य-स्तीक्ष्णस्तेषां यथाव्याधिबलमुपयोगः । क्षीणबलेतु तु क्षारो-दकमावपेद्वलकरणार्थम् ॥ भवतश्चात्र ।

नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः ।
अभिष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः ॥
अतिमार्दवशैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिताः ।
सान्द्रताऽपक्कता हीनद्रव्यता दोष उच्यते ॥

तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निर्वातातपे देशेऽसम्बाधेऽग्रोपहरणीयोक्तेन विधानेनोपसम्भृतसम्भारं ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा शलाकया क्षारं पातयित्वा वाक्शतमात्र मुपेक्षेत ।

तस्मिन्निपतिते व्याधौ कृष्णता दग्धलक्षणम् ।
तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः ॥
अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते ।
इदमालेपनं तत्र समग्रमवचारयेत् ॥
अम्लकाञ्जिकबीजानि तिलान्मधुकमेवच ।
प्रपेष्य समभागानि तेनैवमनुलेपयेत् ॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः ॥
आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति ।
एवं चेन्मन्यसे वत्स प्रोच्यमानं निबोध मे ॥
अम्लवर्ज्यान् रसान् क्षारे सर्व्वानेव विभावयेत् ।
कटुकस्तत्र भूयिष्ठो लवणानुरसस्तथा ॥

अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः।
माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति।
माधुर्य्याच्छमम।प्नोति वह्निरद्भिरिवाप्लुतः॥

तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च। हीनदग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च। अतिदग्धे दाहपाकरागस्रावाङ्गमर्द्दक्लमपिपासामूर्च्छाः स्युर्म्मरणं वा। क्षारदग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत्।

अथ नैते क्षारकृत्याः। तद्यथा दुर्बलबालस्थविरभीरुसर्व्वाङ्गशूनोदरिरक्तपित्तगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीवापवृत्तोद्वृत्तफलयोनयः। तथा मर्म्मशिरास्नायुधमनीसन्धितरुणास्थिसेवनीगलनाभीनखान्तरशेफस्रोतःस्वल्पमांसेषु च प्रदेशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात्। तत्र क्षार साध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धि पीडोपद्रुतं क्षारो न साधयति।

भवतिचात्र।

विषाग्निशस्त्राशनिमृत्युकल्पः क्षारो भवत्यल्पमतिप्रयुक्तः।
स धीमता सम्यगनुप्रयुक्तो रोगान्निहन्यादचिरेण घोरान्॥

---

द्वादशाध्यायः।

अथातोऽग्निकर्म्मविधिमध्यायं व्याख्यास्यामः॥
क्षाराद्ग्निर्गरीयान् क्रियासु व्याख्यातस्तद्दग्धानां रोगाणामपुनर्भावाद्भिषजग्रस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च॥

अथेमानि दहनोपकरणानि । तद्यथा पिप्पल्यजाशकृद्गोदन्तशरशलाका जाम्बवौष्ठेतरलोहाः क्षौद्रगुडस्नेहाश्च । तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानाम् । जाम्बवौष्ठेतरलोहानि मांसगतानां क्षौद्रगुडस्नेहाः सिरास्नायुसन्ध्यस्थिगतानाम् । तत्राग्निकर्म्म सर्व्वर्त्तुषु कुर्य्यादन्यत्र शरद्ग्रीष्माभ्यां तत्राप्यात्ययिकेऽग्निकर्म्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा सर्व्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः कर्म्म कुर्व्वीत मूढगर्भाश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः । तत्र द्विविधमग्निकर्म्माहुरेके त्वग्दग्धं मांसदग्धञ्च । इह तु सिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः । तत्र शब्दप्रादुर्भावो दुर्गन्धता त्वक्सङ्कोचश्च त्वग्दग्धे । कपोतवर्णताल्पश्वयथुवेदना शुष्कसंकुचितव्रणता च मांसदग्धे । कृष्णोन्नतव्रणतास्रावसन्निरोधश्च सिरास्नायुदग्धे । रुक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे । तत्र शिरोरोगाधिमन्थयोर्भ्रूललाटशङ्खप्रदेशेषु दहेत् ॥ वर्त्मरोगेष्वार्द्रलक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् दहेत् ॥ त्वङ्मांससिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजे वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुदभगन्दरापचीश्लीपदचर्म्मकीलतिलकालकान्त्रवृद्धिसन्धिसिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म्म कुर्य्यात् ॥ तत्र रोगाधिष्ठानभेदादग्निकर्म्म चतुर्द्धा भिद्यते । तद्यथा । वलयबिन्दुविलेखाप्रतिसारणानीति दहनविशेषाः । भवति चात्र ।

रोगस्य संस्थानमतो विदित्वा नरस्य मर्म्माणि बलाबलञ्च ।

व्याधिं तथर्त्तुञ्च समीक्ष्य सम्यक् ततो व्यवस्येद्भिषगग्निकर्म्म ॥

तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्गः। अथेमानग्निना परिहरेत् पित्तप्रकृतिमन्तः शोणितं भिन्नकोष्ठमनुद्धृतशल्यं दुर्ब्बलं बालं वृद्धं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति।

अत ऊर्द्ध्वमितरथादग्धलक्षणं वक्ष्यामः। तत्र स्निग्धं रूक्षं वा श्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहः सूक्ष्मसिरानुसारित्वात्त्वगादीननुप्रविश्याशु दहति। तस्मात्-स्नेहदग्धेऽधिका रुजो भवन्ति। तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धञ्चेति

चतुर्व्विधमग्निदग्धम्। तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत्-प्लुष्टम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम्। सम्यग्दग्धमनवगाढं तालफलवर्णं सुसंस्थितं पूर्व्वलक्षणयुक्तञ्च। अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरा स्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति व्रणश्चास्य चिरेण रोहति रूढश्च विवर्णो भवति। तदेतच्चतुर्व्विधमग्निदग्धलक्षणमात्मकर्म्मप्रसाधकम्। भवति।

भवन्ति चात्र। अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति।
तततस्तेनैव वेगेन पित्तमस्याप्युदीर्य्यते ॥
तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा।
तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते ॥
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते।
दग्धस्योपशमार्थाय चिकित्सा संप्रवक्ष्यते ॥

दुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम् ।
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ॥
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम् ।
तस्मात् सुखयति ह्युष्णं नतु शीतं कथञ्चन ॥
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्याद्भिषक् पुनः ।
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत् ॥
सम्यग्दग्धे तु गोक्षीरी प्लक्षचन्दनगैरिकैः ।
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक् ॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत् ।
पित्तविद्रधिवच्चैनं सततोष्माणमाचरेत् ॥
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम् ।
क्रियां कुर्य्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् ।
व्रणं गुडूचीपत्रैर्वा छादयेदथवौदकैः ।
क्रियाञ्च निखिलां कुर्य्याद्भिषक् पित्तविसर्पवत् ॥
मधूच्छिष्टं समधुकं रोध्रं सर्ज्जरसं तथा ।
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्व्विपाचयेत् ।
सर्व्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत् ।
अतऊर्द्धं प्रवक्ष्यामि धूमोपहतलक्षणम् ॥
श्वसिति क्षौति चात्यर्थमत्याधमति कासते ।
चक्षुषोः परिदाहश्च रागश्चैवोपजायते ॥
सधूमकं निःश्वसिति घ्रेयमन्यन्न वेत्ति च ।

तथैवच रसान् सर्व्वान् श्रुतिश्चास्योपहन्यते ॥
तृष्णादाहज्वरयुतः सीदत्यथच मूर्च्छति ।
धूमोपहत इत्येवं शृणु तस्य चिकित्सितम् ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥
वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति ।
विधिनानेन शाम्यन्ति सदनक्षवथुज्वराः ॥
दाहमूर्च्छातृडाध्मानश्वासकासाश्च दारुणाः
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥
सम्यग् गृह्णातीन्द्रियार्थान् मनश्चास्य प्रसीदति ।
शिरोविरेचनं तस्मै दद्याद्योगेन शास्त्रवित् ॥
दृष्टिर्विशुध्यते चास्य शिरोग्रीवञ्च देहिनः
अविदाहि लघुस्निग्धमाहारं चास्य कल्पयेत् ॥
उष्णवातातपैर्दग्धे शीतः कार्य्यो विधिः सदा ।
शीतवर्षानिलैर्दग्धे उष्णं स्निग्धञ्च शस्यते ।
तथातितेजसा दग्धे सिद्धिर्नास्ति कथञ्चन ॥
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ।
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥

---

त्रयोदशाध्यायः ॥

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥

नृपाढ्यबालस्थविरभीरुदुर्ब्बलनारीसुकुमाराणामनुग्रहार्थं परम सुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौ-

कसः । तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौका-लावुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्वाणि सर्व्वैर्वा ॥

भवन्ति चात्र ॥ उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम्

तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥

शीताधिवासा मधुरा जलौका वारिसम्भवा ।

तस्मात्पित्तोपसृष्टे तु हिता सात्ववसेचने ॥

अलावु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् ।

तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥

तत्र प्रच्छिते तनुवस्त्र पटलावनद्धेन शृङ्गेण शोणितमवसे-चयेदा चूषणात् । सान्तर्दीपयाऽलाव्वा ।

अथजलायुका वक्ष्यन्ते । जलमासामायुरितिजलायुका जलमासामोक इति जलौकसः । ता द्वादश तासां सविषाः षट् तावत्यएव निर्विषाः । तत्र सविषाः कृष्णा कर्वुरा अल-गर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्ण-वर्णा पृथुशिराः कृष्णा। वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्वुरा । रोमशा महापार्श्वाकृष्णमुख्यलगर्द्दा । इन्द्रायुधवदू-र्द्धराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्र पुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभू-ताकृतिरणुमुखी गो चन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वय-थुरतिमात्रं कण्डूर्मूर्च्छा ज्वरोदाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महागदः पानालेपननस्यकर्म्मादिषू-पयोज्यः । इन्द्रायुधादष्टमसाध्यमित्येताः सविषाः सचिकि-त्सिता व्याख्याताः ॥

अथ निर्विषाः । कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिकाचेति ।

तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्ध-मुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगाच पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृति वर्णाऽनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी । स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे । इत्येता अविषा व्याख्याताः ॥ तासां यवनपाण्ड्रसह्य पौतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥ तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः ॥ पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥

भवतिचात्र ॥ क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु ।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥

तासां ग्रहणमार्द्रचर्मणान्यैर्वा प्रयोगैर्गृह्णीयात् । अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थं चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं तृणमौदकानि च पत्राणि । त्र्यहात्त्र्यहाच्चान्यज्जलं भक्ष्यंच दद्यात् सप्तरात्रात्सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥

भवतिचात्र ॥ स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः ।

अग्राह्यिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तं स्थिता विगत क्लमा ज्ञात्वा ताभीरोगं ग्राहयेत् । सूक्ष्मशुक्लार्द्र पिचुप्लोतावच्छन्नां कृत्वा मुखमपाहृण्यादगृह्णन्त्यै चीरविन्दुं शोणितविन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्यच स्कन्धं तदा जानीयाद्गृह्णातीति गृह्णन्तीं चार्द्र वस्त्रावच्छन्नां धारयेत्सेचयेच्च । दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति शुद्धमाददानामपनयेत् । अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् । अथ पतितां तण्डुलकण्डन प्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोमनुमार्जयेदा मुखाद्वामयेत्तावद्यावत्सम्यग्वान्तलिङ्गानीति । सम्यग्वान्ता सलिल सरकन्यस्ता भोक्तुकामा सती चरेत् । या सीदति न चेष्टते सा दुर्व्वान्ता तां पुनः सम्यग्वामयेत् । दुर्व्वान्तायाव्याधिरसाध्य इन्द्रमदो नाम भवति । अथ सुवान्तां पूर्व्ववत्सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद्बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति ।

भवति चात्र ॥ क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।

जलौकसाञ्च यो वेत्ति तत्त्वाध्यान्स जयेद्गदान् ॥

---

## चतुर्द्दशोऽध्यायः।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥

तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्ट विधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्यसम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानं स हृदयाच्चतुर्विंशतिंधमनीरनुप्रविश्योर्द्धगा दश दश चाधोगामिन्यश्चतस्र स्तिर्य्यगाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्वशरीरावयव दोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति। अत्रोच्यते स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौप्राप्य रागमुपैति।

भवतश्चात्र ॥ रञ्जितास्तेजसात्वापः शरीरस्थेन देहिनाम्।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥
रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते।
तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥

आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकत्वापरे जीवरक्तमाहुराचार्य्याः।

विस्रता द्रवता रागः स्पन्दनं लघुता तथा।

जलौकसाञ्च यो वेत्ति तत्त्वाध्यान् स जयेद्गदान् ॥

---

## चतुर्द्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥

तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्ट विधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्यसम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानं स हृदयाच्चतुर्विंशतिंधमनीरनुप्रविश्योर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्त्र स्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्वशरीरावयव दोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति। अत्रोच्यते स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौप्राप्य रागमुपैति।

भवतश्चात्र ॥ रञ्जितास्तेजसात्वापः शरीरस्थेन देहिनाम्।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥

रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते।
तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥

आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः।

विस्रता द्रवता रागः स्पन्दनं लघुता तथा।

जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान् ॥

---

## चतुर्द्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥

तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्ट विधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्यसम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानं स हृदयाच्चतुर्विंशतिंधमनीरनुप्रविश्योर्द्धगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्व्वशरीरावयव दोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति। अत्रोच्यते स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौप्राप्य रागमुपैति।

भवतश्चात्र ॥ रञ्जितास्तेजसात्वापः शरीरस्थेन देहिनाम्।

अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥

रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते।

तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥

आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः।

विस्रता द्रवता रागः स्पन्दनं लघुता तथा।

भूम्यादीनां गुणास्त्वेते दृश्यन्ते चात्र शोणिते ॥
रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥

तत्रैषां धातूनामन्नपानरसः प्रीणयिता ।

रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।
अन्नात्पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः ॥

तत्र रस गतौ धातुरहरहर्गच्छतीत्यतो रसः । स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धाताववतिष्ठत एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवमिति ।

भवति चात्र ॥ अष्टादश सहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ।
कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥

स शब्दार्च्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम् । वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद्विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥

यथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीत्यथचास्ति सतां भावानामभिव्यक्तिरिति ज्ञात्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते स एव गन्धो विवृतपत्रे केशरे: कालान्तरेणाभिव्यक्तिं गच्छत्येवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयोऽथार्त्तवादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनैः शनैःस्तनगर्भाशययोन्यभिवृद्धिर्भवति । स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वान्न प्रीणनो भवति । त एते शरीरधारणाद्धातव इत्युच्यन्ते ॥

तेषां चयवृद्धी शोणितनिमित्ते तस्मात्तदधिकृत्य वक्ष्यामः॥ तत्र फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टम्। नीलं पीतं हरितं श्यावं विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम्। गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च। सर्व्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टम्। पित्तवद्रक्तेना तिकृष्णञ्च। द्विदोषलिङ्गं संसृष्टम्। जीवशोणितमन्यत्र वक्ष्यामः। इन्द्रगोपप्रतीकाशमसंहतमविवर्णञ्च प्रकृतिस्थं जानीयात्। विस्रा व्याख्यान्यत्र वक्ष्यामः। अथाऽविस्राव्याः सर्व्वाङ्गशोफः क्षीणस्य चाम्लभोजननिमित्तः पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनाञ्च श्वयथवः।

तत्र शस्त्रविस्रावणं द्विविधं प्रच्छानं सिराव्यधनञ्च। तत्र ऋज्वसङ्कीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेन्मर्म्म सिरास्नायुसन्धीनां चानुपघाति। तत्र दुर्द्दिने दुर्व्विद्धे शीतवातयोरस्विन्नेऽभुक्तवतः स्कन्नत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति॥

भवति चात्र॥ मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम्।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते॥

तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत्। अत्युष्णातिस्विन्नातिविद्धेष्वज्ञैर्विस्रावितमति प्रवर्त्तते। तदतिप्रवृत्तं शिरोभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गवि-

कारं तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणं चापादयति।

भवन्तिचात्र। तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते।

यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक्॥
सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते।
शुद्धं तदा विजानीयात्सम्यग्विस्रावितञ्च तत्॥
लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः।
सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा॥
त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये।
रक्तमोक्षणशीलानां न भवन्ति कदाचन॥

अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्राकाङ्कुरनक्तमालफलै र्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः सर्षपतैललवणप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते। अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाष यवगोधूमचूर्णैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत्। सालसर्ज्जार्ज्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्। शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत् क्षारेणाग्निना वा दहेद्यथोक्तव्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत्। काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्। एणहरिणोरभ्रशशमहिषवराहाणां वा

रुधिरं चीरयूषरसैः सुस्निग्धैश्चाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत्।

भवन्ति चात्र। धातुक्षयात्स्रुते रक्ते मन्दः सञ्जायतेऽनलः।
पवनश्च परं कोपं याति तस्मात्प्रयत्नतः।
तन्नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः।
ईषदम्लैरनम्लैर्व्वा भोजनैः समुपाचरेत्॥
चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम्।
सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा॥
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम्।
तथा सम्पाचयेद्भस्म दाहः सङ्कोचयेत् सिराः॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत्।
सन्धाने भ्रश्यमाने तु पाचनैः समुपाचरेत्।
कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि।
असिद्धिमत्सु चैतेषु दाहः परम इष्यते॥
सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते।
सावशेषे ततः स्थेयं नतु कुर्य्यादतिक्रमम्॥
देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते।
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः॥
स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले।
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत्॥

## पञ्चदशोऽध्यायः।

अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः। दोषधातुमलमूलं हि शरीरं तस्मादेतेषां लक्षणमुच्यमानमुपधारय। तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति। रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा प्रविभक्तमग्निकर्मणानुग्रहं करोति। सन्धिसंश्लेषणस्नेहन रोपणपूरणबलस्थैर्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्मणानुग्रहं करोति। रसः प्रीणयति रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्ज्ञः पुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थञ्च। पुरीषमुपस्तम्भं वाय्वग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत्। रक्तलक्षणमार्त्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयो रापीनत्वजननं जीवनञ्चेति। तेषां विधिवत्परिरक्षणं कुर्व्वीत।

अतऊर्द्धमेषां क्षीणलक्षणं वक्ष्यामः। क्षयः पुनरेषामतिसंशोधनातिसंशमनवेग विधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति। तत्र वातक्षये मन्दचेष्टताल्पवाक्त्वमल्पहर्षो मूढसंज्ञता च। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च। श्लेष्मक्षये रूक्षतान्तर्दाह आमाशयेतराशय-

शिरसां शून्यता सन्धिशैथिल्यं तृष्णा दौर्ब्बल्यं प्रजागरणञ्च। तत्र स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः॥

रसक्षये हृत्पीड़ा कम्पः शून्यता तृष्णा च। शोणितक्षये त्वक्-पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यञ्च। मांसक्षये स्फिग्-गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यञ्च। मेदःक्षये प्लीहाभि-वृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांस प्रार्थना च। अस्थिक्षये-ऽस्थितोदो दन्तनखभङ्गो रौक्ष्यञ्च। मज्जक्षयेऽल्पशुक्रता पर्व्व-भेदोऽस्थिनिस्तोदोऽस्थिशून्यता च। शुक्रक्षये मेढ्रवृषणवेद-नाऽशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनञ्च तत्रापि स्वयोनिवर्द्धनद्रव्योपयोगः प्रतीकारः॥ पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्द्ध्वगमनं कुक्षौसञ्च-रणञ्च। मूत्रक्षये वस्तितोदोऽल्पमूत्रता च। अत्रापि स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः॥ स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेद नाशश्च तत्राभ्यङ्गः स्वेदोपयो-गश्च॥ आर्त्तवक्षये यथोचित कालादर्शन मल्पता वा योनिवेदनाच तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां विधि-वदुपयोगः। स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा तत्र श्लेष्मवर्द्धनद्रव्योपयोगः॥ गर्भक्षये गर्भास्पन्दनमनुन्न-तकुक्षि ताच तत्र प्राप्तवस्तिकालायाः क्षीरवस्तिप्रयोगो मेध्यान्नोपयोगश्चेति।

अत ऊर्द्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं व-क्ष्यामः॥ वृद्धिः पुनरेषां स्वयोनिवर्द्धनाभ्युपसेवनाद्भवति।

तत्र वातवृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरण-मुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वञ्च। पित्तवृद्धौ पीतावभासता-सन्तापः शीत-कामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्ब्बल्यं पीतविण्मूत्र-नेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्य्यं गौरवमवसादस्तन्द्रा-निद्रा सन्ध्यस्थिविश्लेषश्च। रसोऽतिवृद्धो हृदयोत्क्लेदं-प्रसेकञ्चापादयति। रक्तं रक्ताङ्गाक्षितां सिरापूर्णत्वञ्च। मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रताञ्च। मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यञ्च। अस्थि अध्यस्थीन्यधिदन्तांश्च। मज्जा सर्व्वाङ्गनेत्रगौरवम्। शुक्रं शुक्राश्मरीमतिप्रादुर्भावञ्च॥ पुरीषमाटोपं कुक्षौ शूलञ्च। मूत्रं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानञ्च। स्वेदस्त्वचो दौर्गन्ध्यं कण्डूञ्च। आर्त्तवमङ्गमर्दमतिप्रवृत्तिं दौर्ब्ब-ल्यञ्च। स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदञ्च। गर्भो जठराभिवृद्धिं शोथञ्च॥ तेषां यथास्वं संशोधनं क्षप-णञ्च यथादविरुद्धैः क्रियाविशेषैः प्रतिकुर्व्वीत॥

पूर्व्वः पूर्व्वोऽतिवृद्धत्वाद्वर्द्धयेद्धि परं परम्।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्॥

बललक्षणं बलक्षयलक्षणमत ऊर्द्ध्वं वक्ष्यामः। तत्र रसा-दीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत्खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात्। तत्र बलेन स्थिरोपचि-तमांसता सर्व्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति।

भवन्ति चात्र,—ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं रसम्।
विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्॥
देहस्यावयवस्तेन व्याप्तो भवति देहिनाम्।
तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्॥
अभिघातात्क्षयात्कोपाच्छोकाद्ध्यानात् श्रमात्क्षुधः।
ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्।
तेजः समीरितं तस्माद्विस्रंसयति देहिनः॥

तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति। सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोध श्च विस्रंसे। स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने। मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये।

भवन्ति चात्र। त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः।
विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः।
अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम्॥
गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्वर्णस्य भेदनम्।
तन्द्रा निद्रा वातशोफो बलव्यापद्विलक्षणम्॥
मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च।
पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये॥

तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्यायेत्। नष्टसंज्ञमितरञ्च वर्जयेत्।

तेजोम्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वर्त्तमन्तरस्य स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति, तेन

मार्दवसौकुमार्य्यमृदुत्वरोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति; तत् कषायतिक्तशीतरूक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते । तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति । कार्श्यं मन्दाग्नितरधस्तिर्य्यक्च्युतिर्व्यापत्तौ हृद्यग्निबलहान्यनिलप्रकोपमरणानि क्षये, तत्रापि स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षये, विदधीत ।

भवन्ति चात्र । दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ।

स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥
यद्यदाहारजातं हि क्षीणः प्रार्थयते नरः ।
तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥
यस्य धातुक्षयाद्वायुः संज्ञां कर्म्मच नाशयेत् ।
प्रक्षीणञ्च बलं यस्य नासौ शक्यश्चिकित्सितुम् ॥

रसनिमित्तमेव स्थौल्यं कार्श्यञ्च तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्यचाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्य क्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति सौकुमार्य्यान्मेदसः सर्वक्रियास्वसमर्थः कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवत्यावृतमार्गत्वादेवं शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति प्रमेहपिड़काज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति सर्व्व एव चास्य रोगा बलवन्तो भवन्त्यावृतमा-

गत्वात् स्रोतसामतस्तस्योत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जन मधुयवमुद्गकोरदूषकश्यामाकोद्दालकादीनां विरूक्षण च्छेदनीयानाञ्च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनवस्त्युपयोग श्चेति। तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन्नल्पत्वान्न प्रीणयति तस्मादतिकार्श्यञ्च भवति। सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेष्वसहिष्णुः वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतमं प्राप्य मरणमुपयाति सर्व एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वादतस्तस्योत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु पयस्याश्वगन्धाविदारीविदारीगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासाञ्चौषधीनामुपयोगः क्षीरदधिघृतमांसशालिषष्टिकयवगोधूमानाञ्च दिवास्वप्नब्रह्मचर्याव्यायामबृंहणवस्त्युपयोगश्चेति। यः पुनरुभयसाधारणान्युपसेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति समधातुत्वान्मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवांश्च स सततमनुपालयितव्य इति।

भवन्ति चात्र। अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ।
श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः॥
दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा।

हृत्रः स्वतेजसा वह्निरुखागतमिवोदकम् ॥
वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च ।
दोषधातुमलानान्तु परिमाणं न विद्यते ॥
एषां समत्वं यच्चापि भिषग्भिरवधार्य्यते ।
न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना ॥
दोषादीनांत्वसमतामनुमानेन लक्षयेत् ।
अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ।
समदोषः समाग्निश्च समधातुमलक्रियः ॥
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ।
स्वस्थस्य रक्षणं कुर्य्यादस्वस्थस्य तु बुद्धिमान् ॥
क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक् ।
तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥

---

## षोडशोऽध्यायः ।

अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः ।
रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेन ऋजु विध्येत् प्रतनुकं सूच्या बहलमारया पूर्वं दक्षिणं कुमारस्य वामं कन्यायास्ततः पिचुवर्त्तिं प्रवेशयेत् सम्यक् विद्धमामतैलेन परिषेचयेत् । शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति

जानीयान्निरुपद्रवतया तद्दिप्रविद्धमिति। तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्म्मरिकालोहितिकासूपद्रवा भवन्ति। तत्र कालिकायां ज्वरो दाहः श्वयथुर्वेदनाच भवति। मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च। लोहितिकायां मन्यास्तम्भा पतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्व्वीत। क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्त्तित्वाद्दोषप्रकोपाद्प्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्त्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्म्मधुघृतप्रगाढैरालेपयेत्तावद्यावत्सुरूढ इति सुरूढं चैनं पुनर्व्विध्येत् विधानन्तु पूर्व्वोक्तमेव। त्र्यहात्त्र्यहाच्च वर्त्तिञ्च स्थूलतरां दद्यात्परिषेकं तमेव। अथ व्यपगत दोषोपद्रवे कर्णे वर्द्धनार्थं लघुवर्द्धनकं कुर्य्यात्॥

भवति चात्र॥ एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्।
दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु॥
तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः॥

तद्यथा-नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्व्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णः यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्व वृत्तसमोभयपालिर्व्वल्लूरकः अभ्यन्तरदीर्घैकपालिरासङ्गिमः। वाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः। स्थूलाणुसमविषमपा-

लिर्व्यायोजिमः । अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः । बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः । तत्र दशैति कर्णबन्धविकल्पाः साध्यास्तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः । संक्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः । अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः । तनुविषमाल्पपालिर्वल्लीकर्णः । ग्रथितमांसस्तब्धसिराततः । सूक्ष्मपालिर्यष्टीकर्णः । निर्म्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति । बन्धेष्वपि तु शोफदाहरागपाकपिड़कास्रावयुक्ता न सिद्धिमुपयान्ति ॥

भवन्ति चात्र॥ यस्य पालिद्वयमपि कर्णस्य न भवेदिह।
कर्णपीठं समे मध्ये तस्य विद्धा विवर्द्धयेत् ॥
बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत्
आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः ॥
एकैवतु भवेत्पालिः स्थूला पृथ्वी स्थिरा च या ।
तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् ॥
गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता ।
कर्णपालीमपालेस्तु कुर्य्यान्निर्लिख्य शास्त्रवित् ॥

अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसम्भारं विशेषतश्चात्रोपहरेत् सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति । ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघुभुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नमुपपाद्यकर्णं शोणितमवेक्षेत तद्

ष्मदुष्टं चेति। तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात्। ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेद्द्विव्रणीयोक्तेन च विधानेनोपचरेत्।

भवतश्चात्र। त्रिघट्टनं दिवास्वप्नं व्यायाममतिभोजनम्।

व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्ज्जयेत्॥

आमतैलपरीषेकं त्रिरात्रमवचारयेत्।

ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम्॥

नचासंशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा सन्दध्यात्। स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्। पित्तदुष्टे दाहपाकरागवेदनावान्। श्लेष्मदुष्टे स्तब्धः कण्डूमान्। अतिप्रवृत्तरक्ते श्यावशोफवान्। क्षीणेऽल्पमांसो न वृद्धिमुपैति। स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैःशनैरभिवर्द्धयेत्। अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा॥ अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः। तद्यथा-गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौरसर्षपजञ्च यथालाभं सम्भृत्यार्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गप्रतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात्।

स्वेदितोन्मर्दितं कर्णं स्नेहेनानेन योजयेत्।

अथानुपद्रवः सम्यक् बलवांश्च विवर्द्धते ॥
यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् ।
शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः ॥
तैलं विपक्वं सक्षीरमभ्यङ्गात्पालिवर्द्धनम् ।
ये तु कर्णा न वर्द्धन्ते स्विन्नाः स्नेहेन योजिताः ॥
तेषामपाङ्गदेशेषु कुर्य्यात् प्रच्छानमेव तु ।
बाह्यच्छेदं न कुर्व्वीत व्यापदस्तु ततो ध्रुवाः ॥
बद्धमात्रन्तु यः कर्णं सहसैवाभिवर्द्धयेत् ।
आमकोशी समाध्मातः क्षिप्रमेव विमुच्यते ॥
जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः ।
सुरूढोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः ॥
अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह ।
यो यथा सुनिविष्टः स्यात्तं तथा विनियोजयेत् ॥
कर्णपाल्यामयान्नॄणां पुनर्व्वक्ष्यामि सुश्रुतः ।
कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः ॥
द्विधा वाप्यथ संसृष्टाः कुर्व्वन्ति विविधा रुजः ।
विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके ॥
दाहविस्फोटजननं शोफः पाकश्च पैत्तिके ।
कण्डूः सश्वयथुस्तम्भो गुरुत्वञ्च कफात्मके ॥
यथादोषञ्च संशोध्य कुर्य्यात्तेषां चिकित्सितम् ।
स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥
मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ।
य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति ॥

अत ऊर्द्धं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ।
उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥
अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ।
स्रावी च दाहवांश्चैव शृणुत्वेषां क्रमशः क्रियाम् ॥
अपामार्गः सर्जरसः पाटलालकुचत्वचौ ।
उत्पाटके प्रलेपः स्यात्तैलमेभिश्च पाचयेत् ॥
शम्याकशिग्रुपूतीकगोधामेदोऽथ तद्रसा ।
वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥
लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम् ।
गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम् ॥
श्यावे प्रलेपनं दद्यात्तैलमेभिश्च साधितम् ।
पाठां रसाञ्जनं क्षौद्रं तथा स्यादुष्णकाञ्जिकम् ॥
दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ।
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥
मधुकं क्षीरकाकोलि जीवकाद्यैर्विपाचितम् ।
गोधावराहसर्पाणां वसाः स्युः क्षतवृंहणि ॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ।
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥
तैलमेभिश्च सम्पक्वं शृणु कण्डूमतः क्रियाम् ।
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ॥
एतैरालेपनं दद्यात्तैलमेभिश्च साधितम् ॥
ग्रन्थिके गुटिकां पूर्वं स्रावयेदवपाट्य तु ।
ततः सैन्धवचूर्णन्तु घृष्ट्वा लेपं प्रदापयेत् ॥

लिखित्वा तत् स्रुतं दृष्ट्वा चूर्णैरोभिस्य जम्बुले ।
चौरेण प्रतिसार्य्यैनं शुद्धं संरोपयेत्ततः ॥
मधुपर्णी मधुकञ्च मधुकं मधुना सह ।
लेपः स्नाविणि दातव्यस्तैलमेभिश्च साधितम् ॥
पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ।
जीवकाद्यैः ससर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥

विश्लिष्टितायास्त्वथ नासिकाया वक्ष्यामि सन्धानविधिं यथावत् ।
नासाप्रमाणं पृथिवीरुहाणां पत्रं गृहीत्वा त्ववलम्बितस्य ॥
तेन प्रमाणेन हि गण्डपार्श्वादुत्कृत्य बद्धं त्वथ नासिकाग्रम् ।
विलिख्य चाशु प्रतिसन्दधीत तत्साधुबन्धैर्भिषगप्रमत्तः ॥
सुसंहितं सम्यगतो यथावन्नाडीद्वयेनाभिसमीक्ष्य बद्धा ।
प्रोन्नम्य चैनामवचूर्णयेच्च पत्तङ्गयष्टीमधुकाञ्जनैश्च ॥
संछाद्य सम्यक् पिचुना सितेन तैलेन सिञ्चेदसकृत्तिलानाम्
घृतञ्च पाय्यः स नरः सुजीर्णे स्निग्धो विरेच्यः स यथोपदेशम् ॥
रूढञ्च सन्धानमुपागतं स्यात्तदर्द्धशेषन्तु पुनर्निकृन्तेत् ।
हीनां पुनर्व्वर्द्धयितुं यतेत समाञ्च कुर्य्यादतिवृद्धमांसाम् ॥
नाडीयोगं विनौष्ठस्य नासासन्धानवद्विधिम् ।
य एवमेवं जानीयात् स राज्ञः कर्त्तुमर्हति ॥

---

## सप्तदशोऽध्यायः ।

अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः ॥
शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयो-

भिधास्यन्ते ऽनेकाकृतयस्तैर्विलक्षणः पृथुर्ग्रथितसमो विषमो वा त्वङ्मांसस्थायी दोषसङ्घातः शरीरैकदेशोत्थितः शोफ इत्युच्यते। स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः।

तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र वातशोफोऽरुणः कृष्णोवा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति। पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी चोषादयश्चात्र वेदनाविशेषा भवन्ति। श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्ववर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च।

स यदा वाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्ययाद्बहुत्वाद्वा दोषाणां तदा पाकाभिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय। तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताल्पशोफता चामलक्षणमुद्दिष्टम्। सूचिभिरिव निस्तुद्यते दंश्यत इव पिपीलिकाभिस्ताभिश्च संसृप्यत इव छिद्यत इव शस्त्रेण भिद्यत इव शक्तिभिस्ताड्यत इव दण्डेन पीड्यत इव पाणिना घट्टयत इव चाङ्गुल्या दह्यत पच्यत इव चाग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभि-

हिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्यमानलिङ्गम् ॥ वेदनो-
पशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं
निम्नदर्शनमङ्गुल्यावपीड़िते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं
पूयस्य प्रपीडयत्येकमन्तमन्ते वावपीडिते मुहुर्मुहुस्तोदः
कण्डूरनुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्व-
लिङ्गम् ॥ कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा
केषुचित्समस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो
भिषमोहमुपैति यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्य-
मल्परुजताश्मवद्घनता न तत्र मोहमुपेयादिति ॥
भवन्ति चात्र। आमं विपच्यमानञ्च सम्यक् पक्वञ्च यो भिषक् ।
जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥
वाताहृते नास्ति रुजा न पाकः पित्ताहृते नास्ति कफाच्च पूयः ।
तस्मात्समस्तः परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः ॥
कालान्तरेणाभ्युदितन्तु पित्तं कृत्वा वशे वातकफौ प्रसह्य ।
पचत्यतः शोणितमेव पाको मतोऽपरेषां विदुषां द्वितीयः ॥

तत्रामच्छेदे मांसशिरास्नायुस्थिसन्धिव्यापादनमति-
मात्रं शोणितातिप्रवृत्ति र्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्र-
वदर्शनं क्षतविद्रधिर्वा भवति । स यदा भयमो-
हाभ्यां पक्वमप्यपक्वमिति मन्यमान श्चिरमुपेक्षते
व्याधिं वैद्यस्तदागम्भीरानुगतो द्वारमलभमानः पूयः
स्वमाश्रयमवदीर्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाडीं जन-
यित्वा कृच्छ्रसाध्यो ऽसाध्यो वेति ।
भवन्तिचात्र । यश्छिनत्त्याममज्ञानाद्यश्च पक्वमपेक्षते ।

अपचाविव मन्त्रिणौ तावनिश्चितकारिणौ ॥
प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदातुरं भिषक्।
मद्यपं पाययेन्मद्यं तीक्ष्णं योऽवेदनासहः ॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते।
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्म्मणि ॥
प्राणो ह्याभ्यन्तरो नॄणां वाह्यप्राणगुणान्वितः।
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥

अल्पो महान्वा क्रियया विना यः समुच्छ्रितः पाकमुपैति शोफः।
विशालमूलो विषमो विदग्धः स कृच्छ्रतां यात्यवगाढदोषः ॥
आलेपविस्रावणशोधनैश्च सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्।
पच्येत शीघ्रं सममल्पमूलः स पिण्डितश्चोपरि चोन्नतः स्यात् ॥
कक्षं समासाद्य यथैव वह्निर्व्वायूरितः सन्दहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि मांसं शिरास्नायु च खादतीह ॥

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥

---

## अष्टादशोऽध्यायः।

अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः।

आलेप आद्य उपक्रम एष सर्व्वशोफानां सामान्यः प्रधानतमश्च तञ्च प्रतिरोगं वक्ष्यामः। ततो बन्धः प्रधानं

तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्य्यञ्च तत्र प्रतिलोममालि-
म्पेत् नानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठतेऽनुप्रवि-
शति रोमकूपान् स्वेदवाहिभिः सिरामुखैश्च वीर्य्यं प्राप्नोति।
न च शुष्यमाणमुपेक्षेतान्यत्र पीडयितव्यात्। शुष्को ह्यपा-
र्थकोऽरुक्करश्च। स त्रिविधः प्रलेपः प्रदेह आलेपश्च तेषा-
मन्तरं प्रलेपः शीतस्तनुरविशोषी विशोषी च। प्रदेहस्तूष्णः-
शीतो वा बहलोऽबहुरविशोषी च। मध्यमोऽत्रालेपः। तत्र र-
क्तपित्तप्रसादकृदालेपः। प्रदेहो वातश्लेष्मप्रशमनः सन्धानः
शोधनो रोपणः शोफवेदनापहश्च तस्योपयोगः क्षताक्षतेषु।
यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते
निरुद्धालेपनसंज्ञस्तेनास्रावसंनिरोधो मृदुता पूतिमांसा-
पकर्षणमन्तर्निर्दोषता व्रणशुद्धिश्च भवति॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत्।
यथास्वं दोषशमनं दाहकण्डूरुजापहम्॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम्।
दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम्॥
मर्म्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम्।
संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक्॥
षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके।
अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत्॥

तस्य प्रमाणमार्द्रमाहिषचर्म्मोत्सेधमुपदिशन्ति। नचा-
लेपं रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्वि-
कारप्रवृत्तिरिति।

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा।
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत्।
उपर्य्युपरि लेपन्तु न कदाचित् प्रदापयेत्॥
उष्माणं वेदनां दाहं घनत्वाज्जनयेत्स हि।
न च तेनैव लेपेन प्रदेहं दापयेत्पुनः।
शुष्कभावात्स निर्वीर्य्यो युक्तोऽपि स्यादपार्थकः॥

अत ऊर्द्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः। तद्यथा क्षौम-कार्प्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्म्मान्तर्वल्कलाला-बूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति तेषां व्याधिं कालं चावेक्ष्योपयोगः प्रकरणतश्चैषामादेशः॥

तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिका-यमकखट्टाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्द्दशबन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र कोशमङ्गुष्ठाङ्गुलि पर्व्वसु विदध्यात्। दाम सम्बाधेऽङ्गे। सन्धिकूर्च्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्। अनुवेल्लितन्तु शाखासु। ग्रीवामेढ्रयोः प्रतोलीम्। वृत्तेऽङ्गे मण्डलम्। अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम्। यमलव्रणयोर्यमकम्। हनु शङ्खगण्डेषु खट्वाम्। अपाङ्गयोश्चीनम् पृष्ठोदरोरःसु विबन्धम्। मूर्द्धनि वितानम्। चिवुकनासौष्ठांसवस्तिषु गोफणाम्। जत्रुण ऊर्द्ध्वं पञ्चाङ्गीमिति। यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात्। यन्त्रणमतऊर्द्ध्वमधस्तिर्य्यक् च॥

तत्र घनांकवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसङ्कुचितं मृदुपट्टं निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्य्याद्ग्रन्थिमाबाधकरं वा। न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्व्वीत यस्मादतिस्नेहात् क्लेदो रौक्ष्याच्छेदो दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति।

तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति गाढ़ः समः शिथिल इति।

पीड़यन्नरुजो गाढ़ः सोच्छासः शिथिलः स्मृतः।
नैव गाढ़ो न शिथिलः समो बन्धः प्रकीर्त्तितः॥

तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरःशिरःसु गाढ़ः। शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरस्सु समः। अक्ष्णोः सन्धिषु च शिथिल इति। तत्र पैत्तिकं गाढ़स्थाने समं बध्नीयात् समस्थाने शिथिलं शिथिलस्थाने नैवं शोणितदुष्टञ्च। श्लैष्मिकं शिथिलस्थाने समं समस्थाने गाढं गाढ़स्थाने गाढ़तरमेवं वातदुष्टञ्च। तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयाद्रक्तोपद्रुतमप्येवं श्लैष्मिकं हेमन्तवसन्तयोस्त्र्यहाद्वातोपद्रुतमप्येवम्। एवमभ्यूह्य बन्धविपर्य्ययञ्च कुर्व्वीत। तत्र समशिथिलस्थानेषु गाढ़बद्धे विकेशिकौषधनैरर्थक्यं शोफ वेदनाप्रादुर्भावश्च। गाढ़समस्थानेषु शिथिलबद्धे विकेशिकौषधपतनं पट्टसञ्चाराद्व्रणवर्त्मावघर्षणमिति। गाढ़शिथिलस्थानेषु समं बद्धे च गुणाभाव इति। अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवञ्च। अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातप प्रभृतिभिर्व्विशेषैरभि-

च्चलते व्रणी विविधवेदनोपद्रुतस्य दुष्टतामुपैत्यालेपनादीनि चास्य विशोषमुपयान्ति।

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम्।
अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति।
सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः॥

अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ता यदा च शोफदाहपाक रागवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुपिताः प्रविशीर्णमांसाश्च भवन्ति।

कुष्ठिनामग्निदग्धानां पिडका मधुमेहिनाम्।
कर्णिकाश्चोन्दुरुविषे विषजुष्टव्रणाश्च ये॥
मांसपाके न बध्यन्ते गुदपाके च दारुणे।
स्वबुद्ध्या चापि विभजेत् कृत्याकृत्यांश्च बुद्धिमान्॥
देशं दोषञ्च विज्ञाय व्रणञ्च व्रणकोविदः।
ऋतूंश्च परिसंख्याय ततो बन्धान् निवेशयेत्॥
ऊर्द्धं तिर्य्यगधस्ताच्च यन्त्रणा त्रिविधा मता।
यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः॥
घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम्।
विकेशिकामौषधञ्च नातिस्निग्धं समाचरेत्॥
प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च।
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति॥
विषमञ्च व्रणं कुर्य्यात् स्तम्भयेत्स्रावयेत्तथा।
यथाव्रणं विदित्वा तु योग वैद्यः प्रयोजयेत्॥

पित्तजे रक्तजे वापि सक्तदेव परिक्षिपेत् ।
असक्कफजे वापि वातजे च विचक्षणः ॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ।
सर्व्वांश्च बन्धान् गूढांस्तान् सन्धींश्च विनिवेशयेत् ॥
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ।
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥
उत्तिष्ठतो निषसस्य शयनं चापि गच्छतः ।
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥
ये च स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ।
सन्ध्यस्थिकोष्ठप्राप्तांश्च सिरास्नायुगतास्तथा ॥
तथावगाढ़गम्भीराः सर्व्वतो विषमस्थिताः ।
नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि ॥

---

## एकोनविंशोऽध्यायः ।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः ।

व्रणिनः प्रथममेवागारमन्विच्छेत्तच्चागारं प्रशस्तवास्त्वादिक कार्य्यम् ।

प्रशस्तवास्तुनि गृहे शुचावातपवर्ज्जिते ।
निवाते नच रोगाः स्युः शारीरागन्तुमानसाः ॥

तस्मिन् शयनमसम्बाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं कुर्व्वीत ।

सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयेन व्रणी ।
प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं नतं शिरः ॥

तस्मिन् सुहृद्भिरनुकूलैः प्रियम्वदैरुपास्यमानो यथेष्टमासीत ।

सुहृदो विचित्रपल्याशु कथाभिर्व्रणवेदनाः ।
आश्वासयन्तो बहुशस्त्वनुकूलाः प्रियम्वदाः ॥

नच दिवा निद्रावशगः स्यात् ।

दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ।
श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥

उत्थानसंवेशनपरिवर्त्तनचंक्रमणोच्चैर्भाषणादिषु चास्य चेष्टास्वप्रमत्तो व्रणं संरक्षेत्

स्थानासनं चंक्रमणं यानयानातिभाषणम् ।
व्रणवान्न निषेवेत शक्तिमानपि मानवः ॥
उत्थानायासनं स्थानं शय्यां चातिनिषेविता ।
प्राप्नुयान्मारुतादङ्गे रुजस्तस्माद्विवर्ज्जयेत् ॥

गम्यानाञ्च स्त्रीणां सन्दर्शनसम्भाषणसंस्पर्शनानि दूरतः परिहरेत् ।

स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ।
ग्राम्यधर्म्मकृतान् दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् ॥

नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ल-लवण कटुकगुड़पिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत् ।

तक्रान्तो नवधान्यादिर्योऽयं वर्गः प्रकीर्त्तितः ।
दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः ॥

मद्यपश्च मैरेयाऽरिष्टासवसीधुसुराविकारान् परिहरेत्।

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णञ्च वीर्य्यतः।
आशुकारि च तत्पीतं क्षिप्रं व्यापादयेद्व्रणम्॥

वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टश्रवणदर्शनेर्ष्यामर्षभयक्रोधशोकध्यानरात्रिजागरणविषमाशनानशनशयनोपवास वाग्व्यायामस्थानचंक्रमणशीतवातविरुद्धाशनाजीर्ण मक्षिकाद्याबाधाः परिहरेत्।

व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः।
क्षीणशोणितमांसस्य भुक्तं सम्यक् न जीर्य्यति॥
अजीर्णात्पवनादीनां विभ्रमो बलवान् भवेत्।
ततः शोफरुजास्रावदाहपाकानवाप्नुयात्॥

सदा नीचनखरोम्णा शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति। तत् कस्य हेतोर्हिंसाविहाराणि हि महावीर्य्याणि रक्षांसि पशुपतिकुवेरकुमारानुचराणि मांस शोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति सत्कारार्थं जिघांसूनि वा कदाचित्॥

भवतिचात्र॥ तेषां सत्कारकामानां प्रयतेतान्तरात्मना।
धूपवल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत्॥

ते तु सन्तर्पिता आत्मवन्तं न हिंस्युः। तस्मात्सततमतन्द्रितोजनपरिवृतो नित्यदीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृतेवेश्मनि सम्यङ्मङ्गलमनोनुकूलाः कथाः शृण्वन्नासीत॥

सम्पादाद्यनुकूलाभिः कथाभिः प्रीतमानसः।

आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् ॥

ऋग्यजुःसामाथर्व्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्यायाभिषजश्च सन्ध्ययो रक्षां कुर्य्युः ॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ।
द्विरह्नः कारयेद्धूपं दशरात्रमतन्द्रितः ॥

छत्रातिच्छत्रे लाङ्गलीं जटिलां ब्रह्मचारिणीं लक्ष्मीं गुहामतिगुहां शतवीर्य्यां सहस्रवीर्य्यां सिद्धार्थांश्च शिरसा धारयेत् ॥

व्यजेत बालव्यजनैर्व्रणं न च विघट्टयेत् ।
न तुदेन्नच कण्डयेच्छयानः परिपालयेत् ॥
अनेन विधिना युक्तमादावेव निशाचराः ।
वनं केसरिणाक्रान्तं वर्ज्जयन्ति मृगा इव ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥
तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ।
बालमूलकवार्त्ताकपटोलैः कारवेल्लकैः ॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ।
अन्यैरेवं गुणैर्व्वापि मुद्गादीनां रसेन वा ॥
शक्तून् विलेपीं कुल्माषं जलञ्चापि शृतं पिवेत् ।
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥
तौ च रुक्च दिवास्वापात् ताश्च मृत्युश्च मैथुनात्
दिवा न निद्रावशगो निवातस्थगोचरः ।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥

एवं वृत्तसमाचारो व्रणी सम्पद्यते सुखी ।
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥

---

## विंशतितमोऽध्यायः ।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः ॥

यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद्द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्य्या ब्रुवते तत्तु न सम्यक् । इह खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति । तत्रैकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि । एकान्ताहितानि दहनपचनमारणादिषु प्रवृत्तान्यग्निक्षारविषादीनि । संयोगादपराणि विषतुल्यानि भवन्ति। हिताऽहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यतः सर्वप्राणिनामग्र्यमाहारार्थं वर्ग उपदिश्यते ।

तद्यथा रक्तशालिषष्टिकगङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदक कालकाशनकपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः । एणहरिणकुरङ्गमृगमातृका श्वदंष्ट्राकरालक्रकरकपोतलावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकादीनां मांसानि । मुद्गवनमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेणवा ढकीसतीनाः । चिल्लिवास्तुक सुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः । गव्यं घृतं सैन्धवदाडिमामलकमित्येषवर्गः सर्वप्राणिनां सामा-

न्यतः पथ्यतमः। तथा ब्रह्मचर्य्यानिवातशयनोष्णोदकनिशा स्वप्नव्यायामा श्चैकान्ततः पथ्यतमाः । एकान्तहितान्येकान्ता- हितानि प्रागुपदिष्टानि । हिताहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमिति ।

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति । तद्यथा । वल्ली फलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहि- पिष्टशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिममत्स्यगोधा- वराहांश्च नैकध्यमश्नीयात् पयसा ।

रोगं सात्म्यञ्च देशञ्च कालं देहञ्च बुद्धिमान् ।
अवेक्ष्याग्न्यादिकान्भावान् रोगवृत्तेः प्रयोजयेत् ॥
अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम् ।
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥
द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः ।
दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम् ॥
एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ।
एकान्तहिततां विद्धि वत्स सुश्रुत । नान्यथा ॥
अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः ॥

न च विरूढ़धान्यैर्वसामधुपयोगुड़माषैर्वा ग्राम्यानूपौ- दकपिशितादीनि नाभ्यवहरेत् । न पयोमधुभ्यां रोहिणी- शाकं जातुशाकं वाश्नीयात् । बलाकां वारुणीकुल्माषा- भ्याम् । काकमाचीं पिप्पलीमरिचाभ्याम् । नाड़ीभङ्गशाक कुक्कुटदधीनि च नैकध्यम् । मधुचोष्णोदकानुपानम् । पित्तेन च मांसानि । सुराकृशरापयसांश्च नैकध्यम् । सौवीरकेण

सह तिलशष्कुलीम्। मत्स्यैः सहेक्षुविकारान्। गुडेन काक-
माचीं मधुना मूलकं गुडेन वाराहं मधुना च सह विरु-
द्धम्। क्षीरेण मूलकम्। आम्रजाम्बवश्वाविच्छूकरगोधाश्च
सर्वांश्च मत्स्यान्विशेषेण चिलिचिमं पयसा। कदलीफलं
तालफलेन पयसा दध्ना तक्रेण वा। लकुचफलं पयसा दध्ना
माषसूपेन वा मधुना घृतेन च। प्राक् पयसः पयसोऽन्ते वा।

अतः कर्मविरुद्धान् वक्ष्यामः। कपोतान् सर्षपतैलभृ-
ष्टान्नाद्यात्। कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व-
ग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्। कांस्यभाजने दश-
रात्रपर्युषितं सर्पिर्मधु चोष्णैरुष्णे वा। मत्स्यपरिपचने शृङ्ग-
वेरपरिपचने वा सिद्धां काकमाचीम्। तिलकल्कसिद्धमुपो-
दिकाशाकम्। नारिकेलेन वराहवसापरिभृष्टां बलाकाम्।
भासमङ्गारशूल्यं नाश्नीयादिति॥

अतो मानविरुद्धान् वक्ष्यामः॥ मध्वम्बुनी मधुसर्पिषी
मानतस्तुल्ये नाश्नीयात्। स्नेहौ मधुस्नेहौ जलस्नेहौ वा
विशेषादान्तरीक्षोदकानुपानौ।

अत ऊर्द्धं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि
वक्ष्यामः॥ तत्र मधुराम्लौ रसवीर्य्याभ्यां विरुद्धौ मधुरलवणौ च म-
धुरकटुकौ च सर्व्वतः। मधुरतिक्तौ रसविपाकाभ्यां मधुरक-
षायौ चाम्ललवणौ रसतः। अम्लकटुकौ रसविपाकाभ्यामम्ल-
तिक्तावम्लकषायौ च सर्व्वतः। लवणकटुकौ रसविपाकाभ्यां
लवणतिक्तौ लवणकषायौ च सर्व्वतः। कटुतिक्तौ रसवी-
र्य्याभ्यां कटुकषायौ तिक्तकषायौ च रसतः। तदामयोगयु-

तांश्च भावानतिरुक्षानतिस्निग्धानत्युष्णानतिशीतानित्येव-
मादीन् विवर्जयेत् ॥

भवन्ति चात्र ॥ विरुद्धान्येवमादीनि रसवीर्य्यविपाकतः ।
तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम् ॥
व्याधिमिन्द्रियदौर्ब्बल्यं मरणञ्चाधि गच्छति ।
विरुद्धरसवीर्य्यादीन् भुञ्जानोऽनात्मवान्नरः ॥
यत्किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ।
रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥
विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।
वमनं शमनं वापि पूर्व्वं वाहितसेवनम् ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ।
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥
व्यायामशीलो बलवान् शिशुश्च स्निग्धोऽग्निमांश्चापि महाशनश्च ।
आप्नोति रोगान्न विरुद्धजातानभ्यासतो वाल्पतया च जन्तुः ॥

अथ वातगुणान् वक्ष्यामः ॥

पूर्व्वः समधुरः स्निग्धो लवणश्चैव मारुतः ।
गुरुर्व्विदाहजननो रक्तपित्ताभिवर्द्धनः ॥
क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये ।
तेषामेव विशेषेण सदा रोगविवर्द्धनः ॥
वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् ।
तेषामेव विशेषेण व्रणक्लेदविवर्द्धनः ॥
मधुरश्चाविदाही च कषायानुरसो लघुः ।
दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्द्धनः ।

रक्तपित्तप्रशमनो न च वातप्रकोपण: ॥
विशदो रूक्षपरुष: खर: स्नेहबलापह: ।
पश्चिमो मारुतस्तीक्ष्ण: कफमेदोविशोषण: ।
सद्य: प्राणक्षयकर: शोषणस्तु शरीरिणाम् ॥
उत्तरो मारुत: स्निग्धो मृदुर्म्मधुर एव च ।
कषायानुरस: शीतो दोषाणामप्रकोपण: ॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्द्धन: ।
क्षीणक्षयविषार्त्तानां विशेषेण तु पूजित: ॥

---

## एकविंशतितमोऽध्याय: ।

अथातो व्रणप्रश्नमध्यायं व्याख्यास्याम: ॥

वातपित्तश्लेष्माण एव देहसम्भवहेतव: । तैरेवाव्यापन्नै-रधोमध्योर्द्ध्वसन्निविष्टै: शरीरमिदं धार्य्यतेऽगारमिव स्थू-णाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्ना: प्रलयहेतवस्तदेभिरेव शोणितचतुर्थै: सम्भवस्थितिप्रलयेष्वप्य-विरहितं शरीरं भवति ॥

भवति चात्र ॥ नर्त्ते देह: कफादस्ति न पित्तान्न च मारुतात् ।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥

तत्र वा गतिगन्धनयोरिति धातु: तप सन्तापे श्लिष आलिङ्गने । एतेषां कृद्विहितै: प्रत्ययैर्वात: पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥

दोषस्थानान्यत ऊर्द्ध्वं वक्ष्याम: ॥ तत्र समासेन वात:

श्रोणिगुदसंश्रयः। श्रोणिगुदयोरुपर्य्यधो नाभेः पक्काशयः पक्कामाशयमध्यं पित्तस्य। आमाशयः श्लेष्मणः। अतःपरं पञ्चधा विभज्यन्ते तत्र वा तस्य वातव्याधौ वक्ष्यामः। पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तञ्च। श्लेष्मणस्तूरः-शिरःकण्ठसन्धय इति पूर्वोक्तञ्च। एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम्।

भवति चात्र॥ विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा॥

अत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निराहोस्वित्पित्तमेवाग्निरिति। अत्रोच्यते। न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते आग्नेयत्वात्पित्ते दहनपचनादिष्वभिवर्त्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति। तच्चादृष्टहेतुकेन विशेषेण पक्कामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति विरेचयति च रसदोषमूत्रपुरीषाणि तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणामनुग्रहं करोति तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा। यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा स रसस्य रागकृदुक्तः। यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः। यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा सरूपग्रहणेऽधिकृतः। यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा सोऽभ्य-

रूपरिषेकावगाहावलेपनादीनां क्रिया द्रव्याणां पक्ता छाया-नाञ्च प्रकाशकः॥

भवति चात्र॥ पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च।
उष्णं कटुरसञ्चैव विदग्धं चाम्लमेव च॥

श्लेष्मस्थानान्यत ऊर्द्ध्वं वक्ष्यामः। तत्रामाशयः पित्ताशयस्योपरिष्टात्तत्प्रत्यनीकत्वादूर्द्ध्वगतित्वात्तेजसश्चन्द्र इवादित्यस्य स चतुर्विधस्याहारस्याधारः। स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरश्च भवति।

माधुर्य्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च।
आमाशये सम्भवति श्लेष्मा मधुरशीतलः॥

स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्म्मणानुग्रहं करोति। उरःस्थस्त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति। जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात्सर्व्वसन्ध्यनुग्रहं करोति।

भवति चात्र। श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च।
मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः॥

शोणितस्य स्थानं यकृत्प्लीहानौ तच्च प्रागभिहितः तत्रस्थमेव शोणितस्थानानामनुग्रहं करोति।

भवति चात्र। अनुष्णशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः।
शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत्॥

एतानि खलु दोषस्थानान्येषु सञ्चीयन्ते दोषाः प्राक्सञ्चयहेतुरुक्तः। तत्र सञ्चितानां दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति तत्र प्रथमः क्रियाकालः।

अत ऊर्द्धं प्रकोपणानि वक्ष्यामः। तत्र बलवद्विग्रहाति व्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीड़नाभिघातलङ्घनप्लवनतरणरात्रिजागरणभारहरणगजतुरङ्गरथपदातिचर्य्याकटुकषायतिक्तरूक्षलघुशीतवीर्य्यशुष्कशाकवल्लूरवरकोद्दालककोरदूषश्यामाकनीवारमुद्गमसूराढ़कीहरेणुकलायनिष्पावानशनविषमाशनाध्यशनवातमूत्रपुरीषशुक्रच्छर्दिक्षवथूद्गारवाष्पवेगविघातादिभिर्विशेषैर्व्वायुः प्रकोपमापद्यते।

स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः।
प्रत्यूषस्यपराह्णे तु जीर्णेऽन्ने च प्रकुप्यति॥

क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदाहितिलतैलपिण्याककुलत्थसर्षपातसीहरितकशाकगोधामत्स्याजाविकमांसदधितक्रकूर्च्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वराकप्रभृतिभिः पित्तं प्रकोपमापद्यते।

तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः।
मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति॥

दिवास्वप्नाव्यायामालसमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषमहामाषगोधूमतिलपिष्टविकृतिदधिदुग्धकृशरापायसेक्षुविकारानूपौदक-

मांसवसाविसमृणालकशेरुकशृङ्गाटकमधुरवल्लीफलसमशना-
ध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ।

स शीतैः शीतकाले च वसन्ते च विशेषतः ।
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिश्चाहारैर्दि-
वास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते ।

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ।
तस्मात्तस्य यथादोषं कालं विद्यात्प्रकोपणे ॥

तेषां प्रकोपात्कोष्ठतोदसञ्चरणाम्लिकापिपासापरिदाहा-
न्नद्वेषहृदयोत्क्लेदाश्च जायन्ते । तत्र द्वितीयः क्रियाकालः ।

अत ऊर्द्ध्वं प्रसरं वक्ष्यामः । तेषामेभिरातङ्कविशेषैः प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति तेषां वायुर्गतिमत्त्वात्प्रसरणहेतुः सत्यप्यचैतन्ये स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्वभावानाम् । यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदार्य्यापरेणोदकेन व्यामिश्रः सर्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति । तद्यथा । वातः पित्तं श्लेष्मा शोणितम् । वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते । वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणितानि । वातपित्तकफा वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरन्ति ।

कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्

दोषो विकारं नभसि मेघवत्तत्र वर्षति ॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति ।
निःप्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥

तत्र वायोः पित्तस्थानगतस्य च पित्तवत्प्रतीकारः पित्तस्य कफस्थानगतस्य कफवत् कफस्य च वातस्थानगतस्य वातवदेव क्रियाविभागः । एवं प्रकुपितानां प्रसरतां च वायोर्विमार्गगमनाटोपौ । ओषाचोषपरिदाहधूमायनानि पित्तस्य । अरोचकाविपाकाङ्गसादश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति । तत्र तृतीयः क्रियाकालः ।

अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः ॥ एवं कुपितास्तांस्तान् शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति । ते यदोदरसन्निवेशं कुर्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीन् जनयन्ति । वस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन् । मेढ्रगता निरुद्धप्रकाशोपदंशशूकदोषप्रभृतीन् । गुदगता भगन्दरार्शःप्रभृतीन् । वृषणगता वृद्धीः । ऊर्द्ध्वजत्रुगतास्तूर्द्ध्वजान् । त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च । मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन् । अस्थिगता विद्रध्यनुशयीप्रभृतीन् । पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन् । सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन् । तेषामेवमभिनिविष्टानां पूर्व्वरूपप्रादुर्भावस्तत्प्रति रोगं वक्ष्यामः । तत्र पूर्वरूपगतेषु चतुर्थः क्रियाकालः ।

अत ऊर्द्ध्वं व्याधिदर्शनं वक्ष्यामः । शोफार्बुदग्रन्थिविद्रधि

विसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातिसारप्रभृतीनाञ्च । तत्र पञ्चमः क्रियाकालः ।

अत ऊर्द्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः । ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्धः । तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ॥

भवन्ति चात्र । सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम् ।
व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद्भिषक् ॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ।
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥
सर्व्वैर्भावैस्त्रिभिर्व्वापि द्वाभ्यामेकेन वा पुनः ।
संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥
संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ।
शेषदोषविरोधेन सन्निपाते तथैव च ॥
व्रणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति ।
आदेहधारणात्तस्माद्व्रण इत्युच्यते बुधैः ॥

---

## द्वाविंशतितमोऽध्यायः ।

अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः ॥

त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्म्माणीत्यष्टौ व्रणवस्तूनि । अत्र सर्व्वव्रणसन्निवेशः । तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः ॥ तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः

शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति। सर्व्व एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः। अनात्मतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति प्रवृद्धत्वाद्दोषाणाम्। तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिपूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्गमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि। तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेत॥

अत ऊर्द्धं सर्व्वस्रावान् वक्ष्यामः॥ तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु विदारितेषु वा सलिलप्रकाशो भवत्यास्रावः किञ्चिद्विस्रः पीतावभासश्च॥ मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च। सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्यास्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च॥ स्नायुगतः स्निग्धो घनः सिंहाणकप्रतिमः सरक्तश्च॥ अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति। आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च॥ सन्धिगतः पीड्यमानो न प्रवर्त्तते आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति। आस्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च॥ कोष्ठगतोऽसृङ्मूत्र-

पुरीषपूयोदकानि स्रवति ॥ मर्म्मगतस्त्वगादिष्ववरुद्धत्वा-न्नोच्यते ॥ तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्य-श्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्नि-भत्वानि मारुताद्भवन्ति ॥ पित्तान्नीमेदगोमूत्रभस्मशङ्क-षायोदकमाध्वीकतैलसन्निभत्वानि । पित्तवद्रक्तादतिविस्र-त्वञ्च ॥ कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकव-राहवसासन्निभत्वानि ॥ सन्निपातात्तिलनारिकेलोदकैर्वारु-करसकाञ्जिकप्रसादारुकोदकप्रियङ्गफलयकृन्मुद्गयूषसवर्णत्वा-नीति ॥

श्लोकौ चात्र भवतः। पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ।
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात्स्रवन् ॥
आमाशयात्कलायाम्भोनिभश्च त्रिकसन्धिजः ।
स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद्भिषक् ॥

अत ऊर्द्ध्वं सर्व्वव्रणवेदना वक्ष्यामः ॥

तोदनभेदनताडनच्छेदनायमनमन्थनविक्षेपणचुमचुमा-यननिर्द्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशू-लविश्लेषणविकिरणपूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिकाः स-म्भवन्ति । अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहु-र्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात् ॥ ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनावि-शेषास्तं पैत्तिकमिति विद्यात् । पित्तवद्रक्तसमुत्थं जानी-यात् । कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च

यत्र तं श्लैष्मिकमिति विद्यात् । यत्र सर्व्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति ।

अत ऊर्द्धं व्रणवर्णान् वक्ष्यामः । भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य । नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः । श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य । सर्व्ववर्णोपेतः सान्निपातिक इति ॥

भवति चात्र ॥ न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः ।
सर्व्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक् ॥

---

## त्रयोविंशतितमोऽध्यायः ॥

अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः ।

तत्र वयस्थानां दृढ़ानां प्राणवतां सत्ववताञ्च सुचिकित्स्या व्रणा एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः । तत्र वयस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति । दृढ़ानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणं सिरास्नाय्वादिविशेषान्न प्राप्नोति । प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते । सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति । तस्मादेतेषां सुखसाधनीयतमाः । त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः । स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः । अक्षिदन्तनासापा-

ङ्ग्यौत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः। अधोभागाश्चोर्द्ध्वभागनिर्व्वाहिणी रोमान्तोपनखमर्म्मजङ्घास्थिसंश्रिताश्च। भगन्दरमपि चान्तर्मुखं सेवनीकूटकास्थिसंश्रितम्।

भवति चात्र। कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः॥

अवपाटिकानिरुद्धप्रकशमन्निरुद्धगुदजठरग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते शर्करासिकतामेहवातकुण्डलिकाष्ठीलादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः॥

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्॥
यापनीयं विजानीयात् क्रिया धारयते तु यम्।
क्रियायान्तु निवृत्तायां सद्य एव विनश्यति॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम्।
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः॥

अत ऊर्द्ध्वमसाध्यान् वक्ष्यामः॥ मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः। केचित्कठिना गोशृङ्गवदुन्नतमृदुमांसप्ररोहाः। अपरे दुष्टरुधिरास्राविणस्तनुपिच्छिलास्राविणो वा मध्योन्नताः। केचिदवसन्नशुषि-

रपर्य्यन्ताः। सणतूलवत् स्नायुजालवन्तो दुर्दर्शा वसामेदो-
मज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीतासितमूत्रपुरी-
षवातवाहिनश्च कोष्ठस्थाः चीणमांसानाञ्च सर्व्वतोगतय-
श्चाणुमुखा मांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःक-
ण्ठस्थाः। चीणमांसानाञ्च पूयरक्तनिर्व्वाहिणोऽरोचकाविपा-
ककासश्वासोपद्रवयुक्ताः। भिन्ने वा शिरःकपाले यत्र मस्तुलु-
ङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति।
भवन्ति चात्र। वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्।

आगन्तुस्तु व्रणः सिद्येन्नसिद्येद्दोषसम्भवः॥
अमर्म्मोपहिते देशे शिरासन्ध्यस्थिवर्जिते।
विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम्॥
क्रमेणोपचयं प्राप्य धातूननुगतः शनैः।
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च।
निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा॥
अतो यो विपरीतः स्यात्सुखसाध्यः स उच्यते।
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः॥
त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडको समः।
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः।
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत्॥
रूढ़वर्त्मानमग्रन्थिमशूनमरुजं व्रणम्।
त्वक्सवर्णं समतलं सम्यग्रूढ़ं विनिर्दिशेत्॥

दोषप्रकोपादायामादभिघातादजीर्णतः ।
हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढ़ोऽपि दीर्य्यते ॥

---

## चतुर्विंशतितमोऽध्यायः ।

अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः ॥

द्विविधा व्याधयः शस्त्रसाध्याः स्नेहादिक्रियासाध्याश्च । तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते। स्नेहादिक्रियासाध्येषु शस्त्रकर्म्म न क्रियते । अस्मिन् पुनः शास्त्रे सर्वतन्त्रसामान्यात्सर्व्वेषां व्याधीनां यथा स्थूलमवरोधः क्रियते। प्रागभिहितं तद्दुःखसंयोगो व्याधिरिति तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति । तत्तु सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा व्याधयः । तद्यथादिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ताः संघातबलप्रवृत्ताः कालबलप्रवृत्ताः दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ता इति । तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः । तेऽपि द्विविधा मातृजाः पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात्पङ्गुजात्यन्धबधिरमूकमिन्मिणवामनप्रभृतयो जायन्ते तेऽपि द्विविधा रसकृता दौहृदापचारकृताश्च । दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च तेऽपि द्विविधाः आमाशयसमुत्थाः पक्वाशयसमुत्थाश्च पुनश्च द्विविधाः शारीरा मानसाश्च त एत आध्यात्मिकाः । संघातबलप्रवृत्ता य आगन्तवो दुर्ब्बलस्य बलवद्विग्रहात्तेऽपि

द्विविधाः शस्त्रकृता व्यालादिकृताश्च। एत आधिभौतिकाः। कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्त्तुकृता अव्यापन्नर्त्तुकृताश्च। दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्व्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च। स्वभावबलप्रवृत्ताः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयस्तेऽपि द्विविधाः कालकृता अकालकृताश्च तत्र परिरक्षणकृताः कालकृता अपरिरक्षणकृता अकालकृता एत आधिदैविकाः। तत्र सर्व्वव्याध्यवरोधः।

सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च यथाहि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्वरजस्तमांसि न व्यतिरिच्यन्ते। एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते। दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पा भवन्ति। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजोऽयमस्थिजोऽयं मज्जजोऽयं शुक्रजोऽयं व्याधिरिति। तत्रान्नाश्रद्धारोचकाविपाकाङ्गमर्द्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालवलिपलितदर्शनप्रभृतयो रसदोषजा विकाराः। कुष्ठविसर्पपिडकामशकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजा गुदमुखमेढ्रपाकाश्च। अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डि-

कालजीमांससंघातौष्ठप्रकोपगलगण्डगण्डमालाप्रभृतयो मांसदोषजाः। ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः। अध्यस्थ्यधिदन्तास्थितोद शूलकुनखप्रभृतयोऽस्थिदोषजाः। तमोदर्शनमूर्च्छाभ्रमपर्वगौरवस्थूलमूलोरुजङ्घानेत्राभिस्यन्दप्रभृतयो मज्जदोषजाः। क्लैव्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषजाः। त्वग्दोषाः सङ्गोऽतिप्रवृत्तिर्वा मलायतनदोषाः। इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः। इत्येवं समास उक्तो विस्तरमितस्ताँश्च चैषां प्रति रोगं वक्ष्यामः।

भवति चात्र। कुपितानां हि दोषाणां शरीरे परिधावताम्।
यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते॥

भूयोऽत्र जिज्ञास्यं किं वातादीनां ज्वरादीनाञ्च नित्यः संश्लेषः परिच्छेदो वेति यदि नित्यः संश्लेषः स्यात्तर्हि नित्यातुराः सर्व्व एव प्राणिनः स्युः। अथाप्यन्यथा वातादीनां ज्वरादीनां चान्यत्र वर्त्तमानानामन्यत्र लिङ्गं न भवतीति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न। अत्रोच्यते। दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति। अथ च न नित्यः सम्बन्धो यथाहि विद्युद्वाताशनिवर्षाण्याकाशं प्रत्याख्याय न भवन्ति। सत्यप्याकाशे कदाचिन्न भवन्ति। अथ च निमित्ततस्तत एवोत्पत्तिरिति तरङ्गबुद्बुदादयश्चोदकविशेषा एव। वातादीनां ज्वरादीनाञ्च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः। अथ च निमित्तत एवोत्पत्तिरिति।

भवति चात्र। विकारपरिमाणञ्च सङ्ख्या चैषां पृथक् पृथक् ।
विस्तरेणोत्तरे तन्त्रे सर्व्वाबाधाश्च वक्ष्यते ॥

---

## पञ्चविंशतितमोऽध्यायः ।

अथातोऽष्टविधशस्त्रकर्म्मीयमध्यायं व्याख्यास्यामः ॥

छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः ।
व्रणवर्त्मार्वुदान्यर्शश्चर्म्मकीलोऽस्थिमांसगम् ॥
शल्यं जतुमणिर्म्मांससंघातो गलशुण्डिका: ।
स्नायुमांससिराकोथो वल्मीकं शतपोनकः ॥
अध्रुषश्चोपदंशाश्च मांसकन्द्यधिमांसकः ।
भेद्या विद्रधयोऽन्यत्र सर्वजाद्ग्रन्थयस्त्रयः ॥
आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ।
प्रमेहपिडकाशोथास्तनरोगावमन्थकाः ॥
कुम्भीकानुशयीनाड्यौ वृन्दौ पुष्करिकालजौ ।
प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥
तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिणः ।
वस्तिस्तथाश्मरीहेतोर्म्मेदोजा ये च केचन ॥
लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका ।
मेदोजो दन्तवैदर्भौ ग्रन्थिवर्त्माधिजिह्विका ॥
अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ।
वेध्याः सिरा बहुविधा मूत्रवृद्धिर्द्दकोदरम् ॥
एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ।

आहार्य्याः शर्करास्तिस्रो दन्तकणमलाश्मरी ॥
शल्यानि मूढ़गर्भाश्च वर्चश्च निचितं गुदे ।
स्राव्या विद्रधयः पञ्च भवेयुः सर्व्वजादृते ॥
कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ।
पाल्यामयाः श्लीपदानि विषजुष्टञ्च शोणितं ॥
अर्व्वुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये ।
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥
शौषिरो गलशालूकं कण्टकाः क्रिमिदन्तकः ।
दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥
पित्तासृक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः ।
सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ॥
सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रयाः ।
न क्षाराग्निविषैर्जुष्टा न वा मारुतवाहिनः ॥
नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥
पांशुरोमनखादीनि चलमस्थि भवेच्च यत् ।
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ॥
रुजश्च विविधाः कुर्य्युस्तस्मादेतान्विशोधयेत् ।
ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा ।
शणजक्षौमसूत्राभ्यां स्नाय्वा बालेन वा पुनः ।
मूर्व्वागुडूचीतानैर्व्वा सीव्येद्वेल्लितकं शनैः ॥
सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् ।
ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥

टेग्रेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् ।
आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥
धनुर्वक्रा हिता मर्मफलकोशोदरोपरि ।
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः ।
कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः ।
नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत् ॥
दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥
अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् ।
प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥
सल्लकीफलचूर्णैर्व्वा क्षौमध्यामेन वा पुनः ।
ततो व्रणं यथायोगं बद्ध्वाचारिकमादिशेत् ॥
एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम् ।
चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥
हीनातिरिक्तं तिर्य्यक् च गात्रच्छेदनमात्मनः ।
एताश्चतस्रोऽष्टविधे कर्म्मणि व्यापदः स्मृताः ॥
अज्ञानलोभाहितवाक्ययोगभयप्रमोहैरपरैश्च भावैः ।
यदा प्रयुञ्जीत भिषक् कुशस्त्रं तदा स शेषान् कुरुते विकारान् ॥
तं क्षारशस्त्राग्निभिरौषधैश्च भूयोऽभियुञ्जानमयुक्तियुक्तम् ।
जिजीविषुर्दूरत एव वैद्यं विवर्जयेदुग्रविषाग्नितुल्यम् ॥
तदेव युक्तान्त्वतिमर्मसन्धीन् हिंस्यात्सिरास्नायुमथास्थि चैव ।
मूर्खप्रयुक्तं पुरुषं क्षणेन प्राणैर्वियुञ्ज्यादथवा कथञ्चित् ॥
भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं संलयनोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः ॥

मांसोदकाभं रुधिरञ्च गच्छेत्सर्वेन्द्रियार्थोपरमस्तथैव।
दशार्द्धसङ्ख्येष्वपि हि क्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम्॥
सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तैः क्षततश्च वायुः।
करोति रोगान् विविधान् यथोक्तान् छिन्नासु भिन्नास्वथ वा [ सिरासु॥
कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च।
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं मनुजं व्यवस्येत्
शोफातिवृद्धिस्तुमुला रुजश्च बलक्षयः पर्व्वसु भेदशोफौ।
क्षतेषु सन्धिष्वचलाचलेषु स्यात्सन्धिकर्म्मोपरतिश्च लिङ्गम्॥
घोरा रुजो यस्य निशादिनेषु सर्व्वास्ववस्थासु न शान्तिरस्ति।
तृषाङ्गसादौ श्वयथुश्च रुक् च तमस्थिविद्धं मनुजं व्यवस्येत्।
यथास्वमेतानि विभावयेयुर्लिङ्गानि मर्म्मस्वभिताडितेषु।
स्पर्शं न जानाति विपाण्डुवर्णो यो मांसमर्मस्वभिताडितः स्यात्॥
आत्मानमेवाथ जघन्यकारी शस्त्रेण यो हन्ति हि कर्म कुर्व्वन्।
तमात्मवानात्महनं कुवैद्यं विवर्जयेदायुरभीप्समानः॥
तिर्य्यक् प्रणिहिते शस्त्रे दोषाः पूर्व्वमुदाहृताः।
तस्मात्परिहरन् दोषान् कुर्य्याच्छस्त्रनिपातनम्॥
मातरं पितरं पुत्रान् बान्धवानपि चातुरः।
अप्येतानभिशङ्केत वैद्ये विश्वासमेति च॥
विसृजत्यात्मनात्मानं न चैनं परिशङ्कते।
तस्मात्पुत्रवदेवैनं पालयेदातुरं भिषक्॥
कर्म्मणा कश्चिदेकेन द्वाभ्यां कश्चित्त्रिभिस्तथा।
विकारः साध्यते कश्चिच्चतुर्भिरपि कर्म्मभिः॥

धर्म्मार्थौ कीर्त्तिमत्यर्थं सतां ग्रहणमुत्तमम् ।
प्राप्नुयात्स्वर्गवासञ्च हितमारभ्य कर्म्मणा ॥

---

## षड्‌विंशतितमोऽध्यायः ।

अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥

शल श्वल आशुगमने धातुस्तस्य शल्यमिति रूपम् । तद्द्विविधं शारीरमागन्तुकञ्च । सर्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्यशास्त्रं तत्र शारीरं रोमनखादि धातवोऽन्नमलादोषाश्च दुष्टाः । आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति । अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु तत्रापि विशेषतो लोहमयेष्वेव विशसनार्थोपपन्नत्वाल्लोहस्य लोहानामपि दुर्व्वारत्वादणुमुखत्वाद्दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः स द्विविधः कर्णी श्लक्ष्णश्च प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याता व्यालमृगपक्षिवक्त्रसदृशाश्च । सर्वशल्यानान्तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्द्धमर्वाऽर्व्वाचीनस्तिर्य्यगृजुरिति । तानि यदा वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थितद्विवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु तच्च शल्यलक्षणमुच्यमानमुपधारय। तत्तु द्विविधं सामान्यं वैशेषिकञ्च। श्यावं पिडकावन्तं शोफवेदनावन्तं मुहुर्मुहुःशोणितास्राविणं बुद्‌बुदवदुन्नतं मृदुमांसञ्च व्रणं जानीयात् सशल्योऽयमिति

सामान्यलक्षणमेतदुक्तम् ॥ वशेषिकन्तु त्वगते विवर्णः शोफो भवत्यायतः कठिनश्च । मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च । पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्जम् । सिरागते सिराध्मानं सिराशूलं सिराशोफश्च । स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च । स्रोतोगते स्रोतसां स्वकर्म्मगुणहानिः । धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्द्दः पिपासा हृल्लासश्च । अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च । अस्थिविवरगतेऽस्थिपूर्णतास्थितोदः संहर्षो बलवांश्च । सन्धिगतेऽस्थिवच्चेष्टोपरमश्च । कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनञ्च व्रणमुखात् । मर्मगते मर्मविद्धवच्चेष्टते । सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ महान्ति स्वल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु दोषप्रकोपव्यायामाभिघातेभ्यः प्रचलितानि पुनर्ब्बाधन्ते ॥

तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात् ॥ स्त्यानघृतमृच्चन्दनकल्कैर्व्वा प्रदिग्धायां शल्योष्मणाशु विसरति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्यं विजानीयात् ॥ मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धरातुरमुपपादयेत् । कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भो वेदना वा भवति तत्र च शल्यं विजानीयात् ॥ कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवं परीक्षेत ॥

सिराधमनीस्त्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायाद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्॥ अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्॥ सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसारणाकुञ्चनबन्धनपीडनैर्भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यमिति जानीयात्॥ मर्म्मप्रनष्टे त्वनन्यभावान्मर्म्मणामुक्तं परीक्षणं भवति॥ सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्व्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्रतरणप्लवनव्यायामैर्जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्व्वातमूत्रपुरीषशुक्रोत्सर्गैर्व्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्॥ भवन्ति चात्र॥ यस्मिंस्तोदादयो देशे सुप्तता गुरुतापि च।

यद्दयते बहुशो यत्र स्पृश्यते तुद्यतेऽपि च॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति।
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्द्दिशेत्॥
अल्पबाधमशूनञ्च निरुजं निरुपद्रवम्।
प्रसन्नं मृदुपर्य्यन्तं निराघट्टमनुन्नतम्॥
एवंरूपा सर्व्वतो दृष्ट्वा यथामार्गं चिकित्सकः।
प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्द्दिशेत्॥
अस्थ्यात्मकं भज्यते तु शल्यमन्तस्य शीर्य्यते।
प्रायोनिर्भुज्यते शाङ्गमायसञ्चेति निश्चयः॥
वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि।

पचन्ति रक्तं मांसञ्च क्षिप्रमेतानि देहिनाम् ॥
कानकं राजतं ताम्रं रैतिकं त्रपु सीसकम् ।
चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥
स्वभावशीता मृदवो ये चान्येऽप्येदृशा मताः ।
द्रवीभूताः शरीरेऽस्मिन्नेकत्वं यान्ति धातुभिः ॥
विषाणदन्तकेशास्थिवेणुदारूपलानि तु ।
शल्यानि न विशीर्य्यन्ते शरीरे मृन्मयानि च ॥
द्विविधं पञ्चगतिकं त्वगादिव्रणवस्तुषु ।
यो वेत्त्यधिष्ठितं शल्यं स राज्ञः कर्त्तुमर्हति ॥

---

## सप्तविंशतितमोऽध्यायः ।

अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ।

शल्यं द्विविधमवबद्धमनवबद्धञ्च । तत्र समासेनावबद्धशल्यो-द्धरणार्थं पञ्चदशहेतून् वक्ष्यामः । तद्यथा । स्वभावः पाचनं भेदनं दारणं पीडनं प्रमार्जनं निर्ध्मापनं वमनं विरेचनं प्रक्षालनं प्रतिमर्शः प्रवाहणमाचूषणमयस्कान्तो हर्षश्चेति । तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति । सावगाढं शल्यमभिरुह्यमानं पाचयित्वा प्रकोपात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति । पक्वमभिद्यमानं भेदयेद्दारयेद्वा भिन्नमनिरस्यमानं पीडनीयैः पीडयेत्पाणिभिर्व्वा । अणून्यक्षिशल्यानि परिषेचनाध्मापनैर्व्वालवस्त्रपाणिभिः प्रमार्जयेत् । आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्द्धमेत् । अन्नशल्यानि

वमनाङ्गुलिप्रतिमर्षप्रभृतिभिर्विरेचनैः पक्वाशयगतानि। व्रणदोषाश्रयगतानि प्रक्षालनैः। वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम्। मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषण-मास्येन विषाणैर्वा। अनुलोममनवबद्धमकर्णमनल्पव्रणमुख-मयस्कान्तेन। हृदयवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति। सर्वशल्यानान्तु महतामणूनां वा द्वावेवाहरण-हेतू भवतः प्रतिलोमोऽनुलोमश्च तत्र प्रतिलोममर्वाचीन-मानयेदनुलोमं पराचीनम्। उत्तुण्डितं छित्त्वा निर्घातये-च्छेदनीयमुखम् छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावङ्क्षण-पर्शुकान्तरपतितानि च हस्तशक्यं यथामार्गं हस्तेनैवाप-हर्त्तुं प्रयतेत।

अनुत्तुण्डितशल्यानि छेदनीयमुखानि च।
अनिर्घात्यानि जानीयाद्भूयश्छेदानुबन्धतः॥

हस्तेनापहर्त्तुमशक्यं विमृश्य शस्त्रेण यन्त्रेण वापहरेत्। भवति चात्र। शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत्।

संरक्षेदस्य मर्म्माणि मुहुराश्वासयेच्च तम्॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृत प्रभृतिभिः संस्वेद्य विदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्धाचारिकमु-पदिशेत्॥ सिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत् श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं दुर्ब्बलवारङ्गं कुशादि-भिर्बद्ध्वा। हृदयमभितो वर्त्तमानं शल्यं शीतजलादिभिरुद्वे-जितस्यापहरेद्यथामार्गं। दुरप हरमन्यतोऽपवाध्यमानं पाटयित्वोद्धरेत्॥ अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य

पादाभ्यां यन्त्रेणापहरेदशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्धैकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्ववल्गा कटके वा बध्नीयादथैनं कशया ताडयेद्यथोन्नमयन् शिरोवेगेन शल्यमुद्धरति। दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बद्ध्वोद्धरेत्॥ अस्थिदेशोत्तुण्डित मष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव। यन्त्रेण विमृदितकर्णानि कर्णवल्यनाबाधकरदेशोत्तुण्डितानि पुरस्तादेव जातुषे कण्ठासक्ते कण्ठे नाड़ीं प्रवेश्याग्नितप्ताञ्च शलाकां तथावगाह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतमुद्धरेत्। अजातुषं जतुमधूच्छिष्टलिप्तया शलाकया पूर्वकल्पेनेत्येके। अस्थिशल्यमन्यद्वा तिर्य्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसाल्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्च्चकेनापहरेत् प्रणुदेद्वान्तःक्षतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्त्रिफलाचूर्णं वा मधुशर्करामिश्रम्॥ उदकपूर्णमवाक्शिरसमवपीडयेद्वमनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात्॥ ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धस्कन्धे मुष्टिनाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्॥ बाहुरज्जुलतापाशशल्ये तु कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं फेनागमनं संज्ञानाशंचापादयति। तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसञ्च वातघ्नं विदध्यादिति।

भवन्ति चात्र ॥ शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ।
तथा यन्त्रपृथक्त्वञ्च सम्यक् शल्यमथाहरेत् ॥
कर्णवन्ति तु शल्यानि दुःखाहार्य्याणि यानि च ।
आददीत भिषक् तस्मात्तानि युक्त्या समाहितः
एतैरुपायैः शल्यन्तु नैव निर्घात्यते यदि ।
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥
शोथपाकौ रुजश्चोग्राः कुर्य्याच्छल्यमनिर्हृतम् ।
वैकल्यं मरणञ्चापि तस्माद्यत्नाद्विनिर्हरेत् ॥

---

## ॥ अष्टाविंशतितमोऽध्यायः ॥

अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः ॥
फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ।
ख्यापयन्ति भविष्यत्वं तथा रिष्टानि पञ्चताम् ॥
तानि सौक्ष्म्यात्प्रमादाद्वा तथैवाशुव्यतिक्रमात् ।
गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्नत्वसम्भवात् ॥
ध्रुवन्तु मरणं रिष्टे ब्राह्मणैस्तत्किलामलैः ।
रसायनतपोजप्यतत्परैर्व्वा निवार्य्यते ॥
नक्षत्रपीडा वहुधा यथाकालाद्विपच्यते ।
तथैवारिष्टपाकञ्च ब्रुवते बहुधा जनाः ॥
असिद्धिमाप्नुयाल्लोके प्रतिकुर्व्वन् गतायुषः ।
अतो रिष्टानि यत्नेन लक्षयेत् कुशलो भिषक ॥
गन्धवर्णरसादीनां विशेषाणां समासतः ।

वैकृतं यत्तदाचष्टे व्रणिनः पक्कलक्षणम् ॥
कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः ।
लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥
लाजातसीतैलसमाः किञ्चिद्विस्राश्च गन्धतः ।
ज्ञेयाः प्रकृतिगन्धाः स्युरतोऽन्यद्गन्धवैकृतम् ॥
मद्यागुर्वाज्यसुमनः पद्मचन्दनचम्पकैः ।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥
श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ।
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥
श्यामकुङ्कुमकङ्कुष्ठसवर्णाः पित्तकोपतः ।
न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥
कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ।
दूयन्ते च विदह्यन्ते भिषक् तान् परिवर्जयेत् ॥
कृष्णास्तु ये तनुस्रावा वातजा मर्म्मतापिनः ।
स्वल्पामपि न कुर्व्वन्ति रुजं तान् परिवर्जयेत् ॥
त्रुडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ।
त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ॥
ये च मर्मस्वसम्भूता भवन्त्यत्यर्थवेदनाः ।
दह्यन्ते चान्तरत्यर्थं वहिः शीताश्च ये व्रणाः ॥
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ।
शक्तिकुन्तध्वजरथा वाजिवारणगोवृषाः ॥
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ।
चूर्णावकीर्णा इव ये भान्ति वा न च चूर्णिताः ॥

प्राणमांसक्षयश्वासकासारोचकपीडिताः।
प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्म्मसु॥
क्रियाभिः सम्यगारब्धा न सिद्ध्यन्ति च ये व्रणाः।
वर्जयेत्तान् भिषक् प्राज्ञः संरक्षन्नात्मनो यशः॥

---

## एकोनत्रिंशत्तमोऽध्यायः।

अथातो विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः॥

दूतदर्शनसम्भाषा वेशाश्चेष्टितमेव च।
ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः॥
देशो वैद्यस्य वाग्देहमनसाञ्च विचेष्टितम्।
कथयन्त्यातुरगतं शुभं वा यदिवाऽशुभम्॥
पाषण्डाश्रमवर्णानां सपक्षाः कर्म्मसिद्धये।
त एव विपरीताः स्युर्दूताः कर्म्मविपत्तये॥
नपुंसकं स्त्रीबहवो नैककार्य्या असूयकाः।
गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः॥
वैद्यं य उपसर्प्पन्ति दूतास्ते चापि गर्हिताः।
पाशदण्डायुधधराः पाण्डरेतरवाससः॥
आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः।
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः॥
रूक्षनिष्ठुरवादाश्चाप्यमाङ्गल्याभिधायिनः।
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम्॥

वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ।
स्रोतोऽवरोधहृद्गण्डमूर्द्धोरःकुक्षिपाणयः ॥
कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ।
विलिखन्तो महीं किञ्चिन्मुञ्चन्तो लोष्टभेदिनः ॥
तैलकर्द्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ।
फलं पक्वमसारं वा गृहीत्वान्यच्च तद्विधम् ॥
नखैर्नखान्तरं वापि करेण चरणं तथा ।
उपानच्चर्महस्ता वा विकृतव्याधिपीडिताः ॥
वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ।
याम्यांदिशं प्राञ्जलयो विषमैकपदे स्थिताः ॥
वैद्यं य उपसर्प्पन्ति दूतास्ते चापि गर्हिताः ।
दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ।
ज्वलयन्तं पचन्तं वा क्रूरकर्म्मणि चोद्यतम् ॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ।
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च ॥
वैद्यं य उपसर्प्पन्ति दूतास्ते चापि गर्हिताः ।
वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने ॥
मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ।
आर्द्राश्लेषामघामूलपूर्व्वासु भरणीषु च ॥
चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ।
वैद्यं य उपसर्प्पन्ति दूतास्ते चापि गर्हिताः ॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥

त एव कफरोगेषु कर्म्मसिद्धिकराः स्मृताः।
एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु तत्॥
रक्तपित्तातिसारेषु प्रमेहेषु तथैव च।
प्रशस्तो जलरोधेषु दूतवैद्यसमागमः॥
विज्ञायैवं विभागं तु शेषं बुध्येत पण्डितः।
शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः॥
स्वस्यां जातौ स्वगोत्रो वा दूतः कार्य्यकरः स्मृतः।
गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः॥
धृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान्।
अलङ्कृतो मङ्गलवान् दूतः कार्य्यकरः स्मृतः॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम्।
उपसर्पति यो वैद्यं स च कार्य्यकरः स्मृतः॥
मांसोदकुम्भातपत्रविप्रवारणगोवृषाः।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः॥
स्त्री पुत्त्रिणी सवत्सा गौर्वर्द्धमानमलङ्कृता।
कन्या मत्स्याः फलं चामं स्वस्तिकं मोदका दधि॥
हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः।
अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा॥
ब्रह्मदुन्दुभिजीमूतशङ्खवेणुरथस्वनाः।
सिंहगोवृषनादाश्च ह्रेषितं गजबृंहितम्॥
शस्तं हंसरुतं नृणां कौशिकश्चैव वामतः।
प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः॥
पत्रपुष्पफलोपेतान् सक्षीरान्निरुजो द्रुमान्।

आश्रिता वा नभोवेश्मध्वजतोरणवेदिकाः ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ।
वामा वा दक्षिणा वापि शकुनाः कर्म्मसिद्धये ॥
शुष्केऽशनिहते पत्रे वल्लीनद्धे सकण्टके ।
वृक्षेऽथवाश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥
चैत्यवल्मीकविषमस्थिता दीप्तखरस्वराः ।
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥
पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ।
दक्षिणाद्वामगमनं प्रशस्तं श्वसृगालयोः ।
वामं नकुलचाषाणां नोभयं शशसर्पयोः ॥
भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ।
दर्शनं वा रुतञ्चापि न गोधाकृकलासयोः ॥
दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ।
कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥
पात्रं नेष्टं तथाङ्गारतैलकर्द्दमपूरितम् ।
प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥
शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ।
नेष्यन्ते पतितान्नस्थदीनान्धरिपवस्तथा ॥
मृदुशीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥
ग्रन्थ्यर्वुदादिषु सदा छेदशब्दश्च पूजितः ।
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ।

एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ।
छर्द्या वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः ॥
प्रतिषिद्धं तथाभग्नं क्षुतं स्खलितमाहृतम् ।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥
प्रवेशेष्येतदुद्देशाद्वैद्यं च तथातुरे ।
प्रतिद्वारं गृहे वास्य पुनरेतन्न गण्यते ॥
केशभस्मास्थिकाष्ठाश्मतुषकार्पासकण्टकाः।
खट्वोर्द्धपादा मद्यापो वसा तैलं तिलास्तृणम् ॥
नपुंसकव्यङ्गभग्ननग्नमुण्डासिताम्बराः ।
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥
भाण्डानां सङ्करस्थानां स्थानात्सञ्चरणं तथा ।
निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥
वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ।
वैद्यं सम्भाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥
प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा ।
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥
यो वैद्यमुन्मुखः पृच्छेदुन्माष्टि लाङ्गमातुरः ।
न स सिद्ध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥
भवने पूज्यते वापि यस्य वैद्यः स सिद्ध्यति ।
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ।
आतुरस्य ध्रुवं तस्माद्दूतादीन् लक्षयेद्भिषक् ।
स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ॥

सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ।
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्द्दभैः ॥
वराहैर्म्महिषैर्व्वापि यो यायाद्दक्षिणामुखः ।
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्द्धजा ॥
यं वाकर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ।
अन्त्यावसायिभिर्य्यो वा कृष्यते दक्षिणामुखः ॥
परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा ।
मूर्द्धन्याघ्रायते यस्तु श्वापदैर्व्विकृताननैः ॥
पिबेन्मधु च तैलञ्च यो वा पङ्केऽवसीदति ।
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥
निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम् ।
यस्य वंशो नलो वापि तालो वोरसि जायते ॥
यं वा मत्स्यो ग्रसेद्यो वा जननीं प्रविशेन्नरः ।
पर्व्वताग्रात्पतेद्यो वा श्वभ्रे वा तमसा वृते ॥
ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ।
पराजीयेत बध्येत काकाद्यैर्व्वाभिभूयते ॥
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ।
यः पश्येद्दैवतानां प्रकम्पमवनेस्तथा ॥
यस्य छर्द्दिर्व्विरेको वा दशनाः प्रपतन्ति वा ।
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकं ॥
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ।
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥
लभेताश्नीत वा पक्वमन्नं यश्च पिबेत्सुराम् ।

स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥
यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः ।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥
ज्वरितानां शुना सख्यं कपिसख्यन्तु शोषिणाम् ।
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्त्तनम् ॥
मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्द्ध्नि शिरोरुजि ॥
शष्कुलीभक्षणं छर्द्यां मध्वा श्वासपिपासयोः ।
हारिद्रं भोजनं वापि यस्य स्यात्पाण्डुरोगिणः ॥
रक्तपित्ती पिबेद्यस्तु शोणितं स विनश्यति ।
स्वप्नानेवं विधान् दृष्ट्वा प्रातरुत्थाय यत्नवान् ॥
दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा ।
जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा ॥
दृष्ट्वा च प्रथमे यामे सुप्याद्ध्यात्वा पुनः शुभम् ।
जपेद्वान्यतमं देवं ब्रह्मचारी समाहितः ॥
नचाचक्षीत कस्मैचिद्दृष्ट्वा स्वप्नमशोभनम् ।
देवतायतने चैव वसेद्रात्रित्रयं तथा ।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात्प्रविमुच्यते ॥
अत ऊर्द्धं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥
समिद्धमग्निं विप्रांश्च निर्म्मलानि जलानि च ।
पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ।

लभन्ते धनलाभाय व्याधेरपगमाय च ॥
महाप्रासादसफलवृक्षवारणपर्व्वतान् ।
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ।
तरेत्कल्याणलाभाय व्याधेरपगमाय च ॥
उरगो वा जलौको वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्द्दिशेत्तस्य धनलाभञ्च बुद्धिमान् ॥
एवंरूपान् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म्म समाचरेत् ॥

---

## त्रिंशत्तमोऽध्यायः ।

अथातःपञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥
शरीरशीलयोर्यस्य प्रकृतेर्व्विकृतिर्भवेत् ।
तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे ॥
शृणोति विविधान् शब्दान् यो दिव्यानामभावतः ।
समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान् ॥
तान् स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥
यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत् ।
सञ्जातशीतपिडको यश्च दाहेन पीड्यते ॥

उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते ।
प्रहारान्नाभिजानाति योऽङ्गच्छेदमथापि वा ॥
पांशुनेवावकीर्णानि यस्य गात्राणि मन्यते ।
वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥
स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥
विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ।
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥
यस्य दोषाग्निसाम्यञ्च कुर्य्युर्मिथ्योपयोजिताः ।
यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते ॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ।
यो वा गन्धान्न जानाति गतासुं तं विनिर्दिशेत् ॥
द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा ।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ।
रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् ॥
अमेघोपप्लवे यस्तु शक्रचापतडिद्गुणान् ।
तडित्वतोऽसितान् यो वा निर्मले गगने घनान् ॥
विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् ।
यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति ॥
धूमनीहारवासोभिरावृतामिव मेदिनीम् ।
प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा ॥
भूमिमष्टापदाकारां लेखाभिर्य्यश्च पश्यति ।

न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम् ॥
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् ।
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति ॥
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्वजाम् ।
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥
पिशाचोरगनागानां भूतानां विकृतामपि ।
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ॥
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥

---

## एकत्रिंशत्तमोऽध्यायः ॥

॥ अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥

श्यावा लोहितिका नीला पीतिका वापि मानवम् ।
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥
ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा ।
अकस्माद्यं भजन्ते वा स परासुरसंशयम् ॥
यस्याधरोष्ठः पतितः क्षिप्तश्चोर्द्धं तथोत्तरः ।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥
आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च ।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥
कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै ।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥
कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका ।

अवस्फूर्जति मग्ना वा न स जीवति मानवः ॥
सङ्क्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने।
स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ।
लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥
नाहरत्यन्नमास्यस्थं न धारयति यः शिरः।
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥
बलवान् दुर्बलो वापि सम्मोहं योऽधिगच्छति।
उत्थाप्यमानो बहुशस्तं धीरः परिवर्जयेत् ॥
उत्तानः सर्व्वदा शेते पादौ विकुरुते च यः।
विप्रसारणशीलो वा न स जीवति मानवः ॥
शीतपादकरोच्छासश्छिन्नश्वासश्च यो भवेत्।
काकोच्छासश्च यो मर्त्त्यस्तं धीरः परिवर्ज्जयेत् ॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा।
मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः स जानता ॥
उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः।
प्रेतैर्व्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत् ॥
स्रोतोभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते।
पुरुषस्याविषार्त्तस्य सद्यो जह्यात्स जीवितम्
वाताष्ठीला तु हृदये यस्योर्द्ध्वमनुयायिनी।
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥
अनन्योपद्रवकृतः शोफः पादसमुत्थितः।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥

अतिसारी ज्वरी हिक्का छर्दिः शूनाण्डमेढ्रता ।
श्वासिनः कासिनो वापि यस्य तं परिवर्ज्जयेत् ॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ।
बलवन्तमपि प्राणैर्व्वियुञ्जन्ति न संशयः ॥
श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति ।
मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत् ॥
वक्त्रमापूर्य्यतेऽश्रूणां स्विद्यतश्चरणावुभौ ।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च ।
यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम् ॥
पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः ।
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥
यूका ललाटमायान्ति वलिं नाश्नन्ति वायसाः ।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम् ॥
ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः ।
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥
विषमेणोपचारेण कर्म्मभिश्च पुराकृतैः
अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥
प्रेतभूतपिशाचाश्च रक्षांसि विविधानि च ।

मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥
तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया।
तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव गतायुषः ॥

---

## ॥ द्वात्रिंशत्तमोऽध्यायः ॥

अथातः स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥
स्वभावप्रसिद्धानां शरीरैकदेशानामन्यभावित्वं मरणाय। तद्यथा। शुक्लानां कृष्णता कृष्णानां शुक्लता रक्तानामन्यवर्णत्वं स्थिराणामस्थिरत्वं मृदूनां स्थिरता चलानामचलत्वमचलानां चलता पृथूनां सङ्क्षिप्तत्वं सङ्क्षिप्तानां पृथुता दीर्घाणां ह्रस्वत्वं ह्रस्वानां दीर्घताऽपतनधर्म्मिणां पतनधर्म्मित्वं पतनधर्म्मिणामपतनधर्म्मित्वमकस्माच्च शैत्यौष्ण्यस्तैम्यरौक्ष्यप्रस्तम्भवैवर्ण्यावसदनञ्चाङ्गानाम्। स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवस्रस्तोत्क्षिप्तभ्रान्तावक्षिप्तपतितविमुक्तनिर्गतान्तर्गतगुरुलघुत्वानि। प्रभालवर्णव्यङ्गप्रादुर्भावोऽप्यकस्मात्। सिराणाञ्च दर्शनं ललाटे नासावंशे वा पिडकोत्पत्तिः। ललाटे प्रभातकाले वा स्वेदः। नेत्ररोगाद्विना वाऽश्रुप्रवृत्तिः। गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा कपोतकङ्क प्रभृतीनाम्। मूत्रपुरीषवृद्धिरभुञ्जानानाम् तत्प्रणाशो भुञ्जानानाम्। स्तनमूलहृदयोरःसुच शूलोत्पत्तयः। मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्य्ययो वा तथार्द्धाङ्गे श्वयथुः। शोषोऽङ्गपच्चयोर्वा नष्टहीनविकलविकृतस्वरता। विवर्णपुष्प-

प्रादुर्भावो वा दन्तमुखनखशरीरेषु । यस्यवाप्सुकफपुरीषरेतांसि निमज्जन्ति । यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते । स्नेहाभ्यक्तकेशाङ्ग इव यो भाति । यस्य दुर्ब्बलो भक्तद्वेषातिसाराभ्यां पीड्यते । कासमानश्च तृष्णाभिभूतः । क्षीणश्छर्दिंभक्तद्वेषयुक्तः सफेनपूयरुधिरोद्वामी हतस्वरः शूलाभिपन्नश्च मनुष्यः । शूनकरचरणवदनः क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणि पादो ज्वरकासाभिभूतः । यस्तु पूर्व्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्य्यते वा ज्वरकासाभिभूतः स श्वासान्म्रियते । वस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कस्तब्धमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः । प्राग्विशुष्यमाणहृदय आर्द्रशरीरो यश्च लोष्टं लोष्टेनाभिहन्ति काष्ठं काष्ठेन तृणानि वा छिनत्ति । अधरोष्ठं दशत्युत्तरोष्ठं वा लेढि । आलुञ्चति वा कर्णौकेशांश्च । देवद्विजगुरुसुहृद्वैद्यांश्च द्वेष्टि । यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीडयन्ति जन्मर्क्षं वा यस्योल्काशनिभ्यामभिहन्यते होरा वा । गृहदारशयनासनयान वाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति ।

भवन्ति चात्र । चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते ।

> प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ।
> निवर्त्तते महाव्याधिः सहसा यस्य देहिनः ।
> न चाहारफलं यस्य दृश्यते स विनश्यति ॥
> एतान्यरिष्टरूपाणि सम्यग्बुद्ध्येत यो भिषक् ।
> साध्यासाध्यपरीक्षायां स राज्ञः सम्मतो भवेत् ॥

त्रयस्त्रिंशत्तमोऽध्यायः।

अथातोऽवारणीयमध्यायं व्याख्यास्यामः।
उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम्।
रसायनाद्विना वत्स तान् शृणुष्वैकमना मम॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः।
अश्मरी मूढ़गर्भश्च तथैवोदरमष्टमम्॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः।
प्राणमांसक्षयश्वासतृष्णाशोषवमीज्वरैः॥
मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः।
वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता॥
शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीड़ितम्।
नरं रुजार्त्तिमन्तञ्च वातव्याधिर्व्विनाशयेत्॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा।
पिडकापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम्॥
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्।
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्॥
तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम्।
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत्॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च।
भगन्दरात्प्रस्रवन्ति यस्य तं परिवर्ज्जयेत्॥
प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम्।
अश्मरी क्षपयत्याशु सिकता शर्करान्विता॥
गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः।

हन्यात् स्त्रियं मूढ़गर्भं यथोक्ताश्चाप्युपद्रवाः ॥
पार्श्वभङ्गान्नविद्वेषशोफातिसारपीड़ितम् ।
विरिक्तं पूर्य्यमाणञ्च वर्ज्जयेदुदरार्दितम् ॥
यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा ।
शीतार्दितोन्तरुष्णश्च ज्वरेण म्रियते नरः ॥
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ।
नित्यं वक्त्रेण चोच्छ्वस्यात् तं ज्वरो हन्ति मानवम् ॥
हिक्काश्वासपिपासार्त्तं मूढ़ं विभ्रान्तलोचनम् ।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥
आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च ।
क्षीणशोणितमांसञ्च नरं क्षपयति ज्वरः ॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम् ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥
शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढ़ताः ।
भवन्ति दुर्व्वलत्वञ्च गुल्मिनो मृत्युरेष्यतः ॥
आध्मातं बहुनिष्यन्दं छर्दिहिक्काऽन्वितम् ।
रुजा श्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ।
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ॥
लोहितं छर्दयेद्यश्च बहुशो लोहितेक्षणः ।
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति ॥

अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः।
जागरिष्णुरसन्देहमुन्मादेन विनश्यति ॥
बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम्।
नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत् ॥

---

## चतुस्त्रिंशोऽध्यायः।

अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः ॥
युक्तसेनस्य नृपतेः परानभिजिगीषतः।
भिषजा रक्षणं कार्य्यं यथा तदुपदेक्ष्यते ॥
विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः।
रक्षितव्यो विशेषेण विषादेव नराधिपः ॥
पन्थानमुदकं छायां भक्तं यवसमिन्धनम्।
दूषयन्त्यरयो यस्माज्जानीयाच्छोधयेत्तथा।
तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥
एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते।
तत्रैकः कालसंज्ञस्तु शेषास्त्वागन्तवः स्मृताः ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥
ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्वेदमभाषत।
पुरहितमते तस्माद्वर्त्तेत भिषगात्मवान् ॥
सङ्करः सर्व्ववर्णानां प्रणाशो धर्म्मकर्म्मणाम्।
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः ॥

पुरुषाणां नृपानाञ्च केवलं तुल्यमूर्त्तिता ।
आज्ञा त्यागः क्षमा धैर्य्यं विक्रमश्चाप्यमानुषः ॥
तस्माद्देवमिवाभीक्ष्णं वाङ्मनः कर्म्मभिः शुभैः ।
चिन्तयेन्नृपतिं नित्यं श्रेयांसीच्छन् विचक्षणः ॥
स्कन्धावारे च महति राजगेहादनन्तरम् ।
भवेत्सन्निहितो वैद्यः सर्व्वोपकरणान्वितः ॥
तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ।
उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ॥
स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्वबहिष्कृतः ।
वैद्यो ध्वज इवाभाति नृपतद्विधपूजितः ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ।
एते पादाश्चिकित्सायाः कर्म्मसाधनहेतवः ॥
गुणवद्भिस्त्रिभिःपादैश्चतुर्थो गुणवान् भिषक् ।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥
वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः ।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं विनाध्वरे ॥
वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा ।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयङ्कृती ।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान व्यवसायी विशारदः ।
सत्यधर्म्मपरो यश्च स भिषक् पाद उच्यते ॥
आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि ।

आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम्।
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारि विपर्य्यये।
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥

---

## पञ्चत्रिंशदध्यायः।

अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः ॥ आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्ष्येत। सत्यप्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत ॥ तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्व्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्व्विपरीतैरल्पायुर्म्मिश्रैर्म्मध्यमायुरिति ॥

भवन्ति चात्र ॥ गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः।
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥
गर्भात्प्रभृत्यरोगो यः शनैः समुपचीयते।

शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥
मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ।
अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥
द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ ।
नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः ॥
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ।
जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ॥
ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् ।
तथोरस्यवलीढानि न च स्यात्पृष्ठमायतम् ॥
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ।
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम् ॥

अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति । तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीना । चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः । चतुर्दशाङ्गुलायतः पादः । चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि । अष्टादशाङ्गुला जङ्घा जानूपरिष्टाद्द्वात्रिंशदङ्गुलमेवं पञ्चाशत् । जङ्घायामसमावूरू । द्व्यङ्गुलानि वृषणचिवुकदशन नासापुटभागकर्णमूलनयनान्तराणि । चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्टि-

न्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः। चतुर्विंशत्यङ्गुलौ हस्तः। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ द्वात्रिंशत्परिणाहावूरू। मणिबन्धकूर्परान्तरं षोडशाङ्गुलम्। तलं षट्चतुरङ्गुलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः कर्णावट्वन्तरं चतुर्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति॥

भवन्ति चात्र॥ पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे।

समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्॥

देहः स्वैरङ्गुलैरेष यथावदनुकीर्त्तितः।

युक्तप्रमाणेनानेन पुमान् वा यदि वाऽङ्गना॥

दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति।

मध्यमं मध्यमैरायुर्व्वित्तं हीनैस्तथाऽवरम्॥

अथसारान् वक्ष्यामः॥ स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धसंहतश्वेतास्थि-

दन्तनखं बहुल काममजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धदृढ़दन्तहन्वस्थिनखमस्थिभिः स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णु मेदसा। अच्छिद्रगात्रं गूढ़ास्थिसन्धिं मांसोपचितञ्च मांसेन। स्निग्धताम्रनखनयन तालुजिह्वौष्ठपाणिपादतलं रक्तेन। सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुः सौभाग्ययोरपि।

भवति चात्र। सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः।

परीक्षायुः सुनिपुणो भिषक् सिध्यति कर्म्मसु॥

व्याधिविशेषास्तु प्रागभिहिताः सर्व्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्रैतान् भूयस्त्रिधा परीक्षेत किमसावौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति। तत्रौपसर्गिको यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूलएवोपद्रवसंज्ञः। प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्व्वरूपोऽनुपद्रवश्च। अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः। तत्र सोपद्रवमन्योन्याविरोधिनोपक्रमेत बलवन्तमुपद्रवं वा। प्राक्केवलं यथास्वं प्रतिकुर्व्वीत। अन्यलक्षणे त्वादिव्याधौ प्रयतेत।

भवति चात्र। नास्ति रोगो विना दोषैर्य्यस्मात्तस्माद्विचक्षणः।

अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्॥

प्रागभिहिता ऋतवः।

शीतेशीतप्रतीकारउष्णे चोष्मनिवारणम्।

कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्॥

अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया ।
क्रियाहीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति ॥
यात्युदीर्णं शमयति नान्यं व्याधिं करोति च ।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ।

प्रागभिहितोऽग्निरन्नस्य पाचकः । स चतुर्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन तीक्ष्णः पित्तेन मन्दः श्लेष्मणा चतुर्थः समः सर्वसाम्यादिति । तत्र यो यथा कालमन्नमुपयुक्तं सम्यक्पचति स समः समैर्दोषैः । यः कदाचित्सम्यक्पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठर गौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः । यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः स एवाभिवर्द्धमानोऽत्यग्निरित्या भाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति । यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्द्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः ।

विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥

तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः ।
क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च ।
एवमेवात्यग्नौविशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च

जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः ।

सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥
प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः ।
ध्मायते पाच्यते चापि स्वे स्वे स्थाने व्यवस्थितैः ॥

वयस्तु त्रिविधं बालं मध्यं वृद्धमिति । तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादाइति तेषु सम्वत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति ॥ षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं संपूर्णता हानिरिति । तत्राविंशतेर्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता । अत ऊर्द्धमीषत् परिहाणिर्यावत्सप्ततिरिति ॥ सप्ततेरूर्द्धं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ॥ तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तराभेषजमात्राविशेषा भवन्त्यृतेच परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्वीत । भवन्ति चात्र ॥

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात्क्रियां शनैः ॥

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः ।
कर्शयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरौ ।
रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ॥

बलमभिहितगुणं दौर्ब्बल्यञ्च स्वभावदोषजरादिभिरवेक्षित-

व्यम् ॥ यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेवप्रधान-
मधिकरणानाम् ॥

केचित्कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः ।
तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत् ॥

सत्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्ववैकल्यकरम् ।

सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना ॥
राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ॥

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ॥ सात्म्यानि तु देशका-
लजा त्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृति-
विरुद्धान्यपि यान्यबाधकराणि भवन्ति ।

यो रसः कल्पते यस्य सुखायैव निषेवितः ।
व्यायामजातमन्यद्वा तत्सात्म्यमिति निर्दिशेत् ॥

देशस्त्वानूपो जाङ्गलः साधारण इति ॥ तत्र बह्दकनि-
म्नोन्नत नदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो
मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चा-
नूपः ॥ आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्ष-
प्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः
स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः ॥
उभयदेशलक्षणः साधारण इति ॥ भवन्ति चात्र ॥ समाः
साधारणे यस्माच्छीतवर्षोष्णमारुताः ।

दोषाणां समता जन्तोस्तस्मात्साधारणो मतः ॥
न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः ।
स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः ॥

उचिते वर्त्तमानस्य नास्ति देशकृतं भयम् ।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥
देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थितः ।
सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा ॥
केवलः समदेहाग्नेः सुखसाध्यतमो गदः ।
अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः ॥
क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥
गुणलाभेऽपि सपदि यदि सैव क्रिया हिता ।
कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥
य एवमेनं विधिमेकरूपं बिभर्त्ति कालादिवशेन धीमान् ।
स मृत्युपाशान् जगतो गदौघान्छिनत्ति भैषज्यपरश्वधेन ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो मिश्रकमध्यायं व्याख्यास्यामः ।

मातुलुङ्गाग्निमन्थौ च देवदारु महौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफहृत् ॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहृत् ॥
आगन्तुजे रक्तजे च एष एव विधिः स्मृतः ।
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥
अजगन्धाश्वगन्धा च काला सरलया सह ।

एकैषिकाजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥
एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च ।
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत् ॥
स्निग्धाम्ललवणो वाते कोष्णः शीतः पयोयुतः ।
पित्ते चोष्णः कफे क्षारमूत्राढ्यस्तत्प्रशान्तये ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः ।
शक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥
चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतगृध्रकङ्कानां पुरीषाणि च दारणम् ।
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीडनम् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥
शङ्खिन्यङ्कोठसुमनः करवीर सुवर्चलाः ।
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥
अजगन्धाजशृङ्गी च गवाक्षी लाङ्गलाह्वया ।
पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥
कटुत्रिकं यवक्षारो लवणानि मनःशिला ।
कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा ॥
संशोधनीनां वर्त्तीनां द्रव्याण्येतानि निर्दिशेत् ।
एतैरेवौषधैः कुर्य्यात्कल्कानपि च शोधनान् ॥
कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयोः ।
पूर्व्वोद्दिष्टेषु चाङ्गेषु कुर्य्यात्तैलघृतानि वै ॥
अर्कोत्तमां स्नुहीक्षीरं पिष्ट्वा क्षारोत्तमानपि ।

जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम्॥
पूर्व्वोद्दिष्टानि चान्यानि कुर्य्यात्संशोधनं घृतम्॥
मयूरको राजवृक्षो निम्बः कोषातकी तिलाः।
वृहती कण्टकारी च हरितालं मनःशिला।
शोधनानि च योज्यानि तैले द्रव्याणि शोधने॥
कासीसे सैन्धवे किण्वे वचायां रजनीद्वये।
शोधनाङ्गेषु चान्येषु चूर्णं कुर्व्वीत शोधनम्॥
सालसारादिसारेषु पटोलत्रिफलासु च।
रसक्रिया विधातव्या शोधनी शोधनेषु च॥
श्रीवेष्टके सर्जरसे सरले देवदारुणि।
सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम्॥
कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितम्।
शृतशीतं कषायं वा रोपणार्थेषु शस्यते॥
सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा।
क्षीरिप्ररोहेष्वपि च वर्त्तयो रोपणाः स्मृताः॥
समङ्गा सोमसरला सोमवल्का सचन्दना।
काकोल्यादिश्च कल्कःस्यात् प्रशस्तो व्रणरोपणे॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता।
काकोल्यादिश्च योज्यः स्यात् प्रशस्तो रोपणे घृते॥
कालानुसार्य्यागुरुणी हरिद्रे देवदारु च।
प्रियङ्गवश्च रोध्रश्च तैले योज्यानि रोपणे॥
कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया।
धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते॥

प्रियङ्गुका सर्ज्जरसः पुष्पं कासीसमेव च।
त्वक्चूर्णं धवजं चैव रोपणार्थं प्रशस्यते॥
त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च।
रसक्रियां रोपणार्थे विदधीत यथाक्रमम्॥
अपामार्गोऽश्वगन्धा च तालपत्री सुवर्च्चला।
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः॥
कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला।
कुक्कुटाण्डकपालानि सुमनोमुकुलानि च॥
फले शैरीषकारञ्जे धातुचूर्णानि यानि च।
व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्म्मसु॥

---

## सप्तत्रिंशत्तमोऽध्यायः।

अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः॥

श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाऽऽघातनदेवतायतन-सिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवन-दहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढ़-मूलमुदीच्यां चौषधमाददीतेत्यौषधभूमि परीक्षाविशेषः सामान्यः॥

विशेषतस्तु । तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूल वृक्षशस्यप्राया स्वगुणभूयिष्ठा ॥ स्निग्धा शीतला सन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाम्बुगुणभूयिष्ठा ॥ नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा ॥ रूक्षा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा ॥ मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥

तत्र केचिदाहुराचार्य्याः । प्रावृट्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात्सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति ॥ सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् ॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति । सर्व्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः । सर्व्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीतेति ॥

भवन्ति चात्र । गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ॥

मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥
सर्व्वावयवसाध्येषु पलाशलवणादिषु
व्यवस्थितो न कालोऽस्ति तत्र सर्व्वो विधीयते ॥
गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते ।
तस्माद्भूमिस्वभावेन वीजिनः षड्रसायुताः ॥
अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ।
रस एव सचाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥
सर्व्वलक्षणसम्पन्ना भूमिः साधारणा स्मृता ।
द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥
विगन्धेनापरामृष्टमविपन्नं रसादिभिः ।
नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् ॥
विडङ्गं पिप्पली क्षौद्रं सर्प्पिश्चाप्यनवं हितम् ।
शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् ॥
जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् ।
क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥
प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् ।
प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥

---

## अष्टात्रिंशत्तमोऽध्यायः ।

अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः ।

समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति । तद्यथा । विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शता-

वरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभीचेति ।

विदारीगन्धादिरयं गणः पित्तानिलापहः ।
शोषगुल्माङ्गमर्दोर्ड्वश्वासकासविनाशनः ॥

आरग्वधमदनगोपघोण्टाकुटजपाठाकण्टकीपाटलामूर्वेन्द्र-यव सप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्ग-ष्टाकरञ्जद्वय पटोलकिराततिक्तकानि सुषवीचेति ।

आरग्वधादिरित्येष गणः श्लेष्मविषापहः ।
मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥

वरुणार्त्तगलशिग्रु मधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमा-लमोरटाग्निमन्थसैरीयकद्वयविम्बीवसुकवसिरचित्रकशताव-रीविल्वाज शृङ्गीदर्भा बृहतीद्वयञ्चेति ।

वरुणादिर्गणोह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधीन् ॥

वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभे-दकाग्निमन्थमोरटावसुकवसिरभल्लूककुरुण्टकेन्दीवरकपोतव-ङ्काःश्वदंष्ट्राचेति ॥

वीरतर्वादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥

सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृ-ङ्गीति निशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनताल-शाकनक्तमाल पूतीकाश्वकर्णागुरूणि कालीयकञ्चेति ।

सालसारादिरित्येष गणः कुष्ठविनाशनः ।

मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥

रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालु-
कशल्लकीजिङ्गिनीकदम्बसालाः कदलीचेति ॥

एष रोध्रादिरित्युक्तो मेदः कफहरो गणः ।
योनिदोषहरस्तम्भी वर्ण्यो विषविनाशनः ॥

अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पी-
क्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ।

अर्कादिको गणो ह्येष कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥

सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुख-
कालमालकासमर्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गु-
ण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विष-
मुष्टिकश्चेति ।

सुरसादिर्गणो ह्येष कफहृत्कृमिसूदनः ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥

मुष्ककपलाशधवचित्रकमदनवृक्षशिंशपावज्रवृक्षास्त्रिफला
चेति ।

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत् ।
मेहार्शःपाण्डुरोगघ्नः शर्कराश्मविनाशनः ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्प-
लीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहि-
ङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति ॥

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ।

निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥

एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणु-का व्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालकगु-ग्गुलुसर्जरसतुरुष्ककुन्दुरुकाऽगुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति ॥

एलादिको वातकफौ निहन्याद्विषमेव च।
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥

वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरञ्चेति।
हरिद्रा दारुहरिद्राकलशीकुटजवीजानि मधुकं चेति ॥

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ।
आमातीसारशमनौ विशेषाद्दोषपाचनौ ॥

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्य-कक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छ-गलान्त्रीसुधाः सुवर्णक्षीरी चेति ॥

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः।
आनाहोदरविड्भेदी तथोदावर्त्तनाशनः ॥

बृहतीकण्टकारिकाकुटजफलपाठा मधुकञ्चेति ॥

पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः।
कफारोचकहृल्लासमूत्रकृच्छ्ररुजापहः ॥

पटोलचन्दनकुचन्दनमूर्व्वागुडूचीपाठाः कटुरोहिणी चेति ॥

पटोलादिर्गणः पित्तकफारोचकनाशनः।
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णी माषपर्णी

चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥

पिप्पलीमरिचशृङ्गवेराणि त्रिकटुकम्।

त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान्।

निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥

आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति।

आमलक्यादिरित्येष गणः सर्वज्वरापहः।

चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥

त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलश्चेति।

गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः।

पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥

लाक्षारेवतकुटजाऽश्वमारकट्फलहरिद्राद्वयनिम्बसप्त-च्छदमालत्यस्त्रायमाणा चेति।

कषायस्तिक्तमधुरः कफपित्तार्त्तिनाशनः।

कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥

पञ्च पञ्च मूलान्यत ऊर्द्धं वक्ष्यामः ॥ तत्र त्रिकण्टकबृह-तीद्वय पृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ॥

कषायतिक्तमधुरं कनीयः पञ्चमूलकम्।

वातघ्नं पित्तशमनं वृंहणं बलवर्द्धनम् ॥

विल्वाग्निमन्थटुण्टुकपाटलाकाश्मर्य्यश्चेति महत्।

सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम्।

मधुरानुरसञ्चैव पञ्चमूलं महत् स्मृतम् ॥

अनयोर्दशमूलमुच्यते ॥

गणः श्वासहरो ह्येष कफपित्तानिलापहः।

आमस्य पाचनश्चैव सर्व्वज्वरविनाशनः ॥

विदारीसारिवारजनीगुडूच्योऽजश्टङ्गीचेति वल्लीसंज्ञः ।
करमर्द्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्यइति कण्टकसंज्ञः ॥

रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ ।
सर्व्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ।

मूत्रदोषविकारञ्च रक्तपित्तं तथैवच ।
अन्त्यः प्रयुक्तः क्षीरेणशीघ्रमेव विनाशयेत् ॥

एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ।
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ

त्रिवृतादिकमन्यत्रोपदेच्यामः ।

समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम् ।
चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम् ॥

एभिर्लेपान् कषायांश्च तैलं सर्प्पींषि पानकान् ।
प्रविभज्य यथान्यायं कुर्व्वीत मतिमान् भिषक् ॥

धूमवर्षानिलक्लेदैः सर्व्वर्त्तुष्वनभिद्रुते ।
ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥

समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत् ।
पृथङ्मिश्रान् समस्तान्वा गणं वा व्यस्तसंहतम् ॥

---

॥ एकोनचत्वारिंशत्तमोऽध्यायः ॥

अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥

मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्प-लीकरञ्जप्रपुन्नाडकोविदारकर्वुदारारिष्टाश्वगन्धाविदुलबन्धु-जीवकश्वेता सणपुष्पीविम्बीवचामृगेर्व्वारुचित्राचेत्यूर्द्ध्वभागह-राणि। तत्रकोविदारपूर्व्वाणां फलानि। कोविदारादीनां मूलानि॥

त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवा-क्षीछगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रकक्रिणिहीकुशकाशतिल्व-ककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलक बिभीतकनी-लिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्कज्योतिष्मती-चेत्यधोभागहराणि।
तत्र तिल्वकपूर्वाणांमूलानि। तिल्वकादीनां पाटलान्तानां-त्वचः। कम्पिल्लकफलरजः। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां क्षीराणीति॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका-चेत्युभयतो भागहराणि। एषां स्वरसा इति॥

पिप्पलीविड़ङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवी-रबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्क-लशुनाति विषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृ-ङ्गीमातुलुङ्गीमुरङ्गीपीलुजातीशालतालमधूकलाक्षाहिङ्गुल-वणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि। तत्र करवी-रपूर्व्वाणां फलानि। करवीरादीनामर्कान्तानां मूलानि। ता-लीशपूर्व्वाणां कन्दाः। तालीशादीनामर्जकान्तानां पत्राणि। इङ्गुदीमेषशृङ्गीत्वचौ। मातुलुङ्गीमुरङ्गीपीलुजातीनां पु-

ष्याणि । शालतालमधूकानां साराः । हिङ्गुलाक्षे निर्य्यासौ । लवणानि पार्थिवविशेषाः । मद्यान्यासवसंयोगाः । गोमूत्र-शकृद्रसौ मलाविति ॥

संशमनान्यत ऊर्द्ध्वं वक्ष्यामः ॥ तत्र भद्रदारुकुष्ठहरिद्रावरुण मेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकीकुवेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्यैरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवसिरकाञ्चनकभार्गीकार्प्पासीवृश्चिकालीपत्तूरवदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥

चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारिशतावरीगुन्द्राशैवालकह्लारकुमुदोत्पलकदलीकन्दलीदूर्व्वामूर्व्वाप्रभृतीनि काकोल्यादिन्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥

कालेयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्नाप्रकीर्य्योदकीर्य्येङ्गुदीसुमनःकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥

तत्र सर्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात् । तत्र व्याधिबलादधिकमौषधमुपयुक्तं तमुपशमय्य व्याधिं व्याधिमन्यमावहति अग्निबलादधिकमजीर्णं विष्टभ्यवा पच्यते । पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति । संशमनमेवं संशोधनमतिपातयति । हीनमेभ्यो दत्त-

मकिञ्चित्करं भवति। तस्मात्सममेव विदध्यात्॥

भवन्ति चात्र॥ रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः।

तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु॥

चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम्।

अव्याधिदुर्बलस्यापि शोधनं हि तदा भवेत्॥

व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते।

विडालपदकं चूर्णं देयः कल्कोऽक्षसंमितः॥

स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम्।

भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम्॥

---

## चत्वारिंशत्तमोऽध्यायः॥

अथातो द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः। केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं कस्मादवस्थितत्वादिह खलु द्रव्यं व्यवस्थितं न रसादयो यथामे फले ये रसादयस्ते पक्वे न सन्ति। नित्यत्वाच्च नित्यं हि द्रव्यमनित्या गुणायथा कल्कादिप्रविभागः सएव सम्पन्नरसगन्धोव्यापन्नरसगन्धो वा भवति। स्वजात्यवस्थानाच्च यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि। पञ्चेन्द्रियग्रहणाच्च पञ्चभिरिन्द्रियैर्गृह्यते द्रव्यं न रसादयः। आश्रयत्वाच्च द्रव्यमाश्रिता रसादयो भवन्ति। आरम्भसामर्थ्याच्च द्रव्याश्रित आरम्भो यथा विदारिगन्धादिमाहृत्य सङ्क्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भः। शास्त्रप्रामाण्याच्च शास्त्रे हि द्रव्यं प्रधा-

नमुपदेशो हि योगानां यथा मातुलुङ्गाग्निमन्थौ चेति न रसा-
दय उपदिश्यन्ते । क्रमापेक्षितत्वाच्च रसादीनां रसादयो
हि द्रव्यक्रममपेक्षन्ते यथा तरुणे तरुणाः सम्पूर्णे सम्पूर्णा
इति । एकदेशसाध्यत्वाच्च द्रव्याणामेकदेशेनापि व्याधयः
साध्यन्ते यथा महावृक्षक्षीरेणेति तस्माद्द्रव्यं प्रधानं द्रव्यल-
क्षणन्तु क्रियागुणवत् समवायिकारणमिति । नेत्याहुरन्ये ।
रसास्तु प्रधानं कस्मादागमादागमो हि शास्त्रमुच्यते शास्त्रे
हि रसा अधिकृता यथा रसायत्त आहार इति तस्मिंश्च
प्राणाः । उपदेशाच्चोपदिश्यन्ते हि रसा यथा मधुराम्ललवणा
वातं शमयन्ति । अनुमानाच्च रसेन ह्यनुमीयते द्रव्यं यथा
मधुरमिति । ऋषिवचनाच्च ऋषिवचनं वेदो यथा किञ्चिदि-
ज्यार्थं मधुरमाहरेदिति । तस्माद्रसाः प्रधानं रसेषु गुण
संज्ञा । रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ नेत्याहुरन्ये । वीर्य्यं
प्रधानमिति कस्मात्तद्वशेनौषधकर्म्मनिष्पत्तेः । इहौषधकर्म्मा-
ण्यूर्द्ध्वाधोभागोभयभागसंशोधनसंशमनसंग्राहकाग्निदीपनप्र-
पीड़नलेखनवृंहणरसायनवाजीकरणश्वयथुकरविलयनदह-
नदारणमादनप्राणघ्नविषप्रशमनानि वीर्य्यप्राधान्याद्भवन्ति ।
तच्च वीर्य्यं द्विविधमुष्णं शीतं चाग्निषोमीयत्वाज्जगतः ।
केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं
मृदु तीक्ष्णं चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभू-
यात्मकर्म्म कुर्व्वन्ति यथा तावन्महत्पञ्चमूलं कषायं तिक्तानु-
रसं वातं शमयेदुष्णवीर्य्यत्वात् तथा कुलत्थः कषायः कटुकः
पलाण्डुः स्नेहभावाच्च । मधुरश्चेक्षुरसो वातं वर्द्धयति शीत-

वीर्य्यत्वात्। कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्य-त्वादम्लमामलकं लवणं सैन्धवञ्च। तिक्ता काकमाची पित्तं वर्द्धयत्युष्णवीर्य्यत्वान्मधुरामत्स्याश्च। कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्। अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वान्मधुरं क्षौद्रञ्च। तदेतन्निदर्शनमात्रमुक्तम्॥

भवन्ति चात्र॥ ये रसा वातशमना भवन्ति यदि तेषु वै।

रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥

ये रसाः पित्तशमना भवन्ति यदि तेषु वै।

तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्मकारिणः॥

ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै।

स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते॥

तस्माद्वीर्य्यं प्रधानमिति। नेत्याहुरन्ये। विपाकः प्रधा-नमिति कस्मात् सम्यङ्मिथ्याविपाकत्वादिह सर्वद्रव्याण्यभ्यव-हृतानि सम्यक् मिथ्या विपक्वानि गुणं दोषं वा जनयन्ति। तत्राहुरन्ये प्रतिरसं पाक इति। केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकंचेति तत्तु न सम्यक् भूतगुणादागमा-च्चाम्लो विपाको नास्ति पित्तं हि विदग्धमम्लतामुपैत्याग्ने-यत्वात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्वेषा मिति केचिदाहुर्दृष्टान्तं चोपदिशन्ति यथा तावत् क्षीरं स्थालीगत मभिपच्यमानं मधुरमेवस्यात्तथा शालियवमुद्गा-दयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्व-दिति। केचिद्वदन्त्यबलवन्तो बलवतां वशमायान्तीत्येव-

मनवस्थितिस्तस्मादसिद्धान्त एव । आगमे हि द्विविध एव पाको मधुरः कटुकश्च तयोर्म्मधुराख्यो गुरुः कटुकाख्यो लघुरिति तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुण-साधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्यः शेषाणि लघूनि तस्माद्द्विविध एव पाक इति ।

भवन्ति चात्र । द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः ।
निर्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु ।
निर्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥
पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः ।
चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः ॥
तद्द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्य्येण सेवितम् ।
किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा
पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात् ।
रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठमतः स्मृतम् ॥
जन्म तु द्रव्यरसयोरन्योऽन्यापेक्षकं स्मृतम् ।
अन्योऽन्यापेक्षकं जन्म यथा स्याद्देहदेहिनोः ॥
वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ।
रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥
द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ।
श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः ॥
अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥

प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ।
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन ॥
सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ॥
तस्मात्तिष्ठेत्तु मतिमानागमे नतु हेतुषु ॥

---

॥ एकचत्वारिंशत्तमोऽध्यायः ॥

अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः॥

पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिरुत्कर्षस्त्व भिव्यञ्जको भवतीदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति । तत्र स्थूलसारसान्द्रमन्दस्थिरखर-गुरुकठिनगन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं तत्स्थैर्य्यबलसङ्घातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति ॥

शीतस्तिमितस्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलरसबहुल-मीषत्कषायाम्ललवणंमधुररसप्रायमाप्यं तत् स्नेहनप्रह्लादन-क्लेदनबन्धनविष्यन्दनकरमिति ॥

उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदंरूपगुणबहु ..मीषदम्ल-लवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसं तद्दहन पचनदारणतापनप्रकाशनप्रभावर्णकरमिति ॥

सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशे-षतः कषायमिति वायवीयं तद्वैशद्यलाघवग्लपनविरूक्षण-विचारणकर मिति ।

श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमा-काशीयं तस्मार्द्दवशौषिर्य्यलाघवकरमिति ॥

अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं वाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कर्म्मकराणि भवन्ति ॥ तानि यदा कुर्वन्ति स कालः यत्कुर्वन्ति तत्कर्म्म येन कुर्वन्ति तद्वीर्य्यं यत्र कुर्वन्ति तदधिकरणं यथा कुर्वन्ति स उपायो यन्निष्पादयति तत्फलमिति ॥

तत्र विरेचनद्रव्याणि पृथ्व्यम्बुगुणभूयिष्ठानि पृथिव्यापौ गुर्व्वौ गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठामनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति तस्माद्वमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभयतोभागम् । आकाशगुणभूयिष्टं संशमनम् । संग्राहकमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दीपनमग्निगुणभूयिष्ठम् । लेखनमनिलानलगुणभूयिष्ठम् । वृंहणं पृथिव्यम्बुगुणभूयिष्ठम् । एवमौषधकर्म्माण्यनुमानात्साधयेत् ।

भवन्ति चात्र । भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः ।

भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् ॥

खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम्

वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥

आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते ।

वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥

एवमेतद्गुणाधिक्यं द्रव्ये विनिश्चितम् ।

द्रव्येद्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचारयेत् ॥

तत्र यद्दमे गुणा वीर्य्यसंज्ञकाः शीतोष्णस्निग्धरूक्षमृदुतीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णावाग्नेयौ। शीतपिच्छिलावम्बुगुणभूयिष्ठौ। पृथिव्यम्बुगुणभूयिष्ठः स्नेहः। तोयाकाशगुणभूयिष्ठं मृदुत्वम्।

वायुगुणभूयिष्ठं रौक्ष्यम्। क्षितिसमीरणगुणभूयिष्ठं वैशद्यम्। गुरुलघु विपाकावुक्तगुणौ॥ तत्रोष्णस्निग्धौ वातघ्नौ। शीतमृदुपिच्छिलाः पित्तघ्नाः। तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः॥ गुरुपाको वातपित्तघ्नः। लघुपाकः श्लेष्मघ्नः। तेषां मृदुशीतोष्णाः स्पर्शग्राह्याः। पिच्छिलविशदौ चक्षुःस्पर्शाभ्याम्। स्निग्धरूक्षौ चाक्षुषौ। शीतोष्णौ सुखदुःखोत्पादनेन। गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च। लघुर्बद्धविण्मूत्रतयामारुतकोपेनच। तत्र तुल्यगुणेषु भूतेषु रसविशेषमुपलक्षयेत्। तद्यथा। मधुरो गुरुश्च पार्थिवः। मधुरः स्निग्धश्चाप्य इति॥

भवति चात्र॥ गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा।
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः॥

---

॥ द्विचत्वारिंशत्तमोऽध्यायः

अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः॥

आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः। तस्मादाप्यो रसः परस्परसंसर्गात्परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यम-

सुश्लक्ष्णपिक कर्षान्तु ग्रहणम् । स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते । तद्यथा । मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति । ते च भूयः परस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते ॥ तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः । भूम्यग्निगुणबाहुल्यादम्लः । तोयाग्निगुणबाहुल्याल्लवणः । वाय्वग्निगुणबाहुल्यात्कटुकः । वाय्वाकाशगुणबाहुल्यात्तिक्तः । पृथिव्यनिलगुणबाहुल्यात्कषाय इति ॥ तत्र मधुराम्ललवणा वातघ्नाः । मधुरतिक्तकषायाः पित्तघ्नाः । कटुतिक्तकषायाः श्लेष्मघ्नाः । तत्र वायुरात्मनैवात्मा पित्तमाग्नेयं श्लेष्मा सौम्य इति ॥ त एवरसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च ॥ केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्या आग्नेयाश्च। तत्र मधुर तिक्तकषायाः सौम्याः कट्वम्ललवणा आग्नेयाः ॥ मधुराम्ललवणाः स्निग्धा गुरवश्च । कटुतिक्तकषाया रूक्षा लघवश्च । सौम्याःशीता आग्नेयाश्चोष्णाः ॥

तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भगुणलक्षणो वायुस्तस्य समानयोनिः कषायो रसःसोऽस्य शैत्यात् शैत्यं वर्द्धयति रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यं वैष्टम्भाद्वैष्टम्भमिति ।

औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं तस्य समान योनिः कटुको रसः सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति तैक्ष्ण्यात्तैक्ष्ण्यं रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यमिति ॥

माधुर्य्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः श्लेष्मा तस्य समान योनिर्मधुरो रसः सोऽस्य माधुर्य्यान्माधुर्य्यं वर्द्धयति

स्नेहात् स्नेहं गौरवाद्गौरवं शैत्यात् शैत्यं पैच्छिल्यात्पैच्छिल्यमिति तस्य पुनरन्ययोनिः कटुको रसः स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्य्यमभिभवति रौच्यात् स्नेहं लाघवाद्गौरवमौष्ण्यात् शैत्यं वैशद्यात्पैच्छिल्यमिति। तदेतन्निदर्शनमात्रमुक्तम्॥

रसलक्षणमतऊर्द्ध्वं वक्ष्यामः॥ तत्र यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखावलेपं जनयति श्लेष्माणं चाभिवर्द्धयति स मधुरः। यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धाञ्चोत्पादयति सोऽम्लः। यो भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्दवं चापादयति स लवणः। यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुकः। यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षञ्च स तिक्तः। यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीडयति च स कषायः।

रसगुणानत ऊर्द्ध्वं वक्ष्यामः। तत्र मधुरो रसो रसरक्तमांसमेदोऽस्थिमज्जौजः शुक्रस्तन्यवर्द्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत्सन्धानः शोणितरसप्रसादनो बालवृद्धक्षतक्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः क्रिमिकफकरश्चेति स एवं गुणोऽप्येक एवात्यर्थमासेव्यमानः कासश्वासालसकवमथुवदनमाधुर्य्यस्वरोपघातक्रिमिगलगण्डानापादयति तथार्बुद श्लीपदवस्तिगुदोपलेपाभिष्यन्दप्रभृतीन् जनयति।

अम्लो जरणः पाचनः पवननिग्रहणोऽनुलोमनः कोष्ठविदाही वहिः शीतः क्लेदनः प्रायशो हृद्यश्चेति स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसंमीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति तथा क्षताभिहतदग्धदष्टभग्नशूनरुग्णप्रच्युतावमूत्रितविसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्चेति।

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्वरसप्रत्यनीको मार्गविशोधनः सर्वशरीरावयवमार्दवकरश्चेति स एवं गुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान् तथा मुखाक्षिपाकं रक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफकृमि विषकुष्ठकण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्यशुक्रमेदसामुपहन्ताचेति स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रम मदगलताल्वोष्ठशोषगात्रसन्तापबलविघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति।

तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्चेति स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्दित शिरःशूलभ्रमतोदभेदच्छेदास्यवैरस्यान्यापादयति।

कषायः संग्राहकी रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीडास्यशोषोदराध्मानवाक्यग्रह-मन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपण प्रभृतीन् जनयति।

अतः सर्वेषामेव द्रव्याण्युपदेक्ष्यामः।

तद्यथा। काकोल्यादिः क्षीरघृतवसामज्जशालिषष्टिक-यव गोधूममाषशृङ्गाटककसेरुकत्रपुसैर्व्वारुककर्कारुकाला-बुकालिन्द कतकगिलोड्यपियालपुष्करवीजकाश्मर्य्य मधूक-द्राक्षाखर्जूरराजादन तालनालिकेरेक्षुविकारबलातिबला-त्मगुप्ताविदारीपयस्यागोक्षुरक क्षीरमोरटमधूलिकाकुष्मा-ण्डप्रभृतीनि समासेन मधुरो वर्गः।

दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दवदरको-लप्राचीनामलकतिन्तिडीककोशाम्रभव्यपारावतवेत्रफलल-कुचाम्लवेतसदन्त शठदधितक्रसुराशुक्तसौवीरकतुषोदकधा-न्याम्लप्रभृतीनि समासेनाम्लो वर्गः।

सैन्धवसौवर्चलविडपाक्यरोमकसामुद्रकपक्तिमयवक्षारो-षप्रसूतसुवर्चिकाप्रभृतीनि समासेन लवणो वर्गः।

पिप्पल्यादिः सुरसादिः शिग्रुमधुशिग्रुमूलकलशुनसुमु-खशीत शिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमु-स्तलाङ्गलकीशुकनाशापीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुको वर्गः।

आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णीवेत्रकरीरहरिद्राद्व-

येन्द्रयव वरुणस्वादुकण्टकसप्तपर्णबृहतीद्वयशङ्खिनीद्रवन्ती-त्रिवृत्कृतवेधन कर्कोटककारवेल्लकवार्त्ताककरीरकरवीरसुमनःशङ्खपुष्पापामार्गत्रायमाणाऽशोकरोहिणीवैजयन्तीसुवर्च-लापुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः ।

न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादी रोध्रादिस्त्रिफलाशल्ल-कीजम्बाम्रवकुलतिन्दुकफलानि कतकशाकपाषाणभेदक-वनस्पतिफलानि सालसारादिश्च प्रायशः कुरवककोविदार-कजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि नीवारकाद्या मुद्गादयश्च समासेन कषायो वर्गः ।

तत्रैषां रसानां संयोगास्त्रिषष्टिर्भवन्ति । तद्यथा । पञ्च-दशद्विकाविंशतिस्त्रिकाः पञ्चदश चतुष्काः षट् पञ्चका एकशः षड्रसा एकः षट्क इति तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥ भवति चात्र ॥ जग्धाः षडधिगच्छन्ति बलिनो वशतां रसाः । यथा प्रकुपिता दोषा वशं यान्ति बलीयसः ॥

---

॥ त्रिचत्वारिंशत्तमोऽध्यायः ॥

अथातो वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ वमनद्रव्याणां फलाद्यानां मदनफलानि श्रेष्ठतमानि भवन्ति ॥ अथ मदनपुष्पाणामातपपरिशुष्काणां चूर्णं प्रकुच्य प्रत्यक्पुष्पी सदापुष्पीनिम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्तां मात्रां पाययित्वा वामयेत् मदनशलाटुचूर्णान्येवं वा वकुल-

रम्यकोपयुक्तानि मधुलवणयुक्तान्यभिप्रतप्तानि मदन शला-
टुचूर्णसिद्धां वा तिलतण्डुलयवागूम्। निर्वृत्तानां वा नाति-
हरितपाण्डूनां कुशमूढावबद्ध मृन्मोमयप्रलिप्तानां यवतुषमुद्ग-
माषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां
फलपिप्पलीरुद्धृत्यातपे शोषयेत् तासां दधिमधुपललविमृ-
दितपरिशुष्काणां सुभाजनस्थानामन्त र्नखमुष्टिमुष्णे यष्टी-
मधुककषाये कोविदारादीनामन्यतमे वा कषाये विमृद्य
रात्रिपर्य्युषितं मधुसैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः
प्राङ्मुखमातुरं पाययेतानेन मन्त्रेणाभिमन्त्र्य।

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः।
ऋषयः सौषधीग्रामा भूतसङ्घास्तु पान्तु ते॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥

विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिष्वप्रवर्त्तमाने वा
दोषे पिप्पलीव चागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः
पुनः पुनः प्रवर्त्तयेदासम्यग्वान्तलक्षणादिति॥ मदनफलम-
ज्जचूर्णंवा तत्क्वाथपरिभावितं मदनफलकषायेण मदनफल-
मज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्तांमदनफलमज्ज-
सिद्धं वा पयः। मदनफलमज्जसिद्धेन वा पयसा यवागूम-
धोभागास्रक्पित्तहृद्दाहयोः॥ मदनफलमज्जसिद्धस्य वा
पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छ-
र्द्दिमूर्च्छातमकेषु॥ मदनफलमज्जस्नेहं भल्लातकस्नेहवदा-
दाय फाणितीभूतं लेहयेदातपपरिशुष्कं वा मदनफल-

मज्जचूर्णं जीवन्तीकषायेण पित्ते कफस्थानगते ॥ मदनफल-मज्जक्वाथं वा पिप्पल्यादिप्रतीवापं तच्चूर्णं वा निम्बकूपिका-कषाययोरन्यतरेण सन्तर्पणं कफजव्याधिहरं मदनफलमज्ज-चूर्णं वा मधकक्काश्मर्य्यद्राक्षाकषायेण ॥ मदनफलविधान-मुक्तम् ॥

जीमूतककुसुमचूर्णं वा पूर्व्ववदेवं क्षीरेण निर्वृत्तेषु क्षीरयवागूंरोमशेषु सन्तानिकामरोमशेषु च दध्युत्तरं हरितपाण्डुषु दधि तत्कषायसंसृष्टां वा सुरां कफारोचककास-श्वासपाण्डुरोगयक्ष्मसु पर्य्यागतेषु मदनफलमज्जवदुपयोगः तद्वदेव कुटजफलविधानम् ॥ कृतवेधनानामप्येष एव कल्पः । इक्ष्वाकुकुसुमचूर्णं वा पूर्व्ववदेव क्षीरेण कासश्वासच्छर्दि-कफरोगेषूपयोगः ।

धामार्गवस्यापि मदनफलमज्जवदुपयोगो विशेषतस्तु गर-गुल्मोदरकासश्वासश्लेष्मामयेषु वार्यां वा कफस्थानगते कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां बहु-शश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति तत्त्वनवबद्धदो-षेषु यवागूमाकण्ठात्पीतवत्सु च विदध्यात् । वमनविरेचन-शिरोविरेचनद्रव्याण्येवं वा प्रधानतमानि भवन्ति ॥

भवतश्चात्र ॥ वमनद्रव्ययोगानां दिगियं सम्प्रकीर्त्तिता ।
तां विभज्य यथाव्याधि कालशक्तिविनिश्चयात् ॥
कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान् ।
पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥

---

## ॥चतुश्चत्वारिंशत्तमोऽध्यायः॥

अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने।
प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी॥
तैलेष्वेरण्डजन्तैलं स्वरसे कारवेल्लिका।
सुधापयः पयःसूक्तमिति प्राधान्यसंग्रहः॥

तेषांविधानं वक्ष्यामि यथावदनुपूर्वशः।
वैरेचनद्रव्यरसानुपीतं मूलं महच्चैवहतसमस्तदोषम्।
चूर्णीकृतं सैन्धवनागराढ्यमल्लैः पिबेन्मारुतरोगजुष्टः॥
इक्षोर्विकारैर्मधुरैरसैस्तत् पैत्ते गदे क्षीरयुतं पिबेद्वा।
गुडूच्यरिष्टत्रिफलारसेन सव्योषमुत्रं कफजे पिबेद्वा॥
त्रिवर्णकत्र्यूषणयुक्तमेतद्गुडेन लिह्यान्नवेन चूर्णम्।
प्रस्थे च तन्मूलरसस्य दत्वा तन्मूलकल्कं कुडवप्रमाणम्।
कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेतदद्यात्॥
तत्कल्कभागः समहौषधार्द्धः ससैन्धवो मूत्रयुतश्च पेयः॥
समास्तुवृन्नागरकाऽभयाः स्युर्भागार्द्धकं पूगफलं सुपक्वम्।
विडङ्गसारो मरिचं सदारु योगः सशिग्रुद्भवमूत्रयुक्ताः॥
विरेचनद्रव्यभवन्तु चूर्णं रसेन तेषां मतिमान् विमृद्य।
तन्मूलसिद्धेन च सर्पिषाक्तं संव्यक्तदाक्ष्मे गुटिकीकृतश्च॥
गुडे च पाकाभिमुखे निधाय चूर्णीकृतं सम्यगिदं विपाच्य।
शीतं त्रिजातात्तमथो विमृद्य योगानुरूपागुटिकाः प्रयोज्याः
वैरेकीयद्रव्यचूर्णस्य भागं सिद्धं सार्द्धं द्वाधभागैश्चतुर्भिः।

ाम्लञ्जीयात् सर्पिषा तच्छृतेन तत्क्वाथोष्मस्वेदितं सामितञ्च ॥
पाकप्राप्ते फाणिते चूर्णितं तत्क्षिप्तं पक्वं चावतार्य्य प्रयत्नात् ।
शीतीभूता मोदका हृद्यगन्धाः कार्य्यास्त्वेते भक्ष्यकल्पाः समासात् ॥
रसेन तेषां परिभाव्य मुद्गान् यूषः ससिन्धूद्भवसर्पिरिष्टः ।
विरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद्दमनौषधैश्च ॥
भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ।
पक्वञ्च सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम् ॥
सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ।
लिह्यान्मधुघृताभ्यान्तु तृड्दाहज्वरशान्तये ॥
शर्कराक्षौद्रसंयुक्तं तृट्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥
पचेत्त्रिवृत् सिताक्षौद्रं पलार्द्धकुडवान्वितम् ।
त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद्विरेचनम् ॥
त्रिवृच्छ्यामाक्षारशुण्ठीपिप्पलीर्मधुनाप्लुयात् ।
सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥
बीजाढ्यपथ्याकाश्मर्य्यधात्रीदाडिमकोलजान् ।
तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् ॥
घनीभूतं त्रिसौगन्ध्यं त्रिवृत्क्षौद्रसमन्वितम् ।
लेह्यमेतत्कफप्रायैः सुकुमारैर्विरेचनम् ॥
नीलीतुल्यं त्वगेलञ्च तैस्त्रिवृत्त्वसितोपला ।
चूर्णं सन्तर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥
त्रिवृच्छ्यामासिताकृष्णात्रिफलामाक्षिकैः समैः ।
मोदकाः सन्निपातोर्द्ध्वरक्तपित्तज्वरापहाः ॥

दृष्टङ्गागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा ।
क्षारकृष्णाविडङ्गानि संचूर्ण्य मधुसर्पिषा ॥
लिह्याद्गुडेन गुटिकां कृत्वा वाप्यथ भक्षयेत् ।
कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् ॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ।
चूर्णं श्यामातृवृन्नीली कटी मुस्ता दुरालभा ॥
चव्येन्द्रवीजं त्रिफला सर्पिर्मांसरसाम्बुभिः ।
पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते ॥
वैरेचनिकनिःक्वाथभागाः प्रोतास्त्रयो मताः ।
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥
तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत् ।
कलसे कृतसंस्कारे विभज्यर्त्तू हिमाहिमौ ॥
मासादूर्द्ध्वं जातरसमासवं मधुगन्धिकम् ।
पिबेदसावेव विधिः क्षारमूत्रासवेष्वपि ॥
वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ।
सुधौतांस्तत्कषायेण शालीनाञ्चापि तण्डुलान् ॥
अवक्षुद्यैकतः पिण्डान्कृत्वा शुष्कान् सुचूर्णितान् ।
शालितण्डुलचूर्णञ्च तत्कषायोपसाधितम् ॥
तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ।
मण्डोदकार्थं क्वाथञ्च दद्यात्तत्सर्व्वमेकतः ॥
निदध्यात्कलसे तान्तु सुरां जातरसां पिबेत् ।
एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ॥
मूलानि त्रिवृतादीनां प्रथमस्य गणस्य च ।

महतः पञ्चमूलस्य मूर्व्वाशार्ङ्गष्टयोरपि ॥
सुधां हैमवतीं चैव त्रिफलातिविषे वचाम् ।
संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥
कुर्य्यादिः क्वाथमेकस्मिन्नेकस्मिन् चूर्णमेव तु ।
तुषांस्तस्मिंस्तु निःक्वाथे भावयेद्बहुशो यवान् ॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ।
चतुर्थं भागमावाप्य चूर्णानामनुकीर्त्तितम् ॥
प्रक्षिप्य कलसे सम्यक् समस्तं तदनन्तरम् ।
तेषामेव कषायेण शीतलेन सुयोजितम् ॥
पूर्व्ववत्सन्निदध्यात्तु ज्ञेयं सौवीरकं हि तत् ॥
पूर्व्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ।
भागं संक्षुद्य संहृज्य यवान् स्थाल्यामधिश्रयेत् ॥
अजस्रङ्गाः कषायेण तानभ्यासिच्य साधयेत् ।
सुसिद्धांश्चावतार्य्यैतानौषधिभ्यो विवेचयेत् ॥
विमृद्य सतुषान् सम्यक ततस्तान् पूर्व्ववन्मितान् ।
पूर्व्वोक्तौषधभागस्य चूर्णं दत्वा तु पूर्व्ववत् ॥
तेनैव सह यूषेण कलसे पूर्व्ववन्न्यसेत् ।
ज्ञात्वा जातरसञ्चापि तत्तु शोदकमादिशेत् ॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्त्तितः ।
षड्रात्रात्सप्तरात्राद्वा ते च पेये प्रकीर्त्तिते ॥
वैरेचनेषु द्रव्येषु त्रिवृन्मूलविधिः स्मृतः ।
दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे ॥
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत् ।

ततस्तृवृद्विधानेन योजयेत् श्लेष्मपित्तयोः ॥
तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ।
सर्पिश्च पक्कं वीसर्पकच्छादाहालजीर्जयेत् ॥
मेहगुल्मानिलश्लेष्मविबन्धांस्तैलमेव च ।
चतुःस्नेहं शकृच्छ्रक्रवातसंरोधजा रुजः ॥
दन्तीद्रवन्तीमरिचकनकाह्वयवासकैः ।
विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितैः ॥
सप्ताहं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ।
जीर्णे सन्तर्पणं चौद्रं पित्तश्लेष्मरुजापहम् ।
अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिवर्हणम् ॥
गुडस्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्वृतोर्दश ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ।
ततः खादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे ॥
दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ।
व्योषं त्रिजातकं मुस्ता विड़ङ्गामलके तथा ॥
नवैतानि समांशानि त्रिवृदष्टगुणानि वै ।
कृत्वा चूर्णीकृतानीह दन्तीभागद्वयं तथा ॥
सर्व्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ।
षड्भिश्च शर्कराभागैरीषत्क्षौद्रसमाक्षिकैः ॥
पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत् ।
वस्तिरुक् तृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ॥
निर्यन्त्रणमिदं सर्व्वं विषघ्नन्तु विरेचनम् ।

त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम् ॥
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ।
भक्ष्यरूपसधर्म्मत्वादाढ्येष्वेव विधीयते ॥
तिल्वकस्य त्वचं बाह्यामन्तर्व्वल्कविवर्जिताम् ।
चूर्ण्ययित्वा तु तौ भागौ तत्कषायेण गालयेत् ॥
तृतीयं भावितं तेन भागं शुष्कन्तु भावितम् ।
दशमूलकषायेण त्रिवृद्वत् संप्रयोजयेत् ॥
विधानं त्वचु निर्दिष्टं फलानामथ वक्ष्यते ।
हरीतक्याः फलं त्वस्थिवियुक्तं दोषवर्ज्जितम् ॥
योज्यं त्रिवृद्विधानेन सर्व्वव्याधिनिवर्हणम् ।
रसायनं परं मेध्यं दुष्टान्तर्व्रणशोधनम् ॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानिच तत्सर्व्वं गोमूत्रेण विरेचनम् ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ।
सैन्धवं शृङ्गवेरञ्च गोमूत्रेण विरेचनम् ॥
नीलिनीफलचूर्णञ्च नागराभययोस्तथा ।
लिह्याद्गुडेन सलिलं पश्चादुष्णं पिवेन्नरः ॥
पिप्पल्यादिकषायेण पिवेत्पिष्टां हरीतकीम् ।
सैन्धवोपहितः सद्य एष योगो विरेचयेत् ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥
वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी ।
सन्तर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ॥

शीतमामलकं रूक्षं पित्तमेदःकफापहम्।
विभीतकमनुष्णन्तु कफपित्तनिवर्हणम्॥
त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च।
त्रिफला सर्व्वरोगघ्नी त्रिभागघृतमूर्च्छिता॥
वयसःस्थापनं चापि कुर्य्यात् सततसेविता।
हरीतकीविधानेन फलान्येवं प्रयोजयेत्॥
विरेचनानि सर्व्वाणि विशेषाच्चतुरङ्गुलात्।
फलं काले समुद्धृत्य सिकतायां निधापयेत्॥
सप्ताहमातपे शुष्कं ततो मज्जानमुद्धरेत्।
तैलं ग्राह्यं जले पक्वा तिलवद्वा प्रपीड्य च॥
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश।
लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम्।
सुखोदकञ्चानुपिबेदेष योगो विरेचयेत्॥
एरण्डतैलं त्रिफलाक्काथेन द्विगुणेन तु।
युक्तं पीतं तथा क्षीररसाभ्यान्तु विरेचयेत्॥
बालवृद्धक्षतक्षीणसुकुमारेषु योजितम्॥
फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत।
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम्॥
अज्ञप्रयुक्तं तद्धन्ति विषवत्कर्म्मविभ्रमात्।
विजानता प्रयुक्तन्तु महान्तमपि सञ्चयम्॥
भिनत्त्याश्वेव दोषाणां रोगान् हन्तिच दुस्तरान्।
महत्याः पञ्चमूल्यास्तु वृहत्योश्चैकशः पृथक्॥
कषायैः समभागन्तु तदङ्गारैर्व्विशोषितम्।

अम्लादिभिः पूर्व्ववत्तु प्रयोज्यं कोलसम्मितम् ॥
महावृक्षपयः पीतैर्यवागूस्तण्डुलैः कृता ।
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥
लेहो वा साधितः सम्यक् स्नुहीक्षीरसिताघृतैः ।
भाविताश्च स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ॥
चूर्णं काम्पिल्लकं वापि तत्पीतं गुटिकीकृतम् ।
सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ॥
मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततःपरम् ।
क्षौमं तेनैव चूर्णेन माल्यं वसनमेव च ॥
आघ्रायावृत्य वा सम्यक् मृदुकोष्ठो विरिच्यते ।
क्षीरत्वक्फलमूलानां विधानैः परिकीर्त्तितैः ।
अवेक्ष्य सम्यग्योगादीन् यथावदुपयोजयेत् ॥
त्रिवृच्छ्यामाशितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥
लिह्यात् सर्पिर्म्मधुभ्याञ्च मोदकं वा गुडेन वा ।
भक्षयेन्निष्परीहारमेतत् श्रेष्ठं विरेचनम् ॥
गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् व्याधीनेतदपोहति ॥
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ।
भक्ष्यान्नलेह्येषु च तेषु तेषु विरेचनान्यग्रमतिर्व्विदध्यात् ॥
क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम् ।
कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः ॥

---

## ॥ पञ्चचत्वारिंशत्तमोऽध्यायः ॥

### ॥ अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥

पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारण-माश्वासजननं श्रमघ्नं क्लमपिपासामदमूर्च्छातन्द्रानिद्रादा-हप्रशमनमेकान्ततः पथ्यतमञ्च तदेवावनीपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचुण्टी-प्रस्रवणोद्भिद्विकिर केदारपल्वलादिषु स्थानेष्ववस्थितमिति। तत्र लोहितकपिलपाण्डुपीतनील शुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि सम्भ-वन्तीत्येके भाषन्ते तत्तु न सम्यक् तत्र पृथिव्यादीनामन्यो-न्यानुप्रवेशकृतःसलिलरसो भवत्युत्कर्षापकर्षेण तत्र स्वगुण भूयिष्ठायां भूमावम्लं लवणञ्च। अम्बुगुणभूयिष्ठायां मधुरम्। तेजोगुण भूयिष्ठायां कटुकं तिक्तञ्च। वायुगुणभूयिष्ठायां कषायञ्च। आकाश गुणभूयिष्ठायामव्यक्तरसमव्यक्तं ह्याका-शमित्यतस्तत्प्रधानमव्यक्तरसत्वात् तत्पेयमान्तरीक्षालाभे। तत्रान्तरीक्षं चतुर्व्विधम्। तद्यथा। धारं कारं तौषारं हैममिति। तेषां धारं प्रधानं लघुत्वात्तत्पुनर्द्विविधं गाङ्गं सामुद्रं चेति। तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति तयोर्द्वयोरपि परीक्षणं कुर्व्वीत शाल्योदनपिण्डमकुथितम विदग्धं रजतभाजनोपहितं वर्षति देवे वहिष्कुर्व्वीत स यदि मुहूर्त्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्य-वगन्तव्यं वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्त-न्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भ-

वति। गाङ्गं पुनः प्रधानं तदुपाददीताश्वयुजे मासि शुचिशुक्लविततपटैकदेशच्युतमथ वा हर्म्यतलपरिभ्रष्टमन्यैर्व्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृण्मये वा पात्रे निदध्यात्तत्सर्व्वकालमुपयुञ्जीत तस्यालाभे भौमम्। तच्चाकाशगुणबहुलंतत्पुनः सप्तविधम्। तद्यथा। कौपं नादेयं सारसं ताडागं प्रास्रवणमौद्भिदं चौण्ट्यमिति तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत महागुणत्वात् शरदि सर्वं प्रसन्नत्वात् हेमन्ते सारसं ताडागं वा वसन्ते कौपंप्रास्रवणं वा ग्रीष्मेष्वेवं प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्वञ्चेति॥

कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्।
तृणपर्णोत्करयुतं कलुषं विषसंयुतम्॥
योऽवगाहेत वर्षासु पिवेद्वापि नवंजलम्।
स वाह्याभ्यन्तरान् रोगान् प्राप्नुयात्क्षिप्रमेव तु॥

तत्र यत् शैवालपङ्कहटतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात्॥ तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् सम्भवन्ति। तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः। पङ्कसिकता शैवालबहुवर्णता रूपदोषाः। व्यक्तरसतारसदोषः। अनिष्टगन्धता गन्धदोषः। यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः। यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोष इति। त एते आन्तरिक्षे न सन्ति॥ व्यापन्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्व्वापणं प्रसादनञ्च

कर्त्तव्यं नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासन-
मिति ॥

सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा ।
पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिवेत् ॥
व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम् ।
दोषसञ्जननं ह्येतन्नादद्दीताहितन्तु तत् ॥
व्यापन्नं सलिलं यस्तु पिवतीहाप्रसाधितम् ।
श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम् ॥
श्वासकासप्रतिश्यायशूलगुल्मोदराणिच ।
अन्यान्वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेवच ॥

तत्र सप्तकलुषस्य प्रसाधनानि भवन्ति। तद्यथा। कतकगो-
मेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति । पञ्च
निक्षेपणानि भवन्ति । तद्यथा । फलकं त्र्यष्टकं मुञ्जवलय
उदकमञ्चिकाशिक्यञ्चेति ॥ सप्त शीतीकरणानि भवन्ति ।
प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं
वालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति ॥

निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ।
अच्छं लघुच हृद्यञ्च तोयंगुणवदुच्यते ॥

तत्र नद्यः पश्चिमाभिमुखाः पथ्या लघूदकत्वात् । पूर्व्वाभि-
मुखास्तु न प्रशस्यन्ते गुरूदकत्वात् । दक्षिणाभिमुखा नाऽति
दोषलाःसाधारणत्वात् । तत्र सह्यप्रभवाः कुष्ठञ्जनयन्ति वि-
न्ध्यप्रभवाः कुष्ठं पाण्डुरोगञ्च मलयप्रभवाः क्रिमिन् महेन्द्रप्र-
भवाः श्लीपदोदराणि हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोग-

श्लीपदगलगण्डान्। प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजन-
यन्ति परिपात्रप्रभवाः पथ्या बलारोग्यकर्य्य इति ।

नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ।
गुर्व्यः शैवालसञ्छन्ना कलुषा मन्दगाश्च याः ॥
प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ।
ईषत्कषाया मधुरा लघुपाका बले हिताः ॥

तत्र सर्व्वेषां भौमानां ग्रहणं प्रत्यूषसि तत्र ह्यमलत्वं शैत्य-
ञ्चाधिकं भवति स एव चापां परो गुण इति ॥

दिवार्क्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ।
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत्सुभाजने ।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहं ।
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥
मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥
ऊर्द्धगे रक्तपित्ते च शीतमम्भः प्रशस्यते ।
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥
आध्माते स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ।
हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेत् ॥
नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ।
तदभिष्यन्दिमधुरं सान्द्रं गुरु कफावहम् ॥
तृष्णाघ्नं सारसं बल्यं काषायं मधुरं लघु ।

ताडागं वातलं स्वादु कषायं कटुपाकि च ॥
वातश्लेष्महरं वाप्यं सक्षारं कटुपित्तलम् ।
सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥
चौण्ट्यमग्निकरं रूक्षं मधुरं कफकन्न च ।
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥
मधुरं पित्तशमनविदाह्यौद्भिदं स्मृतम् ।
वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ।
तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत् ॥
सामुद्रमुदकं विस्रं लवणं सर्वदोष कृत्
अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम् ॥
एभिर्दोषैरसंयुक्तं निरवद्यन्तु जाङ्गलम् ।
पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम् ॥
दीपनं स्वादु शीतञ्च तोयं साधारणं लघु ।
कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ।
यत्क्वाथ्यमानं निर्वेगं निःफेनं निर्म्मलं लघु ॥
चतुर्भागावशेषन्तु तत्तोयं गुणवत्स्मृतम् ।
न च पर्य्युषितं देयं कदाचिद्वारि जानता ॥
अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे ।
मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ।
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ॥

वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ।
दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु ॥
शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च ।
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥
मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ।
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥

इति जलवर्गः ।

गव्यमाजन्तथाचौष्ट्रमाविकं माहिषञ्च यत् ।
अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत्पयः ॥
तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ॥
मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥
सर्वप्राणभृतां तस्मात्सात्म्यं क्षीरमिहोच्यते ॥

तच्चसर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात् । वात पित्तशोणितमानसविकारेष्वविरुद्धम् । जीर्णज्वरकासश्वासशोषक्षय गुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्वस्तिपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्त्तातिसारप्रवाहिका योनिरोगगर्भास्रावरक्तपित्त श्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानाञ्च पथ्यतमम् ।

गोक्षीरमनभिस्यन्दि स्निग्धं गुरु रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥

जीवनीयं तथावातपित्तघ्नं परमं स्मृतम्।
गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम्॥
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत्।
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात्॥
नात्यम्बुपानाद्व्यायामात्सर्व्वव्याधिहरं पयः।
रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु॥
शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम्।
आविकं मधुरं स्निग्धं गुरु पित्तकफावहम्॥
पथ्यं केवलवातेषु कासे चानिलसम्भवे।
महाभिस्यन्दि मधुरं माहिषं वह्निनाशनम्॥
निद्राकरं शीतकरं गव्यात्स्निग्धतरं गुरु।
उष्णं चैकशफं बल्यं शाखावातहरं पयः॥
मधुराम्लरसं रूक्षं लवणानुरसं लघु।
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम्॥
नस्याश्चोतनयोः पथ्यं जीवनं लघु दीपनम्।
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु॥
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम्।
प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम्॥
रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा।
दिवाकराभितप्तानां व्यायामानिलसेवनात्॥
वातानुलोमि श्रान्तिघ्नं चक्षुष्यं चापराह्णिकम्।
पयोऽभिस्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्॥
तदेवोक्तं लघुतरमनभिस्यन्दि वै शृतम्।

वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ।
तदेवातिशृतं सर्व्वं गुरु वृंहणमुच्यते ॥
अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत् ।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥
॥ इतिक्षीरवर्गः ॥

दधि तु मधुरमम्लमत्यम्लञ्चेति । तत्कषायानुरसं स्निग्धमुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यञ्च ॥

महाभिस्यन्दि मधुरं कफमेदोविवर्द्धनम् ।
कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥
विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत् ।
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ॥
वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम् ।
दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम् ।
विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ॥
बलासवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम् ।
विपाके कटु सक्षारं गुरु भैष्ट्रौष्ट्रिकं दधि ॥
वातमर्शांसि कुष्ठानि क्रिमीन् हन्त्युदराणि च ।
कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ।
दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥

रूक्षमुष्णं कषायञ्च कफमूत्रापहञ्च तत्।
स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम्।
लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम्॥
कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम्।
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक्॥
विज्ञेयमेषु सर्व्वेषु गव्यमेव गुणोत्तरम्।
वातघ्नं कफकृत् स्निग्धं वृंहणं नच पित्तकृत्॥
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम्।
शृतात्क्षीरात्तु यज्जातं गुणवद्दधि तत्स्मृतम्॥
वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम्।
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः।
दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम्॥
दीपनीयं लघुतरं सकषायं रुचिप्रदम्।
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्॥
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते।
तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्॥
अम्लं कषायं मधुरमवृष्यं कफवातनुत्।
प्रह्लादनं प्रीणनञ्च भिनत्त्याशु मलञ्च तत्॥
बलमावहते चापि भक्तच्छन्दं करोति च॥

स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतक्षीरभवं सरञ्च।
असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्म ता मस्तुगुणास्तथैव॥

॥ इतिदधिवर्गः ॥

तक्रं मधुरमम्लं कषायानुरसमुष्णवीर्य्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शःप्लीहगुल्मारोचकविषमज्वरतृष्णाच्छर्दिप्रसेकशूलमेदःश्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यञ्च ॥

मन्थनादिपृथग्भूतस्नेहमर्द्धोदकन्तु यत्।
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥
यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥
तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्व्वले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥

तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनञ्च। अम्लं वातघ्नं पित्तकरञ्च ॥

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम्।
पिवेत्तक्रं कफेचापि व्योषक्षारसमायुतम् ॥
ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका।
तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥
गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः।
मधुरौ वृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥

नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायानुरसमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणार्शोऽर्दितापहं गुरुकफमे-

दोविवर्द्धनं बलकरं वृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते। क्षीरोत्थं पुनर्नवनीतमुत्कृष्ट स्नेहं माधुर्य्ययुक्तमतिशीतं सौकुमार्य्यकरं चक्षुष्यं संग्राहि रक्तपित्त नेत्ररोगहरं प्रसादनञ्च॥ सन्तानिका पुनर्व्वातघ्नी तर्पणी बल्यावृष्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्व्वी च।

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः।
विकल्पानवशिष्टांस्तु क्षीरवीर्य्यात्समादिशेत्॥

॥ अथघृतम्॥

घृतन्तु सौम्यं शीतवीर्य्यंमृदु मधुरमल्पाभिष्यन्दि स्नेहनमुदावर्त्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्द्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च॥

विपाके मधुरं शीतं वातपित्तविषापहम्।
चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम्॥
आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम्।
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु॥
मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम्।
वातपित्तप्रशमनं सुशीतं माहिषं घृतम्॥
औष्ट्रं कटुरसं पाके शोफक्रिमिविषापहम।
दीपन [illegible] कुष्ठगुल्मोदरापहम्॥
पाके लाघुविकं सर्पिनंच [illegible]कोपणं।

कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥
पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम् ।
दीपनं बद्धमूत्रञ्च विद्यादैकशफं घृतम् ॥
चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम् ।
वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् ॥
कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु ।
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् ॥

क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च । सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिपूरणेषूपदिश्यते । सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामदउन्मादोदरज्वरगरशोषापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं वस्तिनस्याक्षिपूरणेषूपदिश्यते ।

भवन्ति चात्र । पुराणं तिमिरश्वासपीनसज्वरकासनुत् ।
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥
एकादशशतञ्चैव वत्सरानुषितं घृतम् ।
रक्षोघ्नं कुम्भसर्पिः स्यात्परतस्तु महाघृतम् ॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ।
बल्यं पवित्रं मेध्यञ्च विशेषात्तिमिरापहम् ॥
सर्वभूतहरञ्चैव घृतमेतत्प्रशस्यते ॥

अथ तैलानि ।

तैलं त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसा-

दनं मेधामार्दवमांसस्थैर्य्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशीतपित्तजननं योनिशिरः कर्णशूलप्रशमनं गर्भाशयशोधनञ्च तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथित क्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते।

तद्बस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे।
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये॥

एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्र विशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वात कफहरमधोभागदोषहरञ्च।

निम्बातसीकुसुम्भमूलकजीमूतकवृक्षकक्षतवेधनार्कक म्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफल तैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सराण्यनिलकफक्रिमिकुष्ठप्रमेहशिरोरोगहराणि चेति॥

वातघ्नं मधुरं तेषु क्षौमं तैलं बलावहम्।
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम्॥
क्रिमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु।
कफमेदोऽनिलहरं लेखनं कटुदीपनम्॥
क्रिमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु।

कुष्ठामयक्रिमिहरं दृष्टिशुक्रबलापहम्॥
विपाके कटुकं तैलं कौसुम्भं सर्व्वदोषकृत्।
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च॥

किराततिक्तकाऽतिमुक्तकविभीतकनालिकेरकोलाक्षो-डजीवन्ती पियालकर्वुदारसूर्य्यवल्लीत्रपुसैर्व्वारुककर्कारुकु-ष्माण्डप्रभृतीनां तैलानि मधुराणि मधुरवीर्य्यविपाकानि वातपित्तप्रशमनानि शीतवीर्य्याण्यभिष्यन्दीनि सृष्टविण्मू-त्राण्यग्निसादनानि चेति।

मधूककाश्मर्य्यपलाशतैलानि मधुरकषायानि कफपित्त-प्रशमनानि।

तुवरकभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वात कफकुष्ठमेदोमेहक्रिमिहरे उभयतोभागदोषहरे च।

सरलदेवदारुगण्डीरशिंशपागुरुसारस्नेहास्तिक्तकटुक-षाया दुष्ट व्रणशोधनाः क्रिमिकफकुष्ठानिलहराश्च।

तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पिल्ल-कशङ्खिनी स्नेहास्तिक्तकटुकषाया अधोभागदोषहराः क्रिमि-कफकुष्ठानिलहरा दुष्टव्रणविशोधनाश्च।

यवतिक्ततैलं सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च।

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्द्धनम्।

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरञ्च।

फलोद्भवानि तैलानि यान्यनुक्तानि कानिचित् ।
गुणान् कर्म्म च विज्ञाय फलवत्तानि निर्दिशेत् ॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्त्तिताः ।
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥
सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते ।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥

ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्ना जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ।

॥ अथ मधुवर्गः ॥

मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं बल्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वास कासातिसारच्छर्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनञ्च तत्तु लघुत्वात्कफघ्नं पैच्छिल्यान्माधुर्य्यात्कषायभावाच्च वातपित्तघ्नम् ॥

फलोद्भवानि तैलानि यान्यनुक्तानि कानिचित् ।
गुणान् कर्म्म च विज्ञाय फलवत्तानि निर्द्दिशेत् ॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्त्तिताः ।
सर्वे तैलगुणा ज्ञेयाः सर्वेचानिलनाशनाः ॥
सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते ।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥

ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्ना जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ।

॥ अथ मधुवर्गः ॥

मधु तु मधुरं काषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं बल्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहिचक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वास कासातिसारच्छर्द्दितृष्णाकृमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनञ्च तत्तु लघुत्वात्कफघ्नं पैच्छिल्यान्माधुर्य्यात्कषायभावाच्च वातपित्तघ्नम् ॥

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥
विशेषात्पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात् ।
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥
पैच्छिल्यात्स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ।
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥

तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ।
श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥
स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित् ।
श्वित्रमेहक्रिमिहरं विद्याच्छात्रं गुणोत्तरम् ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम् ।
कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥
औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम् ।
कषायमुष्णमम्लञ्च पित्तकृत्कटुपाकि च ॥
छर्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम् ।
वृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ।
दोषत्रयहरं पक्वमामसम्लं त्रिदोषकृत् ॥
तद्युक्तं विविधैर्य्योगैर्निहन्यादामयान् बहून् ।
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥

तत्तु नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानां पुष्परसानां सविषमक्षिकासम्भवत्वाच्चानुष्णोपचारम् ।

उष्णैर्विरुध्यते सर्व्वं विषान्वयतया मधु ।
उष्णार्त्तमुष्णैरुष्णे वा तं निहन्ति यथाविषम् ॥
तत्सौकुमार्य्याच्च तथैव शैत्यान्नानौषधीनां रससम्भवाच्च ।
उष्णैर्विरुध्येत विशेषतश्च तथान्तरीक्षेण जलेन चापि ॥
उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ।
अपाकादनवस्थानान्न विरुध्येत पूर्व्ववत् ॥
मध्वामात्परतस्त्वन्यदामं कष्टं न विद्यते ।

विरुद्धोपक्रमत्वात्तत् सर्व्वं हन्ति यथाविषम् ॥

॥ अथेक्षुवर्गः ॥

इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मत्रलारक्तपित्तप्रशमनाः क्रमिकफकराश्चेति तेचानेकविधाः। तद्यथा।

पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत्।
इत्येता जातयः स्थौल्याद्गुणान् वक्ष्याम्यतःपरम्॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः।
अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा॥
आभ्यां तुल्यगुणः किञ्चित् सक्षारो वंशको मतः।
वंशवच्छतपोरस्तु किञ्चिदुष्णः स वातहा॥
कान्तारतापसाविक्षू वंशकानुगुणौ मतौ।
एवङ्गुणस्तु काष्ठेक्षुः सतु वातप्रकोपणः॥
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः॥
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः।
अतीव मधुरोमूले मध्ये मधुर एव तु॥
अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः।
अविदाही कफकरो वातपित्तनिवारणः॥
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः॥
गुरुर्व्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः।

पक्वो गुरुः सरः स्निग्धः स तीक्ष्णः कफवातनुत् ॥

फाणितं गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषकृच्च । गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकफकरो बल्यो वृष्यश्च ॥

पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ।
स पुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥

मत्स्यण्डिकाखण्डशर्करा विमलजाता उत्तरोत्तरं शीताः स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रसादनास्तृष्णाप्रशमनाश्च ॥

यथायथैषां वैमल्यं मधुरत्वं तथातथा ।
स्नेहगौरवशैत्यानि सरत्वञ्च तथातथा ॥
यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः ।
तेनतेनैव निर्देश्यस्तेषां विस्रावणो गुणः ॥
सारस्थिता सुविमला निःक्षारा च यथायथा ।
तथातथा गुणवती विज्ञेया शर्करा बुधैः ॥

मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रह्लादनी कषायमधुरा मधुरविपाका च ॥ यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥

यावत्यः शर्कराः प्रोक्ताः सर्वा दाहप्रणाशनाः ।
रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः ॥
रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् ।
कफघ्नं मधुरं पाके कषायं वस्तिदूषणम् ॥

## अथ मद्यवर्गः ॥

सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम् ।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ।
विकासि सृष्टविण्मूत्रं शृणु तस्य विशेषणम् ॥
मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा ।
रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥
मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु ।
लघुपाकि सरं शोषविषमज्वरनाशनम् ॥
मार्द्वीकाल्पान्तरं किञ्चित् खार्जूरं वातकोपनम् ।
तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ॥
कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ।
कासार्शोग्रहणीदोषमूत्राघातानिलापहा ॥
स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ।
कासार्शोग्रहणीश्वासप्रतिश्यायविनाशनी ॥
श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ।
छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दनी ॥
प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ।
पित्तलाल्पकफा रूक्षा यवैर्व्वातप्रकोपणी ॥
विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ।
रूक्षा नातिकफा हृद्या पाचनी चाक्षिकी स्मृता ॥
त्रिदोषो भेद्यतप्यश्च कोहलो वदनप्रियः ।
ग्राह्युष्णो जगलः पक्को रूक्षस्तृट्कफशोफहृत् ॥

हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत्।
रूक्षसो हृतसारत्वाद्विष्टम्भी वातकोपनः॥
दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः।
कषायो मधुरः सीधुर्गौडः पाचनदीपनः॥
शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः।
वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः॥
तद्वत् पक्वरसः सीधुर्बलवर्णकरः सरः।
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः॥
कर्शनः शीतरसिकः श्वयथूदरनाशनः।
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः।
~~कषायमधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः॥~~
जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः।
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत्
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः।
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः॥
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत्।
तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत्॥
कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः।
बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः।
रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः॥
निर्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान्।

नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ॥
अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च ।
सुगन्धि दीपनं हृद्यं रोचिष्णु क्रमिनाशनम् ॥
स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ।
अरिष्टो द्रव्यसंयोगसंस्काराद्धिको गुणैः ॥
बहुदोषहरश्चैव दोषाणां शमनश्च सः ।
दीपनः कफवातघ्नः सरः पित्तविरोधनः ॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ।
पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः ॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ।
अरिष्टासवसीधूनां गुणान् कर्म्माणि चादिशेत् ॥
बुद्ध्या यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ।
सान्द्रं विदाहिदुर्गन्धं विरसं क्रमिलं गुरु ॥
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ।
अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत् ॥
तद्वर्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत् ।
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ॥
कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः ।
पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च ॥
अहृद्यं फेनिलं पूति क्रमिलं विरसं गुरु ।
तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम् ॥
सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम् ।
चिरस्थितं जातरसं दीपनं कफवातजित् ॥

रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ।
तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः ॥
सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना ।
समेत्य हृदयं प्राप्य धमनीरूर्द्धमागतम् ॥
विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात् ।
चिरेण श्लैष्मिके पुंसि पानतो जायते मदः ।
अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु ॥
सात्विके शौचदाक्षिण्यहर्षमण्डनलालसः ।
गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥
राजसे दुःखशीलत्वमात्मत्यागं ससाहसम् ।
कलहं सानुबन्धन्तु करोति पुरुषे मदः ॥
अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः
असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः ॥
रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम् ।
वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च ।
तद्वत्तदासुतं सर्व्वं रोचनञ्च विशेषतः ॥
गौडानि रसशुक्तानि मधुशुक्तानि यानि च ।
यथापूर्व्वं गुरुतराण्यभिष्यन्दकराणि च ॥
तुषाम्बु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा ॥
धान्याम्लं धान्ययोनित्वाद्दीपनं दाहनाशनम् ।
स्पर्शात्पानात्तु पवनकफतृष्णाहरं लघु ॥

तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात्।
मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम्॥
दीपनं जरणं भेदि हितमास्थापनेषु च।
समुद्रमाश्रितानाञ्च जनानां सात्म्यमुच्यते॥

॥ अथमूत्राणि॥

गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कट्न्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च समान्यतः॥

भवन्ति चात्र॥ तत्सर्व्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु।
शोधनं कफवातघ्नं क्रिमिमेदोविषापहम्॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम्।
पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम्।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित्॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत्॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु।
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम्॥
कासश्वासापहं शोषकामलापाण्डुरोगनुत्।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम्॥
कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम्।
सक्षारन्तिक्तकटुकमुष्णं वातघ्नमाविकम्॥

दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् ।
आश्वं कफहरं मूत्रं क्रिमिदद्रुषु शस्यते ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ।
दीपनं गार्दभं मूत्रं क्रिमिवातकफापहम् ॥
शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् ।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥
द्रवद्रव्याणि सर्व्वाणि समासात्कीर्त्तितानितु ।
कालदेशविभागज्ञो नृपतेर्दातुमर्हति ॥

षट्चत्वारिंशत्तमोऽध्यायः ॥

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥

धन्वन्तरिमभिवाद्य सुश्रुत उवाच प्रागभिहितं प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च स षट्सु रसेष्वायत्तो रसाःपुनर्द्रव्याश्रयिणो द्रव्यरसगुणवीर्य्यविपाकनिमित्ते च क्षयवृद्धी दोषधातूनां साम्यञ्च । ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुराहारादेवाभिवृद्धिर्ब्बलमारोग्यं वर्णेन्द्रियप्रसादश्च तथाहारवैषम्यादस्वास्थ्यम् । तस्याशितपीत लीढखादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविध :प्रभावस्य पृथक् पृथक् द्रव्यरसगुणवीर्य्यविपाकप्रभावकर्म्माणी-च्छामि ज्ञातुं नह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्थाः । आहारमूलाश्च सर्व्वप्राणिनो यस्मात्तस्मादन्नपान विधिमुपदिशतु मे भगवानित्युक्तः प्रोवाच

भगवान् धन्वन्तरिरथखलु वत्स सुश्रुत यथाप्रश्नमुचमानमुपधारयस्व। तत्र लोहितक शालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीक महाशालिशीतभीरुकरोध्रपुष्पकदीर्घशूककाञ्चनकमहिषमस्तकहायनकदूषकमहादूषकप्रभृतयः शालयः।

मधुरा वीर्य्यतः शीता लघुपाका बलावहाः।
पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः॥
तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः।
चक्षुष्यो वर्णबलकृत् स्वर्य्यो हृद्यः श्रमापहः।
व्रण्यो ज्वरहरश्चैव सर्व्वदोषविषापहः॥
तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः॥

षष्टिककाङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारकप्रभृतयः षष्टिकाः।

रसे पाके च मधुराः शमना वातपित्तयोः॥
शालीनाञ्च गुणैस्तुल्या बृंहणाः कफशुक्रलाः।
षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः॥
मृदुः स्निग्धस्त्रिदोषघ्नःस्थैर्य्यकृद्बलवर्द्धनः।
विपाके मधुरो ग्राहीतुल्यो लोहितशालिभिः॥
शेषास्त्वल्पान्तरगुणाः षष्टिकाः क्रमशो गुणैः॥

कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितककुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः॥

कषायमधुराः पाके मधुरा वीर्य्यतोऽहिमाः।
अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्ब्बद्धवर्च्चसः॥

कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः ।
तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ।
किञ्चित्सतिक्तमधुराः पवनानलवर्द्धनाः ॥
कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः ।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥
शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ।
तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफावहाः ॥
विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ।
तद्वत्कुधान्यमुद्गादिमाषादीनाञ्च वक्ष्यते ॥

॥ अथ कुधान्यवर्गः ॥

कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकवरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः ॥

उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः ।
श्लेष्मघ्ना बद्धनिस्यन्दा वातपित्तप्रकोपणाः ॥
कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः ।
कोद्रवश्च सनीवारःश्यामाकश्च सशान्तनुः ॥
कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ।

यथोत्तरं प्रधानाः स्युरूक्षाः कफहराः स्मृताः ॥
मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा ।
विशेषो तत्र भूयिष्ठं वल्कः समुकुन्दकः ॥
रूक्षा वेणुयवा ज्ञेया वीर्य्योष्णाः कटुपाकिनः ।
बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥

मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुट-
कहरेण्वाढकीप्रभृतयो वैदलाः ॥

कषायमधुराः शीताः कटुपाका मरुत्कराः ।
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥
नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ।
प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥
विपाके मधुराः प्रोक्ता मसूरा बद्धवर्चसः ।
मकुष्ठकाः क्रिमिकराः कलायाः प्रचुरानिलाः ॥
आढकी कफपित्तघ्नी नातिवातप्रकोपणी ।
वातलाः शीतमधुराः सकषाया विरूक्षणाः ॥
कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ।
हरेणवः सतीनाश्च विज्ञेया बद्धवर्च्चसः ॥
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥

माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः ।
सन्तर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥
कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्यकर्त्ता ।
स्वादुर्व्विपाके मधुरोऽलसान्द्रः सन्तर्पणः स्तन्यरुचिप्रदश्च ॥
माषैः समानं फलमात्मगुप्तमुक्तञ्च काकाण्डफलं तथैव ।

आरण्यमाषा गुणतः प्रदिष्टा रूक्षाः कषाया अविदाहिनश्च ॥
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ।
शुक्राश्मरीगुल्मनिषूदनश्च संग्राहकः पीनसकासहारी ॥
आनाहमेदोगुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ।
कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ।
ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः ।
तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः ॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽथ केश्योऽनिलहा गुरुश्च
तिलेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये ।
यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी ।
व्रणेषु पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्चाः ॥
स्थैर्याग्निमेधास्वरवर्णकृच्च स पिच्छिलः स्थूलविलेखनश्च ।
मेदोमरुत्तृड्हरणोऽतिरूक्षः प्रसादनः शोणितपित्तयोश्च ॥
एभिर्गुणैर्हीनतरास्तु किञ्चिद्विद्याद्यवेभ्योऽतियवान् विशेषैः ।
गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च ॥
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता सन्धानकृत् श्लेष्मकरः सरश्च ।
रूक्षः कषायो विषशोफशुक्रबलासदृष्टिक्षयकृद्विदाही ॥
कटुर्विपाके मधुरस्तु शिम्बः प्रभिन्नविण्मारुतपित्तलश्च ।
सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः ॥
यथोदितास्ते गुणतः प्रधाना ज्ञेयाः कटूष्णा रसपाकयोश्च ।
खड्गाह्वयं मूलकजाश्च शिम्बाः कुशिम्बिवल्लीप्रभवास्तु शिम्बाः ॥
ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिबर्हणाश्च ।
विदाहवन्तश्च भृशञ्च रूक्षा विष्टम्भ जीर्ण्यनिलप्रदाश्च ॥

रुचिप्रदाश्चैव सुदुर्जराश्च सर्व्वे स्मृता वैदलिकास्तु शिम्बाः।
कटुर्व्विपाके कटुकः कफघ्नोविदाहिभावादहितः कुसुम्भः।
उष्णातसीस्वादुरसाऽनिलघ्नी पित्तोल्वणा स्यात् कटुका विपाके
पाकेरसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी॥
तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि॥

अनार्त्तवं व्याधिहतमपर्य्यागतमेव च।
अभूमिजं नवञ्चापि न धान्यं गुणवत्स्मृतम्॥
नवं धान्यमभिस्यन्दि लघु सम्वत्सरोषितम्।
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम्॥
शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः।
कालप्रमाणसंस्कारमात्राः सम्परिकीर्त्तिताः॥

॥ अत ऊर्द्ध्वं मांसवर्गानुपदेक्ष्यामः॥

तद्यथा। जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गास्तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः। तद्यथा। जङ्घाला विष्किराः प्रतुदा गुहाशयाःप्रसहाः पर्णमृगा विलेशया ग्राम्याश्चेति तेषां जङ्घालविष्किरौ प्रधानतमौतावेणहरिणर्थ्यकुरङ्गकराल कृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्घालामृगाः कषाया मधुरा लघवो वातपित्तहरा-स्तीक्ष्णा हृद्या वस्ति शोधनाश्च॥

कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा।
संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः॥

मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः ।
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥
एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ।
न कृष्णो नच ताम्रश्च कुरङ्गः सोऽभिधीयते ॥
शीतासृक्पित्तशमनो विज्ञेया मृगमातृका ।
सन्निपातक्षयश्वासकासहिक्काऽरुचिप्रनुत् ॥

लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीक-चकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रक कुतित्तिरिकुरवाहुकयवलकप्रभृतयस्त्वग्राह्ला विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च ॥

संग्राही दीपनश्चैव कषायमधुरो लघुः ।
लावः कटुविपाकश्च सन्निपाते च पूजितः
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः ।
तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः ॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ।
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ॥
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ।
वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः ॥
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ।
कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः ॥
मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ।
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ॥
बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः ।

वातरोगक्षयवमीविषमज्वरनाशनः ॥

कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्षोडकडिण्डिमाणकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टालट्टूषकसुगृहीखञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः ॥

कषायमधुरा रूक्षाः फलाहारा मरुत्कराः ।
पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः ॥
सर्व्वदोषकरस्तेषां भेदाशी मलदूषकः ।
कषायस्वादुलवणो गुरुः काणकपोतकः ॥
रक्तपित्तप्रशमनः कषायविशदोऽपि च ।
विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥
कुलिङ्गो मधुरःस्निग्धः कफशुक्रविवर्द्धनः ।
रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥

सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयोगुहाशयाः ॥

मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः ।
उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥

काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः ॥

एते सिंहादिभिः सर्व्वे समाना वायसादयः ।
रसवीर्य्यविपाकेषु विशेषाच्छोषिणे हिताः ॥

मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः ॥

मधुरा गुरवो वृष्याश्चक्षुष्या शोषिणि हिताः ।
सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ॥
समुद्रजेभ्यो नादेया बृंहणत्वाद्गुणोत्तराः ॥

श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाऽजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो बिलेशयाः ॥

वर्चोमूत्रं संहतं कुर्य्युरेते वीर्य्ये चोष्णाः पूर्ब्ववत्स्वादुपाकाः ।
वातं हन्युः श्लेषपित्ते च कुर्य्युः स्निग्धाः कासश्वासकार्श्यापहाश्च ॥

कषायमधुरस्तेषां शशः पित्तकफापहः ।
नातिशीतलवीर्य्यत्वाद्वातसाधारणो मतः ॥
गोधा विपाके मधुरा कषायकटुका स्मृता ।
वातपित्तप्रशमनी बृंहणी बलवर्द्धनी ॥
शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।
प्रियको मारुते पथ्यो ऽजगरस्त्वर्शसां हितः ॥
दुर्नामानिलदोषघ्नाः क्रिमिदूषीविषापहाः ।
चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्द्धनाः ॥
दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ।
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥

अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः ॥

ग्राम्या वातहराः सर्व्वे बृंहणाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः ॥
नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ।
छगलस्त्वनभिस्यन्दी तेषां पीनसनाशनः ॥

बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ।
मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥
श्वासकासप्रतिश्यायविषमज्वरनाशनम् ।
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥
औरभ्रवत्सलवणं मांसमेकशफोद्भवम् ।
अल्पाभिस्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥
दूरे जनान्तनिलया दूरे पानीयगोचराः ।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिस्यन्दिनो मताः ॥
अतीवासन्ननिलयाः समीपोदकगोचराः ।
ये मृगाश्च विहङ्गाश्च महाभिस्यन्दिनस्तु ते ॥

आनूपवर्गस्तु पञ्चविधः। तद्यथा। कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति। तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः ॥

वातपित्तहरा वृष्या मधुरा रसपाकयोः ।
शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः ॥
विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः ।
स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः ॥
गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ।
विपाके मधुरं चापि व्यवायस्य तु वर्द्धनम् ॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ।
निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांसदार्ढ्यकृत् ॥
रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।

वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् ॥
तथा चमरमांसन्तु स्निग्धं मधुरकासजित् ।
विपाके मधुरं चापि वातपित्तप्रणाशनम् ॥
सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् ॥
स्वेदनं वृंहणं वृष्यं शीतलं तर्पणं गुरु ।
स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम् ॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम् ॥
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ।
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ॥
विपाके मधुरञ्चापि रक्तपित्तविनाशनम् ॥

हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतचरणप्रभृतयः प्लवाः संघातचारिणः ॥

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥
गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
वृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः ॥

शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः । कूर्म्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ॥

शङ्खकूर्म्मादयः स्वादुरसपाका मरुन्नुदः ।
शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः ॥

कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ।
शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥

मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च । तत्र नादेयाः । रोहित पाठीनपाटलाराजीववर्म्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः ॥

नादेया मधुरा मत्स्या गुरवोमारुतापहाः ।
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः ॥
कषायानुरसस्तेषां शष्पशैवालभोजनः ।
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ।
दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ ॥
मुरलो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ।
सरस्तडागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः ॥
महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ॥

तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः ॥

सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्द्धनाः ॥
बलावहा विशेषेण मांसाशित्वात्समुद्रजाः ।
तेषामप्यनिलघ्नत्वाच्चौण्ट्यकौप्यौ गुणोत्तरौ ।
स्निग्धत्वात् स्वादुपाकत्वात् तयोर्व्वाप्या गुणोत्तराः ॥
नादेया गुरवो मध्ये यस्मात्पुच्छास्यचारिणः ।
सरस्तडागजानान्तु विशेषेण शिरो लघु ॥

अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ।
किञ्चिन्मुक्ता शिरोदेशमत्यर्थं गुरवस्तु ते ।
अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः ॥
उरोविचरणात्तेषां पूर्व्वमङ्गं लघु स्मृतम् ॥

॥ इत्यानूपो महाभिस्यन्दिमांसवर्गो व्याख्यातः ॥

तत्र शुष्कपूतिव्याधितविषसर्पहतदिग्धविद्धजीर्णकृशबाला-नामसात्म्यचारिणां मांसान्यभक्ष्याणि यस्माद्विगतव्यापन्ना-पहतपरिणताल्पासंपूर्णवीर्य्यत्वाद्दोषकराणि भवन्ति ॥

अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम् ।
विषव्याधिहतं मृत्युं बालं छर्दिञ्च कोपयेत् ॥
कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् ।
क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥

एभ्योऽन्येषामुपादेयं मांसमिति ॥ स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेष्वल्पशरीरा अल्पशरीरेषु महा-शरीराः प्रधानतमा एवमेकजातीयानां महाशरीरेभ्यः कृश-शरीराः प्रधानतमाः ॥

स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तद्यथा । रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरासु गुरुतरास्तथा सक्थि-स्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्म्मकालेयकयकृदन्त्राणि ॥

शिरःस्कन्धं कटीपृष्ठं सक्थिनी चात्मपक्षयोः ।
गुरुपूर्व्वं विजानीयाद्धातवस्तु यथोत्तरम् ॥
सर्व्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः ।
पूर्व्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥

शरीग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ।
पक्षोत्क्षेपात्समौ दिष्टौ मध्यभागस्तु पक्षिणाम् ॥
अतीवरूक्षं मांसन्तु विहङ्गानां फलाशिनाम् ।
बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥
मत्स्याशिन पित्तकरं वातघ्नं धान्यचारिणाम् ।
जलजानूपजा ग्राम्या क्रव्यादैकशफास्तथा ॥
प्रसहा विलवासाश्च ये च जङ्गालसंश्रिताः ।
प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ॥
अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा ॥

प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च ।सर्व्व-प्राणिनां सर्व्वशरीरेभ्यो ये प्रधानतमा भवन्ति यकृत्प्रदेश-वर्त्तिनस्तानाददीत प्रधानलाभाभावे मध्यमवयस्कं सद्य-स्कमक्लिष्टमुपादेयं मांसमिति ॥ भवति चात्र ॥ वयः शरीरावयवाः स्वभावो धातवः क्रियाः ॥

लिङ्गं प्रमाणं संस्कारो मात्राचास्मिन् परीक्षिता ॥

॥ इति मांसवर्गः ॥

अत ऊर्द्धं फलवर्गानुपदेक्ष्यामः ॥ तद्यथा ॥ दाडिमा-मलकवदरकोलकर्कन्धु सौवीरसिञ्चितिकाफलकपित्थमातुलु-ङ्गाम्राम्रातककरमर्दपियाललकुचभव्यपारावतवेत्रफलप्रा-चीनामलकतिन्तिडीकनीपकोशाम्राम्लीकानारङ्गजम्बीरप्रभृ-तीनि ॥

अम्लानि रसतः पाके गुरूण्युष्णानि वीर्य्यतः ।
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणिच ॥

कषायानुरसं तेषां दाडिमं नातिपित्तलम् ।
दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ।
त्रिदोषघ्नञ्च मधुरमम्लं वातकफापहम् ॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ।
चक्षुष्यं सर्व्वदोषघ्नं वृष्यमामलकीफलम् ॥
हन्ति वातं तदम्लत्वात्पित्तं माधुर्य्यशैत्यतः ।
कफं रूक्षकषायत्वात्फलेभ्योऽभ्यधिकञ्च तत् ॥
कर्कन्धु कोलबदरमामं पित्तकफावहम् ।
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ।
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥
कषायं स्वादु संग्राहि शीतं सिञ्चितिकाफलम् ।
आमं कपित्थमस्वर्य्यं कफघ्नं ग्राहि वातलम् ।
कफानिलहरं पक्वं मधुराम्लरसं गुरु ।
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ।
त्वक् तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा ॥
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ।
मेध्यं शूलानिलच्छर्दिकफारोचकनाशनम् ॥
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केसरम् ।
शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते ॥
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ।

पित्तानिलकरं बालं पित्तलं बद्धकेसरम् ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम्।
कसायानुरसं स्वादु वातघ्नं वृंहणं गुरु ॥
पित्ताविरोधि सम्पक्कमाम्रं शुक्रविवर्द्धनम्।
वृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्य्यति ॥
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्द्धनम्।
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ॥
अम्लं तृष्णापहं रुच्यं पित्तकृत्करमर्द्दकम्।
वातपित्तहरं वृष्यं पियालं गुरु शीतलम् ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम्।
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत्।
गरदोषहरं नीपं प्राचीनामलकं तथा ॥
वातापहं तिन्तिडीकमामं पित्तबलासकृत्।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्कं कफवातनुत् ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते।
अम्लीकायाः फलं पक्कं तद्वद्भेदि तु केवलम् ॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम्।
वातघ्नं दुर्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥
तृष्णाशूलकफोत्क्लेशच्छर्द्दिश्वासनिवारणम्।
वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत्।
क्षीरवृक्षफलजाम्बवराजादनतोदनतिन्दुकबकुलधन्वना-

श्मन्तकाम्रकर्कन्धुफल्गुपरूषकगाङ्गेरुकीपुष्करवर्त्तिविल्वबिम्बी-
प्रभृतीनि ॥

फलान्येतानि शीतानि कफपित्तहराणि च ।
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ।
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ।
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम् ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु संपक्कं मधुरं कफपित्तजित् ॥
मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलम् ।
स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते ॥
कषायञ्च हिमं स्वादु धान्वनं कफवातजित् ।
तद्वद्गाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ।
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ।
तदेव पक्कं मधुरं वातपित्तनिवर्हणम् ॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ।
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं गुरु ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ।

श्मन्तकाम्रकर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्त्तिविल्वबिम्बी-
प्रभृतीनि ॥

फलान्येतानि शीतानि कफपित्तहराणि च ।
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ।
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ।
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम् ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु संपक्कं मधुरं कफपित्तजित् ॥
मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलम् ।
स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते ॥
कषायञ्च हिमं स्वादु धान्वनं कफवातजित् ।
तद्वद्गाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ।
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ।
तदेव पक्कं मधुरं वातपित्तनिवर्हणम् ॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ।
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं गुरु ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ।

बृंहणीयमहृद्यञ्च मधूककुसुमं गुरु ॥
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥
वातामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥
पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ।
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥
कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम् ।
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥
वस्तिरं शीतपाक्यञ्च सारुष्करनिबन्धनम् ।
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ॥
विपाके मधुरञ्चापि रक्तपित्तप्रणाशनम् ।
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ।
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ।
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥
करीराक्षिकपीलूनि तृणशून्यफलानि च ।
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥
तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ।
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् ॥
आरुष्करं तौवरकं कषायं कटुपाकि च ।
उष्णं कृमिज्वरानाहमेहोदावर्त्तनाशनम् ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ।
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥

कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम् ॥
तदेव विद्यात्सम्पक्वं मधुरानुरसं गुरु।
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम्
बिम्बीफलं साम्बकर्सं स्तन्यकृत् कफपित्तजित्।
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् ॥

तालनारिकेलपनसमोचप्रभृतीनि ॥

स्वादुपाकरसान्याहुर्वातपित्तहराणि च ॥
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥
फलं स्वादुरसं तेषां तालजं गुरु पित्तजित्।
तद्बीजं स्वादुपाकञ्च मूत्रलं वातपित्तजित् ॥
नालिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम्।
बलमांसप्रदं हृद्यं बृंहणं वस्तिशोधनम् ॥
पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु।
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ॥
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु।

द्राक्षाकाश्मर्य्यमधूकपुष्पखर्जूरप्रभृतीनि ॥

रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च।
तेषां द्राक्षा सरा स्वर्य्या मधुरा स्निग्ध शीतला ॥
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा।
हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ॥
केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते।
क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥
रसे पाके च मधुरं खार्जूरं रक्तपित्तजित्।

बृंहणीयमहृद्यञ्च मधूककुसुमं गुरु ॥
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥
वातामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥
पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ।
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥
कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम् ।
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥
वसिरं शीतपाक्यञ्च सारुष्करनिबन्धनम् ।
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ॥
विपाके मधुरञ्चापि रक्तपित्तप्रणाशनम् ।
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ।
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ।
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥
क्षीरायकपीलूनि तृणशून्यफलानि च ।
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥
तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ।
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् ॥
आरुष्करं तौवरकं कषायं कटुपाकि च ।
उष्णं कृमिज्वरानाहमेहोदावर्त्तनाशनम् ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ।
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥

रूक्षोष्णं कटुकं पाके लघु वातकफापहम्।
तिक्तमीषद्विषघ्नं विडङ्गं कृमिनाशनम्॥
व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत्
कषायं दीपनं चाम्लं चक्षुष्यं चाभयाफलम्॥
भेदनं लघु रूक्षोष्णं वैस्वर्य्यं क्रिमिनाशनम्।
चक्षुष्यं स्वादुपाक्यक्षं कषायं कफपित्तजित्॥
कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम्।
कषायमीषन्मधुरं किञ्चित्पूगफलं सरम्॥
जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम्।
कक्कोलकं लवङ्गञ्च तिक्तं कटु कफापहम्॥
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम्।
सतिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः॥
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः।
लताकस्तूरिका तद्वत् शीता वस्तिविशोधनी॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः॥
वैभीतको मदकरः कफमारुतनाशनः।
कषायो मधुरो मज्जा कोलानां पित्तनाशनः।
तृष्णाच्छर्द्यनिलघ्नश्च तद्वच्चामलकस्य च॥
बीजपूरकशम्याकमज्जा कोशाम्रसम्भवः।
स्वादुपाकोऽग्निबलकृत् स्निग्धः पित्तानिलापहः
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम्।
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत्॥
फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम्।

बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ॥
ग्राह्युष्णं दीपनं तद्धि कषायं कटुतिक्तकम् ।
व्याधितं क्रिमिजुष्टञ्च पाकातीतमकालजम् ॥
वर्ज्जनीयं फलं सर्व्वमपथ्यागतमेवच ॥

॥ इतिफलवर्गः

॥ शाकान्यत ऊर्द्धं वक्ष्यामः ॥

तत्र पुष्पफलाऽलाबुकालिन्दकप्रभृतीनि ॥

पित्तघ्नान्यनिलं कुर्य्युस्तथामन्दकफानि च ।
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥
पित्तघ्नं तेषु कुष्माण्डं बालं मध्यं कफावहम् ।
पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ॥
सर्व्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ।
दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत् ॥
अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्वतिशीतला ।
तिक्तालाबुरहृद्या तु वामनी वातपित्तजित् ॥

त्रपुसैर्व्वारुकर्कारुकशीर्षवृन्तप्रभृतीनि ॥

गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च ॥
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ।
बालं सुनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ॥
तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ।
एर्व्वारुकं सकर्कारु सम्पक्वं कफवातकृत् ॥
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ।
सक्षारं मधुरञ्चैव शीर्षवृन्तं कफापहम् ॥

भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ।

पिप्पलीमरिचशृङ्गवेरार्द्रकहिङ्गुजीरककुस्तुम्बुरुजम्बीरकसुमुखसुरसार्जकभूस्तृणसुगन्धककासमर्दककालमालकुठेरकक्षवकखरपुष्पशिग्रुमधुशिग्रुफणिज्झकसर्षपराजिकाकुलाहलवेणुगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकपोतिकालशुनपलाण्डुकलायप्रभृतीनि ॥

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ।
कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥
तेषां गुर्व्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ।
शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी ॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ।
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम् ।
गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषतः ॥
नागरं कफवातघ्नं विपाके मधुरं कटु ।
वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥
कफानिलहरं स्वर्य्यं विबन्धानाहशूलनुत् ।
कटूष्णं रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम् ॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ।
कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् ।
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥
कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ।

भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥
आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी ॥
दोषघ्नी कटुका किञ्चित्तिक्ता स्रोतोविशोधनी ।
जम्बीरः पाचनस्तीक्ष्णः कृमिवातकफापहः ॥
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ॥
कफानिलविषश्वासकासदौर्गन्ध्यनाशनः ।
पित्तकृत्पार्श्वशूलघ्नः सुरसः समुदाहृतः ॥
तद्वत्तु सुमुखो ज्ञेयो विशेषाद्गरनाशनः ।
कफघ्ना लघवो रूक्षा स्निग्धोष्णाः पित्तवर्द्धनाः ॥
कटुपाकरसाश्चैव सुरसार्जकभूस्तृणाः ।
मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ॥
विशेषतः पित्तहरः सतिक्तः कासमर्द्दकः ।
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पित्तलः ॥
मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ।
विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च ॥
त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ।
चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥
वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् ।
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥
सर्व्वं दोषहरा लघ्वी कण्ठ्या मूलकपोतिका ।
महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥
तद्देव स्निग्धसिद्धन्तु पित्तनुत् कफवातजित् ।

त्रिदोषशमनं शुष्कं विषदोषहरं लघु ॥
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥
पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरं ते लघवः प्रदिष्टाः।
तेषान्तु पुष्पं कफपित्तहन्तृ फलं निहन्यात् कफमारुतौ च ॥
स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसश्च बल्यः ॥
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः।
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् ॥
दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति।
नात्युष्णवीर्य्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च ॥
बलावहः पित्तकरोऽथ किञ्चित् पलाण्डुरग्निञ्च विवर्द्धयेच्च ॥
स्निग्धो रुचिस्थः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिदश्च।
स्वादुर्गुरुः शोणितपित्तशस्तः स पिच्छिलः चीरपलाण्डुरुक्तः ॥
कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु।
कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥

चुञ्चूयूथिकातरुणीजीवन्तीबिम्बीतिकानन्दीभल्लातकच्छगलान्त्रीवृचादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्व्वुदारकोविदारप्रभृतीनि ॥

कषायस्वादुतिक्तानि रक्तपित्तहराणि च।
कफघ्नान्यनिलं कुर्य्युः संग्राहीणि लघूनि च ॥
लघुः पाकेच जन्तुघ्नः पिच्छिलो व्रणिनां हितः।
कषायमधुरो ग्राही चुञ्चूस्तेषां त्रिदोषहा ॥
चक्षुष्या सर्व्वदोषघ्नी जीवन्ती समुदाहृता।
वृचादनी व[illegible]रा फञ्जी त्वल्पबला मता ॥

क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ।
शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥

पुनर्नवावरुणतर्कार्य्युरुबूकवत्सादनीविल्वशाकप्रभृतीनि ।

उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ।
तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥

तण्डुलीयकोपोदिकाऽश्ववलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि ॥

सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ।
मन्दवातकफान्याहू रक्तपित्तहराणि च ॥
मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ।
तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ।
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥
कटुर्विपाके क्रिमिहा मेधाग्निबलवर्द्धनः ॥
सक्षारः सर्व्वदोषघ्नो वास्तूको रोचकः सरः ।
चिल्ली वास्तूकवत् ज्ञेया पालङ्क्या तण्डुलीयवत् ॥
वातकृत् बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ।
शाकमाश्ववलं रूक्षं बद्धविण्मूत्रमारुतम् ॥

मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चलाब्रह्मसुवर्चलापिप्पलीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडावल्गुजसतीनबृहतीकण्टकारिकाफलपटोलवार्त्ताकुकारवेल्लककटुकिकाकेबुकोरुबूकपर्पटककिराततिक्तकर्कोटकारिष्टकोशातकीवेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ।

रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च।

कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥
कषायातु हिता पित्ते स्वादुपाकरसा हिमा।
लघ्वी मण्डूकपर्णीतु तद्वद्गोजिह्विका मता ॥
अविदाही त्रिदोषघ्नः संग्राही सुनिषस्नकः ।
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥
ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम्।
नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् ॥
कण्डु कुष्ठक्रिमिघ्नानि कफवातहराणि च ॥
फलानि बृहतीनान्तु कटुतिक्तलघूनि च।
कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ॥
पटोलं कटुकं पाके वृष्यं रोचनदीपनम्।
वार्त्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम्।
तद्वत्कर्कोटकं प्रोक्तं कारवेल्लकमेव च।
अटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ॥
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः।
कफापहं शाकमुक्तं वरुणप्रपुनाडयोः ॥
रूक्षं लघु च शीतञ्च वातपित्तप्रकोपणम्।
दीपनं कालशाकन्तु गरदोषहरं कटु ॥
कौसुम्भं मधुरं रूक्षमुष्णं श्लेष्महरं लघु।
वातलं नालिकाशाकं पित्तघ्नं मधुरञ्च तत् ॥
ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता।
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी ॥
लोणिकाजातुकपर्णिकापत्तूरजीवकसुवर्चलाकुरुवकक-

ठिञ्जरकुन्तलिकाकुरण्टिकाप्रभृतीनि ॥

स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः ।
लवणानुरसा रूक्षाः सक्षारा वातलाः सराः ॥
स्वादुतिक्ता कुन्तलिका सकषाया कुरण्टिका ।
संग्राहि शीतलञ्चापि लघु दोषाविरोधि च ॥
राजक्षवकशाकन्तु सटीशाकन्तु तद्विधम् ।
स्वादु पाकरसं शाकं दुर्जरं हरिमन्थजम् ॥
भेदनं मधुरं रूक्षं कलायमतिवातलम् ।
स्रंसनं कटुकं पाके लघुवातकफापहम् ॥
शोफघ्नमुष्णवीर्यन्तु पत्रं पूतिकरञ्जजम् ।
ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ॥
सुगन्धि विशदं तिक्तं स्वर्य्यं वातकफापहम् ।
स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ।
वक्त्रकण्डूमलक्लेददौर्गन्ध्यादिविशोधनम् ॥

॥ अथ पुष्पवर्गः ॥

कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च ॥ वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि ॥ मधुशिग्रुकरीरकुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च ।

आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ।
रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ॥
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ।
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥

मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ।
तस्मादल्पान्तरगुणे विद्यात्कुवलयोत्पले ॥
सिन्दुवारं विजानीयाद्धितं पित्तविनाशनम् ।
मालतीमल्लिके तिक्ते सौरभ्यात्पित्तनाशने ॥
सुगन्धिविशदं हृद्यं वाकुलं पाटलानि च ।
श्लेषपित्तविषघ्नन्तु नागं तद्वच्च कुङ्कुमम् ।
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥
किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् ।
यथावृत्तं विजानीयात्पुष्पं वृन्तोचितं तथा ॥
मधुशिग्रुकरीराणि कटु श्लेषहराणि च ॥

च्चवककुलेचरवंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्रपुरीषाणि

च्चवकं क्लमिलं तेषु स्वादुपाकं सपिच्छिलम् ।
विस्यन्दि वातलं नाति पित्तश्लेषकरञ्च तत् ॥
वेणोः करीराः कफला मधुरा रसपाकतः ।
विदाहिनो वातकराः सकषाया विरूक्षणाः ॥

उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि ॥ तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनञ्च । इक्षुजं मधुरं कषायानुरसं कटुकं शीतलञ्च ॥ तद्वदेवोष्णं कारीषं कषायं वातकोपनञ्च ॥ वेणुजातं कषायं वातकोपनञ्च ॥ भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥

पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि सर्व्वदोषप्रकोपणानि

विष्टम्भिनः स्मृताः सर्व्वे वटका वातकोपनाः ।
सिण्डाकी वातला सान्द्रा रुचिष्यानलदीपनी ॥

विड्भेदि गुरु रूक्षञ्च प्रायोविष्टम्भि दुर्जरम् ।
सकषायञ्च सर्व्वं हि स्वादु शाकमुदाहृतम् ॥
पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ।
कर्कशं परिजीर्णञ्च कृमिजुष्टमदेशजम् ॥
वर्जयेत्पत्रशाकन्तत् यदकालविरोहि च ।

॥कन्दानत ऊर्द्धं वक्ष्यामः ॥

विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरुकपिण्डा-लुक मध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दी-वरोत्पलकन्द प्रभृतीनि ॥

रक्तपित्तहरास्त्वाहः शीतानि मधुराणि च ।
गुरूणि बहुशुक्रानि स्तन्यवृद्धिकराणि च ॥
मधुरो बृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः ।
विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः ॥
वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी ।
महती चैव हृद्या च मेधाग्निबलवर्द्धिनी ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ।
कफपित्तहरास्तिक्तास्तस्या एवङ्कुराः स्मृताः ॥
अविदाहि विसम्प्रोक्तं रक्तपित्तप्रसादनम् ।
विष्टम्भि दुर्ज्जरं रूक्षं विरसं मारुतावहम् ॥
गुरुविष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ।
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटु पित्तकृत् ।
वेणोः करीरा गुरवः कफमारुतकोपनाः ॥

स्थूलसूरणमाणकप्रभृतयः कन्दा ईषत्कषायाः कटुका रूक्षा विष्टम्भिनो गुरवः कफवातलाः पित्तहराश्च ॥

माणकं स्वादु शीतञ्च गुरुचापि प्रकीर्त्तितम्।
स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकीलहा ॥
कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः।
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥
वाराहकन्दःश्लेष्मघ्नः कटुको रसपाकतः।
मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायनः ॥

तालनारिकेलखर्जूरप्रभृतीनां मस्तकमज्जानः।

स्वादुपाकरसानाहूरक्तपित्तहरांस्तथा ॥
शुक्रलानिलघ्नांश्च कफवृद्धिकरानपि।
बालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥
कन्दं विवर्ज्जयेत् सर्व्वं यो वा सम्यक् न रोहति ॥

॥ अथ लवणवर्गः ॥

सैन्धवसामुद्रबिडसौवर्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्व्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम्।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥
सक्षारं दीपनं रूक्षं शूलहृद्रोगनाशनम्।
रोचनं तीक्ष्णमुष्णञ्च विडं वातानुलोमनम् ॥

लघु सौवर्चलं पाके वीर्य्योष्णं विशदं कटु ।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ।
वातघ्नं लघु विस्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ।
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥
कफवातक्रिमिहरं लेखनं पित्तकोपनम् ।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥
ऊषसूतं वालुकेलं शैलमूलाकरोद्भवम् ।
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥
यवक्षारस्वर्जिकाक्षारपाकिमटङ्कणक्षाराः ।
गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशनाः ॥
क्षारास्तु पाचनाः सर्व्वे रक्तपित्तकराः स्मृताः ॥
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ।
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥
उष्णोऽनिलघ्नः प्रक्लेदी यवक्षारो बलावहः ।
क्लेदघ्नः पाकिमः क्षारो मूत्रवस्तिविशोधनः ॥
विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ।
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥
सुवर्णं स्वादु हृद्यञ्च बृंहणीयं रसायनम् ।
दोषत्रयघ्नं शीतञ्च चक्षुष्यं विषसूदनम् ॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ।
ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥

तिक्तं कांस्यं लेखनञ्च चक्षुष्यं कफवातजित्।
वातकृत् शीतलं लौहं तृष्णापित्तकफप्रणुत्॥
कटुकं मिष्टं लवणं त्रपुसीसे विलेखने।
मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादयः॥
चक्षुष्या मणयः शीता लेखना विषसूदनाः।
पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः॥
धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात्।
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः॥
षष्टिका यवगोधूमा लोहिता ये च शालयः।
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः॥
लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः।
मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह॥
दाड़िमामलकं द्राक्षा खर्जूरं सपरूषकम्।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते॥
सतीनो वास्तुकश्चुच्चूचिल्लीमूलकपोतिकाः।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते॥
गव्यं क्षीरं घृतं श्रेष्ठं सैन्धवं लवणेषु च।
धात्री दाड़िममम्लेषु पिप्पली नागरं कटौ॥
तिक्ते पटोलवार्त्ताकी मधुरे घृतमुच्यते।
क्षौद्रं पूगफलं श्रेष्ठं काषाये सपरूषकम्॥
शर्करेक्षुविकारेषु पाने मद्यासवौ तथा॥
परिसंवत्सरं धान्यं मांसं वयसि मध्यमे।
अपर्य्युषितमन्नन्तु संस्कृतं मात्रया शुभम्॥

फलं पर्य्यागतं शाकमशुष्कं तरुणं नवम् ।
अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥

लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ।
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥
स्वेदाग्निजननी लघ्वी दीपनी बस्तिशोधनी ।
क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धनी ।
पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥
हृद्या सन्तर्पणी वृष्या बृंहणी बलवर्द्धनी ।
शाकमांसफलैर्युक्ता यवाग्वस्ताश्च दुर्जराः ॥
सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ॥
विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा ।
विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ॥
कफपित्तकरी बल्या कृशराऽनिलनाशनी ।
धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः ॥
स्विन्नः सुप्रस्रुतस्तूष्णो विशदश्चौदनो लघुः ।
अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥
लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ।
स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः ॥
गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः ।
सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः ॥
स्विन्नं निःपीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम् ।
अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा ॥

मांसं स्वभावतो वृष्यं स्नेहनं बलवर्द्धनम् ।
स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह ॥
सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु ।
तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ॥
विद्यात्पित्तकफोद्रेकि बलमांसाग्निवर्द्धनम् ।
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ॥
रोचनं बलमेधाग्निमांसौजःशुक्रवर्द्धनम् ।
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ॥
परिशुष्कगुणैर्युक्तं वह्नेः पक्कमतो लघु ।
तदेव शूलिकाप्रोतमङ्गारे परिपाचितम् ॥
ज्ञेयं गुरुतरं किञ्चित्प्रदिग्धं गुरुपाकतः ।
उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ॥
परिशुष्कं प्रदग्धञ्च शूल्यं यच्चान्यदीदृशम् ।
मांसं यत्तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु ॥
लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् ।
अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः ।
वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ॥
स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् ।
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ॥
आप्यायनः संहननः शुक्रौजोबलवर्द्धनः ।
सदाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ।
यन्मांसमुद्धृतरसं न तत्पुष्टिबलावहम् ।

विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ।
दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः ॥
मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् ।
पिप्पलीशुण्ठिमरिचगुड़सर्पिःसमन्वितम् ।
एकध्यं पाचयेत्सम्यक् वेसवार इति स्मृतः ॥
वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः ।
प्रीणनः सर्व्वधातूनां विशेषान्मुखशोषिणाम् ॥
क्षुत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः ।
कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि ॥
ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ।
स तु दाड़िममृद्वीकायुक्तः स्याद्रागषाडवः ॥
रुचिष्यो लघुपाकश्च दोषाणा मविरोधकृत् ।
मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥
कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते ।
मृद्वीकादाड़िमैर्युक्तः स एवोक्तोऽनिलार्दिते ॥
रोचनो दीपनो हृद्यो लघुपाकुग्पदिश्यते ।
पटोलनिम्बयूषौ तु कफमेदो विशोषिणौ ॥
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ।
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ।
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ॥
तूणीप्रतूणीकासार्शोगुल्मोदावर्त्तनाशनः ।
दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः ॥

प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित् ।
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ।
सर्व्वधान्यकृतस्तद्वद्वृंहणः प्राणवर्द्धनः ॥
खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ।
बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः ॥
दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः ।
तक्राम्लः पित्तकृत्प्रोक्तो विषरक्तप्रदूषणः ।
खडाः खड्यवाग्वश्च षाड्वाः पानकानि च ।
एवमादीनिचान्यानि क्रियन्ते वैद्यवाक्यतः ॥
अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम् ॥
अथ गोरसधान्याम्लफलाम्लैरन्वितञ्च यत् ॥
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसे ।
दधिमस्त्वम्लसिद्धस्तु यषः काम्बलिकः स्मृतः ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ।
सिण्डाकी च गुरूणि स्युः कफपित्तकराणिच ॥
तद्वच वटकान्याहुर्विदाहीनि गुरूणिच ।
लघवो वृंहणा वृष्या हृद्या रोचनदीपनाः ॥
तृष्णामूर्च्छाभ्रमच्छर्द्दिश्रमघ्ना रागषाडवाः ।
रसाला वृंहणी बल्या स्निग्धा वृष्या च रोचनी ॥
स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् ।
सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ॥

नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ।
मन्थः सद्योबलकरः पिपासाश्रमनाशनः ॥
साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्त्तनाशनः ।
शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥
द्राक्षामधूकसंयुक्तः कफरोगनिबर्हणः ।
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥
गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ।
तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥
साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम् ।
मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ।
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राश्च सर्व्वतः ॥
पानकानां यथायोगं गुरुलाघवमादिशेत् ।

॥ इतिकृतान्नवर्गः ॥

वक्ष्यास्यतः परं भक्ष्यान् रसवीर्य्यविपाकतः ॥

भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ।
अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ।
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥
बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः ।
अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः ॥
मधुमस्तकसंयावाः पूपा ह्येते विशेषतः ।
गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥

रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः।
गुरुर्मृष्टतमश्चैव सट्टकः प्राणवर्द्धनः॥
हृद्यः सुगन्धिर्म्मधुरः स्निग्धः कफकरो गुरुः।
वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः॥
बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः।
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः॥
मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः।
वेसवारैः सपिष्टितैः सम्पूर्णा गुरुबृंहणाः॥
पाललाः श्लेष्मजनाः शष्कुल्यः कफपित्तलाः।
वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः॥
विदाहिनो नातिबला गुरवश्च विशेषतः।
वैदला लघवो भक्ष्या कषायाः सृष्टमारुताः॥
विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्चसः।
बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः॥
कूर्च्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः।
विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः॥
विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः।
हृद्या सुगन्धिनो वृष्या लघवो घृतपाचिताः॥
वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः।
विदाहिनस्तैलकृता गुरवः कटुपाकिनः॥
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः।
फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः॥
भक्ष्या बल्यास्तु गुरवो बृंहणा हृदयप्रियाः।

अपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥
सुपक्वास्तनवश्चापि भूयिष्ठं लघवो मताः ।
सकिलाटादयो भक्ष्या गुरवः कफवर्द्धनाः ॥
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ।
उदावर्त्तहरो वाट्यः कासपीनसमेहनुत् ।
धानोलुम्बास्तु लघवः कफमेदोविशोषणाः ॥
सक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ।
पीताः सद्यो बलकरा भेदिनः पवनापहाः ॥
गुर्वी पिण्डी खरात्यर्थ लघ्वी सैव विपर्य्ययात् ॥
सक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ।
लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥
बल्याः कषायमधुरा लघवस्तृणमलापहाः ।
तृट्छर्दिदाहघर्म्मार्त्तिनुदस्तत्सक्तवो मताः ॥
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥
पृथुका गुरवः स्निग्धा बृंहणाः कफवर्द्धनाः ।
बल्याः सक्षीरभावात्त वातघ्ना भिन्नवर्चसः ॥
सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नव ॥
सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥
द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु ।
यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा ॥
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान्विनिर्दिशेत् ॥
॥ अतः सर्व्वाण्यनुपानान्युपदेक्ष्यामः ॥
अम्लेन केचिद्विहिता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति ।

तथाम्लमेके मधुरेषु तज्ज्ञास्तेषां यथेष्टं प्रवदन्ति पथ्यम्॥
शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम्।
यस्यानुपानन्तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत्॥
व्याधिञ्च कालञ्च विभाव्य धीरैर्द्रव्याणि भोज्यानि च तानि तानि
सर्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम्॥
लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्वरसाश्च दृष्टाः।
सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतः परं विस्तरतो विधास्ये॥

उष्णोदकानुपानन्तु स्नेहानामथ शस्यते।
ऋते भल्लातकस्नेहात्स्नेहात्तौवरकात्तथा॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिके।
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः॥
दधिपायसमद्यार्त्तिविषजुष्टे तथैव च।
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम्॥
पयोमांसरसो वापि शालिमुद्गादिभोजिनाम्॥
युद्धाध्वातपसन्तापविषमद्यरुजासु च।
माषादेरनुपानन्तु धान्याम्लं दधिमस्तु वा।
मद्यं मद्योचितानान्तु सर्वमांसेषु पूजितम्॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते।
क्षीरं घर्म्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम्॥
सुराकृशानां स्थूलानामनुपानं मधूदकम्।
निरामयानां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम्॥
स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते।
अनुपानं हितं चापि पित्ते मधुरशीतलम्॥

हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ।
अर्कशेलुशिरीषाणामासवास्तु विषार्त्तिषु ॥
अतः परन्तु वर्णानामनुपानं पृथक् पृथक् ।
प्रवक्ष्याम्यानुपूर्व्वेण सर्वेषामेव मे शृणु ॥

तत्र पूर्व्वं शूकजातीनां बदराम्लवैदलानां धान्याम्लं जङ्गलानां धन्वजानाञ्च पिप्पल्यासवः । विष्किराणां कोलबदरासवः । प्रतुदानान्तु क्षीरवृक्षासवः । गुहाशयानान्तु खर्जूरनारिकेलासवः । प्रसहानामश्वगन्धासवः । पर्णमृगाणां कृष्णगन्धासवः । बिलेशयानां फलसारासवः । एकशफानां त्रिफलासवः । अनेकशफानां खदिरासवः । कूलचराणान्तु शृङ्गाटककशेरुकासवः । कोशवासिनां पादिनाञ्च तदेव । प्लवानामिक्षुरसासवः । नादेयानां मृणालासवः । सामुद्राणां मातुलुङ्गासवः । अम्लानां फलानां पद्मोत्पलकन्दासवः । कषायाणां दाड़िमवेत्रासवः । मधुराणां त्रिकटुकयुक्तः खण्डासवः । तालफलादीनां धान्याम्लम् । कटुकानां दूर्व्वानलवेत्रासवः । पिप्पल्यादीनां दर्भ-ङ्कावकुशासवः । कुष्माण्डादीनां दार्व्वीकरीरासवः । चुञ्चूप्रभृतीनां लोध्रासवः । जीवन्त्यादीनां त्रिफलासवः । कुसुम्भशाकस्य सुरा । मण्डूकपर्ण्यादीनां महापञ्चमूलासवः । तालमस्तकादीनामम्लफलासवः । सैन्धवादीनां सुरासव आरनालञ्च । तोयं वा सर्व्वत्रेति ।

भवन्ति चात्र । सर्व्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ।
सात्म्यं यस्य तु यत्तोयं तत्तस्मै हितमुच्यते ॥

उष्णां वाते कफे तोयं पित्ते रक्ते च शीतलम्।
दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा॥
यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति।
रोचनं वृंहणं वृष्यं दोषसङ्घातभेदनम्॥
तर्पणं मार्दवकरं श्रमक्लमहरं सुखम्।
दीपनं दोषशमनं पिपासाच्छेदनं परम्॥
बल्यं वर्णकरं सम्यगनुपानं सदोच्यते।
तदादौ कर्षयेत्पीतं स्थापयेन्मध्यसेविनाम्॥
पश्चात्पीतं वृंहयति तस्माद्वीक्ष्य प्रयोजयेत्।
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम्॥
भवत्याबाधजननमनुपानमतः पिबेत्।
न पिबेच्छ्वासकासार्त्तो रोगे चाप्यूर्द्ध्वजत्रुगे॥
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः।
पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत्॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम्।
स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद्बहून्॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्त्तते।
तथा संस्कारमात्रांन कालांश्चाप्युत्तरोत्तरम्॥
मन्दकर्म्मानलारोग्याः सुकुमाराः सुखोचिताः।
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्तिता॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः।
कर्म्मनित्याश्च ये तेषां नावश्यं परिकीर्त्त्यते॥

इति सर्व्वानुपानवर्गः।

अथाहारविधिं वत्स विस्तरेणाखिलं शृणु ।
आप्तान्वितमसंकीर्णं शुचि कार्य्यं महानसम् ॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् ।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥
विषघ्नैरगदैः स्पृष्टम्प्रोक्षितं व्यजनोदकैः ।
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥
वक्ष्याम्यतः परं कृत्स्नमाहारस्योपकल्पनाम् ।
घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥
फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च ।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
कट्वराणि खडांश्चैव सर्व्वान्शैलेषु दापयेत् ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ।
पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ।
दद्याद्वैदूर्य्यपात्रेषु रागषाडवसट्टकान् ॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपौदनं दद्यात् प्रदेह्यांश्च सुसंस्कृतान् ॥
फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥
सर्व्वान् गुडविकारांश्च रागषाडवसट्टकान् ।

पुरस्तात् स्थापयेत्प्राज्ञो द्वयोरपि च मध्यतः॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्।
भोक्तारं विजने रम्ये निःसम्बाधेशुभे शुचौ॥
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत्।
विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः॥
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम्।
पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ॥
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत्।
आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान्॥
ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम्।
घनम्पूर्व्वं समश्नीयात् केचिदाहुर्व्विपर्य्ययम्॥
आदावन्तेच मध्येच भोजनस्य तु शस्यते।
निरत्ययं दोषहरं फलेष्वामलकं नृणाम्॥
मृणालविसशालूककन्देक्षुप्रभृतीनि च।
पूर्व्वं योज्यानि भिषजा नतु भुक्ते कथञ्चन॥
सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः।
काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम्॥
बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः।
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते॥
लघु शीघ्रं व्रजेत्पाकं स्निग्धोष्णं वलवह्निदम्।
क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम्॥
सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च।
अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः॥

तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ।
येषु चापि भवेयुश्च दिवसा भृशमायताः ॥
तेषु तत्कालविहितमपराह्णे प्रशस्यते ।
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ।
नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः ।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥
अतीतकाले भुञ्जानो वायुनोपहतेऽनले ।
कृच्छ्राद्विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति ॥
हीनमात्रमसन्तोषं करोति च बलक्षयम् ॥
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ।
तस्मात् संस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ॥
विभज्य कालदोषादीन् कालयोरुभयोरपि ।
अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्टवत् ॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ।
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥
अशान्तमुपदग्धञ्च तथा स्वादु न लक्ष्यते ।
यद्यत्स्वादुतरं तत्तु विदध्यादुत्तरोत्तरम् ॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ।
विशुद्धरसने तस्मै रोचतेऽन्नमपूर्ववत् ॥
स्वादुना तस्य रसनं प्रथमेनापि तर्पितम् ।

न तथा स्वादयेदन्यत्तस्मात्प्राश्यमन्तरा ॥
सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम्।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥
भुक्त्वा च यत्प्रार्थयते भूयस्तत्स्वादु भोजनम्।
अश्नितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥
दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥
कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम्।
जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु।
भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत्कफम्।
धूमेनापोह्य हृद्यैर्व्वा कषायकटुतिक्तकैः।
पूगकक्कोलकर्पूरलवङ्गसुमनःफलैः ॥
कटुतिक्तकषायैर्व्वा मुखवैशद्यकारकैः।
ताम्बूलपत्रसहितैः सुगन्धैर्व्वा विचक्षणः ॥
भुक्त्वा राजवदासीत यावदन्नक्लमो गतः।
ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ॥
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान्।
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥
शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः।
अशुच्यन्नं तथाभुक्तमतिहास्यञ्च वामयेत् ॥
शयनं चासनं वापि नेच्छेद्वापि द्रवोत्तरम्।
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥
नचैकरससेवायां प्रसज्येत कदाचन।
शाकावरान्नभूयिष्ठमम्लञ्च न समाचरेत्।

एकैकशः समस्तान् वा नाप्यश्नीयाद्रसान् सदा ।
प्रागभुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥
पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ।
मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ।
द्विगुणञ्च पिबेत्तोयं सुखं सम्यक् प्रजीर्य्यति ।
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥
गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते ।
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥
द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते ।
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ।
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥
विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ।
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥

अत्यम्बुपानाद्विषमाशनाद्वा सन्धारणात्स्वप्नविपर्य्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीड़ितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥
माधुर्य्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम् ।
किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमाबद्धविरुद्धवातम् ॥

उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य ।
रसावशेषेण तु सप्रसेकं चतुर्थमेतत्प्रवदन्त्यजीर्णम् ॥

मूर्च्छाप्रलापो वमथुः प्रसेकः सदनं भ्रमः ।
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥
तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम् ।
विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना ।
कार्य्यं चानशनं तावद्यावन्न प्रकृतिं भजेत् ।
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् ॥
यावन्नप्रकृतिस्थःस्याद्दोषतः प्राणतस्तथा ॥
हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ।
बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् ॥
साजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ।
त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति वा ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥
विदह्यते यस्य तु भुक्तमात्रे दह्येत हृत्कण्ठगलञ्च यस्य ।
द्राक्षाभयां माक्षिकसम्प्रयुक्तां लीढ्वाभयां वा स सुखं लभेत ॥
भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
प्रातःस शुण्ठीमभयामशङ्को भुञ्जीत सम्प्राश्य हितं हितार्थी ॥
स्वल्पं यदा दोषविबद्धमामं लीनं न तेजः पथमावृणोति ।
भवत्यजीर्णेऽपि तदाबुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम् ।

कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रयागुणाः ॥
ह्लादनः स्तम्भनःशीतो मूर्च्छातृट्स्वेददाहजित् ।
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥
स्नेहमार्दवकृत्स्निग्धो बलवर्णकरस्तथा ।
रूक्षस्तद्विपरीतः स्याद्विशेषात्स्तम्भनः खरः ॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ॥
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥
दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा ।
सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः ॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ।
दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ।
द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः ।
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा ॥
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ।
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥
सरोऽनुलोमनः प्रोक्तो मदो यालाकरः स्मृतः ।
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥
विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ।
आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतस्स्वनुसरः स्मृतः ।
गुणा विंशतिरित्येवं यथावत्परिकीर्त्तिताः ।
संप्रवक्ष्याम्यतश्चोर्द्ध्वमाहारगतिनिश्चयम् ॥

पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः।
विपक्कः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेत्॥
अविदग्धः कफं पित्तं विदग्धः पवनं पुनः।
सम्यग्विपक्को निःसार आहारः परिबृंहयेत्॥
विण्मूत्रमाहारमलः सारः प्रागीरितो रसः।
स तु व्यानेन विक्षिप्तः सर्व्वान्धातून् प्रतर्पयेत्॥
कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः॥
दिवाविबुद्धे हृदये जाग्रतः पुण्डरीकवत्।
अन्नमक्लिन्नधातुत्वादजीर्णे पिहितं निशि॥
हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः।
क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा॥
इमं विधिं योऽनुमतं महामुनेर्नृपर्षिमुख्यस्य पठेद्धि यत्नतः।
स भूमिपालाय विधातुमौषधं महात्मनाञ्चार्हति सूरिसत्तमः॥

इति श्रीसुश्रुताचार्य्यविरचिते आयुर्व्वेदशास्त्रे सुश्रुते सूत्रस्थानं समाप्तम्॥

---

सुश्रुतः ।

# निदानस्थानम् ।

## प्रथमाऽध्यायः ।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥
धन्वन्तरिं धर्म्मभृतां वरिष्ठममृतोद्भवम् ।
चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥
वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः ।
स्थानं कर्म्म च रोगांश्च वद मे वदतांवर ॥
तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजांवरः ।
स्वयम्भूरेष भगवान्वायुरित्यभिशब्दितः ॥
स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ।
सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः ॥
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ।
अव्यक्तो व्यक्तकर्म्मा च रूक्षः शीतो लघुः खरः ॥
तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च ।
अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट् ॥
आशुकारी मुहुश्चारी पक्वाधानगुदालयः ।
देहे विचरतस्तस्य लक्षणानि निबोध मे ॥
दोषधात्वग्निसमतां सम्प्राप्तिं विषयेषु च ।
क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिलः ॥
यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः ।

भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥
प्राणोदानौ समानश्च व्यानश्चापान एव च।
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥
वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ॥
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्।
उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः ॥
तेनभाषितगीतादिविशेषोऽभिप्रवर्त्तते।
ऊर्द्धजत्रुगतान् रोगान्करोति च विशेषतः ॥
आमपक्वाशयचरः समानो वह्निसङ्गतः।
सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि ॥
गुल्माग्निसङ्गातीसारप्रभृतीन्कुरुते गदान्।
कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः ॥
स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि।
क्रुद्धश्च कुरुते रोगान्प्रायशः सर्वदेहगान् ॥
पक्वाधानालयो ऽपानः काले कर्षति चाप्ययम्।
समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः ॥
क्रुद्धश्च कुरुते रोगान्घोरान्वस्तिगुदाश्रयान्।
शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः ॥
युगपत्कुपिताश्चापि देहं भिन्द्युरसंशयम्।
अत ऊर्द्ध्वं प्रवक्ष्यामि नानास्थानान्तराश्रितः ॥
बहुशः कुपितो वायुर्विकारान्कुरुतेहि यान्।
वायुरामाशये क्रुद्धश्छर्द्यादीन्कुरुते गदान् ॥

मोहं मूर्च्छां पिपासाञ्च हृद्ग्रहं पार्श्ववेदनाम् ।
पक्वाशयस्थोऽन्त्रकूजं शूलं नाभौ करोति च ॥
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ।
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात्क्रुद्धः समीरणः ॥
वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमुचुमायनम् ।
त्वक्स्थोनिस्तोदनं कुर्य्यात्त्वग्भेदं परिपोटनम् ॥
व्रणांश्च रक्तगो ग्रन्थीन्सशूलान्मांससंश्रितः ।
तथा मेदःश्रितः कुर्य्याद्ग्रन्थीन्मन्दरुजोऽव्रणान् ॥
कुर्य्यात्सिरागतः शूलं सिराकुञ्चनपूरणम् ।
स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥
हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ।
अस्थिशोषञ्च भेदञ्च कुर्य्याच्छूलञ्च तत्स्थितः ॥
तथा मज्जगते रुक्च न कदाचित्प्रशाम्यति ।
अप्रवृत्तिः प्रवृत्तिर्वा विकृतिः शुक्रगेऽनिले ॥
हस्तपादशिरोधातूंस्तथा सञ्चरति क्रमात् ।
व्याप्नुयाद्वाखिलं देहं वायुः सर्वगतो नृणाम् ॥
स्तम्भनाक्षेपणस्वापशोफशूलानि सर्वगः ।
स्थानेषूक्तेषु मिश्रश्च संमिश्राः कुरुते रुजः ॥
कुर्य्यादवयवप्राप्तो मारुतस्त्वभितान्गदान् ।
दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ।
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ॥
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ।

प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥
दौर्बल्यं सदनं तन्द्रा वैवर्ण्यञ्च कफावृते।
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥
अस्वेदहर्षौ मन्दाग्निः शीतस्तम्भौ कफावृते।
समाने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥
कफाधिक्यञ्च विण्मूत्रं रोमहर्षः कफावृते।
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्दरम् ॥
अधः काये गुरुत्वञ्च तस्मिन्नेव कफावृते।
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥
गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम्।
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम्।
शोकाच्च प्रमदामद्यव्यायामैर्थातिपीडनात् ॥
ऋतुसात्म्यविपर्य्यासात् स्नेहादीनाञ्च विभ्रमात्।
अव्यवाये तथा स्थूले वातरक्तं प्रकुप्यति ॥

हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं यातः कारणैः सेवितैः स्वैः।
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः सन्तापाद्यैर्भूयसा सेवितैश्च ॥
क्षिप्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्ध्याशु यातः।
क्रुद्धोऽत्यर्थं मार्गरोधात्स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु ॥
तत्सम्पृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम्।
तद्वत्पित्तं दूषितेनासृजाक्तं श्लेष्मा दुष्टो दूषितेनासृजाक्तः ॥
स्पर्शोद्विग्नौ तोदभेदप्रशोषस्तापोपेतौ वातरक्तेन पादौ।
पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोफौ मृदू च ॥

कण्डूमन्तौ श्वेतशीतौ सशोफौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ।
सर्व्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं रूपं पादयोर्दर्शयन्ति ॥

प्राग्रूपे शिथिलौ खिन्नौ शीतलौ सविपर्य्ययौ ।
वैवर्ण्यतोदसुप्तत्वगुरुत्वोषसमन्वितौ ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्व्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥
आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतञ्च यत् ।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥
शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ।
यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः ॥
तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ।
मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥
सोऽपतानकसंज्ञो यः पातयत्यन्तरान्तरा ।
कफान्वितो भृशंवायुस्तास्वेव यदि तिष्ठति ॥
सदण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः ।
हनुग्रहस्तदात्यर्थं सोऽन्नं कृच्छ्रान्निषेवते ॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ।
अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥
स्नायुप्रतानमनिलो यदा क्षिपति वेगवान् ।
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥
अभ्यन्तरं धनुरिव यदा नमति मानवः ।
तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥
वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च ।

तस्या ... प्रादुर्भवन्तःकद्रूरुभञ्जनम् ॥
कफादि ... वायुर्व्वायुरेवच केवलः।
कुर्य्यादा ... न्यं चतुर्थमभिघातजम् ॥
गर्भपातो ... स्य शोणितातिस्रवाच्च यः।
अभिघात ... स्तस्य न सिध्यत्यपतानकः ॥
अधोगमाः ... तिर्य्यग्गा धमनीरूर्द्ध्वदेहगाः।
यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥
तदान्यतरपक्षस्य सन्धिबन्धान्विमोत्त्ययन्।
हन्ति पक्षं तमाहुर्हि पक्षाघातं भिषग्वराः ॥
यस्य कृत्स्नं शरीरार्द्धमकर्म्मण्यमचेतनम्।
ततः पतत्यसून्वापि जहात्यनिलपीडितः ॥
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः।
साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् ॥
वायुरूर्द्ध्वं व्रजेत्स्थानात्कुपितो हृदयं शिरः।
शङ्खौच पीडयत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥
निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वापि कूजति।
निरुच्छासोऽथ वा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥
स्वस्थः स्याद्धृदये मुक्ते आवृते च प्रमुह्यति।
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥
दिवास्वप्नासमस्थानविकृतोर्द्ध्वनिरीक्षणैः।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणा वृतः ॥
गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये।
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ॥

हसतो जृम्भतो भाराद्विषमाच्छयनादपि ।
शिरोनासौष्ठचिबुकललाटेचणसन्धिगः ॥
अर्द्दयित्वाऽनिलो वक्त्रमर्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ।
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे तु वेदना ॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ॥
वायुरूर्द्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ।
तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥
चीणस्यानिमिषाचस्य प्रसक्ताव्यक्तभाषिणः ।
न सिद्ध्यत्यर्दितं बाढं त्रिवर्षं वेपनस्य च ॥
पार्ष्णिप्रत्यङ्गुलीनान्तु कण्डरा यानिलार्दिता ।
सक्थ्नोः क्षेपं निगृह्णीयाद्गृध्रसीति हि सा स्मृता ॥
तलं प्रत्यङ्गुलीनान्तु कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्म्मक्षयकरी विश्वाचीति हि सा स्मृता ॥
वातशोणितजः शोफो जानुमध्ये महारुजः ॥
शिरः क्रोष्टुकपूर्व्वन्तु स्थूलं क्रोष्टुकमूर्द्धवत् ।
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ।
प्रक्रामन्वेपते यस्तु खञ्जन्निव च गच्छति ॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ।
न्यस्ते तु विषमे पादे रुजः कुर्य्यात्समीरणः ॥
वातकण्टक इत्येष विज्ञेयः खुडकाश्रितः ।

पादयोःकुरुते दाहं पित्तासृक्सहितोऽनिलः॥
विशेषतश्च क्रमतः पाददाहं तमादिशेत्।
हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत्॥
पादहर्षः स विज्ञेयः कफवातप्रकोपजः।
अंसदेशस्थितो वायुः शोषयित्वांसबन्धनम्॥
शिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम्।
यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति॥
शुद्धः श्लेष्मान्वितो वापि वाधिर्य्यं तेन जायते।
हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः॥
कर्णयोः कुरुते शूलं कर्णशूलं तदुच्यते।
आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः॥
नरान् करोत्यक्रियकान्मूकमिम्मिणगद्गदान्॥
अधो या वेदना याति वर्चोमूत्राशयोत्थिता।
भिन्दन्तीव गुदोपस्थं सा तूणीत्यपदिश्यते॥
गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी।
वेगैः पक्वाशयं याति प्रतितूणी तु सा स्मृता॥
साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्।
आध्मानमिति जानीयाद्घोरं वातनिरोधजम्॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम्॥
अष्ठीलावद्घनं ग्रन्थिमूर्द्ध्वमायतमुन्नतम्।
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्॥
एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्।

प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम्॥

---

द्वितीयोऽध्यायः।

अथातोऽर्शसां निदानं व्याख्यास्यामः।

षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति। तत्रानात्मवतां यथोक्तैः प्रकोपणैर्व्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कुटकासनपृष्ठयानवेगविधारणादिभिर्व्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याऽधोगत्वा गुदमागम्य प्रदूष्य बलीर्म्मांसप्ररोहान् जनयन्ति विशेषतो मन्दाग्नेस्तथा तृणकाष्ठोपललोष्ठवस्त्रादिभिः शीतोदकसंस्पर्शनाद्वा कन्दाः परिवृद्धिमासादयन्ति तान्यर्शांसीत्याचक्षते। तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुस्तस्मिन् बलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरभूताः प्रवाहणी विसर्ज्जनी सम्बरणी चेति चतुरङ्गुलायताः सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिता।

शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः।
गजतालुनिभाश्चापि वर्णतः सम्प्रकीर्त्तिताः॥
रोमान्तेभ्यो यवाध्यर्द्धो गुदोष्ठः परिकीर्त्तितः॥

प्रथमा तु गुदोष्ठादङ्गुलमात्रे। तेषान्तु भविष्यतां पूर्व्वरूपाण्यन्ने न श्रद्धा कृच्छ्रात्पक्तिरम्लीका सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोश्च श्वयथुरन्त्रकूजनं गुदपरिकर्त्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां कासश्वासौ भ्रमस्तन्द्रा-

निद्रेन्द्रियदौर्ब्बल्यञ्च जातेष्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति।

तत्र मारुतात्परिशुष्कारुणवर्णानि विषममध्यानि कदम्बपुष्प तुण्डिकेरीनाडीमुखसूचीमुखाकृतीनि च भवन्ति। तैरुपहतः सशूलं संहतमुपवेशते कटीपृष्ठपार्श्व मेढ्र गुदनाभिप्रदेशेषु चास्य वेदना गुल्माष्ठीलाप्लीह उदराणि चास्य तन्निमित्तान्येव भवन्ति कृष्णत्वङ्नखनयनरदनवदनमूत्रपुरीषश्च पुरुषो भवति॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति तैरुपहतः सदाहं सरुधिरमतिसार्य्यते ज्वर दाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति पीतत्वङ्नखनयनदशनवदन मूत्रपुरीषश्च पुरुषो भवति।

श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति तैरुपहतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्य्यते शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति शुक्लत्वङ्नखनयनदशनवदनमूत्र पुरीषश्च पुरुषो भवति।

रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्त लक्षणानि च यदावगाढपुरीषप्रपीडितानि भवन्ति तदात्यर्थं दुष्टमनल्पमसृक्सहसा विसृजन्ति तस्यैवातिप्रवृ-

त्तौ शोणितातियोगोपद्रवा भवन्ति । सन्निपातजानि सर्व-
दोषलक्षणयुक्तानि ।

सहजानि दुष्टशोणितशुक्रनिमित्तानि तेषां दोषत एव प्रसाधनं कर्त्तव्यं विशेषतश्चात्र दुर्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्मुखानि तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्षावेनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवणरोगवान्सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ।

भवति चात्र । बाह्यमध्यबलिस्थानां प्रतिकुर्य्याद्भिषग्वरः ।
अन्तर्व्वलिसमुत्थानां प्रत्याख्यायाचरेत्क्रियाम् ॥

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति ततः कण्डूयनात्क्षतं समुपजायते तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्चकिनोऽभ्यन्तरमुपरिष्टाद्वा ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वम् योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान्करीरान् जनयन्ति त एवोर्द्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिर्वर्त्तयन्ति तत्र कर्णजेषु बाधिर्य्यं शूलं पूतिकर्णता च । नेत्रजेषु वर्त्मावरोधो वेदनास्रावो दर्शननाशश्च । घ्राणजेषु प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्च । वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्ते गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति। व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य वहिःस्थिराणि की-

लवदर्शांसि निर्वर्त्तयन्ति तानि चर्म्मकीलान्यर्शांसीत्या-
च्यते ॥

भवन्ति चात्र ॥ तेषु कीलेषु निस्तोदो मारुतेनोपजायते।
श्लेष्मणा तु सवर्णत्वं ग्रन्थित्वञ्च विनिर्दिशेत् ॥
पित्तशोणितजं रौच्यं ऽकृष्णत्वं शुक्लता तथा।
समुदीर्णखरत्वञ्च चर्म्मकीलस्य लक्षणम् ॥
अर्शसां लक्षणं व्यासादुक्तं सामान्यतस्तु यत्।
तत्सर्वं प्राग्विनिर्दिष्टात्साधयेद्भिषजां वरः ॥
अर्शःसु दृश्यते रूपं यदा दोषद्वयस्य तु।
संसर्गं तं विजानीयात्संसर्गः सच षड्विधः ॥
त्रिदोषाख्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत्।
द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च ॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च।
सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥
सर्व्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः।
तैस्तु प्रतिहतो वायुरपानः सन्निवर्त्तते ॥
ततो व्यानेन सङ्गम्य ज्योतिर्मृद्नाति देहिनाम् ॥

---

## तृतीयोऽध्यायः।

अथातोऽश्मरीणां निदानं व्याख्यास्यामः।

चतस्रोऽश्मर्य्यो भवन्ति श्लेष्माधिष्ठानास्तद्यथा श्लेष्मणा
वातेन पित्तेन शुक्रेण चेति ॥ तत्रासंशोधनशीलस्यापथ्यका-
रिणः प्रकुपितः श्लेष्मा मूत्रसम्पृक्तोऽनुप्रविश्य वस्तिमश्मरीं

जनयति तासां पूर्वरूपाणि वस्तिपीडारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति ॥

यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम् ।
पूर्व्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥

अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन्मेहतोवेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदकप्रकाश मनाविलं ससिकतं विसृजति धावनलङ्घनप्लवनपृष्ठयानाध्वगमनै श्चास्य वेदना भवति ॥

तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति । अश्मरीचात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशामधूकपुष्पवर्णा वा भवति तां श्लैष्मिकीमिति विद्यात् ।

पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्ययथोक्तां परिवृद्धिं प्राप्य वस्ति मुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतीघातादुष्यते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति । अश्मरीचात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति तां पैत्तिकीमिति विद्यात् ।

वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतीघातात्तीव्रा वेदना भवति तथात्यर्थं पीड्यमानो दन्तान्

खादति नाभिं पीडयति मेढ्रं मृद्नाति पायुं स्पृशति विशर्द्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो-निःसरन्ति। अश्मरी चात्र श्यामा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति तां वातिकीमिति विद्यात्॥

प्रायेणैतास्तिस्रो ऽश्मर्य्यो दिवास्वप्नसमशनाध्यशनशीत-स्निग्धगुरुमधुराहार प्रियत्वाद्विशेषेण बालानां भवन्ति तेषामेवाल्पवस्तिकायत्वादनुपचितमांसत्वाच्च वस्तेः सुख-ग्रहणाहरणा भवन्ति। महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनाभिघातादतिमैथुनाद्वा शुक्रस्खलितमनि-र्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्यचोपशोषयति सा मूत्रमार्गमावृणोति मूत्र-कृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीडित मात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते तां शुक्राश्मरी-मिति विद्यात्।

भवन्ति चात्र। शर्करा सिकता मेहो भस्माख्यो ऽश्मरिवैकृतम्।

अश्मर्य्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना॥
पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः।
सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते॥
हृत्पीडासक्थिसदनं कुक्षिशूलः सवेपथुः।
तृष्णोर्द्ध्वगोऽनिलः कार्ष्ण्यं दौर्ब्बल्यं पाण्डुगात्रता॥
अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च।
मूत्रमार्गप्रसक्ता सा सता कुर्य्यादुपद्रवान्॥

दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्।
पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीडनं वमिम्॥
नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम्।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः॥
अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः।
वस्तिर्व्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम्॥
एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः।
मूत्राशयो मलाधारः प्राणायतनमुत्तमम्॥
पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः।
नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥
जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते।
आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः॥
घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते।
एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा॥
मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्।
अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे घटे॥
कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा।
संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः॥
तद्वद्बलासं वस्तिस्थमुष्मा संहन्ति सानिलः।
मारुते प्रगुणे वस्तौ मूत्रं सम्यक्प्रवर्त्तते॥
विकाराः विविधाश्चापि प्रतिलोमे भवन्ति हि॥

मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैवच।
मूत्रदोषाश्च ये केचिद्वस्तावेव भवन्तिहि॥

---

## चतुर्थोऽध्यायः॥

### अथातोभगन्दराणां निदानं व्याख्यास्यामः॥

वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्री-वपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्काः पिडकाः पक्कास्तु भगन्दराः तेषान्तु पूर्व्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति।

तत्रापथ्यसेविनां वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्वाङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति सास्य तोदादीन्वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवद्‌णुमुखैश्छिद्रैरापूर्य्यते तानि च छिद्राण्यजस्रं फेणानुविद्धमधिकमास्रावं स्रवन्ति व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते गुदश्चावदीर्य्यते वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति तं भगन्दरं शतपोनकमित्याचक्षते।

पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्व्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति। सास्यचोषादीन्वेदनाविशेषान् जनयत्यप्रतिक्रियमाणाच

पाकमुपैति व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ।

श्लेष्मा तु प्रकुपितः समीरणेनाधःप्रेरितः पूर्व्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति सास्य कण्ड्वादीन्वेदनाविशेषाञ्जनयत्यप्रतिक्रियमाणाच पाकमुपैति व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवत्युपेक्षितश्च वात मूत्रपुरीषरेतांसि विसृजति तं भगन्दरं परिस्राविणमित्याचक्षते ।

वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधोगत्वा पूर्व्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्व्वलिङ्गां पिडकां जनयति सास्य तोददाहकण्ड्वादीन्वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च नानाविधवर्णमास्रावं स्रवति पूर्णनदी शम्बूकावर्त्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषास्तं भगन्दरं शम्बूकावर्त्तमित्याचक्षते ।

मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदाव गाढपुरीषोन्मिश्रमपानेनाधः प्रेरितमसम्यगागतं गुदम् क्षिणोति तत्र क्षतनिमित्तः कोथ उपजायते तस्मिंश्च क्षते पूयरुधिरावकीर्णे मांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्तेते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति तस्य तैर्म्मार्गैः क्रिमिकृतैर्व्वातमूत्र पुरीषरेतांस्यभिनिःसरन्ति तं भगन्दरमुन्मार्गिणमित्याचक्षते ।

भवन्ति चात्र ॥ उत्पद्यतेऽल्परुक्शोफा क्षिप्रं चाप्युपशाम्यति ।

पायुन्तदेशे पिडका सा ज्ञेयान्या भगन्दरात् ॥
भगन्दरी तु विज्ञेया पिडकाऽतो विपर्य्ययात्।
पायोः स्याद्द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा ॥
यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान्।
पायुर्भवेद्रुजः कट्यां पूर्वरूपं भगन्दरे ॥
घोराः साधयितुं दुःखाः सर्व एव भगन्दराः।
तेष्वसाध्यस्त्रिदोषोत्थः चतजश्च भगन्दरः ॥

---

## पञ्चमोऽध्यायः ॥

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ मिथ्याहाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसा भीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्दिवा प्रतिहन्ति तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्य्यग्गाः सिराः सम्प्रतिपद्य समुद्धूय वाह्यं मार्गं प्रति समन्ताद्विक्षिपति। यत्र यत्र च दोषो विक्षिप्तो निःसरति तत्र तत्र मण्डलानि प्रादुर्भवन्त्येवमुत्पन्नस्त्वचि दोषस्तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्यते धातून् दूषयन्। तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वेदबाहुल्यमस्वेदनं वाङ्गप्रदेशानां स्वापः चतविसर्पणमसृजः कृष्णता चेति।

तत्र सप्त महाकुष्ठान्येकादश क्षुद्रकुष्ठान्येवमष्टादश कु-

ष्ठानि भवन्ति। तत्र महाकुष्ठान्यऽरुणौडुम्बरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति।

क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठञ्चर्मदलं विसर्पः परिसर्पः सिध्म विचर्च्चिका किटिमं पामा रकसा चेति॥ सर्व्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युत्सन्नतस्तु दोषग्रहणमभिभवात्।

तत्र वातेनारुणं पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणकानि॥ श्लेष्मणा पौण्डरीकं दद्रुकुष्ठञ्चेति तेषान्तु महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वञ्चेति॥

तत्र वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि॥ पित्तेन पक्वोडुम्बरफलाकृतिवर्णान्यौडुम्बराणि॥ ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि॥ कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि। काकणन्तिकाफलसदृशान्यतीवरक्तकृष्णानि काकणकानि॥ तेषाञ्चतुर्णामप्योषचोषपरिदाहधूमायनानिचिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि॥

पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि। अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्तिच दद्रुकुष्ठानि तयोर्द्वयो रप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वं चेति सामान्यरूपाणि॥

क्षुद्रकुष्ठान्यत ऊर्द्धं वक्ष्यामः॥

स्थूलानि सन्धिष्वतिदारुणानि स्थूलारुषि स्युः कठिनान्यरूंषि।

त्वक्सङ्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्वयुते भवन्ति ॥
कृष्णारुणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यम् ।
स्पर्शेन कण्डूव्यथनौषचोषास्तलेषु तच्चर्मदलं वदन्ति ॥
विसर्पवत्सर्पति सर्वतोयस्त्वग्रक्तमांसान्यभिभूय शीघ्रं ।
मूर्च्छाविदाहारतितोदपाकान्कृत्वा विसर्पः स भवेद्विकारः ॥
शनैः शरीरे पिडकाः स्रवत्यः सर्पन्ति यास्तं परिसर्पमाहुः ।
कण्डून्वितं श्वेतमपायि सिध्म विद्यात्तनु प्रायश ऊर्द्ध्वकाये ॥
राज्योऽतिकण्डूर्त्तिरुजः सुरूक्षा भवन्तिगात्रेषु विचर्च्चिकायाम् ।
कण्डूमतीदाहरुजोपपन्ना विपादिका पादगतेयमेव ॥
यत्स्रावि वृत्तं घनमुग्रकण्डु तत्स्निग्धकृष्णं किटिभं वदन्ति ।
सास्रावकण्डूपरिदाहवद्भिः पामाणुकाभिः पिडकाभिरूह्या ॥
स्फोटैः सदाहैरति सैवकच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्या ।
कण्डून्विता या पिडका शरीरे संस्रावहीना रकसोच्यतेसा ॥
अरुः ससिध्मं रकसा महच्च यच्चैककुष्ठं कफजान्यमूनि ॥
वायोः प्रकोपात्परिसर्पमेकं शेषाणि पित्तप्रभवाणि विद्यात् ॥
किलासमपिकुष्ठविकल्पएव । तत्त्रिविधंवातेनपित्तेनश्लेष्मणा चेति । कुष्ठकिलासयोरन्तरन्त्वग्गतमेव किलासमपरिस्रावि च । तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहञ्च । श्लेष्मणापि श्वेतं स्निग्धं बहलं कण्डूमच्च ॥ तेषु सम्बद्ध मण्डलमन्तेजातं रक्तरोमचाऽसाध्यमग्निदग्धञ्च । कुष्ठेषु रूक्त्वक्सङ्कोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन । पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन । कण्डूवर्णभेदशो-

कास्रावगौरवाणि श्लेष्मणा ॥ तत्रादित्वक्प्रवृत्तं पौण्डरीकं काकणं चासाध्यम् ।

भवन्ति चात्र । यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम् ।
अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्द्धितैः ॥
एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः ।
क्रमेण धातून्व्याप्नोति नरस्याप्रतिकारिणः ॥
स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ।
वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते ॥
त्वक्स्वापो रोमहर्षश्च स्वेदस्याभिप्रवर्त्तनम् ।
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ।
तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते ॥
दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ।
गात्राणां भेदनञ्चापि कुष्ठे मेदः समाश्रिते ॥
नासाभङ्गोऽक्षिरागश्च क्षतेच क्रिमिसम्भवः ।
भवेत्स्वरोपघातश्च अस्थिमज्जसमाश्रिते ॥
कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ।
शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥
स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः ।
यदपत्यन्तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ।
कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ॥
मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ।
ब्रह्मस्त्रीसज्जनबधपरस्वहरणादिभिः ॥

कर्म्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम्।
म्रियते यदि कुष्ठेन पुनर्ज्जातेऽपि गच्छति॥
नातः कष्टतरो रोगो यथाकुष्ठं प्रकीर्त्तितम्।
आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम्॥
औषधीनां विशिष्टानां तपसश्च निषेवणात्।
यस्तेन मुच्यते जन्तुः सपुण्याङ्गतिमाप्नुयात्॥
प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात्।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एवच।
औपसर्गिकरोगाश्च सङ्क्रामन्ति नरान्नरम्॥

---

## षष्ठोऽध्यायः॥

अथातः प्रमेहनिदानं व्याख्यास्यामः॥

दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात्प्रमेही भविष्यतीति। तस्य चैवं प्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा-वस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति। तेषान्तु पूर्व्वरूपाणि हस्तपादतलदाहः स्निग्धपिच्छिलगुरुतागात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानां। तत्राविलप्रभूतमूत्रलक्षणाः सर्व्व एव प्रमेहाः सर्व्व एव सर्व्व दोषसमुत्थाः सहपिडकाभिः॥

तत्र कफादुदकेक्षुसुरासिकताशनैर्लवणपिष्टसान्द्रशुक्र-फेनमेहाः दश साध्या दोषदूष्याणां समक्रियत्वात् । पित्ता-न्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्या दोष-दूष्याणां विषमक्रियत्वात् । वातात्सर्पिर्वसाक्षौद्रहस्तिमे-हाश्चत्वारोऽसाध्यतमामहात्ययिकत्वात् ।

तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमे-हान् कफपित्तवसा मज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ।

तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति इक्षुर-सतुल्यमिक्षुमेही सुरामेही सुरातुल्यं सरुजं सिकतानुविद्धं सिकतामेही शनैः सकफं सतन्तुं शनैर्मेही विशदं लवण-तुल्यं लवणमेही हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही आविलं सान्द्रं सान्द्रमेही शुक्रतुल्यं शुक्रमेही स्तोकं स्तोकं सफेनं फेनमेही मेहति ।

अत ऊर्द्ध्वं पित्तनिमित्तान्वक्ष्यामः । सफेनमच्छं नीलं नीलमेही मेहति सदाहं हरिद्राभं हरिद्रामेही अम्लरस-गन्धमम्लमेही स्तुत क्षारप्रतिमं क्षारमेही मञ्जिष्ठोदक-प्रकाशं मञ्जिष्ठामेही । शोणितप्रकाशं शोणितमेही मेहति ।

अत ऊर्द्ध्वं वातनिमित्तान्वक्ष्यामः । सर्पिःप्रकाशं सर्पि-र्मेही मेहति वसाप्रकाशं वसामेही क्षौद्ररसवर्णं क्षौद्र-मेही मत्तमातङ्गवदजस्रप्रवृत्तं हस्तिमेही मेहति ।

मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्या-

रोचकाविपाकाः कफप्रसेकच्छर्द्दिनिद्राकासश्वासाश्चेति श्लेष्मजाना मुपद्रवाः ।

वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदिशूलमम्लीकाज्वरा तीसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः प्राण्डुरोगः पीतविण्मूत्रनेत्रत्वञ्चेति पैत्तिकानाम् । हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वञ्चेति वातजानाम् । एव मेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः । तत्र वसामेदोभ्याम भिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते । तद्यथा शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति ।

शरावमात्रा तद्रूपा निम्नमध्या शराविका ।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः ।
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥
महती पिडका नीला पिडका विनता स्मृता ।
महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी ॥
मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ।
रक्तासिता स्फोटवती दारुणा त्वलजी भवेत् ॥
विदारी कन्दवद्वृत्ता कठिना च विदारिका ।
विद्रधेर्ल्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥
ये यन्मयाः स्मृता मेहास्ते षामेतास्तु तत्कृताः ।
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मणि चोत्थिताः ॥

सोपद्रवा दुर्बलस्य पिडकाः परिवर्ज्जयेत्।
कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः॥
अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः।
प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते॥
किञ्चिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत्।
कृत्स्नान्यर्द्धानि वा यस्मिन् पूर्वरूपाणि मानवे॥
प्रवृत्तमूत्रमत्यर्थं तं प्रमेहिणमादिशेत्।
पिडकापीडितं गाढमुपसृष्टमुपद्रवैः॥
मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः।
स चापि गमनात्स्थानं स्थानादासनमिच्छति॥
आसनाद्वृणुते शय्यां शयनात्स्वप्नमिच्छति॥

यथाहि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवलवभ्रुकपिलकपोतमेचकादीनाम्। वर्णानामनेकेषामुत्पत्तिर्भवति। एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोग विशेषेण प्रमेहाणां नानाकारणं भवति॥

भवति चात्र॥ सर्व्व एव प्रमेहास्तु कालेनाप्रतिकारिणः।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि॥

---

सप्तमोऽध्यायः।

अथात उदराणां निदानं व्याख्यास्यामः।
धन्वन्तरिर्धर्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमो बभूव।
ब्रह्मर्षिपुत्रं विनयोपपन्नं शिष्यं शुभं सुश्रुतमन्वशास्त॥

पृथक्समस्तैरपि चेह दोषैः प्लीहोदरं बद्धगुदं तथैव।
आगन्तुकं सप्तममष्टमञ्च दकोदरञ्चेति वदन्ति तानि॥
सुदुर्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद्वा।
स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः॥
गुल्माकृतिव्यञ्जितलक्षणानि कुर्वन्ति घोराण्युदराणि दोषाः।
कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः॥
त्वचः समुन्नम्य शनैः समन्ताद्विवर्द्धमानो जठरं करोति।
तत्पूर्वरूपं बलवर्णकाङ्क्षावलीविनाशो जठरे हि राज्यः॥
जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोफः।
सङ्गृह्य पार्श्वोदरपृष्ठनाभीर्यद्वर्द्धते कृष्णसिरावनद्धम्॥
सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तत्।
यच्चोषतृष्णाज्वरदाहयुक्तं पीतं सिरा यत्र भवन्ति पीताः॥
पीताक्षिविण्मूत्रनखाननस्य पित्तोदरं तत्त्वचिराभिवृद्धि।
यच्छीतलं शुक्लसिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य॥
स्निग्धं महच्छोफयुतं ससादं कफोदरं तच्च चिराभिवृद्धि॥
स्त्रियोऽन्नपानं नखरोममूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्वन्ति घोरं जठरं त्रिलिङ्गम्।
तच्छीतवाताभ्रसमुद्भवेषु विशेषतः कुप्यति दह्यते च॥
स चातुरो मूर्च्छति सम्प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च।
प्रकीर्त्तितं दूष्युदरन्तु घोरं प्लीहोदरं कीर्त्तयतो निबोध॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च।
प्लीहाभिवृद्धिं सततं करोति प्लीहोदरं तत्प्रवदन्ति तज्ज्ञाः॥

वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥
सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ।
यस्यान्त्रमन्नैरुपलेपिभिर्वा वालाश्मभिर्वा सहितैः पृथग्वा ॥
सञ्चीयते तत्र मलः सदोषः क्रमेण नाड्यामिव सङ्करो हि ।
निरुध्यते चास्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ॥
हृन्नाभिमध्ये परिवृद्धिमेति यच्चोदरं विट्समगन्धिकञ्च ।
प्रच्छर्दयन् बद्धगुदी विभाव्यस्ततः परिस्राव्युदरं निबोध ॥
शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा ।
तस्मात्स्रुतान्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च ।
एतत्परिस्राव्युदरं प्रदिष्टं दकोदरं कीर्त्तयतो निबोध ॥
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः ।
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति ।
स्निग्धं महत्तत्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ।

आध्मानं गमने शक्तिर्दौर्बल्यं दुर्बलाग्निता ॥
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥
अन्ते सलिलभावन्तु भजन्ते जठराणि तु ।
सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत् ॥

## अष्टमोऽध्यायः।

अथातो मूढगर्भनिदानं व्याख्यास्यामः।

ग्राम्यधर्म्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशाकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनादभिघातविशेषैः। स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति तस्या जठरसङ्क्षोभाद्वायुरपानो मूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसंमोहितं गर्भं मूढगर्भमित्याचक्षते। ततः स कीलः प्रतिखुरो वीजकः परिघ इति। तत्र ऊर्द्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः। निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः। यस्तु निर्गच्छत्येकशिरोभुजः स वीजकः परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघ इति चतुर्विधो भवतीत्येके भाषन्ते तत्तु न सम्यक् कस्मात् स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते। तत्र कश्चित् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते कश्चिदाभुग्नैकसक्थिरेकेन। कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्य्यगागतः। कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्तः

पार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना। कश्चिदाभुग्नशिरा बाहुद्वयेन। कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः। कश्चिदेकेन सक्थ्ना योनिं मुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्टविधा मूढगर्भगतिरुद्दिष्टाः समासेन॥ तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसम्वरणमक्कलश्वासकासभ्रमनिपीडितान् परिहरेत्॥

भवन्ति चात्र॥ कालस्य परिणामेन मुक्तं वृन्ताद्यथाफलम्।

प्रपद्येत स्वभावेन नान्यथा पतितुं फलम्॥
एवं कालप्रकर्षेण मुक्तो नाडीविबन्धनात्।
गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते॥
कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम्।
पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः॥
आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविच्युतिः।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः॥
प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा।
नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता।
भवत्युच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशौ॥
मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः॥
वस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि।
तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक्॥

## नवमोऽध्यायः।

अथातोविद्रधीनां निदानं व्याख्यास्यामः॥

सर्व्वामरगुरुः श्रीमान्निमित्तान्तरभूमिपः।
शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम्॥
त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः।
दोषाः शोफं शनैर्घोरं जनयत्युच्छ्रिता भृशम्॥
महामूलं रुजावन्तं वृत्तं चाप्यथवायतम्।
तमाहुर्व्विद्रधिं धीरा विज्ञेयः षड्विध स च॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा।
षण्णामपि हि तेषान्तु लक्षणं संप्रवक्ष्यते॥
कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः।
चित्रोत्थानप्रपाकश्च विद्रधिर्व्वातसम्भवः॥
पक्वोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान्।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः॥
शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः।
चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः॥
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः।
नानारूपरुजास्रावो घाटालो विषमो महान्॥
विषमं पच्यते वापि विद्रधिः सान्निपातिकः॥
तैस्तैर्भावैरभिहते क्षते चापथ्यसेविनः।
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत्॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः।
एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः॥

कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्व्वजः।
आभ्यन्तरानतस्तूर्द्ध्वं विद्रधीन्परिचक्षते॥
गुर्व्वसात्म्यविरुद्धान्नशुष्कसंक्लिन्नभोजनात्।
अतिव्यवायव्यायामवेगाघातविदाहिभिः॥
पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम्।
वल्मीकवत्समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम्॥
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा।
वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा।
तेषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः।
आमपक्वैषणीयेन पक्वापक्वं विनिर्द्दिशेत्॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः।
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता॥
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम्।
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ॥
वृक्कयोः पार्श्वसङ्कोचः प्लीह्नुच्छासावरोधनम्।
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः॥
श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका।
आमोवा यदि वा पक्वो महान्वा यदि चेतरः॥
सर्व्वो मर्म्मोत्थितश्चापि विद्रधिः कष्ट उच्यते।
नाभेरुपरिजाः पक्वा यान्त्यूर्द्ध्वमितरे त्वधः॥
जीवत्यधो निस्रुतेषु स्रुतेषूर्द्ध्वं न जीवति।

हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु वाह्यतः॥
जीवेत्कदाचित्पुरुषो नेतरेषु कदाचन।
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः॥
दाहज्वरकरो घोरो जायते रक्तविद्रधिः।
अपि सम्यक्प्रजातानामसृक्कायाद‌निःसृतम्॥
रक्तजं विद्रधिं विद्यात्कुक्षौ मक्कल्लसंज्ञितम्।
सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते॥
विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः।
तुल्यदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च॥
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च।
गुल्माकाराः स्वयं दोषा विद्रधिर्म्मांसशोणिते॥
विवरानुचरो ग्रन्थिरसु बुद्बुदको यथा।
एवं प्रकारो गुल्मस्तु तस्मात्पाकं न गच्छति॥
मांसशोणितबाहुल्यात्पाकं गच्छति विद्रधिः।
मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति।
गुल्मस्तिष्ठति दोषेस्वे विद्रधिर्म्मांसशोणिते॥
विद्रधिः पच्यते तस्माद्गुल्मश्चापि न पच्यते।
हृन्नाभिवस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः॥
अथ मज्जपरीपाको घोरः समुपजायते।
सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा॥
ततः स व्याधिना तेन ज्वलनेनेव दह्यते।
अस्थिमज्जोष्मणा तेन शीर्य्यते दह्यमानवत्॥
विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम्।

अथास्य कर्म्मणा व्याधिर्द्धारन्तु लभते यदा ॥
ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ।
भिन्नेऽस्थ्नि निस्रवेत्पूयमेतद्दस्थिगतं विदुः ॥
विद्रधिं शास्त्रकुशलाः सर्व्वदोषरुजावहम् ॥

---

## दशमोऽध्यायः ।

अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः ॥

त्वङ्मांसशोणितगताः कुपितास्तु दोषाः
सर्व्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ।
कुर्व्वन्ति यं विसृतमुन्नतमाशु शोफं
तं सर्व्वतोविसरणाच्च विसर्पमाहुः ॥
वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द्द
सम्भेदतोदपवनज्वरलिङ्गयुक्तः ।
गण्डैर्यदा तु विषमैरतिदूषितत्वा
द्युक्तः स एव कथितः खलु वर्ज्जनीयः ॥
पित्तात्मको द्रुतगतिर्ज्वरदाहपाक
स्फोटप्रभेदबहुलः क्षतजप्रकाशः ।
दोषप्रवृद्धिहतमांससिरो यदा स्यात्
स्रोतोजकर्द्दमनिभो न तदा स सिध्येत् ॥
श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः
स्निग्धः सितः श्वयथुरल्परुगुग्रकण्डुः ।
सर्व्वात्मकस्त्रिविधवर्णरुजोऽवगाढः
पक्वो न सिध्यति च मांससिराप्रणाशात् ॥

सद्यःक्षतव्रणमुपेत्य नरस्य पित्तं
रक्तञ्च दोषबहुलस्य करोति शोफम्।
श्यावं सलोहितमतिज्वरदाहपाकं
स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम्॥
सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्व्वात्मकः क्षतकृतश्च न सिद्धिमेति।
पैत्तानिलावपि च दर्शितपूर्व्वलिङ्गौ
सर्व्वे च मर्म्मसु भवन्ति हि कृच्छ्रसाध्याः॥
शोफं न पक्वमिति पक्वमुपेक्षते यो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि ततः स पूयः॥
तस्यातिमात्रगमनाद्गतिरित्यतश्च
नाडीव यद्वहति तेन मता तु नाडी।
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या॥
तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपायाम्।
तृट्तापतोदमदनज्वरभेदहेतुः
पीतं स्रवत्यधिकमुष्णमहःसु पित्तात्॥
ज्ञेया कफाद्बहुघनार्ज्जुनपिच्छिलास्रा
रात्रिस्रुतिः स्तिमितरुक्कठिना सकण्डूः।
दोषत्रयाभिहितलक्षणदर्शनेन

तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत्पवनपित्तकफप्रकोपा
द्घोरामसुक्षयकरीमिव कालरात्रिम् ॥
नष्टं कथञ्चिदणुमात्रमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिलं मथितमच्छमसृग्विमिश्र
मुष्णं करोति सहसा सरुजा च नित्यम् ॥
यावत्यो गतयो यैश्च कारणैः सम्भवन्ति हि ।
तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः ॥
धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ।
दोषाविसरणात्तासां न भवन्ति स्तनामयाः ॥
तासामेव प्रजातानां गर्भिणीनान्तु ताः पुनः ।
स्वभावादेव विवृता जायन्ते सम्भवन्त्यतः ॥
रसप्रसादो मधुरः पक्काहारनिमित्तजः ।
कृत्स्नदेहात्स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥
विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते ।
सर्व्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥
तदेव चेष्टयुवतेर्दर्शनात्स्मरणादपि ।
शब्दसंश्रवणात्स्पर्शात्संहर्षाच्च प्रवर्त्तते ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥

तद्देवापत्यसंस्पर्शाद्दर्शनात्स्मरणादपि।
ग्रहणाच्च शरीरस्य शुक्रवत्सम्प्रवर्त्तते॥
स्नेहो निरन्तरस्तत्र प्रस्नवे हेतुरुच्यते।
तत्कषायं भवेद्वातात्क्षिप्तञ्च प्लवतेऽम्भसि॥
पित्तादम्लञ्च कटुकं राज्योऽम्भसि च पीतिकाः।
कफाद्घनं पिच्छिलञ्च जले चाप्यवसीदति॥
सर्व्वैर्दुष्टैः सर्व्वलिङ्गमभिघाताच्च दुष्यति।
यत्क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम्॥
मधुरञ्चाविवर्णञ्च प्रसन्नं तद्विनिर्द्दिशेत्।
सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः॥
रक्तं मांसञ्च सन्दूष्य स्तनरोगाय कल्पते।
पञ्चानामपि तेषान्तु हित्वा शोणितविद्रधिम्॥
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः।

---

## एकादशोऽध्यायः॥

अथातो ग्रन्थ्यपच्यर्व्वुदगलगण्डानां निदानं व्याख्यास्यामः।
वातादयो मांसमसृक् प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम्।
वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः॥
आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदम्।
कृष्णोऽमृदुर्व्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्॥
दन्दह्यते धूप्यति चाति मात्रं पापच्यते प्रज्वलतीव चापि।
रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्॥

शोतो विवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत्संहननोपपन्नः।
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनञ्च पूयं॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डुः।
मेदःक्षतो गच्छति चातिभिन्ने पिण्याकसर्पिः प्रतिमन्तु मेदः॥
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानं।
संपीड्य सङ्कोच्य विशोष्य वापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्॥
ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च।
अरुक् सएवाप्यचलो महांश्च मर्म्मोत्थितश्चापि विवर्ज्जनीयः।
हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषूपचितन्तु मेदः।
ग्रन्थिं स्थिरं वृत्तमथायतंवा स्निग्धं कफश्चाल्परुजं करोति॥
तं ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति॥
कण्डूयुतास्तेऽल्परुजः प्रभिन्नाःस्रवन्ति नश्यन्ति भवन्ति चान्ये।
मेदःकफाभ्यां खलु राग एष सुदुस्तरो वर्षगणानुबन्धी॥
गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्॥
कुर्व्वन्ति मांसोपचयञ्च शोफं तदर्बुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च॥
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति।
दोषः प्रदुष्टो रुधिरं सिरास्तु संपीड्य सङ्कोच्य गतस्तु पाकं॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्॥
रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु।

मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम्॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्।
प्रदुष्टमांसस्य नरस्य वाढमेतद्भवेन्मांसपरायणस्य॥
मांसार्ब्बुदं त्वेतदसाध्यमुक्तं साध्येष्वपीमान्यपवर्ज्जयेत्तु।
संप्रस्नुतं मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥
यज्जायतेऽन्यत् खलु पूर्व्वजाते ज्ञेयं तदध्यर्ब्बुदमर्ब्बुदज्ञैः।
यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्ब्बुदं तच्च भवेदसाध्यम्॥
न पाकमायान्ति कफाधिकत्वान्मेदोऽधिकत्वाच्च विशेषतस्तु।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्व्वार्ब्बुदान्येव निसर्गतस्तु॥
वातः कफश्चैव गले प्रवृद्धो मन्ये तु संसृत्य तथैव मेदः।
कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥
तोदान्वितः कृष्णसिरावनद्धः कृष्णोऽरुणो वा पवनात्मकस्तु।
मेदोऽन्वितश्चोपचितश्च कालाद्भवेत्प्रवृद्धोऽथवा गलेऽरुजश्च॥
पारुष्ययुक्तश्चिरवृद्धपाको यदृच्छया पाकमियात् कदाचित्।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डुः शीतो महांश्चापि कफात्मकस्तु।
चिराभिवृद्धिं कुरुते चिराद्वा प्रपच्यते मन्दरुजं कदाचित्।
माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः।
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदःकृतो नीरुगथातिकण्डुः॥
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्॥
कृच्छ्रात् श्वसन्तं मृदु सर्व्वगात्रं संवत्सरातीतमरोचकार्त्तम्।
क्षीणन्तु वैद्यो गलगण्डिनं तं भिन्नस्वरं चैव विवर्ज्जयेत्तु॥

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत् ॥

---

द्वादशोऽध्यायः ॥

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ अधः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोशयोर्वृद्धिं जनयति तां वृद्धिमित्याचक्षते ॥ तासां भविष्यतीनां पूर्वरूपाणि वस्तिकटीमुष्कमेढ्रेषु वेदना मारुत निग्रहः फलकोशशोफश्चेति ।

तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिमित्तानिलरुजं वातवृद्धिमाचक्षते पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशु समुत्थानपाकां पित्तवृद्धिं कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्म वृद्धिं कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिं मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिम् ॥ मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति तां मूत्रवृद्धिं विद्यात् ॥ भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं द्विगुणमादायाधोगत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणश्च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयत्याध्मातो

वस्तिरिवाततः प्रदीर्घः शोफो भवति सशब्द मवपीडितश्चोर्द्ध मुपैति। विमुक्तश्च पुनराधमति तामन्त्रवृद्धि मसाध्यामित्याचक्षीत॥

तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढ़रोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशन विषशूकनिपातनाद्दण्डनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष सलिलप्रक्षालनादवपीडनाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषाः क्षतेऽक्षतेवा श्वयथु मुपजनयन्ति तमुपदंशमित्याचक्षते॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक्समस्तैरस्रजा चैकः॥
तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः॥

पैत्तिके ज्वरःश्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च॥
श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनश्च।
रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च याप्यश्चैव कदाचित्॥

सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः क्रिमिप्रादुर्भावो मरणं चेति॥

कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानु जङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति तत्श्लीपदमित्याचक्षते। तत्त्रिविधं वातपित्तकफनिमित्तमिति॥ तत्र वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः॥ पित्तजन्तु पीतावभासमीषन्मृदुज्वरदाहप्रायञ्च॥ श्लेष्मजन्तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकमिति महाग्रन्थिकं कण्टकैरुपचितञ्च। तत्र सम्वत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनीयानि॥

भवन्तिचात्र॥ त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात्।

गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात्॥
पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः॥
पादयोर्हस्तयोश्चापि श्लीपदं जायते नृणाम्।
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः॥

---

त्रयोदशोऽध्यायः।

अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः॥

समासेन चतुश्चत्वारिंशत्क्षुद्ररोगा भवन्ति॥ तद्यथा॥ अजगल्लिका यवप्रख्याऽन्त्रालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जालगर्द्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका-

शर्करा- ऽर्बुदं पामा विचर्च्चिका रकसा पाददारिका कद-रमलसेन्द्रलुप्तौ दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्म्मशककश्चर्म्म कील-स्तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप कशः निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति ॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥
घनामवक्त्रां पिडकामुन्नतां परिमण्डलां ।
अन्धालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥
विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् ।
विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥
ग्रन्थयः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ।
कफानिलाभ्यामुद्भूतां विद्यात्तां कच्छपीमिति ॥
पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि ।
ग्रन्थिर्व्वल्मीकवद्यस्तु शनैः समुपचीयते ॥
तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः ।
व्याधिर्व्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥
पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् ।
इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥
कक्षां परिसमन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ।
शालूकवत्पनसिकां तां विद्यात् श्लेष्मवातजाम् ॥

हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् ।
पाषाणगर्द्दभं विद्याद्बलासपवनात्मकम् ॥
विसर्प्पवत्सर्प्पति यो दाहज्वरकरस्तनुः ।
अपाकः श्वयथुः पित्तात्स ज्ञेयो जालगर्द्दभः॥
बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपात्सम्भूतां कक्षामिति विनिर्द्दिशेत् ॥
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः ।
क्वचित्सर्व्वत्र वा देहे स्मृता विस्फोटका इति ॥
कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥
सप्ताहाद्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ।
तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥
नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् ।
करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥
तदेव चतरोगाख्यं तथोपनखमित्यपि ।
अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसितः खरः ॥
भवेत्तु कुनखं विद्यात्कुलीनमिति संज्ञितम् ।
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥
कफादन्तःप्रपाकान्तां विद्यादनुशयीं भिषक् ।
विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥
रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम् ।
प्राप्य मांससिरास्नायु श्लेष्मा भेदस्तथाऽनिलः ॥
ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्प्पिर्व्वसानिभम् ।

स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः॥
मांसं विशोष्य ग्रथितां शर्करां जनयेत्पुनः।
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः॥
स्रवन्ति सहसा रक्तं तद्विद्याच्छर्कराव्र्बुदम्।
पामाविचर्च्चौ कुष्ठेषु रक्तसा च प्रकीर्त्तिता॥
परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः।
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम्॥
सकीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा।
कोलमात्रः सरुक्स्रावो जायते कदरस्तु सः॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ।
दुष्टकर्द्दमसंस्पर्शादलसं तं विनिर्द्दिशेत्॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः।
तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते॥
दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते।
कफवातप्रकोपेण विद्याद्दारुणकन्तु तम्॥
अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि।
कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम्।
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः॥
पित्तञ्च केशान्पचति पलितं तेन जायते।

दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः ॥
गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ।
शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः ॥
जायन्ते पिडका यूनां वक्त्रे या मुखदूषिकाः ।
कण्टकैराचितं वृत्तं कण्डूमत्पाण्डुमण्डलम् ॥
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ।
नीरुजं सममुत्पन्नं मण्डलं कफरक्तजम् ॥
सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ।
अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते ॥
माषवत्कृष्णमुत्सन्नमनिलान्मशकं दिशेत् ।
कृष्णानि तिलमात्राणि निरुजानि समानि च ॥
वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान् ।
मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् ॥
सहजं नीरुजं गात्रेन्यच्छमित्यभिधीयते ।
समुत्थाननिदानाभ्यां चर्म्मकीलं प्रकीर्त्तितं ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
सहसा मुखमागम्य मण्डलं विसृजेत्ततः ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ।
मर्द्दनात्पीडनाच्चापि तथैवाप्यभिघाततः ॥
मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरः ।
तदा वातोपसृष्टन्तु चर्म्म प्रतिनिवर्त्तते ॥
मणेरधस्तात्कोषश्च ग्रन्थिरूपेण लम्बते ।
सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित् ॥

मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम् ।
सकण्डूः कठिनाचैव सैव श्लेष्मसमुत्थिता ॥
अल्पीयसीं यदा हर्षाद्वालांगच्छेत्स्त्रियं नरः ।
हस्ताभिघातादथ वा चर्म्मण्युद्वर्त्तितेबलात् ॥
मर्द्दनात्पीडनाद्वापि शुक्रवेगविघाततः
यस्यावपाट्यते चर्म्म तां विद्यादवपाटिकाम् ॥
वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् ।
मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ।
मूत्रं प्रवर्त्तते जन्तोर्म्मणिर्न्नच विदीर्य्यते ॥
निरुद्धप्रकसं विद्यादरुढां चावपाटिकाम् ।
वेगसन्धारणाद्वायुर्व्विहतो गुदमाश्रितः ॥
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोतिच ।
मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषं तस्य गच्छति ॥
सन्निरुद्धगुदं व्याधिमेनं विद्यात्सुदुस्तरम् ।
शुक्रमूत्रसमायुक्तेऽधौतेऽपाने शिशोर्न्नरे ॥
स्निग्धस्यास्नाप्यमानस्य कण्डूरत्नाकफोद्भवा ।
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ॥
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ।
स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ॥
प्रक्लिद्यते यदा स्वेदात्स कण्डं जनयेत्तदा ।
तत्र कण्डूयनात्क्षिप्रं स्फोटः स्रावश्च जायते ॥
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ।

प्रवाहणातिसाराभ्यां निर्गच्छति गुदं वहिः॥
रूक्षदुर्व्वलदेहस्य तं गुदभ्रंशमादिशेत्।

---

॥ चतुर्द्दशोऽध्यायः॥

॥ अथातः शूकदोषनिदानं व्याख्यास्यामः॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दशचाष्टौ च व्याधयो जायन्ते। तद्यथा। सर्षपिका। अष्ठीलिका। ग्रथितं। कुम्भीका। अलजी। मृदितम्। सम्मूढपिडका। अवमन्थः। पुष्करिका। स्पर्शहानिः। उत्तमा। शतपोनकः। त्वक्पाकः। शोणितार्व्बुदम्। मांसार्व्बुदम्। मांसपाकः। विद्रधिः। तिलकालकश्चेति॥

गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका।
पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः॥
कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः।
शूकैस्तु विषसंयुक्तैः पिडकाऽष्ठीलिका भवेत्॥
शूकैर्यत्पूरितं शश्वद्ग्रथितं तत्कफोत्थितम्।
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा॥
अलजीलक्षणैर्युक्तामलजीञ्च वितर्कयेत्।
मृदितं पीड़ितं यत्तु संरब्धं वायुकोपतः॥
पाणिभ्यां भृशसंमूढे संमूढ़पिडका भवेत्।
दीर्घा वह्व्यश्च पिडका दीर्य्यन्ते मध्यतस्तु याः॥
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत्।
पित्तशोणितसम्भूता पिडका पिडकाचिता॥

पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा।
जनयेत् स्पर्शहानिन्तु शोणितं शूकदूषितम्॥
मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा।
उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा॥
छिद्रैरणुमुखैर्यन्तु चितं मेढ्रं समन्ततः।
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः॥
पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान्।
कृष्णस्फोटैः सरक्तैश्च पिडकाभिश्च पीडितम्।
यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्वुदम्॥
मांसदोषेण जानीयादर्वुदं मांससम्भवं।
शीर्य्यन्ते यस्य मांसानि यस्य सर्व्वाश्च वेदनाः॥
विद्यात्तं मांसपाकन्तु सर्व्वदोषकृतं भिषक्।
विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत्॥
कृष्णानि चित्राण्यथवा शूकानि सविषाणि च।
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः॥
कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः।
सन्निपातसमुत्थानं तं विद्यात्तिलकालकम्॥
तत्र मांसार्वुदं यच्च मांसपाकश्च यः स्मृतः।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः॥

---

## पञ्चदशोऽध्यायः॥

॥ अथातोभग्नानां निदानं व्याख्यास्यामः॥

पतनपीडन प्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभि-

घातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति तत्तु भङ्गजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्च ॥

तत्र सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम् ॥ तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाऽशक्तिरुग्ररुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥

विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषत श्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति ॥ विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रियाच ॥ विवर्त्तिते तु सन्धिपार्श्वापगमना द्विषमाङ्गता वेदना च ॥ अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वञ्च ॥ अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च ॥ तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदनाचेति ॥

काण्डभग्नमत ऊर्द्ध्वं वक्ष्यामः ॥ कर्कटकमश्वकर्णं चूर्णित पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातित वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम् ॥ श्वयथुबाहुल्यं स्पन्दन विवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविध वेदनाप्रादुर्भावः सर्व्वास्ववस्थासु न शर्म्मलाभ इति समासेन काण्ड भग्नलक्षणमुक्तम् ॥

विशेषतस्तु संमूढ़मुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकम् ॥ अश्वकर्णवदुन्नतमश्वकर्णकम् ॥ चूर्णितमस्थि तत्तु शब्दस्पर्शाभ्यां बोद्धव्यम् ॥ पिच्चितं पृथुतां गतमनल्पशोफम् ॥ पार्श्वयोरस्थि हीनोन्नत मस्थिच्छल्लितम् ॥

खल्लेत प्रकम्प्यमानं काण्डभग्नलक्षम्॥ अस्थ्यवयवोऽस्थिमध्य-मनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतम्॥ अस्थि निः-शेषत श्छिन्नमतिपातितम्॥ आभुग्नमविमुक्तास्थि वक्रम्॥ अन्यतरपार्श्वावशिष्टं छिन्नम्॥ पाटितमणु वहुविदारितं वेदनावच्च॥ शूकपूर्णमिवाध्मातं विपुलं विस्फुटितं स्फुटितमिति॥ तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि क्षतवृद्धबालानां चत क्षीणकुष्ठश्वासिनां मभ्युपगतच्चेति॥

भवन्ति चात्र॥ भिन्नंकपालं कटयान्तु सन्धिमुक्तं तथा च्युतम्।
जघनं प्रतिपिष्टञ्च वर्जयेत्तच्चिकित्सकः॥
असंश्लिष्टं कपालन्तु ललाटे चूर्णितञ्च यत्।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्द्ध्नि च वर्ज्जयेत्॥
आदितो यच्च दुर्ज्जातमस्थि सन्धिरथापि वा।
सम्यक् संहितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात्॥
सङ्क्षोभाद्वापि यद्गच्छेद्विक्रियां तत्तु वर्ज्जयेत्।
मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्त्तिताः॥
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता।
तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु॥
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च॥

---

॥ षोडशोऽध्यायः॥

॥ अथातो मुखरोगाणां निदानं व्याख्यास्यामः॥

मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु तत्रायतनान्योष्ठौ

दन्तमूलानि दन्ता जिह्वा तालु कण्ठः सर्व्वाणि चेति। तत्राष्टावोष्ठयोः। पञ्चदश दन्तमूलेषु। अष्टौ दन्तेषु। पञ्च जिह्वायाम्। नव तालुनि। सप्तदश कण्ठे। त्रयः सर्वेष्वायतनेषु॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ।
दाल्येते परिपुटेते ओष्ठौ मारुतकोपतः॥
आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम्।
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः॥
सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ।
कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू॥
सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च।
सन्निपातेन विज्ञेयावनेकपिडकाचितौ॥
खर्ज्जूरफलवर्णाभिः पिडकाभिः समाचितौ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ।
जन्तवश्चात्र मूर्च्छन्ति सृक्वस्योभयतो मुखात्॥
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू।
अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू॥
क्षतजाभौ विदीर्य्येते पाट्येते चाभिघाततः।
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ॥

दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः

शौषिरो महाशौषिरः परिदर उपकुशो दन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्त्तते।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च॥
दन्तमांसानि शीर्य्यन्ते पचन्तिच परस्परम्।
शीतादो नाम स व्याधिः कफशोणितसम्भवः॥
दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान्।
दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः॥
श्वयथुर्दन्तमूलेषु रुजावान्कफरक्तजः।
लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते।
दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते॥
यस्मिन्स सर्वजो व्याधिर्महाशौषिरसंज्ञकः।
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्॥
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हिसः।
वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्तिच॥
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः।
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते॥
यस्मिन्नुपकुशः स स्यात्पित्तरक्तकृतो गदः।
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान्।
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः।

मारुतेनाधिको दन्तो जायते तीव्रवेदनः॥
वर्द्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति।
हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः॥
लालास्रावो कफकृतो विज्ञेयः सोऽधिमांसकः।
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः॥
दन्तगतास्तु दालनः क्रिमिदन्तको दन्तहर्षो भञ्जनकः शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति॥
दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः।
दालनः स इति ज्ञेयः सदागतिनिमित्तजः॥
कृष्णश्छिद्री चलः स्रावी ससंरम्भो महारुजः।
अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः॥
दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च।
यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात्॥
वक्त्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक्।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः॥
शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै।
सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा॥
दलन्ति दन्तवल्कानि यदा शर्करया सह।
ज्ञेया कपालिका सैव दशनानां विनाशिनी॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः॥
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः।
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥

जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका चेति।

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा॥
पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च।
कफेन गुर्वी बहुला चिता च मांसोद्गमैः शाल्मलिकण्टकाभैः॥
जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः।
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः।
प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति॥

तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यध्रुषो मांसकच्छपोऽर्वुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति॥

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत्तम्प्रदिष्टा व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना॥
शोफः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु।
शोफः स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥
कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रक्तोज्ज्ञेयः कच्छपः श्लेष्मणा स्यात्।
पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्व्वुदं प्रोक्तलिङ्गम्॥
दुष्टं मांसं श्लेष्मणा नीरुजञ्च ताल्वन्तस्थं मांससङ्घातमाहुः।
नीरुक्स्थायी कोलमात्रः कफात्स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥
शोषोऽत्यर्थं दीर्य्यते चापि तालुः श्वासो वातात्तालुशोषः सपित्तात्।
पित्तं कुर्य्यात्पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति॥

कण्ठगतास्तु रोहिण्यः पञ्च कण्टशालूकमधिजिह्वो

बलयो बलास एकवृन्दो वृन्दः शतघ्नी गिलायुर्गलविद्रधिर्गलौघः स्वरघ्नो मांसतानो विदारी चेति॥

गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम्।
प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् सा सुहरा तु रोहिणी॥
जिह्वां समन्तादृृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः।
तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढयुक्ताम्॥
क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजा स्यात्।
स्रोतोनिरोधिन्यपि मन्दपाका गुर्वी स्थिरा सा कफसम्भवा वै॥
गम्भीरपाकाऽप्रतिवारवीर्य्या त्रिदोषलिङ्गा त्रयसम्भवा स्यात्।
स्फोटाचिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मिकेयम्॥
कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः।
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति॥
जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रः।
ज्ञेयो द्विजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम्॥
बलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य।
तं सर्व्वथैवाप्रतिवारवीर्य्यं विवर्जनीयं बलयं वदन्ति॥
गले च शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्।
मर्म्मच्छिदं दुस्तरमेतदाहुर्बलाससंज्ञं निपुणा विकारम्॥
वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च।
नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः॥
समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति।
तच्चापि पित्तक्षतजप्रकोपाद्विद्यात् सतोदं पवनासृजं तम्॥
वर्त्तिर्घना कण्ठनिरोधिनी या चिताऽतिमात्रं पिशितप्ररोहैः।

नानारुजोच्छ्रायकरी त्रिदोषाज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥
ग्रन्थिर्गलेत्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात्कफरक्तमूर्त्तिः।
संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः॥
सर्वं गलंव्याप्य समुत्थितो यः शोफो रुजो यत्र वसन्ति सर्व्वाः।
स सर्व्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य ॥
शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्त्यतेऽसौ ॥
योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदिग्धेष्वनिलायनेषु; ज्ञेयः सरोगः श्वसनात्स्वरघ्नः ॥
प्रतानवान् यः श्वयथुः सुकष्ट गलोपरोधं कुरुते क्रमेण ।
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्व्वकृतो विकारः ॥
सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥

सर्व्वसरास्तु वातपित्तकफशोणितनिमित्ताः ॥

स्फोटैः सतोदैर्व्वदनं समन्ताद्यस्याचितं सर्व्वसरः स वातात् ॥
रक्तैः सदाहैस्तनुभिः सपीतैर्य्यस्याचितं वापि स पित्तकोपात् ।
कण्डूयुतैरल्परुजैः सवर्णैर्यस्याचितं चापि स वै कफेन ॥
रक्तेन पित्तोदित एक एव कैश्चित्प्रदिष्टो मुखपाकसंज्ञः ॥

इति सुश्रुते आयुर्व्वेदशास्त्रे निदानस्थानं समाप्तम् ॥

॥ शारीरस्थानम् ॥

॥ प्रथमोऽध्यायः ॥

॥ अथातः सर्व्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥

सर्व्वभूतानां कारणमकारणं सत्वरजस्तमोलक्षणमष्टरूप मखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञाना मधिष्ठानं समुद्रद्रवौदकानां भावानाम् ॥

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसो भूतादिरिति। तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्ये वैकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मकं मनः ॥

भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते तद्यथा। शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्व्विंशतिर्व्याख्याता ॥

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथा सङ्ख्यं वचनादानानन्दविसर्गविहरणानि ॥ अव्यक्तं महानहङ्कारः पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतयः शेषाः षो-

डश विकाराः । स्वःस्वश्चैषां विषयोऽधिभूतम् । स्वयमध्यात्ममधिदैवतञ्च । अथ बुद्धेर्ब्रह्मा । अहङ्कारस्येश्वरः । मनसश्चन्द्रमाः । दिशः श्रोत्रस्य । त्वचो वायुः सूर्य्यश्चक्षुषः । रसनस्यापः । पृथिवी घ्राणस्य । वचसोऽग्निः । हस्तयोरिन्द्रः । पादयोर्विष्णुः । पायोर्मित्रम् । प्रजापतिरुपस्थस्येति । तत्र सर्व्वएवाचेतन एष वर्गः पुरुषः पञ्चविंशतितमः सच कार्य्यकारणसंयुक्तश्चेतयिता भवति । सत्यप्यचैतन्ये प्रधानस्य पुरुष कैवल्यार्थं प्रवृत्तिमुपदिशन्ति चीरादींश्च हेतूनुदाहरन्ति ॥

अत ऊर्द्धं प्रकृतिपुरुषयोः साधर्म्म्यवैधर्म्म्ये व्याख्यास्यामः ॥ तद्यथा ॥ उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौच सर्व्वगताविति ॥ एका तु प्रकृतिरचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति । बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अवीजधर्म्मिणोऽप्रसवधर्म्मिणो मध्यस्थधर्म्मिणश्चेति ॥

तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व्वएवैते विशेषाः सत्व रजस्तमोमया भवन्ति तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तोत्येके भाषन्ते ॥

वैद्यके तु ॥ स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ।
परिणामञ्च मन्यन्ते प्रकृतिं पृथग्दर्शिनः ॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥

तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा।
भूतेभ्योहि परं यस्मान्नास्ति चिन्ता चिकित्सिते॥
यतोऽभिहितं तत्सम्भवद्रव्यसमूहोभूतादिरुक्तः॥
भौतिकानिचेन्द्रियाण्यायुर्व्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः॥
भवति चात्र॥ इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः॥
नचायुर्वेदशास्त्रेषूपदिश्यन्ते सर्व्वगताः क्षेत्रज्ञा नित्याश्च।
असर्व्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषव्यापकान् हेतूनुदाहरन्ति।
आयुर्व्वेदशास्त्रेष्वसर्व्वगताः क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनि-
मानुषदेवेषु सञ्चरन्ति धर्म्माधर्म्मनिमित्तं तएतेऽनुमान-
ग्राह्याः परम सूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः
सन्निपातेष्वऽभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूतशरीरि-
समवायः पुरुष इति। स एव कर्म्मपुरुषश्चिकित्साधिकृतः॥

तस्य सुखदुःखेच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ
बुद्धिर्म्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो-
विषयोपलब्धिश्च गुणाः॥ सात्विकास्तु आनृशंस्यं संविभा-
गरुचिता तितिक्षा सत्यं धर्म्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा
स्मृतिधृतिरनभिषङ्गश्च॥ राजसास्तु दुःखबहुलताऽटन-
शीलता ऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो
हर्षः कामःक्रोधश्च॥ तामसास्तु विषादित्वं नास्तिक्यमधर्म
शीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्म्मशीलता निद्रालु-
त्वञ्चेति॥ आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्व्वच्छिद्रसमूहो
विविक्तता च॥ वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः

सर्व्वशरीरस्पन्दनं लघुता च॥ तैजसास्तु रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्च॥ आप्यास्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च॥ पार्थिवास्तु गन्धो गन्धेन्द्रियं सर्व्वमूर्त्तिसमूहो गुरुता चेति॥ तत्र सत्वबहुलमाकाशम्। रजोबहुलो वायुः। सत्वरजोबहुलोऽग्निः। सत्वतमोबहुला आपः। तमोबहुला पृथिवीति॥

श्लोकौ चात्र भवतः॥

अन्योन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्द्दिशेत्।
स्वे स्वे द्रव्ये तु सर्व्वेषां व्यक्तं लक्षणमिष्यते॥
अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैव तु।
क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः॥

---

## ॥ द्वितीयोऽध्यायः॥

अथातः शुक्रशोणितशुद्धिं नाम शारीरं व्याख्यास्यामः॥

वातपित्तश्लेष्मकुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषरेतसः प्रजोत्पादनेन समर्था भवन्ति॥ तेषु वातवर्णवेदनं वातेन। पित्तवर्णवेदनं पित्तेन। श्लेष्मवर्णवेदनं श्लेष्मणा शोणितवर्णवेदनं कुणपगन्ध्यनल्पं रक्तेन। ग्रन्थिभूतं श्लेष्मवाताभ्याम्। पूतिपूयनिभं पित्तश्लेष्मभ्याम्। क्षीणं प्रागुक्तं पित्तमारुताभ्याम्। मूत्रपुरीषगन्धि सन्निपातेनेति। तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतसः कृच्छ्रसाध्याः॥ मूत्रपुरीषरेतस्त्वसाध्याः साध्यमन्यच्चेति॥

आर्त्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तै श्चोपसृष्टमवीजं भवति तदपि दोषवर्णवेदनादिभिर्विज्ञेयम् । तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यं साध्यमन्यद्भवति ॥

भवन्तिचात्र ॥ तेष्वाद्यान्शुक्रदोषांस्त्रीन्स्नेहस्वेदादिभिर्जयेत् ।
क्रियाविशेषैर्मतिमांस्तथाचोत्तरवस्तिभिः ॥
पाययेत नरं सर्पिर्भिषक् कुणपरेतसि ।
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ॥
पाययेदथ वा सर्पिः शालसारादिसाधितम् ।
ग्रन्थिभूते शठीसिद्धं पालाशे वापि भस्मनि ॥
परूषकवटादिभ्यां पूयप्रख्येच साधितम् ।
प्रागुक्तं वक्ष्यते यच्च तत् कार्य्यं क्षीणरेतसि ॥
विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः ।
स्निग्धं वान्तं विरिक्तञ्च निरूढमनुवासितं ॥
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना ।
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ॥
स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु ।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥
ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च ।
दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ॥
पिबेद्भद्रश्रियः क्वाथञ्चन्दनक्वाथमेव च ।
शुक्रदोषहराणाञ्च यथास्वमवचारणम् ॥
दोषाणां शुद्धिकरणं शेषास्वप्यार्त्तवार्त्तिषु ।

अन्नं शालियवं मद्यं हितं मांसञ्च पित्तलम्॥
स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च।
शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभन्तथा॥
शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम्।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत्॥
तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि।
असृग्दरं विजानीयादतोऽन्यदुक्तलक्षणात्॥
असृग्दरी भवेत् सर्व्वः साङ्गमर्द्दः सवेदनः।
तस्यातिवृत्तौ दौर्ब्बल्यं भ्रमो मूर्च्छा तमस्तृषा॥
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः।
तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक्॥
रक्तपित्तविधानेन यथावत्समुपाचरेत्।
दोषैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः॥
तत्र मत्स्यकुलत्थाम्लतिलमाषसुरा हिताः।
पाने मूत्रमुदश्विच्च दधि शुक्तञ्च भोजने॥
क्षीणं प्राणेरितं रक्तं सलक्षणचिकित्सितम्।
तथाप्यत्र विधातव्यं विधानं नष्टरक्तवत्॥

एवमदुष्टशुक्रः शुद्धार्त्तवा। ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गन-खच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किङ्कारणं। दिवा स्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनाद्विकृतदृष्टिः स्नानानुलेपनाद्दुःखशील-स्तैलाभ्यङ्गात् कुष्ठी नखापकर्त्तनात् कुनखी प्रधावनाच्च-

च्छलो हसनाच्छ्यावदन्तौष्ठतालुजिह्वः प्रलापी चातिकथना-दतिशब्दश्रवणाद्वधिरोऽवलेखनात् खलतिर्मारुतायाससेवना-दुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत्॥ दर्भसंस्तर-शायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्यहञ्च भर्त्तुः संरक्षेत्। ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससम-लङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत्। तत् कस्य हेतोः।

पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना।
तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः॥
ततो विधानं पुत्रीयमुपाध्यायः समाचरेत्।
कर्म्मान्ते च क्रमं ह्येनमारभेत विचक्षणः॥

ततोऽपराह्ने पुमान्मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिः-क्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिरभि-विश्वास्य विकल्प्यैवञ्चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्यां चोपेयादिति पुत्रकामः॥

एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च।
प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै॥

अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्री-कामः॥ त्रयोदशीप्रभृतयो निन्द्याः।

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति। यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते। द्वितीयेऽप्येवं सूतिकागृहे वा। तृतीयेऽप्येवमसम्पूर्णाङ्गो-

ऽल्पायुर्व्वा भवति। चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति। नच प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति यथा नद्यां प्रतिस्रोतःप्लावि द्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यं। तस्मान्नियमवतीं त्रिरात्रं परिहरेत्। अतः परं मासादुपेयात्।

लब्धगर्भायाश्चैतेष्वहःसु लक्षणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून्दद्याद्दक्षिणे नासापुटे पुत्रकामायै नच तान्निष्ठीवेत्॥

ध्रुवञ्चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्व्वकः।
ऋतुक्षेत्राम्बुवीजानां सामग्र्यादङ्कुरो यथा॥
एवं जाता रूपवन्तो महासत्त्वाश्चिरायुषः।
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः॥

तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः स यदा गर्भोत्पत्तावब्धातु प्रायो भवति तदा गर्भं गौरं करोति पृथिवीधातुप्रायः कृष्णं पृथिव्याकाशधातुप्रायः कृष्णश्यामं तोयाकाशधातुप्रायो गौरश्यामं॥ यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवती त्येके भाषन्ते॥ तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति। तदेव रक्तानुगतं रक्ताक्षं पित्तानुगतं पिङ्गाक्षं श्लेष्मानुगतं शुक्लाक्षं वातानुगतं विकृताक्षमिति॥

भवन्ति चात्र॥ घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते।
विसर्पत्यार्त्तवं नार्य्यास्तथा पुंसां समागमे॥
वीजेऽन्तर्व्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ।

यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ ॥
पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् ।
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ।
स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥
स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते ।
कुम्भीकः स च विज्ञेयईर्ष्यकं शृणु चापरम् ॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते ।
ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम् ॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते ।
ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः ॥
ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि ।
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा ।
सरेतसस्त्वमी ज्ञेया अशुक्रःषण्डसंज्ञितः ॥
अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः ॥
हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥
आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्त्रोऽपि तादृशः ॥
यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन ।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥

मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः॥
सर्पवृश्चिककुष्माण्डविकृताकृतयश्च ये।
गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम्॥
गर्भो वातप्रकोपेण दौहृदे चावमानिते।
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिण एव च॥
मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः।
वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात्॥
मलाल्पत्वादयोगाच्च वायोः पक्काशयस्य च।
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि॥
जरायुणा मुखेच्छन्ने कण्ठे च कफवेष्टिते।
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति॥
निश्वासोच्छ्वाससङ्क्षोभस्वप्नान्‌गर्भोऽधिगच्छति।
मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसम्भवान्॥
सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ।
तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः॥
भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः॥
कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान्॥

---

॥ तृतीयोऽध्यायः॥

अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्यामः॥

सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां-सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात्परस्परानुग्रहा-त्परस्परानुप्रवेशाच्च ।

तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति । ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन । ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते ॥ क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषःस्रष्टा गन्तासाक्षी धाता वक्ता यो ऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैव-संयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्वर-जस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भा-शयमनुप्रविश्यावतिष्ठते ॥

तत्र शुक्रबाहुल्यात् पुमानार्त्तवबाहुल्यात् स्त्री साम्यादु-भयोर्नपुंसकमिति ॥ ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः ॥

अदृष्टार्त्तवाप्यस्तीत्येके भाषन्ते ॥

भवन्ति चात्र ॥ पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम् ।

नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥

स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम् ॥

हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति ।

नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ॥

ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा ।

मासेनोपचितं काले धमनीभ्यान्तदार्त्तवम् ॥

ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत् ।

तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक्पुनः ॥
जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ।
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला ॥
पुण्यकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत् ॥

तत्र सद्योगृहीतगर्भाया लिङ्गानि श्रमो ग्लानिः पिपासा सक्थि सदनं शुक्रशोणितयोरवबन्धःस्फुरणञ्चयोनेः

स्तनयोःकृष्णमुखता रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात् ।
प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते ॥

तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कुटकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणंचाकाले वेगविधारणञ्च न सेवेत ॥

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते ।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥

तत्र प्रथमे मासि कललं जायते। द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते यदि पिण्डः पुमान् स्त्रीचेत्पेशी नपुंसकञ्चेदर्वुदमिति। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति। चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति गर्भहृदयप्रव्यक्तभावा चेतनाधातुरभिव्यक्तो भवति कस्मात् तत्स्थानत्वात्तस्माद्गर्भश्चतुर्थे मास्यभिप्राय

मिन्द्रियार्थेषु करोति द्विहृदयाञ्च नारीं दौहृदिनीमाचक्षते। दौहृदविमाननात्कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षम-नक्षंवा नारी सुतं जनयति। तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्। लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति॥

भवन्ति चात्र॥ इन्द्रियार्थांस्तु यान्यान्साभोक्तुमिच्छति गर्भिणी

गर्भाबाधभयात्तांस्तान्भिषगाहृत्य दापयेत्।
सा प्राप्तदौहृदा पुत्त्रं जनयेत गुणान्वितं।
अलब्धदौहृदा गर्भं लभेतात्मनि वा भयम्॥
येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना।
प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये॥
राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः।
अर्थवन्तं महाभागं कुमारं सा प्रसूयते॥
दुकूलपट्टकौशेयभूषणादिषु दौहृदात्॥
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते।
आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते
देवताप्रतिमायान्तु प्रसूते पार्षदोपमं।
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते॥
गोधामांसाऽशने पुत्रं सुषुप्सुं धारणात्मकम्।
गवां मांसेच बलिनं सर्व्वक्लेशसहन्तथा॥
माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतम्।
वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत्सुतम्॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरंसुतम्।

स्नमराद्दिग्नमनसं नित्यभीतं च तैत्तिरात्॥
अतोऽनुक्तेषु या नारी समभिध्याति दौहृदम्।
शरीराचारशीलैः सा समानं जनयिष्यति॥
कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्।
यथा तथा दैवयोगाद्दौहृदं जनयेद्धृदि॥

पञ्चमे मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः। सप्तमे सर्व्वाङ्ग प्रत्यङ्गविभागः प्रव्यक्ततरः। अष्टमेऽस्थिरीभवत्योजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैरृतभागत्वाच्च ततो बलिं मांसौदनमस्मै दापयेत्। नवमदशमैकादशद्वादशानामन्यतमस्मिञ्जायते। अतोन्यथा विकारी भवति॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा सास्य मातुराहाररसवीर्य्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति सर्व्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति॥

गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः शिरो मूलत्वाद्देहेन्द्रियाणां॥ हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात्॥ नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः॥ पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य॥ मध्य शरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य॥ तत्तु न सम्यक्॥ सर्व्वाङ्गप्रत्यङ्गानि भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च। तद्यथा। चूतफले परिपक्के केशरमा-

युगपत् सर्वाण्यङ्गप्रत्यङ्गानि भवन्तीत्याह धन्वन्तरिः। गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च। तद्यथा चूतफले परिपक्वे केसरमांसास्थिमज्जानः पृथग्दृश्यन्ते कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति। एतेनैव वंशाङ्कुरोऽपि व्याख्यातः। एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः। तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति॥

तत्र गर्भस्य पितृजमातृजरसजात्मजसत्वजसात्म्यजानि शरीरलक्षणानि व्याख्यामः॥ गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि॥ मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि॥ शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि॥ इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि॥ सत्वजान्युत्तरं वक्ष्यामः॥ वीर्य्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि॥

तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणाक्षिमहत्त्वञ्च पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्रमियं जनयिष्यतीति तद्विपर्य्यये कन्याम्॥ यस्याः पार्श्वद्वयमुन्नतम्पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणं च तस्या नपुंसकमिति विद्यात् यस्या मध्ये निम्नं द्रोणीप्रभूतमुदरं सा युग्मं प्रसूयत इति॥ भवन्ति चात्र॥

देवता ब्राह्मणपराः शौचाचारहिते रताः।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान्॥

अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते।
अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः॥
ते ते गर्भस्य विज्ञेया धर्म्माधर्म्मनिमित्तजाः॥

---

## चतुर्थोऽध्यायः।

अथातो गर्भव्याकरणं नाम शारीरं व्याख्यास्यामः॥
अग्निःसोमोवायुःसत्वंरजस्तमःपञ्चेन्द्रियाणिभूतात्मेतिप्राणाः॥

तस्य खल्वेवम्प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति॥ तासां प्रथमाऽवभासिनी नामया सर्व्ववर्णानवभासयति पञ्चविधाञ्च छायां प्रकाशयति सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्म-कण्टकाधिष्ठाना द्वितीया लोहिता नाम षोड़शभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना तृतीया श्वेता नाम द्वादश भागप्रमाणा चर्मदलाजगल्लीमशकाधिष्ठाना चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्व्वुदश्लीपद गलगण्डाधिष्ठाना सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना यदेतत्प्रमाणंनिर्द्दिष्टं तन्मांसले-ष्ववकाशेषु न ललाटे सूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येदिति॥ कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः॥

भवत श्चात्र॥ यथाहि सारः काष्ठे षुच्छिद्यमानेषु दृश्यते।

यथा धातुर्हि मांसेषुच्छिद्यमानेषु दृश्यते ॥
स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा ।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान्विदुः ॥

तासां प्रथमा मांसधरा नाम यस्यां मांसे सिरास्नायु-धमनीस्रोतसां प्रताना भवन्ति ॥

भवति चात्र ॥ यथा विसमृणालानि विवर्द्धन्ते समन्ततः
भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः ।

द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति ॥

भवति चात्र ॥ वृक्षाद्यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत् ।
मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते ॥

तृतीया मेदोधरा नाम मेदोहि सर्व्वभूतानामुदरस्थमण्वस्थिषु च महत्सु च मज्जा भवति ॥

भवति चात्र ॥ स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः ।
अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते ॥
शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता ।

चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति ॥

भवति चात्र ॥ स्नेहाभ्यक्ते यथाह्यक्षे चक्रं साधु प्रवर्त्तते ।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥

पञ्चमी पुरीषधरा नाम यान्तः कोष्ठे मलमभिविभजते पक्वाशयस्था ॥

भवति चात्र ॥ यकृत्समन्तात् कोष्ठञ्च तथान्त्राणि समाश्रिता ।
उण्डुकस्थं विभजते मलं मलधरा कला ॥

षष्ठी पित्तधरा नाम या चतुर्व्विध मन्नपानमुपयुक्तमा-माशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति॥

भवति चात्र॥ अशितं खादितं पीतं लीढं कोष्ठगतं नृणां।
तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा॥

सप्तमी शुक्रधरा नाम या सर्व्वप्राणिनां सर्व्वशरीर-व्यापिनी॥

भवन्ति चात्र॥ यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा।
शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः॥
द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः।
मूत्रस्रोतः पथाच्छुक्रं पुरुषस्य प्रवर्त्तते॥
कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा।
स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते॥

गृहीत गर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण तस्माद्गृहीतगर्भाणामार्त्तवं न दृश्यते। ततस्तदधः प्रतिहत मूर्द्धमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते। शेष ञ्चोर्द्धतरमागतं पयोधरावभिप्रतिपद्यते तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति॥

गर्भस्य यकृत्प्लीहानौ शोणितजौ। शोणितफेनप्रभवः फुफ्फुसः शोणितकिट्टप्रभवउण्डुकः॥
असृजः श्लेष्मणश्चापि यः प्रसादः परोमतः।
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः।
उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्॥

कफशोणितमांसानां सारो जिह्वा प्रजायते ।
यथार्थमुष्मणा युक्तो वायुः स्रोतांसि दारयेत् ॥
अनुप्रविश्य पिशितं पेशीर्विभजते तथा ।
मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात् ॥
सिराणां च मृदुः पाकः स्नायूनाञ्च ततः खरः ।
आशय्याऽभ्यासयोगेन करोत्याशय सम्भवम् ॥

रक्तमेदः प्रसादाद्वृक्कौ मांसासृक्कफमेदः प्रसादाद्वृषणौ शोणितकफ प्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः । तस्याधोवामतः प्लीहा फुष्फुसश्च दक्षिणतो यकृत् क्लोम च ॥

तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्व्व प्राणिनः स्वपन्ति ॥

भवति चात्र ॥ पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकशति स्वपतश्च निमीलति ॥

निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति सा स्वभावत एव सर्व्व प्राणिनोऽभिस्पृशति ॥

तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा सम्भवत्यनवबोधिनी सा प्रलयकाले । तमोभूयिष्ठानामहःसु निशासु च भवति । रजोभूयिष्ठाना मनिमित्तम् । सत्वभूयिष्ठानामर्द्धरात्रे । क्षीणश्लेष्मणामनिलबहुलानां मनः शरीराभितापवताञ्च नैव सा वैकारिकी भवति ॥

भवन्ति चात्र ॥ हृदयञ्चेतनास्थानमुक्तं सुश्रुत ! देहिनां ।

तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम् ॥
निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते।
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्त्यते ॥
पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् ॥
करणानांतु वैकल्ये तमसाभिप्रवर्द्धिते।
अस्वपन्नपि भूतात्मा प्रसुप्तइव चोच्यते ॥

सर्व्वर्त्तुषु दिवास्वापः प्रतिसिद्धोऽन्यत्र ग्रीष्मात् ॥ प्रतिषिद्धेष्वपितु बालवृद्धस्त्रीकर्षित क्षतक्षीणमद्यनित्ययानवाहनाध्वकर्म्मपरिश्रान्तानामभुक्तवतां मेदः स्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवास्वपनमप्रतिषिद्धम्। रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः ॥ विकृतिर्हि दिवास्वप्नोनाम तत्र स्वपतामधर्म्मः सर्व्वदोषप्रकोपश्च। तत्प्रकोपाच्च कासश्वास प्रतिश्यायशिरोगौरवाङ्गमर्द्दाऽरोचकज्वराग्निदौर्बल्यानि भवन्ति ॥ रात्रावपि जागरितवतां वातपित्तनिमित्तास्तएवोपद्रवा भवन्ति ॥
भवन्ति चात्र ॥ तस्मान्न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्जयेत्
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितञ्चरेत् ॥
अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः।
नातिस्थूलकृशः श्रीमान्नरो जीवेत् समाः शतम् ॥
निद्रासात्मीकृता यैस्तु रात्रौच यदि वा दिवा।
न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥
निद्रानाशोऽनिलात्पित्तान्मनस्तापात् क्षयादपि।

सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥
निद्रानाशेऽभ्यङ्गयोगो मूर्द्धि तैलनिषेवणम्।
गात्रस्योद्वर्त्तनञ्चैव हितं संवाहनानि च ॥
शालिगोधूमपिष्टान्नभक्ष्यैरैक्षवसंस्कृतैः।
भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः।
रसैर्विलेशयानाञ्च विष्किराणान्तथैव च।
द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि।
शयनासनयानानि मनोज्ञानि मृदूनि च।
निद्रानाशे तु कुर्व्वीत तथान्यान्यपि बुद्धिमान्।
वमेन्निद्रातियोगे तु कुर्य्यात् संशोधनानि च।
लङ्घनं रक्तमोक्षञ्च मनोव्याकुलनानि च ॥
कफमेदोविषार्त्तानां रात्रौ जागरणं हितम् ॥
दिवास्वप्नश्च तृट्शूलहिक्काऽजीर्णातिसारिणाम्।
इन्द्रियार्थेष्व संप्राप्तिर्गौरवं जृम्भणं क्लमः॥
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्।
पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः॥
यन्मुञ्चति सनेत्रास्रं स जृम्भ इति संज्ञितः।
योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः॥
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः।
सुखस्पर्शप्रसंगित्वं दुःखद्वेषणलोलता ॥
शक्तस्य चाप्यनुत्साहः कर्म्मस्वालस्यमुच्यते।
उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् ॥
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥

वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः।
नचान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्द्दिशेत्॥
आर्द्रचर्म्मावनद्धं हि यो गात्रमभिमन्यते।
तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्द्दिशेत्॥
मूर्च्छापित्ततमः प्राया रजःपित्तानिलाद्भ्रमः।
तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा॥

गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धि र्भवति।

भवन्तिचात्र॥ तस्यान्तरेण नाभिस्तु ज्योतिःस्थानं ध्रुवं स्मृतम्।
तदा धमति वातस्तु देहस्तेनास्य वर्द्धते॥
उष्मणा सहितश्चापि दारयत्यस्य मारुतः।
ऊर्द्धं तिर्य्यगधस्ताच्च स्रोतांस्यपि यथा तथा॥
दृष्टिश्च रोमकूपाश्च न वर्द्धन्ते कदाचन।
ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम्॥
शरीरे क्षीयमाणेऽपि वर्द्धेते द्वाविमौ सदा।
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः॥

सप्त प्रकृतयो भवन्ति। दोषैः पृथक् द्विशः समस्तैश्च।
शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः॥
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु।

तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति॥

अधृतिरदृढ़सौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी।

कण्डूस्फुरणचुम्चुमायनप्रायः पाण्डुघनरक्तास्रावी चेति वातश्लेष्मशोणितेभ्यः।

दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावी चेति श्लेष्मपित्तशोणितेभ्यः।

त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः

निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः

जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति।

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति ( तद्यथा ) अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणं मुत्कारिका कषायो वर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म्म दारुणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म प्रतिसारणं रोमसञ्जननं लोमापहरणं वस्तिकर्म्मोत्तरवस्तिकर्म्म बन्धः पत्रदानं क्रिमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधुसर्पिर्यन्त्रमाहारो रक्षाविधानम्।

तेषु कषायोवर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनमिति शोधनरोपणानि। तेष्वष्टौ शस्त्रकृत्याः। शोणितास्थापनं क्षाराग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि। स्नेहस्वेदनवमनविरेचनवस्त्युत्तरवस्तिशिरोविरेचननस्यधूमकवल-

धारणान्यन्यत्र वक्ष्यामः । यदन्यदवशिष्टमुपक्रमजातं तदिह वक्ष्यते ।

षड्विधः प्रागुपदिष्टः शोफस्तस्यैकादशोपक्रमा भवन्त्यपतर्पणादयो विरेचनान्तास्ते च विशेषेण शोथप्रतीकारा वर्त्तन्ते व्रणभावमापन्नस्य च न विरुध्यन्ते शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव । अपतर्पणन्त्वाद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च ।

दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः ।
अवेक्ष्य दोषं प्राणञ्च कार्य्यं स्यादपतर्पणम् ॥
ऊर्द्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः ।
न कार्य्यं गर्भिणीवृद्धबालदुर्वलभीरुभिः ॥
शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च ।
यथास्वैरौषधैर्लेपं प्रत्येकञ्चैव कारयेत् ॥
यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः ॥
प्रह्लादने शोधने च शोफस्य हरणे तथा ।
उत्सादने रोपणे च लेपः स्यात्तु तदर्थकृत् ॥

वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिःक्वाथैरशीतैः परिषेकान् कुर्व्वीत ।

पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिःक्वाथैरनुष्णैः परिषेकान्कुर्वीत ।

श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैरशीतैः परिषेकान्कुर्वीत ।

यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥

अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुताञ्च करोति ।

स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते ।
पश्चात्कर्म्मसु चादिष्टः स च विस्रावणादिषु ॥
रुजावतां दारुणानां कठिनानां तथैव च ।
शोफानां स्वेदनं कार्य्यं ये चाप्येवंविधा व्रणाः ॥
स्थिराणां रुजतां मन्दं कार्य्यं विम्लापनं भवेत् ।
अभ्यज्य स्वेदयित्वा तु वेणुना वा शनैः शनैः ॥
विमर्द्दयेद्भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा ।
शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः ॥
अविदग्धः शमं याति विदग्धः पाकमेति च ।
निवर्त्तते न यः शोफो विरेकान्तैरुपक्रमैः ॥
तस्य सम्पाचनं कुर्य्यात् समाहृत्यौषधानि तु ।
दधितक्रसुरासुक्तधान्याम्लैर्य्योजितानि तु ॥
स्निग्धानि लवणीकृत्य पचेदुत्कारिकां शुभाम् ।
सैरण्डपत्रया शोफं नाहयेदुष्णया तया ॥
हितं सम्भोजनं चापि पाकायाभिमुखो यदि ।
वेदनोपशमार्थाय तथा पाकशमाय च ॥
अचिरोत्पतिते शोफे कुर्य्याच्छोणितमोक्षणम् ।
सशोफे कठिने श्यामे सरक्ते वेदनावति ॥
संरब्धे विषमे वापि व्रणे विस्रावणं हितम् ।

सविषे च विशेषेण जलौकाभिः पदैस्तथा ॥
वेदनायाः प्रशान्त्यर्थं पाकास्त्राप्राप्तये तथा ।
सोपद्रवाणां रुक्षाणां कृशानां व्रणशोषिणाम् ॥
यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ।
उत्सन्नमांसशोफे तु कफजुष्टे विशेषतः ॥
संक्लिष्टश्यामरुधिरे व्रणे प्रच्छर्दनं हितम् ।
वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ॥
विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ।
अपाकेषु तु रोगेषु कठिनेषु स्थिरेषु च ॥
स्नायुकोथादिषु तथाच्छेदनं प्राप्तमुच्यते ।
अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ॥
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ।
बालवृद्धासहक्षीणभीरूणां योषितामपि ॥
मर्मोपरि च जातेषु रोगेषूक्तञ्च दारणम् ।
सुपक्वे पिण्डिते शोफे पीड़नैरवपीड़िते ॥
पाकोद्वृत्तेषु दोषेषु तत्तु कार्य्यं विजानता ।
सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः ॥
कठिनान् स्थूलवृत्तौष्ठान्दीर्य्यमाणान् पुनः पुनः ।
कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥
समं लिखेत्सुलिखितं लिखेन्निरवशेषतः ।
वर्त्मनानुप्रमाणेन समं शस्त्रेण निर्लिखेत् ॥
क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम् ।
कर्कशानि च पत्राणि लेखनार्थे प्रदापयेत् ॥

नाड़ीव्रणान् शल्यगर्भानुन्माग्र्युत्सङ्गिनः शनैः।
करीरवालाङ्गुलिभिरेषण्या चैषयेद्भिषक्॥
नेत्रवर्त्मगुदाभ्यासनाड्योऽवक्राः सशोणिताः।
चुचूपोदकजैः सूक्ष्मैः करीरैरेषयेत्तु ताः॥
संवृतासंवृतास्येषु व्रणेषु मतिमान् भिषक्।
यथोक्तमाहरेच्छल्यं प्रागोद्धरणलक्षणम्॥
रोगे व्यधनसाध्ये तु यथोद्दिष्टं प्रमाणतः।
शस्त्रं निदध्याद्दोषञ्च स्रावयेत्कीर्त्तितं यथा॥
अपाकोपद्रुता ये च मांसस्था विवृताश्च ये।
यथोक्तं सीवनं तेषु कार्य्यं सन्धानमेव च॥
पूयगर्भानणुद्वारान्व्रणान्मर्मगतानपि।
यथोक्तैः पीड़नद्रव्यैः समन्तात्परिपीड़येत्॥
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति।
न चाभिमुखमालिम्पेत्तथा दोषः प्रसिच्यते॥
तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम्।
कार्य्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत्॥
दाहपाकज्वरवतां व्रणानां पित्तकोपतः।
रक्तेन चाभिभूतानां कार्य्यं निर्व्वापणं भवेत्॥
यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृतप्लुतैः॥
दिह्यादबहलाल्लेपान् सुशीतांश्चावचारयेत्।
व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु॥
तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च।
वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा॥

स्नैहिकेषु च वीजेषु पचेदुत्कारिकां शुभाम् ।
तेषाञ्च स्वेदनं कार्य्यं स्थिराणां वेदनावताम् ॥
दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः ।
कषायैः शोधनं कार्य्यं शोधनैः प्रागुदीरितैः ॥
अन्तः शल्यानणुमुखान्गम्भीरान्मांससंश्रितान् ।
शोधनद्रव्ययुक्ताभिर्व्वर्त्तिभिस्तान्यथाक्रमम् ॥
पूतिमांसप्रतिच्छन्नान्महादोषांश्च शोधयेत् ।
कल्कीकृतैर्यथालाभं वर्त्तिद्रव्यैः पुरोदितैः ॥
पित्तप्रदुष्टान् गम्भीरान्दाहपाकप्रपीड़ितान् ।
कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा ॥
उत्सन्नमांसानस्निग्धानल्पास्रावान् व्रणांस्तथा ।
सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥
तैलेनाशुध्यमानानां शोधनीयां रसक्रियाम् ।
व्रणानां स्थिरमांसानां कुर्य्याद्द्रव्यैरुदीरितैः ॥
कषाये विधिवत्तेषां कृते व्यामिश्रयेत्पुनः ।
सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलाम् ॥
हरितालञ्च मतिमांस्ततस्तामवचारयेत् ।
मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम् ॥
व्रणेषु दत्वा तां तिष्ठेत्त्रींस्त्रींश्च दिवसान्परम् ।
गम्भीरान्मेदसा जुष्टान्दुर्गन्धांश्चूर्णशोधनैः ॥
उपाचरेद्भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्त्तिजैः ।
शुद्धलक्षणयुक्तानां कषायं रोपणं हितम् ॥
तत्र कार्य्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता ।

अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥
हिता रोपणवर्त्यश्च जाता रोपणवर्त्तयः ।
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥
कल्कः संरोहणः कार्य्यस्तिलजो मधुसंयुतः ।
स माधुर्य्यात्तथौष्ण्याच्च स्नेहाच्चानिलनाशनः ॥
कषायभावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तहृत् ।
औष्ण्यात्कषायभावाच्च तिक्तत्वाच्च कफे हितः ॥
शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः ।
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥
पूर्व्वाभ्यां सर्पिषाचापि युक्तः संरोपणो भवेत् ।
तिलवद्यवकल्कन्तु केचिदाहुर्मनीषिणः ॥
शमयेदविदग्धञ्च विदग्धमपि पाचयेत् ।
पक्वं भिनत्ति भिन्नञ्च शोधयेद्रोपयेत्तथा ॥
पित्तरक्तविषागन्तून्गभीरानपि च व्रणान् ।
रोपयेद्रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥
कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ।
कारयेद्रोपणं तैलं भेषजैस्तद्यथोदितैः ॥
अबन्ध्यानाञ्चलस्थानां शुद्धानाञ्च प्रदुष्यताम् ।
द्विहरिद्रायुतां कुर्य्याद्रोपणार्थां रसक्रियाम् ॥
समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् ।
चूर्णं विदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा ॥
शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्त्तितः ।
सर्व्वव्रणानां सामान्ये नोक्तो दोषाविशेषतः ॥

एष आगमसिद्धत्वात्तथैव फलदर्शनात्।
मन्त्रवत्सं प्रयोक्तव्यो न मीमांस्यः कथञ्चन॥
स्वबुद्ध्या चापि विभजेत्कषायादिषु सप्तसु।
भेषजानि यथायोगं यान्युक्तानि पुरा मया॥
आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः।
स वातदुष्टे दातव्यः कषायादिषु सप्तसु॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः।
तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु॥
आरग्वधादिस्तु गणो यश्चोषाः परिकीर्त्तितः।
तौ देयौ कफदुष्टे तु संसृष्टे संयुता गणाः॥
वातात्मकानुग्ररुजान्स्रावानपि च व्रणान्।
स क्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत्॥
परिशुष्काल्पमांसानां गम्भीराणां तथैव च।
कुर्य्यादुत्सादनीयानि सर्पींष्यालेपनानि च॥
मांसाशिनाञ्च मांसानि भक्षयेद्विधिवन्नरः।
विशुद्धमनसस्तस्य मांसं मांसेन वर्द्धते॥
उत्सन्नमृदुमांसानां व्रणानामवसादनम्।
कुर्य्याद्द्रव्यैर्यथोद्दिष्टैस्तर्णितैर्मधुना सह॥
कठिनानाममांसानां दुष्टानां मातरिश्वना।
मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत्॥
वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत्।
व्रणेषु मृदुमांसेषु दारुणीकरणं हितम्॥
धवप्रियङ्ग्वशोकानां रोहिण्याश्च त्वचस्तथा।

त्रिफलाधातकीपुष्परोध्रसर्जरसान्समान् ॥
कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत्।
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥
तथैव खलु दुःशोधान् शोधयेत्क्षारकर्म्मणा।
स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः ॥
निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्म्मणा।
दुरूढ़त्वात्तु शुक्लानां कृष्णकर्म्म हितं भवेत् ॥
भल्लातकान्वासयेत्तु क्षीरे प्राङ्मूत्रभावितान्।
ततो द्विधाच्छेदयित्वा लौहे कुम्भे निधापयेत् ॥
कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत्।
मुखं मुखेन सन्धाय गोमयैर्दाहयेत्ततः ॥
यः स्नेहस्रवति तस्माद्ग्राहयेत्तं शनैर्भिषक्।
ग्राम्यानूपशफान्दग्धान् सूक्ष्मचूर्णानि कारयेत् ॥
तैलेनानेन संसृष्टं शुक्लमालेपयेद्व्रणम्।
भल्लातकविधानेन सारस्नेहांस्तु कारयेत् ॥
ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितम्।
दुरूढ़त्वात्तु कृष्णानां पाण्डुकर्म्म हितं भवेत् ॥
सप्तरात्रं स्थितं क्षीरेच्छागले रोहिणीफलम्।
तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम् ॥
नवं कपालिकाचूर्णं वैदुलं सर्ज्जनामच।
कासीसं मधुकञ्चैव क्षौद्रयुक्तं प्रलेपयेत् ॥
कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत् ॥
कासीसं रोचनां तुत्थं हरितालं मनःशिलाम्।

वेणुनिर्लेखनं चापि प्रयुन्नाङ्गरसाञ्जनम् ॥
अधस्तादर्जुनस्यैतन्मासं भूमौ निधापयेत्।
मासादूर्द्ध्वं ततस्तेन कृष्णमालेपयेद्व्रणम् ॥
कुक्कुटाण्डकपालानि कतकं मधुकं समम्।
तथा समुद्रमण्डूकीमणिचूर्णञ्च दापयेत् ॥
गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणम्।
हस्तिदन्तमषीं कृत्वा मुख्यञ्चैव रसाञ्जनम् ॥
रोमाण्येतेन जायन्ते लेपात्पाणितलेष्वपि।
चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना ॥
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः।
कासीसं नक्तमालस्य पल्लवांश्चैव संहरेत् ॥
कपित्थरसपिष्टानि रोमसञ्जननं परम्।
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति ॥
क्षुरकर्त्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत्।
शङ्खचूर्णस्य भागौ द्वौ हरितालञ्च भागिकम् ॥
शुक्तेन सह पिष्टानि लोमशातनमुत्तमम्।
तैलं भल्लातकस्याथ स्नुहीक्षीरं तथैव च ॥
प्रक्षिपेत्कल मतिमान् रोमशातनमुत्तमम्।
कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी ॥
वीजं शीतोदपिष्टं वा रोमशातनमाचरेत्।
आगारगोधिकापुच्छं रम्भालं वीजमैङ्गुदम् ॥
दग्ध्वा तद्भस्मतैलाम्बु सूर्य्यपक्कं कचान्तकृत्।
वातदुष्टो व्रणो यस्तु रूक्षश्चात्यर्थवेदनः ॥

अधःकाये विशेषेण तत्र वस्तिर्विधीयते।
मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे॥
तथैवार्त्तवदोषे च वस्तिरप्युत्तरो हितः॥
यस्माच्छुध्यति बन्धेन व्रणो याति च मार्दवम्।
रोहत्यपि च निःशङ्कस्तस्माद्बन्धो विधीयते॥
स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम्।
पत्रदानं भवेत्कार्य्यं यथादोषं यथर्त्तु च॥
एरण्डभूर्ज्जपूतीकहरिद्राणान्तु वातजे।
पत्रमाश्ववलं यच्च काश्मरीपत्रमेव च॥
पत्राणि क्षीरवृक्षाणामौदकानि तथैव च।
दूषिते रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः॥
पाठामूर्व्वागुडूचीनां काकमाचीहरिद्रयोः।
पत्रञ्च शुकनाशाया योजयेत्कफजे व्रणे॥
अकर्कशमविच्छिन्नमजीर्णं सुकुमारकम्।
अजन्तुजग्धं मृदु च पत्रं गुणवदुच्यते॥
स्नेहमौषधसारञ्च पट्टवस्त्रान्तरीकृतम्।
न दूषयति यत्पत्रं लेपस्योपरि दापयेत्॥
शैत्योष्णजननार्थाय स्नेहसंग्रहणाय च।
दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता॥
मक्षिका व्रणजातस्य निःक्षिपन्ति यदा क्रमीन्।
श्वयथुर्भक्षिते तैस्तु जायते भृशदारुणः॥
तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते।
सुरसादिर्हितस्तत्र धावने पूरणे तथा॥

सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः।
हिता गोमूत्रपिष्टाश्च सेकः चारोदकेन वा॥
प्रच्छाद्य मांसपेश्या च क्रमीनपहरेद्व्रणात्।
विंशतिं क्रमिजातीस्तु वच्यास्युपरि भागशः॥
दीर्घकालातुराणान्तु कृशानां व्रणशोषिणाम्।
वृंहणीयो विधिः सर्वः कार्य्योऽग्निं परिरचता॥
विषजुष्टस्य विज्ञानं विषनिश्चयमेव च।
चिकित्सितञ्च वच्यामि कल्पे तु प्रतिभागशः॥
कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः।
शिरोविरेचनं तेषु विदध्यात्कुशलो भिषक्॥
रुजावन्तोऽनिलाविष्टा रूचा ये चोर्द्धजत्रुजाः।
व्रणेषु तेषु कर्त्तव्यं नस्यं वैद्येन जानता।
दोषप्रच्यवनार्थाय रुजादाहचयाय च॥
जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च॥
शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै।
उष्णो वा यदि वा शीतः कवलग्रह इष्यते॥
ऊर्द्धजत्रुगतान् रोगान् व्रणांश्च कफवातजान्।
शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत्॥
चतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च।
सद्योव्रणेष्वायतेषु चौद्रसर्पिर्विधीयते॥
अवगाढ़ास्तनुमुखा ये व्रणाः शल्यपीड़िताः।
निहृत्तशल्योद्धरणा यन्त्रं तेषु विधीयते॥
लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः।

सर्वव्रणिभ्यो देयस्तु सदाहारो विजानता ॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ।
रक्षाविधानैरुद्दिष्टैर्यमैः सनियमैस्तथा ॥
षण्मूलोऽष्टपरिस्रावी पञ्चलक्षणलक्षितः ।
षष्ट्युपक्रमनिर्द्दिष्टश्चतुर्भिः साध्यते व्रणः ॥
योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया ।
द्रव्याणां तत्समानानां तत्रावापो न दुष्यति ॥
प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः ।
यथोपपत्ति तत्रापि कार्य्यमेवं चिकित्सितम् ॥
गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकम् ।
तदुद्धरेद्यौगिकन्तु प्रक्षिपेदप्यकीर्त्तितम् ॥
उपद्रवास्तु द्विविधा व्रणस्य व्रणितस्य च ।
तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः ॥
ज्वरातिसारौ मूर्च्छा च हिक्काच्छर्दिररोचकः ।
श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य च ॥
व्रणक्रियास्वेवमाद्यु व्यासेनोक्तास्वपि क्रियाम् ।
भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते ॥

---

## द्वितीयोऽध्यायः ।

अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः ॥
धन्वन्तरिर्धर्म्मभृतां वरिष्ठो वाग्विशारदः ।
विश्वामित्रात्मजमृषिं शिष्यं सुश्रुतमन्वशात् ॥

नानाधारामुखैःशस्त्रैर्नानास्थाननिपातितैः।
नानारूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणम्॥
आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा।
अर्द्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा॥
शरावनिम्नमध्याश्च यवमध्यास्तथापरे।
एवं प्रकाराकृतयो भवन्त्यागन्तवो व्रणाः॥
दोषजा वा स्वयं भिन्ना नतु वैद्यनिमित्तजाः।
भिषग्व्रणाकृतिज्ञो हि न मोहमधिगच्छति॥
शशन्दुर्द्दर्शरूपेषु व्रणेषु विकृतेष्वपि।
अनेकाकृतिरागन्तुः स भिषग्भिःपुरातनैः॥
समासतो लक्षणतः षड्विधः परिकीर्त्तितः।
च्छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च॥
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम्।
तिरश्चीनऋजुर्वापि यो व्रणश्चायतो भवेत्॥
गात्रस्य पातनं चापिच्छिन्नमित्यपदिश्यते।
कुन्तशक्त्यृष्टिखड्गाग्रविषाणादिभिराशयः॥
हतःकिञ्चित्स्रवेत्तद्धि भिन्नलक्षणमुच्यते।
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च॥
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते।
तस्मिन्भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते॥
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति।
मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च॥
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता।

लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ॥
हृच्छूलं पार्श्वयोश्चापि विशेषश्चात्र मे शृणु ।
आमाशयस्थे रुधिरे रुधिरं छर्दयेत्पुनः ।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ।
पक्वाशयगते चापि रुजो गौरवमेव च ।
शीतता चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः ॥
अभिन्नेऽप्याशयेऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणम् ।
पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवम् ॥
सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद्विना ।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥
नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ।
विषमं व्रणमङ्गे यत्तत्क्षतन्त्वभिनिर्दिशेत् ॥
प्रहारपीड़नाभ्यान्तु यदङ्गं पृथुतां गतम् ।
सास्थि तत्पिच्छितं विद्यान्मज्जरक्तपरिप्लुतम् ॥
विगतत्वग्यदङ्गं हि सङ्घर्षादन्यथापि वा
उषास्रावान्वितं तत्तु घृष्टमित्युपदिश्यते ॥
छिन्ने भिन्ने तथा विद्धे क्षते वासृगतिस्रवेत् ।
रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशम् ॥
स्नेहपानं हितं तत्र तत्सेको विहितस्तथा ।
वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनम् ॥
धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च ।
वातघ्नौषधसिद्धैश्च स्नेहैर्वस्तिर्विधीयते ॥
पिच्छिते च विघृष्टे च नातिस्रवति शोणितम् ।

अगच्छति भृशं तस्मिन्दाहः पाकश्च जायते ॥
तत्रोष्मणो निग्रहार्थं तथा दाहप्रपाकयोः।
शीतमालेपनं कार्य्यं परिषेकश्च शीतलः॥
षट्स्वेतेषु यथोक्तेषु च्छिन्नादिषु समासतः।
ज्ञेयं समर्पितं सर्वं सद्योव्रणचिकित्सितम् ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि च्छिन्नानान्तु चिकित्सितम् ॥
ये व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः।
तान्सीव्येद्विधिनोक्तेन बध्नीयाद्गाढ़मेव च ॥
कर्णं स्थानादपहृतं स्थापयित्वा यथास्थितम्।
सीव्येद्यथोक्तं तैलेन स्रोतश्चाप्यभितर्पयेत् ॥
कृकाटिकान्ते च्छिन्ने तु गच्छत्यपि समीरणे॥
सम्यङ्निवेश्य बध्नीयात्सीव्येच्चापि निरन्तरम्।
आजेन सर्पिषा चैव परिषेकन्तु कारयेत्॥
उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः।
शाखासु पतितांस्तिर्य्यक्प्रहारान्विवृतान्भृशम् ॥
सीव्येत्सम्यङ्निवेश्याशु सन्ध्यस्थीन्यनुपूर्वशः।
बद्ध्वा वेल्लितकेनाशु ततस्तैलेन सेचयेत् ॥
चर्म्मणा गोफणाबन्धः कार्य्यो यो वा हितो भवेत्।
पृष्ठे व्रणो यस्य भवेदुत्तानं शाययेत्तु तम् ॥
अतोऽन्यथा चोरसिजे शाययेत्पुरुषं व्रणे।
छिन्नां निःशेषतः शाखान्दग्ध्वा तैलेन बुद्धिमान् ॥
बध्नीयात्कोशबन्धेन प्राप्तं कार्य्यञ्च रोपणम्।
चन्दनं पद्मकं रोध्रमुत्पलानि प्रियङ्गवः ॥

हरिद्रा मधुकञ्चैव पयःस्यादत्र चाष्टमम् ।
तैलमेभिर्विपक्वन्तु प्रधानं व्रणरोपणम् ॥
चन्दनं कर्कटाख्या च सहे मांस्याह्वयामृते ।
हरेणवो मृणालञ्च त्रिफला पद्मकोत्पलम् ॥
त्रयोदशाङ्गं त्रिवृतमेतद्वा पयसान्वितम् ।
तैलं विपक्वं सेकार्थैर्हितं तु व्रणरोपणे ॥
अत ऊर्द्धं प्रवक्ष्यामि भिन्नानान्तु चिकित्सितम् ।
भिन्नं नेत्रमकर्म्मण्यमभिन्नं लम्बते तु यत् ॥
तन्निवेश्य यथास्थानमव्याविद्धशिरं शनैः ।
पीड़येत्पाणिना सम्यक् पद्मपत्रान्तरेण तु ॥
ततोऽस्य तर्पणं कार्य्यं नस्यं चानेन सर्पिषा ।
आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च ॥
जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्विपाचयेत् ।
सर्व्वनेत्राभिघाते तु सर्पिरेतत्प्रशस्यते ॥
उदरान्मेदसो वर्त्तिर्निर्गता यस्य देहिनः ।
कषायभस्ममृत्क्षीर्णां बद्ध्वा सूत्रेण सूत्रवित् ॥
अग्नितप्तेन शस्त्रेणच्छिन्द्यान्मधुसमायुतम् ।
बद्ध्वा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते ॥
स्नेहपानादृतेचापि पयःपानं विधीयते ।
शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया ॥
चित्रासमन्वितञ्चैव रुजादाहविनाशनम् ।
आटोपो मरणं वा स्याच्छूलो वाऽच्छिद्यमानया ॥
मेदोग्रन्थौ च यत्तैलं वक्ष्यते तच्च योजयेत् ।

त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा ॥
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान् ।
तत्रान्तर्लोहितं पाण्डुं शीतपादकराननम् ॥
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्ज्जयेत् ।
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥
पक्वाशयस्थे देयञ्च विरेचनमसंशयम् ।
आस्थापनञ्च निःस्नेहं कार्य्यमुष्णैर्विशोधनैः ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥
अतिनिःस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् ।
स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः ॥
व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः ।
अभिन्नमन्त्रं निःक्रान्तं प्रवेश्यं नान्यथाभवेत् ॥
पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ।
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥
प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः ।
प्रवेशयेत्क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम् ॥
अङ्गुल्याभिमृशेत्कण्ठं जलेनोद्वेजयेदपि ।
हस्तपादेषु संगृह्य समुत्थाप्य महाबलाः ॥
भवत्यन्तःप्रवेशस्तु यथा निर्द्धुनुयुस्तथा ।
तथान्त्राणि विशन्त्यन्तः स्वाङ्गलां पीड़यन्ति च ॥
व्रणाल्पत्वाद्बहुत्वाद्वा दुःप्रवेशम्भवेत्तु यत् ।
तदापाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥

यथास्थानं निविष्टे च व्रणं सीव्येदतन्द्रितः ।
स्थानादपेतमादत्ते प्राणान् गुम्फितमेव वा ॥
वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत् ।
घृतं पिबेत्सुखोष्णञ्च चित्रातैलसमन्वितम् ॥
मृदुक्रियार्थं शक्तो वायोश्चाधः प्रवृत्तये ।
ततस्तैलमिदं कुर्य्याद्रोपणार्थं चिकित्सकः ॥
त्वचोऽश्वकर्णधवयोर्म्मोचकीमेषशृङ्ग्योः ।
शल्लक्यर्ज्जुनयोश्चापि विदार्य्याः चीरिणां तथा ॥
बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत् ।
व्रणं संरोपयेत्तेन वर्षमात्रं यतेत च ॥
पादौ निरस्तमुष्कस्य जलेन प्रोक्ष्य चाक्षिणी ।
प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत्ततः परम् ॥
कार्य्यो गोफणिकाबन्धः कट्यामावेश्य यन्त्रकम् ।
न कुर्य्यात्स्नेहसेकञ्च तेन क्लिद्यति हि व्रणः ॥
कालानुसार्य्यगुरुलाजातीचन्दनपद्मकैः ।
शिलादार्व्यमृतातुत्थैस्तैलं कुर्वीत रोपणम् ॥
शिरसोऽपहृते शल्ये बालवर्त्तिं प्रवेशयेत् ।
बालवर्त्त्यामदत्तायां मस्तुलुङ्गं व्रणात्स्रवेत् ॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत् ।
व्रणे रोहति चैकैकं शनैर्बालमपक्षिपेत् ॥
गात्राद्व्यपहृतेऽन्यस्मात्स्नेहवर्त्तिं प्रवेशयेत् ।
क्षते निःशोणिते चापि विधिः सद्यः क्षते हितः ॥
दूरावगाढाः सूक्ष्मास्याः स्युर्ये व्रणास्तान्विशोणितान् ।

कृत्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत् ॥
समङ्गां रजनीं पद्मां त्रिवर्गं तुल्यमेव च ।
विडङ्गं कटकां पथ्यां गुडूचीं सकरञ्जिकाम् ॥
संहृत्य विपचेत्काले तैलं रोपणमुत्तमम् ।
तालीशं पद्मकं मांसी हरेणुगुरुचन्दनम् ॥
हरिद्रे पद्मवीजानि सोशीरं मधुकञ्च तैः ।
पक्कं सद्योव्रणिष्वक्तं तैलं रोपणमुत्तमम् ॥
क्षते क्षतविधिः कार्य्यः पिच्चिते भग्नवद्विधिः ।
घृष्टे रुजो निगृह्याशु चूर्णैरुपचरेद्व्रणम् ॥
विश्लिष्टदेहं पतितं मथितं हतमेव च ।
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनम् ।
अथमेव विधिः कार्य्यः क्षीणे मर्म्महते तथा ॥
रोपणे सपरीषेके पाने च व्रणिनां सदा ॥
तैलं घृतं वा संयोज्यं शरीरत्तूनविच्य हि ।
घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ॥
सद्योव्रणेषु देयानि तानि वैद्येन जानता ।
सद्यः क्षतव्रणं वैद्यः सशूलं परिषिचयेत् ॥
सर्पिषा नातिशीतेन बलातैलेन वा पुनः ।
समङ्गां रजनीं पद्मां पथ्यां तुत्थं सुवर्चलाम् ॥
पद्मकं रोध्रमधुकं विड़ङ्गानि हरेणुकम् ।
तालीशपत्रं नलदं चन्दनं पद्मकेशरम् ॥
मञ्जिष्ठो शीरलाक्षाञ्च क्षीरिणा चापि पल्लवान् ।
पियालवीजं तिन्दुकास्तरुणानि फलानि च ॥

यथालाभं समाहृत्य तैलमेभिर्विपाचयेत् ।
सद्योव्रणानां सर्वेषामदुष्टानान्तु रोपणम् ॥
कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत् ॥
सद्योव्रणानां सप्ताहं पश्चात्पूर्वोक्तमाचरेत् ।
दुष्टव्रणेषु कर्त्तव्यमूर्द्ध्वाधश्च शोधनम् ।
विशोषणं तथाहारः शोणितस्य च मोक्षणम् ।
कषायं राजवृक्षादौ सुरसादौ च धावनम् ॥
तयोरेव कषायेण तैलं शोधनमिष्यते ।
क्षारकल्पेन वा तैलं क्षारद्रव्येण साधितम् ॥
द्रवन्ती चिरविल्वश्च दन्ती चित्रकमेव च ।
पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च ॥
त्रिवृत्त जीवती नीली हरिद्रे सैन्धवं तिलाः ।
भूमीकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया ॥
नेपाली जालिनी चैव मदयन्ती मृगादनी ।
सुधामूर्वार्ककीटारिहरितालकरञ्जिकाः ॥
यथोपपत्ति कर्त्तव्यं तैलमेतैस्तु शोधनम् ।
घृतं वा यदि वा प्राप्तं कल्काः संशोधनास्तथा ॥
सैन्धवं त्रिवृदेरण्डपत्रकल्कास्तु वातिके ।
त्रिवृद्धरिद्रामधुककल्काः पैत्ते तिलैर्युतः ॥
कफजे तिलतेजाह्वा दन्तीस्वर्जिकचित्रकाः ।
दुष्टव्रणविधिः कार्य्यो मेहकुष्ठव्रणेष्वपि ॥
षड्विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः ।
नातः शक्यं परं वक्तुमपि निश्चितवादिभिः ॥

उपसर्गैर्निपातैश्च तत्तु पण्डितमानिनः।
केचित्संयोज्य भाषन्ते बहुधा मानगर्विताः॥
बहु तद्भाषितं तेषां षट्स्वेवावतिष्ठते॥
विशेषा इव सामान्ये षट्त्वन्तु परमं मतम्।

---

तृतीयोऽध्यायः

अथातो भग्नानां चिकित्सितं व्याख्यास्यामः॥
अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम्।
व्यायामञ्च न सेवेत भग्नो रुक्षान्नमेव च॥
शालिर्मांसरसः क्षीरं सर्पिर्यूषः सतीनजः।
बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता॥
मधूकोडुम्बराश्वत्थपलाशककुभत्वचः।
वंशसर्ज्जवटानां वा कुशार्थमुपसंहरेत्॥
आलेपनार्थं मञ्जिष्ठां मधुकं रक्तचन्दनम्।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च संहरेत्।
सप्ताहादथ सप्ताहात्सौम्येष्वृतुषु बन्धनम्॥
साधारणेषु कर्त्तव्यं पञ्चमे पञ्चमेऽहनि।
आग्नेयेषु त्र्यहात्कुर्य्याद्भग्नदोषवशेन वा॥
तत्रातिशिथिलं बद्धे सन्धिस्थैर्य्यं न जायते॥
गाढ़ेनापि त्वगादीनां शोफो रुक्पाक एव च।

तस्मात्साधारणं बन्धं भग्ने शंसन्ति तद्विदः॥
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने।
पञ्चमूलीविपक्वन्तु चीरं कुर्य्यात्सवेदने॥
सुखोष्णमवचार्य्यं वा चक्रतैलं विजानता।
विभज्य कालं दोषञ्च दोषघ्नौषधसंयुतम्॥
परिषेकं प्रदेहञ्च विदध्याच्छीतमेव च।
गृष्टिचीरं ससर्पिष्कं मधुरौषधसाधितम्॥
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः।
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्म्मधूत्तरैः॥
प्रतिसार्य्य कषायैस्तु शेषं भग्नवदाचरेत्।
प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत्॥
अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके।
प्रथमे वयसि त्वेवं मासात्सन्धिः स्थिरो भवेत्॥
मध्यमे द्विगुणात्कालादुत्तरे त्रिगुणात्स्मृतः।
अवनामितमुन्नह्येदुन्नतं चावपीड़येत्॥
आञ्छेदतिचिप्तमधो गतं चोपरि वर्त्तयेत्।
आञ्छनैः पीड़नैश्चैव सङ्क्षेपैर्ब्बन्धनैस्तथा॥
सन्धीन् शरीरे सर्व्वांस्तु चलानप्यचलानपि।
एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान् भिषक्॥
उत्पिष्टमथ विश्लिष्टं सन्धिं वैद्यो न घट्टयेत्।
तस्य शीतान् परीषेकान् प्रदेहांश्चावचारयेत्॥
अभिघाते हृते सन्धिः स्वां याति प्रकृतिं पुनः।
घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि॥

पट्टोपरि कुशान्दत्त्वा यथावद्बन्धमाचरेत्।
प्रत्यङ्गभग्नस्य विधिरत ऊर्द्ध्वं प्रवक्ष्यते॥
नखसन्धिं समुत्पिष्टं रक्तानुगतमारया।
अवमथ्य स्नुते रक्ते शालिपिष्टेन लेपयेत्॥
भग्नां वा सन्धिमुक्तां वा स्थापयित्वाङ्गुलीं समम्।
अणुनावध्य पट्टेन घृतसेकं प्रदापयेत्॥
अभ्यज्य सर्पिषा पादं तलभग्नं कुशोत्तरम्।
वस्त्रपट्टेन बध्नीयान्नच व्यायाममाचरेत्॥
अभ्यज्यायामयेज्जङ्घामूरुञ्च सुसमाहितः।
दत्त्वा द्रुमत्वचः शीता वस्त्रपट्टेन वेष्टयेत्॥
मतिमांश्चक्रयोगेन आञ्छेदूर्व्वस्थि निर्गतम्।
स्फुटितं पिच्चितं चापि बध्नीयात्पूर्व्ववद्भिषक्॥
आञ्छेदूर्द्धमधो वापि कटीभग्नन्तु मानवम्।
ततः स्थानस्थिते सन्धौ वस्तिभिः समुपाचरेत्॥
पर्शुकास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः।
दक्षिणास्वथ वा वामास्वनुमृज्य निबन्धनीः॥
ततः कवलिकान्दत्त्वा वेष्टयेत्सुसमाहितः।
तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरम्॥
मुषलेनोत्क्षिपेत्कक्षामंससन्धौ [illegible] हृते।
स्थानस्थितञ्च बध्नीत स्वस्तिकेन [illegible] क्षणः॥
कौर्प्परन्तु तथा सन्धिमङ्गुष्ठे[illegible]मृ[illegible]र्जयेत्।
अनुसृत्य ततः सन्धिं पीड़येत् कूर्प[illegible]तम्।
प्रसार्य्याकुञ्चयेच्चैनं स्नेहसेकञ्च दा[illegible]येत्॥

एवं जानुनि गुल्फे च मणिबन्धे च कारयेत् ।
उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥
बध्नीयादामतैलेन परिषेकञ्च कारयेत् ।
प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः ॥
हस्ते जातबले चापि कुर्य्यात्पाषाणधारणम् ।
सन्नमुन्नमयेत्क्षिन्नमन्नकं मुषलेन तु ॥
तथोन्नतं पीडयेच्च बध्नीयाद्गाढमेव च ।
ऊरुवद्वापि कर्त्तव्यं बाहुभग्नचिकित्सितम् ॥
ग्रीवायां तु विवृत्तायां प्रविष्टायामधोऽपि च ।
अवटावथहन्वोश्च प्रगृह्योन्नमयेन्नरम् ॥
तथा कुशान् समं दत्त्वा वस्त्रपट्टेन वेष्टयेत् ॥
उत्तानं शाययेच्चैनं सप्तरात्रमतन्द्रितः ।
हन्वस्थिनी समानीय हनुसन्धौ विसंहते ॥
स्वेदयित्वा स्थिते सम्यक्पश्चाद्गां वितरेद्भिषक् ।
वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितम् ॥
अभग्नांश्चलितान्दन्तान् सरक्तानवपीड़येत् ।
तरुणस्य मनुष्यस्य शीतैरालेपयेदद्भिः ॥
सिक्ताम्बुभिस्ततः शीतैः सन्धानीयैरुपाचरेत् ।
उत्पलस्य च नालेन क्षीरपानं विधीयते ॥
जीर्णस्य तु मनुष्यस्य वर्ज्जयेच्चलितान् द्विजान् ।
नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया ॥
पृथङ्नासिकयोर्नाड्यौ द्वि ध्यौ सम्प्रवेशयेत् ।
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥

भग्नं कर्णञ्च बध्नीयात्समं कृत्वा घृतप्लुतम् ।
सद्यःक्षतविधानञ्च ततः पश्चात्समाचरेत् ॥
मस्तुलुङ्गाद्विना भिन्ने कपाले मधुसर्पिषी ।
दत्त्वा ततो निबध्नीयात्सप्ताहञ्च पिबेद्घृतम् ॥
पतनादभिघाताद्वा शूनमङ्गं यदक्षतम् ।
शीतानप्रदेहान् सेकांश्च भिषक् तस्यावचारयेत् ॥
अथ जङ्घोरुभग्नानां कपाटशयनं हितम् ।
कीलका बन्धनार्थञ्च पञ्च कार्य्या विजानता ॥
यथा न चलनं तस्य भग्नस्य क्रियते तथा ।
सन्धेरुभयतो द्वौ द्वौ तले चैकस्तु कीलकः ॥
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।
भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् ॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धान्स्विन्नान्मृदूकृतान् ।
उक्तैर्व्विधानैर्बुद्ध्या च सम्यक्प्रकृतिमानयेत् ॥
काण्डभग्ने प्ररूढ़े तु विषमोल्वणसंहिते ।
आपीड्य शमयेद्भग्नं ततो भग्नवदाचरेत् ॥
कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः ।
सन्ध्यन्ते वा क्रियां कुर्य्यात्सव्रणे व्रणभग्नवत् ॥
ऊर्द्धकाये तु भग्नानां मस्तिक्यं कर्णपूरणम् ।
घृतपानं हितं नस्यं प्रशाखास्वनुवासनम् ॥
अत ऊर्द्धं प्रवक्ष्यामि तैलं भग्नस्य साधकम् ।
रात्रौ रात्रौ तिलान्कृष्णान्वासयेदस्थिरे जले ॥
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ।

तृतीयं सप्तरात्रं वा भावयेन्मधुकाम्बुना ।
ततः क्षीरे पुनः पीतान्सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ।
कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीड़नार्थञ्च कर्त्तव्यं सर्व्वगन्धशृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ।
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥
रोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिणम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकञ्चैव पूर्व्वोक्तान्यौषधानि च ।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्व्वकर्म्मसु ।
आक्षेपके पक्षघाते तालुशोषे तथार्द्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
वाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥
मुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्व्ववातविकारनुत् ॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः ।
त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह ॥
वसां दत्त्वा यथालाभं क्षीरे दशगुणे पचेत् ।

स्नेहोत्तममिदं चाशु कुर्य्यादङ्गप्रसाधनम् ॥
पानाभ्यञ्जननस्येषु वस्तिकर्म्मणि सेचने ।
भग्नं नैति यथापाकं प्रयतेत तथाभिषक् ॥
पक्वमांससिरास्नायु तद्धि कृच्छ्रेण सिध्यति ।
भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्वणम् ॥
सुखचेष्टाप्रचारञ्च संहितं सम्यगादिशेत् ।

---

## चतुर्थोऽध्यायः ।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥

आमाशयगते वाते छर्द्दयित्वा यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥
चित्रकेन्द्रयवे पाठा कटुकातिविषाभया ।
वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥
पक्वाशयगते चापि देयं स्नेहविरेचनम् ।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥
कार्य्यो वस्तिगते चापि विधिर्व्वस्तिविशोधनः ।
श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहा क्रमः ॥
स्नेहाभ्यङ्गोपनाहाश्च मर्द्दनालेपनानि च ।
त्वङ्मांसासृक्सिरां प्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥
स्नेहोपनाहाग्निकर्म्मबन्धनोन्मर्द्दनानि च ।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वायावतन्द्रितः ॥
निरुद्धेऽश्मनि वा वायौ पाणिमन्येन दारिते ।

नाड़ीं दत्त्वास्थनि भिषक् चूषयेत्पवनं बली॥
शुक्रप्राप्तेऽनिले कार्य्यं शुक्रदोषचिकित्सितम्।
अवगाहकुटीकर्षुप्रस्तराभ्यङ्गवस्तिभिः॥
जयेत्सर्व्वाङ्गजं वातं सिरामोक्षैश्च बुद्धिमान्।
एकाङ्गगञ्च मतिमान् शृङ्गैश्चावस्थितं जयेत्॥
बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः।
सुसिंवातेत्वसृङ्मोक्षं कुर्य्यात्तु वङ्गशोभिषक्।
दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः।
पञ्चमूलीशृतं चीरं फलाम्लो रस एव च॥
सुस्निग्धो धान्ययूषो वा हितो वातविकारिणाम्
काकोल्यादिः सवातघ्नः सर्व्वाम्लद्रव्यसंयुतः।
सानूपोदकमांसस्तु सर्वस्नेहसमन्वितः।
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः॥
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम्।
कुञ्चमानं रुजार्त्तं वा गात्रं स्तब्धमथापि वा।
गाढं पट्टैर्निबध्नीयात्क्षौमकार्पासकौर्णिकैः।
विड़ालनकुलोष्ट्राणां चर्मगोष्ठां मृगस्य वा।
प्रवेशयेद्वा स्वभ्यक्तं शाल्वणेनोपनाहितम्।
स्कन्धवचस्त्रिकप्राप्तं वायुं मन्यागतं तथा॥
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितम्।
शिरोगतं शिरोवस्तिर्हन्ति वास्त्विमोक्षणम्॥
स्नेहमात्रासहस्रन्तु धारयेत्तत्र योगतः।
सर्व्वाङ्गगतमेकाङ्गस्थितं वापि समीरणम्॥

रुणद्धि केवलो वस्तिर्व्वायुवेगमिवाचलः।
स्नेहस्वेदस्तथाभ्यङ्गो वस्तिः स्नेहविरेचनम्॥
शिरोवस्तिः शिरःस्नेहो धूमः स्नैहिक एव च।
सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च॥
रसाः चीराणि मांसानि स्नेहाः स्नेहान्वितञ्च यत्।
भोजनानि फलाम्लानि स्निग्धानि लवणानि च॥
सुखोष्णश्च परीषेकस्तथा संवाहनानि च।
कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च॥
कौशेयौर्णिकरोमाणि कार्पासानि गुरूणि च।
निवातातपयुक्तानि तथा गर्भगृहाणि च॥
मृद्वी शय्याग्निसन्तापो ब्रह्मचर्य्यं तथैव च।
समासेनैवमादीनि योज्यान्यनिलरोगिषु॥

त्रिवृद्दन्तीसुवर्णचीरीमसलाशङ्खिनीत्रिफलाविडङ्गाना-मचसमाः कल्का विल्वमात्रः कल्कस्तिल्वकमूलकम्पिल्लकयो-स्त्रिफलारसदधि पात्रे द्वे द्वे घृतपात्रमेकं तदैकध्यं संसृज्य विपचेत्तिल्वकसर्पिरेतत्स्नेहविरेचनमुपदिशन्ति वातरोगेषु। तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः।

तिलपरिपीड़नोपकरणकाष्ठान्याहृत्यानल्पकालं तैलप-रिपीतं तान्यणूनि खण्डशः कल्पयित्वावक्षुद्य महति कटाहे पानीये आप्लाव्य क्वाथयेत्ततः स्नेहमम्बुपृष्ठाद्यदुदेति तत्सर-कपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापञ्च स्नेहपाक-कल्पेन विपचेदेतदणुतैलमुपदिशन्ति वातरोगेषु। अणुभ्य-स्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम्।

अथ महापञ्चमूलकाष्ठैर्ब्बहुभिरवदग्धावनिप्रदेशमसित-सुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्म निवृत्तां भूमिं विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाभिषिच्यैक-रात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामा-दायोष्णोदकेन महति कटाहेऽभ्यासिञ्चेत्तत्र यत्तैलमुत्तिष्ठे-त्तत्पाणिभ्यां पर्य्यादाय स्वनुगुप्तं निदध्यात् । ततस्तैलं वात-हरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं विप-चेद्यावता कालेन शक्नोति पक्तुं प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धा वातघ्नानि च तस्मिन् सिध्यति शङ्खानाधापयेद्दुन्दुभिं घातयेच्छत्रं धारयेद्वालव्यजनैश्च वीजयेद्ब्राह्मणसहस्रं भोजयेत् तत्साधु सिद्धमवताय्य सौवर्णे राजते मृण्मये वा पात्रे स्वनुगुप्तं निदध्यात्तदेतत् सहस्र-पाकमप्रतिवारवीर्य्यं राजार्हं तैलमेवं भागशतविपक्वं शत-पाकम् ।

गन्धर्व्वहस्तकमुष्ककनक्तमालाटरूषकपूतीकारग्वधचित्र-कादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोशकृद्भिर्द्दाहयेदेतत्पत्रलवणमुपदिशन्ति वातरोगेषु । पत्रलवणम् ।

एवं स्नुहीकाण्डवार्त्ताकुशिग्रुलवणानि सङ्क्षुद्य घटं पूर-यित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दा-हयेदेतत्स्नेहलवणमुपदिशन्ति वातरोगेषु । काण्डलवणम् ।

गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्र-कनादेयीकृष्णगन्धानीपनिर्दहन्यटरूषकनक्तमालकपूतिकबृह-

तीकण्टकारिकाभल्लातकेङ्गुदीवैजयन्तीकदलीवर्षाभूइक्षुर-
केन्द्रवारुणीश्वेतमोचकाशोका इत्येवं वर्गं समूलपत्रशाखमा-
र्द्रमाहृत्य लवणेन सह संसृष्टं पूर्ब्बवद्दग्ध्वा चारकल्पेन परि-
स्राव्य विपचेदेतत्प्रति वापस्त्वत्र हिङ्ग्वादिभिः पिप्पल्यादि-
भिर्वा। इत्येतत्कल्याणकलवणं वातरोगेषु गुल्मप्लीहाग्नि-
सङ्गाजीर्णार्शोऽरोचकार्त्तानां कासादिभिरुपद्रुतानां चोप-
दिशन्ति पानभोजनेष्विति।

भवति चात्र। विष्यन्दनादुष्णभावाद्दीपणाच्च विपाचनात्।
संस्कारपाचनाच्चेदं वातरोगेषु शस्यते॥

---

पञ्चमोऽध्यायः।

अथातोमहावातव्याधिचिकित्सितं व्याख्यास्यामः।

द्विविधं वातशोणितमुत्तानमवगाढ़ञ्चेत्येके भाषन्तेतत्तु न
सम्यक्कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढ़ीभवति तस्मान्न-
द्विविधम्।

तत्र बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाद्यशनशी-
लस्य प्रदुष्ट शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वात
रक्तनिमित्तां वेदनां जनयतीति वातरक्तं तत्तुपूर्वं हस्तपाद-
योरवस्थानं कृत्वा पश्चाद्देहं व्याप्नोति। तस्य पूर्वरूपाणि
तोददाहकण्डूशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनिस्पन्दनस-
क्थिदौर्ब्बल्यानि श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात्पाणिपादत-

लाङ्गुलिगुल्फ प्रभृतिषु । तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्तस्तस्य लक्षणमुक्तं तत्राप्रतिकारिणो वैकल्यं भवति ।

भवति चात्र । प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि वातरक्तं प्रदुष्यति ॥

तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरणसङ्कोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत् ।

तत्रादावेव बहुशो वातरक्तिनां हृते मार्गावरणे शोणितमसकृदल्पाल्पमवसिञ्चेद्वातकोपभयात्ततो बलमनुरूपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं वातबले पुराणघृतं पाययेदजाक्षीरं वार्द्धतैलं मधुकावयुक्तं शृगालविन्नासिद्धं वा शर्करामधुमधुरं शुण्ठीशृङ्गाटककशेरुकसिद्धं वा श्यामारास्नासुषवीशृगालविन्नापीलुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा । द्विपञ्चमूलीक्वाथाष्टगुणसिद्धेन च पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत शतावरीमयूरकमधुकक्षीरविदारीबलातिबलातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतीवापं बलातैलं शतपाकञ्चेति । वातहरमूलसिद्धेन च पयसा परिषेचनमन्नेन वा कुर्वीत । यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेहः कार्य्यः ।

तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोलीक्षीरकाकोलीजीवकर्षभकबलातिबलाबिसमृणालशृगालविन्नामेषशृङ्गीपियालशर्कराकशेरुकसुरभिवचाकल्कमिश्रेषूप-

नाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः। स्नैहिकफलसारोत्कारिका वा। चूर्णितेषु यवगोधूमतिल-मुद्गमाषेषु विचित्रमत्स्यपिशितवेशवारो वा। विल्वपेशिकात-गरदेवदारुसरलारास्नाहरेणु कुष्ठशतपुष्पासुरादधिमस्तुयुक्त उपनाहः। मातुलुङ्गाम्लसैन्धवघृतमिश्रो मधुशिग्रुमूलमालेपे तिलकल्कश्चेति वातप्रबले।

पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुकचन्दनकाश्म-र्य्यकषायं शर्करामधुमधुरं पाययेत्। शतावरीमधुकपटोल-त्रिफलाकटुरोहिणीकषायं गुड़ूचीकषायं वा पित्तज्वरह-चन्दनादिकषायं शर्करा मधुमधुरं तिक्तकषायसिद्धं वा सर्पिः।

विसमृणालभद्रश्रियपद्मककषायेणार्द्धक्षीरेण परिषेकः। क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषायमिश्रैर्मस्तु-मधुधान्याम्लैर्जीवनीयसिद्धेन वा सर्पिषाभ्यङ्गः।

शतधौतघृतेन वा काकोल्यादिकल्कविपक्वेन वा सर्पिषा शालिषष्टिकनलवञ्जुलतालीशशृङ्गाटकगलोड्यगौरीगैरिकशै-वलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः। वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्य्यः। रक्तप्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत् शीततमाश्च प्रदेहाः कार्य्या इति।

श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत्। त्रिफलाकषायं वा मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वासक्षौद्रमूत्रं तोयेन गुड़हरीतकीं वा भक्षयेत्।

तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैः परिषेकः। आरग्वधादिकषायैर्वा क्षौ;। मस्तुमूत्रसुराशुक्तमधुकसारिवा

पद्मकसिद्धं वा घृतमभ्यङ्गः। तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि चारमूत्रपिष्टः प्रदेहः।

श्वेतसर्षपकल्कः तिलाश्वगन्धाकल्कः प्रियालसेलुकपित्थत्वक्कल्कः मधुशिग्रुपुनर्नवाकल्कः व्योषतिक्ताष्टथक्पर्णीबृहतीकल्कश्चेति पञ्च प्रदेहाः सुखोष्णाः चारोदकपिष्टाः।

शालपर्णी पृश्निपर्णी बृहत्यौ वा चीरपिष्टाल्पलवणमिश्राः। संसर्गे सन्निपाते च क्रियामथमुक्तं मिश्रं कुर्य्यात्।

सर्वेषु गुड़हरीतकीं वा सेवेत पिप्पलीर्वा चीरपिष्टा वारिपिष्टावा पञ्चाभिवृद्ध्या दशाभिवृद्ध्यावा पिबेत्क्षीरौदनाहारो दशरात्रं भूयश्चापकर्षयेदेवं यावत्पञ्चदश चेति तदेतत्पिप्पलीवर्द्धमानकं वातशोणितविषमज्वरारोचकपाण्डुरोगप्लीहोदरार्शः कासश्वासशोफशोषाग्निसादहृद्रोगोदराण्युपहन्ति।

जीवनीयप्रतीवापं सर्पिः पयसा पाचयित्वाऽभ्यञ्ज्येत्।

सहासहदेवाचन्दनमूर्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुकशतपुष्पाकुष्ठानि चीरपिष्टः प्रदेहो घृतमण्डयुक्तः।

मैरेयकाटरूषकबलातिबलाजीवन्तीसुषवीकल्को वा छाग चीरपिष्टः।

काश्मर्य्यमधुकतर्पणकल्को वा मधूच्छिष्टमञ्जिष्ठासर्ज्जरससारिवाचीरसिद्धं पिण्डतैलमभ्यङ्गः।

सर्वेषु च पुराणघृतमामलकरसविपक्वं वा पानार्थं। जीवनीयसिद्धं परिषेकार्थं काकोल्यादिक्काथकल्कासिद्धं वा सुषवीक्काथसिद्धं वा कारवेल्लकक्काथमात्रसिद्धं वा। बलातैलं वा परिषेकावगाहवस्तिभोजनेषु शालिषष्टिकयवगोधू-

मान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेणवा-नम्लेन।

शोणितमोक्षञ्चाभीक्ष्णं कुर्व्वीत। उक्लिष्टदोषे च वमन विरेचनास्थापनानुवासनकर्म्म कर्त्तव्यम्।

भवन्ति चात्र।

एवमाद्यैः क्रियायोगैर्व्विरोल्लतितं सुखम्।
वातासृक् साध्यते देह्यैर्याप्यते तु चिरोत्थितम्॥
उपनाहपरीषेकप्रदेहाभ्यञ्जनानि च।
शरणान्यप्रवातानि मनोज्ञानि महान्ति च॥
मृदुगण्डोपधानानि शयनानि सुखानि च।
वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च॥
व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम्।
दिवास्वप्नमभिस्यन्दि गुरु चान्नं विवर्जयेत्॥

अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवे-पनम प्रलापिनमखट्वापातिनमवहिरायामिनं चोपक्रमेत्॥

तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीड़नेन तीक्ष्णे-नोपक्रमेत शिरःशुद्ध्यर्थम्। अनन्तरञ्च विदारिगन्धादि-क्वाथमांसरस क्षीरदधिपक्वं सर्पिरच्छं पाययेत् तथाहि नातिमात्रं वायुः प्रसरति। ततो भद्रदार्व्वादिवातघ्नगण-माहृत्य सयवकोलकुलत्थसानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्र्य सर्पिस्तैल-वसामज्जभिः सह विपक्वैर्मधुरकप्रतीवापं तदेतत्त्रैवृतमप-तानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु

विदध्यात् । यथोक्तैश्च स्वेदविधानैः स्वेदयेत् । बलीयसि वाते सुखोष्णतुषबुसकरीषपूर्णे कूपे निदध्यादामुखात् । तप्तायां वाङ्गारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत् । कृशरावेशवारपायसैर्वा स्वेदयेत् ।

मूलकोरुवूकस्फूर्जार्जकार्कशतलाशङ्खिनीस्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यम् । अभुक्तवता पीतमम्लं दधिमरिच वचायुक्तमपतानकं हन्ति तैलसर्पिर्वसाक्षौद्राणि च । एतच्छुद्ध वातापतानकविधानमुक्तं संसृष्टे संसृष्टं कर्त्तव्यम् । वेगान्तेषु चावपीड़ं दद्यात् । ताम्रचूड़कर्कटकृष्णमत्स्यशिशुमारवराहवसाश्च सेवेत । क्षीराणि वा वातहरसिद्धानि यवकोलकुलत्थमूलकदधि घृततैलसिद्धां वा यवागूं स्नेहविरेचनास्थापनानुवासनैश्चैनं दश रात्राहतवेगमुपक्रमेत् । वातव्याधिचिकित्सितं चावेक्षेत रक्षा कर्म्म च कुर्य्यादिति ।

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं चोपक्रमेत् । तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्या स्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत् । वैशेषिकश्चात्र मस्तिष्कशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थे शाल्वणमुपनाहार्थे बला तैलमनुवासनार्थे । एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रिया पथमुपसेवेत ।

मन्यास्तम्भेऽप्येतदेव विधानं विशेषतो वातश्लेष्महरैर्नस्यैरूक्षस्वेदैश्चोपचरेत् ।

अपतन्त्रकातुरं नापतर्पयेत्। वमनानुवासनास्थापनानि न निषेवेत। वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रध्मापनैर्मोचयेत्। तुम्बुरुपुष्कराङ्गहिङ्गुम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत् पथ्या शतार्द्धे सौवर्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धं वातश्लेष्मापनुच्च कर्म्म कुर्य्यात्।

अर्दितातुरं बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपचरेद्विशेषिकैश्च मस्तिष्कशिरोवस्तिनस्यधूमोपनाहस्नेहनाड़ीस्वेदादिभिः। ततः सहतं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्च संहृत्य द्विगुणोदके क्षीरद्रोणे निक्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत् ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमथ्नीयात्तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेदेतत्क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यम्। तैलहीनं वा क्षीरसर्पिरक्षितर्पणमिति।

गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टकपाददाहपादहर्षाववाहुकबाधिर्य्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशञ्च सिराव्यधं कुर्य्यादन्यत्राववाहुकाद्वातव्याधिचिकित्सितंचावेक्षेत।

कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यादजामूत्रं मधुतैलानि वा मातुलुङ्गदाड़िमतिन्तिड़ीकस्वरसमूत्रसिद्धं तैलं शुक्तसुरातक्रमूत्रलवणसिद्धं वा। नाड़ीस्वेदैश्च स्वेदयेत्। वातव्याधिचिकित्सां चावेक्षेत। भूयश्चोत्तरे वक्ष्यामः।

तूणीप्रतूण्योः स्नेहलवणमुदकेन पाययेत् पिप्पल्यादिचूर्णं वा हिङ्गुयवक्षारप्रगाढ़ं वा सर्पिर्वस्तिभिश्चैनमुपक्रमेत् ।

आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्त्तिक्रियापाचनीय वस्तिभिरुपचरेत् । लङ्घनानन्तरं चान्नकाले धान्यकजीरकादि दीपनसिद्धान्यन्नानि । प्रत्याध्माने छर्दनापतर्पणदीपनानि कुर्य्यात् ।

अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत्क्रियाविभाग इति ।

हिङ्गुत्रिकटुवचाजमोदाधन्याजगन्धादाड़िमतिन्तिड़ीकपाठाचित्रकयवक्षारसैन्धवविड़सौवर्चलस्वर्जिकापिप्पलीमूलाम्लवेतससठीपुष्करमूलहपुषाचव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रां गुटिकां कारयेत्ततःप्रातरेकैकां वातविकारी भक्षयेत् । अयेषयोगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरवस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूणीप्रतूणीरपहन्ति ।

भवन्ति चात्र ।

केवलो दोषयुक्तो वा धातुभिर्व्वावृतोऽनिलः ।
विज्ञेयो लक्षणोक्ताभ्यां चिकित्सा वाऽविरोधतः ॥

रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ।
करोति यस्य तं वैद्यः शोथवत्समुपाचरेत् ॥

कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते ।
तदाङ्गमर्द्दस्तैमित्यरोमहर्षरुजाज्वरैः ॥

निद्रया चार्द्दितौ स्तब्धौ शीतलावप्रचेतनौ।
गुरुकावस्थिरावूरू न स्वाविव च मन्यते॥
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे।
स्नेहवर्ज्जं पिवेत्तत्र चूर्णं षट्धरणं नरः॥
हितमुष्णाम्बुना तद्वत्पिप्पल्यादिगणैः कृतम्।
लिह्याद्वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितम्॥
मूत्रैर्व्वा गुग्गुलुं श्रेष्ठं पिवेद्वापि शिलाजतु।
ततो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनम्।
हृद्रोगमरुचिं गुल्मं तथाभ्यन्तरविद्रधिं।
सञ्चारमूत्रखेदांश्च रूक्षाण्युत्सादनानि च॥
कुर्य्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः।
भोज्याः पुराणश्यामाककोद्रवोद्दालशालयः॥
शुष्कमूलकयूषेण पटोलस्य रसेन वा।
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः॥
यदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी।
तदा स्नेहादिकं कर्म्म पुनरत्रावचारयेत्॥
सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसः।
कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः॥
स नवो वृंहणो वृष्यः पुराणस्त्वपकर्षणः।
तैक्ष्ण्यौष्ण्यात्कफवातघ्नः सरत्वान्मलपित्तनुत्॥
सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः।
तस्मात्त्रिफलादार्व्वीपटोलकुशवारिभिः॥
पिवेद्दावाथ वा मूत्रैः क्षारैरुष्णोदकेन वा।

जीर्णे यूषरसक्षीरैर्भुञ्जानो हन्ति मारुतः ॥
गुल्मं मेहमुदावर्त्तमुदरं सभगन्दरं ।
क्रिमिकण्डूरुचिश्वित्रानर्बुदग्रन्थिमेव च ॥
नाड्याढ्यावातश्वयथुकुष्ठदुष्टव्रणांश्च सः ।
कोष्ठसन्ध्यस्थिगं वायुं हत्त्वमिद्रामनिर्यथा ॥

---

षष्ठोऽध्यायः ।

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।

चतुर्विधोऽर्शसां साधनोपायः । तद्यथा भेषजं क्षारोऽग्निः शस्त्रमिति तत्राचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि मृदुप्रसृतावगाढ़ान्युच्छ्रितानि क्षारेण । कर्कशस्थिरपृथुकठिनान्यग्निना । तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण । तत्र भेषजसाध्यानामर्शसामदृश्यानाञ्च भेषजं भवति क्षाराग्निशस्त्रसाध्यानान्तु विधानमुच्यमानमुपधारय ।

तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य सम्भृते शुचौ देशे 'साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषस्पूर्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्तग्रीवासक्थं परिकर्म्मिभिः सुपरिगृ-

हीतमसन्दनशरीरं कृत्वा ततोऽस्मिन् घृताभ्यक्तं यन्त्रमृज्वग्र-मुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय प्रविष्टे चार्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्रयोरन्यतरेण प्रमृज्य क्षारं पातयेत् पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शत-मात्रमुपेक्षेत्। ततः प्रमृज्य क्षारबलं व्याधिबलञ्चावेक्ष्य पुनरालेपयेत्। अथार्शः पक्कजाम्बवप्रतीकाशमभिसमीक्ष्या-वसन्नमीषन्नतमुपावर्त्तयेत्। क्षारं प्रक्षालयेद्धान्याम्लेन दधि-मस्तुशुक्तफलाम्लैर्वा ततो यष्टीमधुकमिश्रेण सर्पिषा निर्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परि-षिञ्चेदशीताभिरित्येके। ततो निर्व्वातमागारं प्रवेश्याचा-रिकमादिशेत् सावशेषं पुनर्द्दहेत्। एवं सप्तरात्रात्सप्तरात्रा-देकैकमुपक्रमेत तत्र बहुषु पूर्वं दक्षिणं साधयेद्दक्षिणाद्वामं वामात्पृष्ठजं ततोऽग्रजमिति।

तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत् क्षारे-णैव मृदुना पित्तरक्तनिमित्तानि। तत्र वातानुलोम्यमन्न-रुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्द-ग्धलिङ्गानि। अतिदग्धे तु गुदावदरणं दाहोमूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति। श्यामाल्पव्रणता कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो वि-कारस्य चाशान्तिर्हीनदग्धे।

महान्ति च प्राणवतश्छित्वा दहेत्। निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्राहिना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रा-वणालेपक्षाराग्निशस्त्रैरुपाचरेत्। प्रवृत्तरक्तानि च रक्तपित्त-

विधानेन भिन्नपुरीषाणि चातीसारविधानेन बद्धवर्चांसि स्नेहपानविधानेनोदावर्त्तविधानेन वा एष सर्वस्थानगतानामर्शसां दहनकल्पः ।

आसाद्य च दर्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत् । भ्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म्म प्रयुञ्जीत सर्वेषु च शालिषष्टिकयवगोधूमान्नं सर्पिः स्निग्धमुपसेवेत पयसा निम्बयूषेण पटोलयूषेण वा उपोदीषशाकैर्वा कुकतण्डुलीयकजीवन्त्युपोदिकाश्वबलावालमूलकपालङ्क्यसुनचिल्लीचुच्चूकलायवल्लीभिरन्यैर्वा । यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषञ्च तदुपसेवेत ।

दग्धेषु चार्शःस्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थञ्च स्नेहादीनां सामान्यतो विशेषतस्तु क्रियापथमुपसेवेत । सर्पींषि च दीपनीयवातहरसिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिबेत् । पित्तार्शस्सु पृथक्पर्ण्यादीनां कषायेण दीपनीयप्रतीवापं भद्रदार्व्वादिपिप्पल्यादिसर्पिः । शोणितार्शस्सु मञ्जिष्ठामुस्तादीनां कषाये श्लेष्मार्शस्सु सुरसादीनां कषाये सर्पिः । उपद्रवांश्च यथास्वमुपचरेत् ।

परञ्च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्तद्विभ्रमाद्धि षाण्ढ्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि भवन्ति मरणं वा ।

अतऊर्द्धं यन्त्रप्रमाणमुपदेक्ष्यामः ।

तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां षडङ्गुलपरिणाहं

नारीणां तलायतं तद्विच्छिद्रं दर्शनार्थमेकं छिद्रमेकं छिद्रन्तु कर्म्मणि। एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति। छिद्रप्रमाणन्तु अङ्गुलायतमङ्गुष्ठोदरपरिणाहं यदङ्गुलमवशिष्टं तस्यार्द्धाङ्गुलमधस्तादर्द्धाङ्गुलोच्छ्रितोपरि वृत्तकर्णिकमेष यन्त्राकृतिसमासः।

अतऊर्द्ध्वमर्शसामालेपान्वक्ष्यामः। स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः। कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः। दन्तीचित्रकसुवर्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः। पिप्पलीसैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः। कासीसहरितालसैन्धवाश्वमारकविड़ङ्गपूतीककृतवेधनजम्बूकोन्तमारणीदन्तीचित्रकालर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः शातयति।

अतऊर्द्ध्वमदृश्येष्वर्शस्सु योगान्पातनार्थं वक्ष्यामः। प्रातः प्रातर्गुड़हरीतकीमासेवेत। ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरितकीशतं प्रातः प्रातर्यथाबलमुपयुञ्जीत क्षौद्रेण। अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः। शतावरीमूलकल्कं वा क्षीरेण। चित्रकचूर्णयुक्तं वा सीधुपराद्ध्यम्। भल्लातचूर्णयुक्तं वा सक्तुमन्थमलवणं तक्रेण। कलशेवान्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत। एष एव भार्ग्यास्फोतायवान्यामलकगुडूचीषु तक्रकल्पः।

पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च

पूर्ववदेव निरन्नो वा तक्रमहरहर्मासमुपसेवेत । शृङ्गवेरपुनर्नवाचित्रककषाय सिद्धं वा पयः । कुटजमूलत्वक्फाणितं वा पिप्पल्यादिप्रतीवापं क्षौद्रेण । वातव्याध्युक्तं हिङ्ग्वादिचूर्णमुपसेवेत तक्राहारः क्षीराहारो वा । क्षारलवणांश्चित्रकमूलक्षारोदकसिद्धान्वा कुल्माषान्भक्षयेत् । चित्रकमूलक्षारोदसिद्धं वा पयः । पलाशतरुक्षारसिद्धान्वा कुल्माषान् । पाटलापामार्गबृहतीपलाशक्षारं वा परिस्रुतमहरहर्घृतसंसृष्टम् । कुटजवन्दाकीमूलकल्कं वा तक्रेण । चित्रकपूतीकनागरकल्कं वा पूतीकक्षारेण क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापम् । कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातःप्रातरनुसेवेत शीतोदकानुपानम् एभिरभिवर्द्धतेऽग्निरर्शांसि चोपशाम्यन्ति ।

द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्यजलचतुर्द्रोणे विपाचयेत् । ततः पादावशिष्टं कषायमादाय सुशीतं गुड़तुलया सहोन्मिश्र्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्मात्रां पाययेत तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्त्तारोचका न भवन्ति दीप्तोऽग्निश्च भवति । पिप्पलीमरिचविड़ङ्गैलवालुकलोध्राणां द्वे द्वे पले दून्द्रवारुण्याः पञ्च पलानि कपित्थमध्यस्य दशपथ्याफलानामर्द्धप्रस्थः प्रस्थो धात्रीफलानामेतदेकध्यं जलचतुर्द्रोणेविपाच्य पादावशेषं परिस्राव्य सुशीतं गुड़तुलाद्वयेनोन्मिश्र्य घृतभाजनेनिःक्षिप्य पक्षमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत । एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरकृमिहरो बलवर्णकरश्चेति ।

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धम्। पित्तजेषु विरेचनम्। एवं रक्तजेषु संशमनम्। कफजेषु शृङ्गवेरकुलत्थोपयोगः। सर्वदोषहरं यथोक्तं सर्वजेषु यथालौषधसिद्धं वा पयः सर्वेष्विति।

अत ऊर्द्धं भल्लातकविधानमुपदेक्ष्यामः॥ भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्तताल्लुजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्ने क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत्तावद्यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयेद्यावत्सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति।

द्विव्रणीयोक्तेन विधानेन भल्लातकनिःस्रुततैलं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च। भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं चोपयुञ्जीत। तस्मिन्जीर्णे क्षीरं सर्पिरोदन इत्याहारः। एवं मासमुपयुज्य मासत्रयमादिष्टाहारो रक्षेदात्मानम्। ततः सर्वोपतापानपहृत्य वर्णवान्बलवान् श्रवणग्रहणधारणशक्तिसम्पन्नो वर्षशतायुर्भवति। मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति। एवं दशमासानुपयुज्य वर्षसहस्रायुर्भवति।

भवन्ति चात्र ।
यथा सर्वाणि कुष्ठानि हतः खदिरबीजकौ ।
तथैवार्शांसि सर्वाणि वृक्षकारुष्करौ हतः ॥
असाध्या नातिवर्त्तन्ते प्रमेहा रजनीं यथा ।
क्षाराग्निनातिवर्त्तन्ते तथा दुश्चा गुदोद्भवाः ॥
घृतानि दीपनीयानि लेहायस्कृतयः सुराः ।
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम् ॥
वेगावरोधस्त्रीपृष्ठयानान्युत्कटुकासनम् ।
यथास्वन्दोषलं चान्नमर्शःसु परिवर्जयेत् ॥

---

## सप्तमोऽध्यायः ।

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः ।
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ।
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥
तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ।
तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः ॥
पाषाणभेदो वसुको वशिराश्मन्तकौ तथा ।
शतावरी श्वदंष्ट्रा च वृहती कण्टकारिका ॥
कपोतवङ्कार्त्तगलः ककुभोशीरकुब्जकाः ।
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ।

ऊषकादिप्रतीवापमेषां क्वाथैर्घृतं कृतम् ॥
भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव तु ।
क्षारान्यवागूर्यूषांश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन्वातनाशने ।
कुशः काशः सरो गुन्द्रा उत्कटो मोरटोऽश्मभित् ॥
वरी विदारी वाराही शालिमूलत्रिकण्टकम् ।
भल्लूकः पाटला पाठा पत्तूरोऽथ कुरुण्टिका ॥
पुनर्नवा शिरीषश्च क्वथितास्तेषु साधितं ।
घृतं शिलाजमधुकवीजैरिन्दीवरस्य च ॥
त्रपुसैर्वारुकादीनां वीजैश्चावापितं शुभं ।
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान्यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥
गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः ।
कुष्ठभद्रादिमरिचचित्रकैः ससुराह्वयैः ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ।
भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान्यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने ॥
पिचुकाङ्कोलकतकशाकेन्दीवरजैः फलैः ।
चूर्णितैः सगुडं तोयं शर्कराशमनं पिवेत् ॥
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमूलिका ।
अजमोदा कदम्बस्य मूलं नागरमेव च ॥

पीतानि शर्करां भिन्द्युः सुरयोल्लोदकेन वा ।
त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम् ॥
अविक्षीरेण सप्ताहमश्मरीभेदनं पिवेत् ।
द्रव्याणान्तु घृतोक्तानां क्षारोऽवीमूत्रगालितः ॥
ग्राम्यसत्वशकृत्क्षारैः संयुतः साधितः शनैः ।
तत्तोषकादिरावापः कार्य्यस्त्रिकटूकान्वितः ॥
एष क्षारोऽश्मरीं गुल्मं शर्कराञ्च भिनत्त्यपि ।
तिलापामार्गकदलीपलाशयववल्कजः ।
क्षारःपेयोऽविमूत्रेण शर्करानाशनः परः ।
पाटलाकरवीराणां क्षारमेवं समाचरेत् ॥
श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाक्षसमं पिवेत् ।
सहैडकाख्यौ पेयौ वा शोभाञ्जनकमार्कवौ ॥
कपोतवङ्कामूलं वा पिवेदम्लसुरादिभिः ।
तत्सिद्धं वा पिवेत्क्षीरं वेदनाभिरुपद्रुतः ॥
हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा ।
सर्व्वथैवोपयोज्यः स्याद्गणो वीरतरादिकः ॥
घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः ।
यदि नोपशमं गच्छेच्छेदस्ततोत्तरो विधिः ॥
कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा ।
उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः ॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ।
तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा ॥
अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्त-

स्विन्नशरीरं भुक्तवन्तं कृतवलिमङ्गलस्वस्तिवाचनमग्रोपहरणी-योक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य ततो बलवन्तमविक्लवमाजानु समे फलके प्रागुपवेश्य पुरुषञ्च तस्योत्सङ्गे निषस्न-पूर्व्वकायमुत्तानमुन्नतकटीकं वस्त्रधारकोपविष्टं सङ्कुचितजानु-कूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा ततः स्वभ्यक्तना-भिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनावपीड़येदधोनाभेर्य्या-वदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्त-प्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नब-लाभ्यां पायुमेढ्रान्तरमानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीड़येदङ्गुलिभ्यां यथाग्रन्थिरिवोन्नतं शल्यं भवति।

सचेद्गृहीतशल्ये तु विवृताक्षो विचेतनः।
हतवत्लम्बशीर्षश्च निर्व्विकारो मृतोपमः॥
न तस्य निर्हरेच्छल्यं निर्हरेत्तु म्रियेत सः।
विनाप्येतेषु रूपेषु निर्हर्त्तुं समुपाचरेत्॥

सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वावचारयेत् शस्त्रमश्मरी-प्रमाणं दक्षिणतो वा क्रियासौकर्य्यहेतोरित्येके। यथा च न भिद्यते चूर्ण्यते वा तथा प्रयतेत चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति तस्मात्समस्तामग्रवक्रेणाददीत। स्त्रीणान्तु वस्ति पार्श्वगतो गर्भाशयः सन्निकृष्टः तस्मात्तासामुत्सङ्गवच्छस्त्रं पातयेदतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत्। पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्। अश्मरी व्रणाद्दते भिन्नो वस्तिरेकधा न भवति द्विधा भिन्नवस्तिराश्मरिको न सिध्यति।

अश्मरीव्रणनिमित्तमेकधाभिन्नवस्तिर्जीवति क्रियाभ्यासात् शास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति। उद्धृतशल्यं तूष्णोदकद्रोण्यामवतार्य्य स्वेदयेत्तथाहि वस्तिरसृजा न पूर्य्यते पूर्णे वा चीरवृक्षकषायं पुष्पनेत्रेण विदध्यात्।

भवति चात्र।

चीरवृक्षकषायन्तु पुष्पनेत्रेण योजितम्।
निर्हरेदश्मरीं तूर्णं रक्तं वस्तिगतञ्च यत्॥

मूत्रमार्गविशोधनार्थं चास्मै गुड़सौहित्यं वितरेत्। उद्धृत्य चैनां मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धाञ्चुष्णां सघृतां यवागूं पाययेदुभयकालं त्रिरात्रं त्रिरात्रादूर्द्ध्वं गुड़प्रगाढ़ेन पयसा मृद्वोदनमल्पं भोजयेद्दशरात्रं मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थञ्च दशरात्रादूर्द्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत्। ततो दशरात्रं चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा। चीरवृक्षकषायेण चास्य व्रणं प्रक्षालयेत्। रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिग्राहयेत्। एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्वं व्रणाभ्यञ्जनमिति। स्रावनशोणितं चोत्तरवस्तिभिरुपाचरेत्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरेन्मधुरकषायैरिति। यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवं चाशक्ये विदार्य्य वा नाड़ीं शस्त्रेण वड़िशेनोद्धरेत्। रूढ़व्रणश्चाङ्गनाश्वनगनागरथद्रुमान्नारोहेत वर्षं नाप्सु प्लवेत भुञ्जीत वा गुरु।

मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत् तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः शुक्रवहच्छेदान्मरणं क्लैब्यं वा। मुष्कस्रोतउपघाताद्ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम्। सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः वस्तिगुदविद्धलक्षणं प्रागुक्तमिति।

भवतश्चात्र।

मर्म्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणाम्।
व्यापादयेद्बहून्मर्त्यान् शस्त्रकर्म्मा पटुर्भिषक्॥
सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेकं मूत्रवहं मूत्रवस्तिस्तथाष्टमः॥

---

## अष्टमोऽध्यायः।

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः।

पञ्च भगन्दराः ख्यातास्तेष्वसाध्यः शम्बूकावर्त्तः शल्यनिमित्तश्चेति शेषाः कृच्छ्रसाध्याः।

तत्र भगन्दरपिड़कोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिड़कम्। पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्यपराचीनमवाचीनं वा वहिर्मुखमन्तर्मुखं वा ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण। अन्तर्मुखे चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यै-

अर्धीं दत्त्वा शस्त्रं पातयेत् । आसाद्य वाग्निक्षारं ईतरेतला- मान्यं सर्व्वेषु । विशेषतस्तु ।

नाड्यन्तरे व्रणान्कुर्य्याद्भिषक् तु शतपोनके ।
ततस्तेषूपरूढेषु शेषा नाडीरुपाचरेत् ॥
शतयोऽन्योऽन्यसम्बद्धा वाह्याभ्येयास्तनेकधा ।
नाड़ीरनभिसम्बद्धा यश्छिनत्त्येकधा भिषक् ॥
स कुर्य्याद्विततं जन्तोर्व्रणं गुदविदारणम् ।
तस्य तद्वित्ततं मार्गं विण्मूत्रमनुगच्छति ॥
आटोपगुदशूलञ्च करोति पवनो भृशम् ।
तत्राधिगततन्त्रोऽपि भिषङ्मुह्येदसंशयम् ॥
तस्मात्त्व विवृतः कार्य्यो व्रणस्तु शतपोनके ।
व्याधौ तत्र बहुच्छिद्रे भिषजा वै विजानता ॥
अर्द्धलाङ्गलकश्छेदः कार्य्यो लाङ्गलकोऽपि वा ।
सर्व्वतोभद्रको वापि कार्य्यो गोतीर्थकोऽपि वा ॥
द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः ।
ह्रस्वमेकतरं यत्र सोऽर्द्धलाङ्गलकः स्मृतः ॥
सेवनीं वर्जयित्वा च चतुर्द्धा दारिते गुदे ।
सर्व्वतोभद्रकं च्छेदमाहुश्छेदविदो जनाः ॥
पार्श्वागतेन शस्त्रेण छेदो गोतीर्थको भवेत् ।
सर्व्वतः स्रावमार्गांस्तु दहेद्वैद्यस्तथाग्निना ॥
सुकुमारस्य भीरोर्हि दुष्करः शतपोनकः ।
रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत् ॥
स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरापायसादिभिः ।

ग्राम्यानूपौदकैर्म्मांसैर्लावाद्यैर्व्वापि विष्किरैः॥
वृचादनीमथैरण्डं विल्वादिच्च गणं तथा।
कषायं सुकृतं कृत्वा स्नेहकुम्भे निषेचयेत्।
नाड़ीस्वेदेन तेनास्य तं व्रणं स्वेदयेद्भिषक्॥
तिलैरण्डातसीमाषयवगोधूमसर्षपान्।
लवणान्यम्लवर्गञ्च स्थाल्यामेवोपसाधयेत्॥
आतुरं स्वेदयेत्तेन तथा सिध्यति कुर्वतः।
स्विन्नञ्च पाययेदेनं कुष्ठञ्च लवणानि च॥
वचाहिङ्ग्वजमोदञ्च समभागानि सर्पिषा।
मार्द्वीकेनाथ वाम्लेन सुरासौवीरकेण वा॥
ततो मधुकतैलेन तस्य सिञ्चेद्भिषग्व्रणम्।
परिषिञ्चेद्गुदं चास्य तैलैर्वातरुजापहैः॥
विधिनानेन विण्मूत्रं स्वमार्गमधिगच्छति।
अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः॥
अतपोनक आख्यात उष्ट्रग्रीवे क्रियां शृणु।
अथोष्ट्रग्रीवमेषित्वाच्छित्वा चारं निपातयेत्॥
पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः।
अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत्॥
बन्धं ततोऽनुकुर्व्वीत परिषेकन्तु सर्पिषा।
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक्॥
ततः शुद्धं विदित्वा च रोपयेत्तु यथाक्रमम्।
उत्कृत्यास्रावमार्गन्तु परिस्राविणि बुद्धिमान्॥
चारेण वा स्रावगतिं दहेद्वुतवहेन वा।

सुखोष्णेनाणुतैलेन सेचयेद्गुदमण्डलम्॥
उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः।
वामनीयौषधैः कार्य्याः परिषेकाश्च मात्रया॥
मृदुभूतं विदित्वैनमल्पस्रावरुगन्वितम्।
गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्ज्जूरपत्रकम्॥
चन्द्रार्द्धं चन्द्रचक्रञ्च सूचीमुखमवाङ्मुखम्।
छित्त्वाग्निना दहेत् सम्यगेवं क्षारेण वा पुनः॥
ततः संशोधनैरेवं मृदुपूर्व्वैर्विशोधयेत्।
वहिरन्तर्मुखश्चापि शिशोर्य्यस्य भगन्दरः॥
तस्याहितं विरेकाग्निशस्त्रक्षारावचारणम्।
यद्यन्मृदु च तीक्ष्णञ्च तत्तत्तस्यावचारयेत्॥
आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतम्।
अग्रवर्त्तिप्रणिहितं व्रणानां शोधनं हितम्॥
योगोऽयं नाशयत्याशु गतिं मेघमिवानिलः।
आगन्तुजे भिषङ्नाडीं शस्त्रेणोत्कृत्य यत्नतः॥
जाम्बोष्ठेनाग्निवर्णेन तप्तया वा शलाकया।
दहेद्यथोक्तं मतिमांस्तं व्रणं सुसमाहितः॥
क्रिमिघ्नञ्च विधिं कुर्य्याच्छल्यानयनमेव च।
प्रत्याख्यायैष क्षारेभ्यो वर्ज्ज्यश्चापि त्रिदोषजः॥
एतत्कर्म्म समाख्यातं सर्व्वेषामनुपूर्व्वशः।
एषान्तु शस्त्रपतनाद्वेदना यत्र जायते॥
तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते।
वातघ्नौषधसंपूर्णां स्थालीं छिद्रशराविकाम्॥

स्नेहाभ्यक्तगुदस्तस्मामध्यासीत सवास्पकाम्।
नाड्या वास्याहरेत्स्वेदं शयानस्य रुजापहम्।
उष्णोदकेऽवगाढो वा तथा शाम्यति वेदना॥
कदलीमृगलोपाकप्रियकाजिनसंभृतान्॥
कारयेदुपनाहांश्च शाल्वणादीन् विचक्षणः।
कटुत्रिकं वचाहिङ्गुलवणान्यथ दीप्यकम्॥
पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः।
ज्योतिष्मतीलाङ्गलकीश्यामादन्तीत्रिवृत्तिलाः॥
कुष्ठं शताह्वा गालोमी तिल्वको गिरिकर्णिका।
कासीसकाञ्चनक्षीर्यौ वर्गः शोधन इष्यते॥
त्रिवृत्तिलानागदन्तीमञ्जिष्ठाःपयसा सह।
उत्सादनं भवेदेतत्सैन्धवक्षौद्रसंयुतम्॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः।
त्रिवृत्तेजोवतीदन्तीकल्को नाड़ीव्रणापहः॥
कुष्ठं त्रिवृत्तिला दन्तीमागध्यः सैन्धवं मधु।
रजनी त्रिफला तुत्थं हितं स्याद्व्रणशोधनम्॥
मागध्यो मधुकं रोध्रं कुष्ठमेलाहरेणवः।
समङ्गा धातकी चैव सारिवा रजनीद्वयम्॥
प्रियङ्गवः सर्जरसः पद्मकं पद्मकेसरञ्च।
सुधां वचां लाङ्गलकीं मधूच्छिष्टं ससैन्धवम्॥
एतत्संभृत्य सम्भारान् तैलं धीरो विपाचयेत्।
एतद्वै गण्डमालासु मण्डलेष्वथ मेहिषु॥
रोपणार्थं हितं तैलं भगन्दरविनाशनम्।

न्यग्रोधादिगणश्चैव हितः शोधनरोपणे ॥
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ।
त्रिवृद्दन्तीहरिद्रार्कमूलं लोध्राश्वमारकौ ॥
विडङ्गसारं त्रिफला स्नुह्यर्कपयसी मधु ।
मधूच्छिष्टसमायुक्तैस्तैलमेतैर्विपाचयेत् ॥
भगन्दरविनाशार्थमेतद्योज्यं विशेषतः ।
चित्रकार्कौ त्रिवृत्पाठे मलपूं हयमारकम् ।
सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्चिकाम् ॥
ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् ।
एतद्धि स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥
शोधनं रोपणं चैव सवर्णकरणं तथा ।
द्विव्रणीयमवेक्षेत व्रणावस्थासु बुद्धिमान् ॥
छिद्रादूर्द्ध्वं हरेद्दोषमर्शोयन्त्रस्य यन्त्रवित् ।
ततो भगन्दरे दद्यादेतदर्द्धेन्दुसन्निभम् ॥
व्यायामं मैथुनं कोपं पृष्ठयानं गुरूणि च ।
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥

---

## नवमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः । विरुद्धाध्यशनासात्म्यवेगविघातैः स्नेहादीनां चायथारम्भैः पापक्रियया पुराकृतकर्मयोगाच्च त्वग्दोषो भवति ।

तत्र त्वग्दोषी मांसवसादुग्धदधितैलकुलत्थमाषनिष्पा-

वेत्तुविकारान्नविरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवा-स्वप्नं व्यवायञ्च परिहरेत्।

ततः शालिषष्टिकयवगोधूमकोरदूषश्यामाकोद्दालकादी-ननवान् भुञ्जीत मुद्गाढ़क्योरन्यतरस्य यूषेण सूपेन वा निम्ब-पत्रारुष्करव्यामिश्रेण मण्डूकपर्णवल्गुजाटरूषककूपिकापुष्पैः सर्पिः सिद्धैः सर्षपतैलसिद्धैर्वा तिक्तवर्गेण वाभिहितेन। मांससात्म्याय वा जाङ्गलमांसममेदस्कं वितरेत्। तैलं वज्रकमभ्यङ्गार्थं। आरग्वधादिकषायमुत्सादनार्थं पानपरिषे-कावगाहादिषु च खदिरकषायमित्येष आहाराचारविभागः।

तत्र पूर्व्वरूपेषूभयतः संशोधनमासेवेत। तत्र त्वक्-संप्राप्ते शोधनालेपनानि। शोणितप्राप्ते संशोधनालेपन-कषायपानशोणितावसेचनानि। मांसप्राप्ते शोधनालेपन-कषायपानशोणितावसेचनारिष्टमन्थप्राशाः। चतुर्थं कर्म्म-गुणप्राप्तं याप्यमात्मवतः संविधानवतश्च। तत्र संशोधना-च्छोणितावसेचनाच्चोर्द्धं भल्लातशिलाजतुगुग्गुल्वगुरुतुवरक-खदिरासनायस्कृतिविधानमासेवेत पञ्चमं नैव चोपक्रमेत्।

तत्र प्रथममेव कुष्ठिनं स्नेहपानविधानेनोपपादयेत्। मेषशृङ्गीश्वदंष्ट्राशार्ङ्गेष्टागुडूचीद्विपञ्चमूलीसिद्धं तैलं घृतं वा वातकुष्ठिनां पानाभ्यङ्गयोर्विदध्यात्।

धवाश्वकर्णककुभपलाशपिचुमर्द्दपर्प्पटकमधुकरोध्रसमङ्गा-सिद्धं सर्पिः पित्तकुष्ठिनाम्।

पियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठ-सिद्धं श्लेष्मकुष्ठिनाम्।

भल्लातकाभयाविड़ङ्गसिद्धं वा सर्व्वेषाम्। तुवरकतैलं भल्लातकतैलं वेति। सप्तपर्णारग्वधातिविषापाठाकटुरोहिण्य-मृतात्रिफलापटोलपिचुमर्द्दपर्पटकदुरालभात्रायमाणामुस्ता-चन्दनपद्मकहरिद्रोपकुल्याविशालामूर्वाशतावरीसारिवेन्द्रयवा-टरूषकषड्ग्रन्थामधुकभूनिम्बग्रष्टिका इति समभागाः कल्कः स्यात्कल्काच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्विगुणो धात्रीफल-रससुश्चतुर्गुणा आपस्तदैकध्यं समालोड्य विपचेदेतन्महा-तिक्तकं नाम सर्पिः कुष्ठविषमज्वररक्तपित्तहृद्रोगोन्मादा-पस्मारगुल्मपिड़कासृग्दरगलगण्डगण्डमालाश्लीपदपाण्डुरोग-विसर्पषाण्ढ्यकण्डूपामादींश्च शमयेदिति।

त्रिफलापटोलपिचुमन्दाटरूषककटुरोहिणीदुरालभात्राय-माणापर्पटकाश्चैतेषां द्विपलिकान्भागान् जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्द्ध-पलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकिराततिक्तानि पिप्प-ल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेदेतत्तिक्तकं नाम सर्पिः कुष्ठविषमज्वर गुल्मार्शोग्रहणीदोषशोफपाण्डुरोगविसर्पषा-ण्ड्यशमनं चेति। अतोऽन्यतमेन घृतेन स्निग्धस्विन्नस्यैकां द्वे तिस्रश्चतस्रः पञ्च वा सिरा विध्येन्मण्डलानि चोत्सन्नान्यवलि-खेद्भीक्ष्णं प्रच्छयेद्वा। समुद्रफेनशाकगोजीकाकोडुम्बरिका-पत्रैर्वावघृष्यालेपयेल्लाक्षासर्ज्जरस रसाञ्जनप्रपुन्नाडावल्गुजते-जोवत्यश्वमारकार्ककुटजारेवतमूलकल्कैर्मूत्रपिष्टैः पित्तपिष्टै-र्वा स्वर्जिकातुत्थकासीसविड़ङ्गागारधूम चित्रककटुकसुधाहरिद्रासैन्धवकल्कैर्वा। एतान्येवावाप्य चारकल्पेन निस्रुते पा-

लाशे क्षारे ततो विपाच्य फाणितमिव सञ्जात मवतार्य्य लेपयेत्। ज्योतिष्कफललाक्षामरिचपिप्पलीर्मनःशिलैर्वा हरितालमनःशिलार्कक्षीरतिलशिग्रुमरिचकल्कैर्वा स्वर्जिका कुष्ठतुत्थकुटजचित्रकविडङ्गमरिचमनःशिलाकल्कैर्वा हरीतकीकरञ्जिकाविडङ्गसिद्धार्थकलवणरोचनावल्गुजहरिद्राकल्कैर्वा।

सर्वे कुष्ठापहाः सिद्धा लेपाः सप्त प्रकीर्त्तिताः।

वैशेषिकानतस्त्वूर्द्ध्वं दद्रूश्वित्रेषु मे शृणु॥

लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं रात्रिर्व्योषं चक्रमर्द्दस्य वीजम्।

कुलैकस्थं तक्रपिष्टः प्रलेपो दद्रूष्वुक्तो मूलकाद्वीजयुक्तः॥

सिन्धूद्भूतं चक्रमर्द्दस्य वीजमिक्षूद्भूतं केशरं तार्क्ष्यशैलम्।

पिष्टो लेपोऽयङ्कपित्थाद्रसेन दद्रूस्त्वरं नाशयत्येष योगः॥

हेमक्षीरी व्याधिघातः शिरीषो निम्बः सर्जो वत्सकः साजकर्णः।

शीघ्रं तीव्रा नाशयन्तीह दद्रूः स्नानालेपोद्वर्षणेषु प्रयुक्ताः॥

भद्रासंज्ञोडुम्बरीमूलतुल्यं दत्त्वा मूलं चोदयित्वा मलघ्नाः।

सिद्धन्तोयम्पीतमुष्णे सुखोष्णं स्फोटान् श्वित्रे पुण्डरीके च कुर्य्यात्॥

द्वैपं दग्धं चर्म्म मातङ्गजं वा भिन्ने स्फोटे तैलयुक्तं प्रलेपः।

पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेको निहन्ति॥

कृष्णस्य सर्पस्य मसी सुदग्धा वैभीतकं तैलमथ द्वितीयम्।

एतत्समस्तं म्रदितं प्रलेपात् श्वित्राणि सर्व्वाण्यपहन्ति शीघ्रम्॥

अभ्यर्द्धतोये सुमतिस्तुतस्य क्षारस्य कल्पेन तु रुमकत्वः।

तैलं शृतं तेन चतुर्गुणेन श्वित्रापहं श्रेष्ठमिदं तदग्र्यम्॥

घृतेन युक्तं प्रपुनाडवीजं कुष्ठञ्च यष्टीमधुकञ्च पिष्ट्वा।

श्वेताय दद्यादुरुहकुक्कुटाय चतुर्थभक्ताय वुभुक्षिताय॥

तस्योपसंगृह्य च तत्पुरीषमुत्पाचितं सर्वत एव लिम्पेत् ।
अभ्यन्तरं मासमिमं प्रयोगं प्रयोजयेच्छित्रमयो निहन्ति ॥
क्षारे सुदग्धे गजलेण्डजे तु गजस्य मूत्रेण बहुस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं दत्त्वा पचेद्बीजमवल्गुजस्य ॥
एतद्यदा चिक्कणतामुपैति तदा समस्ता गुटिका विदध्यात् ।
श्वित्रं प्रलिम्पेदथ सम्प्रघृष्य तया व्रजेदाशु सवर्णभावम् ॥
कषायकल्पेन सुभावितान्तु दलत्वचं चूतहरीतकीनाम् ।
तान्ताम्रदीपे प्रणिधाय धीमान्वर्त्तिं वटक्षीरसुभावितान्तु ॥
आदीप्य तज्जातमसीं गृहीत्वा तां चापि पथ्याम्भसि भावयित्वा ।
संघर्षितं तद्बहुशः किलासं तैलेन सिक्तं कटुना प्रयाति ॥
आवल्गुज बीजमथ्यन्नदीजं काकाङ्कानोडुम्बरी या च लाक्षा ।
लौहं चूर्णं मागधीतार्क्ष्यशैलं तुल्याः कार्य्याः कृष्णवर्णास्तिलाश्च ॥
वर्त्तिं कृत्वा तां गवां पित्तपिष्टां लेपः कार्य्यः श्वित्रिणां श्वित्रहारी ।
लेपात्पित्तं शैखिनं श्वित्रहारि ह्रीवेरं वा दग्धमेतेन युक्तम् ॥

तुत्थालकटुकाव्योषसिंहार्कहयमारकाः ।
कुष्ठावल्गुजभल्लातचौरिणीसर्षपाः स्नुही ॥
तिल्वकारिष्टपीलूनां पत्राण्यारग्वधस्य वा ।
बीजं विडङ्गाश्वहन्त्रोर्हरिद्रे बृहतीद्वयम् ॥
आभ्यां श्वित्राणि योगाभ्यां लेपान्नश्यन्त्यशेषतः ।
वायसी फल्गुतिक्तानां शतं दत्त्वा पृथक्पृथक् ॥
द्वे लौहरजसः प्रस्थे त्रिफला व्याढकं तथा ।
त्रिद्रोणेऽपां पचेद्यावद्भागौ द्वावसनादपि ॥
शिष्टञ्च विपचेद्भूय एतैः स्नुक्प्रपेषितैः ।

कल्कैरिन्द्रयवव्योषत्वग्दारुचतुरङ्गुलैः॥
पारावतपदीदन्तीवाकुचीकेशराह्वयैः।
कण्टकार्य्या च तत्पक्वं घृतं कुष्ठिषु योजयेत्॥
दोषधात्वाश्रितं पानादभ्यङ्गात्त्वग्गतं तथा।
अप्यसाध्यं नृणां कुष्ठं नाम्ना नीलं नियच्छति॥
त्रिफलात्वक् त्रिकटुका सुरसा मदयन्तिका।
वायस्यारग्वधानाश्च तुलां कुर्य्यात् पृथक् पृथक्।
काकमाच्यर्कवरुणदन्तीकुटजचित्रकान्।
दार्व्वीनिदिग्धिकाभ्यान्तु पृथग्दशपलं तथा॥
त्रिद्रोणेऽपां पचेद्यावत्षट्प्रस्थं परिशेषितम्।
भल्लातद्धिक्षीरं मूत्राणां पृथगाढ़कम्॥
तद्वद्घृतस्य तत्साध्यं भूनिम्बव्योषचित्रकैः।
करञ्जफलनीलिकाश्यामावल्गुजपीलुभिः॥
नीलिनीनिम्बकुसुमैः सिद्धं कुष्ठापहं घृतम्।
भक्षणादङ्गसावर्ण्यं श्वित्रिणां जनयेन्नृणाम्॥
भगन्दरं क्रमीनर्शो महानीलं नियच्छति।
मूत्रं गव्यं चित्रकव्योषयुक्तं सर्पिःकुम्भे क्षौद्रयुक्तं स्थितं हि।
पक्षादूर्द्ध्वं श्वित्रिभिः पेयमेतत्कुर्य्याच्चास्मिन्कुष्ठदिष्टं विधानम्॥
पूतीकार्कस्नुग्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवाः सौमनाश्च।
लेपः श्वित्रं हन्ति दद्रूव्रणांश्च दुष्टान्यर्शांस्येष नाड़ीव्रणांश्च॥
अस्मादूर्द्ध्वं निःस्रुते दुष्टरक्ते जातप्राणं सर्पिषा स्नेहयित्वा।
तीक्ष्णैर्योगैश्छर्द्दयित्वा प्रगाढ़ं पश्चाद्दोषं निर्हरेच्चाप्रमत्तः॥
दुर्व्वान्तो वा दुर्व्विरिक्तोऽथ वा स्यात्कुष्ठी दोषैरुद्धतैर्व्याप्तदेहः।

निःसन्दिग्धं यात्यसाध्यत्वमाशु तस्मात्कालान्निर्हरेत्तस्य दोषान् ॥
पश्चात्पश्चाच्छर्दनान्यभ्युपेयान्मासान्मासात्स्रंसनं चापि देयम् ।
स्राव्यं रक्तं वत्सरे हि द्विरल्पं नस्यं दद्याच्च त्रिरात्रात्त्रिरात्रात् ॥
पथ्याव्योषं सेक्षुजातं सतैलं लीढ्वा शीघ्रं मुच्यते कुष्ठरोगात् ।
धात्रीपथ्याचोपकुल्याविडङ्गान् क्षौद्राज्याभ्यामेकतो वावलिह्यात् ॥
पीत्वा मासं वा पलांशां हरिद्रां मूत्रेणान्तं पापरोगस्य गच्छेत् ।
एवं पेयस्त्रित्वकः श्लक्ष्णपिष्टः पिप्पल्यो वा पूर्ववन्मूत्रयुक्ताः ॥
तद्वत्ताप्यं माषमात्रञ्च पेयं तेनाजस्रं देहमालेपयेच्च ।
अरिष्टत्वक् सप्तपर्णौ च तुल्या लाक्षा मुस्तं पञ्चमूल्यौ हरिद्रे ॥
मञ्जिष्ठाच्यौ वासको देवदारु पथ्यावल्गौ व्योषधात्रीविडङ्गम् ।
सामान्यांशं योजयित्वा विडङ्गैश्चूर्णं कृत्वा तत्पलोन्मानमश्नन् ॥
कुष्ठाज्जन्तुर्मुच्यते त्रैफलं वा सर्पिर्द्रोणं व्योषयुक्तञ्च युञ्जन् ।
गोमूत्राम्बुद्रोणसिद्धेऽक्षपीडे सिद्धं सर्पिर्नाशयेच्चापि कुष्ठम् ॥
आरग्वधे सप्तपर्णे पटोले सवृक्षके नक्तमाले सनिम्बे ।
जीर्णं पक्वं तद्धरिद्राद्वयेन हन्यात्कुष्ठं मुष्कके चापि सर्पिः ॥
रोध्रारिष्टं पद्मकं रक्तसारः सप्ताह्वाख्यौ वृक्षको बीजकश्च ।
योज्याः स्नाने दह्यमानस्य जन्तोः पेया वा स्यात्क्षौद्रयुक्ता त्रिभण्डी ॥
खादेत्कुष्ठी मांसपाते पुराणान्मुद्गान्सिद्धान्निम्बतोये सतैलान् ।
निम्बक्वाथं जातसत्त्वः पिवेद्वा क्वाथं वार्कालर्कसप्तच्छदानाम् ॥
जग्धेष्वङ्गेष्वश्वमारस्य मूलं लेपो युक्तः स्याद्विडङ्गैः समूत्रैः ।
मूत्रैश्चैनं सेचयेद्भोजयेच्च सर्वाहारांस्तं प्रयुक्तान्विडङ्गैः ॥
कारञ्जं वा सार्षपं वा क्षतेषु देयं तैलं शिग्रुकोशाम्रयोर्वा ।
पक्वं सर्वैर्वा कटूष्णैः सतिक्तैः शेषं च स्याद्दुष्टवत्तं विधानम् ॥

सप्तपर्णकरञ्जार्कमालतीकरवीरजम्।
स्नुहीशिरीषयोर्मूलं चित्रकास्फोतयोरपि॥
विषलाङ्गलवज्राख्यकासीसालमनःशिलाः।
करञ्जवीजं त्रिकटु त्रिफलां रजनीद्वयम्॥
सिद्धार्थकान्विडङ्गानि प्रपुन्नाड़ञ्च संहरेत्।
मूत्रपिष्टैः पचेदेतैस्तैलं कुष्ठविनाशनम्॥
एतद्वज्रकमभ्यङ्गान्नाड़ीदुष्टव्रणापहम्।
सिद्धार्थककरञ्जौ द्वौ द्वे हरिद्रे रसाञ्जनम्॥
कुटजञ्च प्रपुन्नाड़सप्तपर्णौ मृगादनी॥
लाक्षासर्जरसोऽर्कश्च सास्फोतारग्वधौ स्नुही।
शिरीषस्तुवराख्यस्तु कुटजारुष्करौ वचा॥
कुष्ठं क्रमिघ्नं मञ्जिष्ठा लाङ्गली चित्रकं तथा।
मालती कटुतुम्बी च गन्धाह्वा मूलकं तथा॥
सैन्धवं करवीरञ्च गृहधूमं विषं तथा॥
कम्पिल्लकं ससिन्दूरं तेजोह्वातुल्यकाह्वये।
समभागानि सर्व्वाणि कल्कपेष्याणि कारयेत्॥
गोमूत्रं द्विगुणं दद्यात्तिलतैलाच्चतुर्गुणम्।
कारञ्जं वा महावीर्य्यं सार्षपं वा महागुणम्॥
अभ्यङ्गात्सर्व्वकुष्ठानि गण्डमालाभगन्दरान्।
नाड़ीदुष्टव्रणान्घोरान्नाशयेन्नात्र संशयः॥
महावज्रकमित्येतन्नाम्ना तैलं महागुणम्।
पित्तावापैर्मूत्रपिष्टैस्तैलं लाक्षादिकैः कृतम्॥
सप्ताहं कटुकालाब्वां निदधीत चिकित्सकः।

पीतवन्तं ततो मात्रां तेनाभ्यक्तञ्च मानवम् ॥
शोषयेदातपे तस्य दोषा गच्छन्ति सर्व्वशः ।
स्रुतदोषं समुत्थाप्य स्नातं खदिरवारिणा ।
यवागूं पाययेदेनं साधितां खदिराम्बुना ।
एवं संशोधने वर्गे कुष्ठघ्नेष्वौषधेषु च ॥
कुर्य्यात्तैलानि सर्पींषि प्रदेहोद्वर्त्तनानि च ।
प्रातः प्रातश्च सेवेत योगान्वैरेचनान् शुभान् ॥
पञ्च षट्सप्तचाष्टौ वा यैरुत्थानं न गच्छति ।
क्षारभं वा पिवेन्मूत्रं जीर्णे तत्क्षीरभोजनम् ॥
जातसत्त्वानि कुष्ठानि मासैः षड्भिरपोहति
दिदृक्षुरन्तं कुष्ठस्य खदिरं कुष्ठपीड़ितः ॥
सर्वथैव प्रयुञ्जीत स्नानपानाशनादिषु ।
यथा हन्ति प्रवृद्धत्वात्कुष्ठमातुरमोजसा ।
तथा हन्त्युपयुक्तस्तु खदिरः कुष्ठमोजसा ।
नीचरोमनखोऽश्रान्तो हिताशौषधतत्परः ॥
योषिन्मांससुरावर्जी कुष्ठी कुष्ठमपोहति ।

---

## दशमोऽध्यायः ।

अथातो महाकुष्ठचिकित्सितं व्याख्यास्यामः ।
कुष्ठेषु मेहेषु कफामयेषु सर्व्वाङ्गशोफेषु च दारुणेषु ।
कृशत्वमिच्छत्सु च मेदुरेषु योगानिमानस्यमतिर्विदध्यात् ॥

तुषान्यवान्निःपूतान् रात्रौ गोमूत्रपर्य्युषितान्नाहति कि-लिञ्जे शोषयेदेवं सप्तरात्रं भावयेत् शोषयेच्च ततस्तान्-कपालभ्रष्टान् शक्तून्कारयित्वा प्रातःप्रातरेव कुष्ठिनं प्रमे-हिणं वा सालसारादिकषायेण कण्टकिवृक्षकषायेण वा पाययेत भल्लातकप्रपुन्नाड़ावल्गुजार्कचित्रकविड़ङ्गमुस्तचूर्णचतु-र्भागयुक्तान्। एवमेव सालसारादिकषायपरिपीतानामा-रग्वधादिकषायपरिपीतानां वा गोशकृद्भूतानां वा यवानां शक्तून् कारयित्वा भल्लातकादीनां चूर्णान्यावाप्य खदिरा-शननिम्बराजवृक्षरोहितकगुड़ूचीनामन्यतमस्य कषायेण शर्करामधुमधुरेण द्राक्षायुक्तेन दाड़िमवेतसाम्लेन सैन्धव-लवणान्वितेन पाययेदेष सर्वमन्थकल्पः।

यावकांश्च भक्ष्यान्धानाउत्सुकुल्माषापूपपूर्णकोशोत्-कारिकाशष्कुलिकाकुणावीकोनालिप्रभृतीन् सेवेत। यव-विधानेन गोधूमवेणुयवानुपयुञ्जीत।

अरिष्टानतो वक्ष्यामः। पूतीकचव्यचित्रकसुरदारु-सारिवादन्तीत्रिकटुकानां प्रत्येकं षट्पलिका भागा वदर-कुड़वस्त्रिफलाकुड़व इत्येतेषां चूर्णानि ततः पिप्पलीमधुघृते-रन्तःप्रलिप्ते घृतभाजने प्राकृतसंस्कारे सप्तोदककुड़वा-नयोरजोऽर्द्धकुड़वमर्द्धतुलाञ्च गुड़स्याभिहितानि चूर्णान्या-वाप्य स्वनुगुप्तं कृत्वा यवपल्ले सप्तरात्रं वासयेत्ततो यथा-बलमुपयुञ्जीतैषोऽरिष्टः कुष्ठमेहमेदः पाण्डुरोगश्वयथूनप-हन्ति। एवं शालसारादौ न्यग्रोधादावारग्वधादौ चारि-ष्टान्कुर्वीत।

आसवानतो वक्ष्यामः । पलाशभस्मपरिस्नुतस्योष्णोदकस्य शीतीभूतस्य त्रयोभागा द्वौ फाणितस्यैकध्यमरिष्टकल्पेन विदध्यात् । एवं तिलादीनां क्षारेषु शालसारादौ न्यग्रोधादावारग्वधादौ मूत्रेषु चासवान्विदध्यात् ।

अथ सुरा वक्ष्यामः । शिंशपाखदिरयोः सारमादायोत्पाद्य चोत्तमारणीब्राह्मीकोशातकीस्तत्सर्वमेकतः कषायकल्पेन विपाच्योदकमाददीत मण्डोदकार्थं किण्वपिष्टमभिषुणुयाच्च यथोक्तमेवं सुरा । शालसारादौ न्यग्रोधादावारग्वधादौ च विदध्यात् ।

अतोऽवलेहान्वक्ष्यामः । खदिरासननिम्बराजवृक्षशालसार क्वाथे तत्सारपिण्डान् श्लक्ष्णपिण्डान्प्रक्षिप्य विपचेत् ततो नातिद्रवं नातिसान्द्रमवतार्य्य तस्य पाणितलपूर्णमप्रातराशो मधुमिश्रं लिह्यादेवं शालसारादौ न्यग्रोधादावारग्वधादौ च लेहान्कारयेत् ।

अतश्चूर्णक्रियां वक्ष्यामः । शालसारादीनां सारचूर्णप्रस्थमाहृत्यारग्वधादिकषायपरिपीतमनेकशः शालसारादिकषायेणैव पाययेत् । एवं न्यग्रोधादीनां फलेषु पुष्पेष्वारग्वधादीनां चूर्णं क्रियां कारयेत् ।

अत ऊर्द्ध्वमयस्कृतीर्वक्ष्यामः । तीक्ष्णलोहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशालसारादिकषायेण निर्वापयेत् षोड़शवारांस्ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्गाढ़तान्तवपरिस्रावितानि ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयु-

ञ्जीत। जीर्णे यथाव्याध्यनम्लमलवणमाहारं कुर्व्वीत। एवं तुलामुपयुज्य कुष्ठमेहमेदः श्वयथुपाण्डुरोगोन्मादापस्मारानपहृत्य वर्षशतं जीवति। तुलायां तुलायां वर्षशतगुणोत्कर्षः। एतेन सर्व्वलौहेष्वयस्कृतयो व्याख्याताः। तृवृच्छ्यामाग्निमन्थ-सप्तलाकेवुकशङ्खिनीतिल्वक-त्रिफला-पलाशशिंशपानां स्वरसमादाय पालाश्यां द्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयःपिण्डं त्रिःसप्तकृत्वो निर्वाप्य तमादाय पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत् सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागौ द्वौ मधुनस्तावद्घृतस्येति दद्यात् ततश्चतुर्थभागावशिष्टमवतार्य्य परिस्राव्य भूयोऽग्नितप्तान्ययःपत्राणि प्रक्षिपेत्। ततः प्रशान्तमायसे पात्रे स्वनुगुप्तं निदध्यात् ततो यथायोगं शुक्तिं प्रकुञ्चं चोपयुञ्जीत जीर्णे यथाव्याध्याहारमुपसेवेत। एषौषधायस्कृतिरसाध्यं कुष्ठं प्रमेहं वा साधयति स्थूलमपकर्षति शोफमुपहन्ति सन्नमग्निमुद्धरति विशेषेण चोपदिश्यते राजयक्ष्मिणां वर्षशतायुश्चानया पुरुषो भवति। शालसारादिक्काथमासिच्य पालाश्यां द्रोण्यामयोघनं तप्तं निर्वाप्य कृतसंस्कारे कलशेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं क्षौद्रं गुड़मिति च दत्वा स्वनुगुप्तं निदध्यादेतां महौषधायस्कृतिं मासमर्द्धं मासं वा स्थितां यथाबलमुपयुञ्जीत। एवं न्यग्रोधादावारेवतादिषु च विदध्यात्।

अतः खदिरविधानमुपदेक्ष्यामः। प्रशस्तदेशजातमनुपहत मध्यमवयसं खदिरं परितः खानयित्वा मध्यममूलं

छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रसग्रहण-समर्थो भवति। ततस्तं गोमयमृदावलिप्तमवकीर्य्येन्धनैर्गोमयमिश्रैरादीपयेत्। यथास्य दह्यमानस्य रसः स्रवत्यध-स्ताद्यदा जानीयात्पूर्णं भाजनमित्यथैवमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत जीर्णे भल्लात-कविधानवदाहारः परिहारश्च अस्मिं चोपयुक्ते शतं वर्षाणा-मायुषोऽभिवृद्धिर्भवति। खदिरसारतुलामुदकद्रोणे विपाच्य षोड़शांशावशिष्टमवतार्य्यानुगुप्तं निदध्यात् तमामलकरस-मधुसर्पिर्भिः संसृज्योपयुञ्जीत। एष एव सर्ववृक्षसारेषु कल्पः। खदिरसारचूर्णंतुलां खदिरसारक्वाथमात्रां वा प्रातः प्रातरुपसेवेत खदिरसारक्वाथसिद्धमाविकं वा सर्पिः। अमृतवल्लीस्वरसं क्वाथं वा प्रातः प्रातरुपसेवेत तत्सिद्धं वा सर्पिः। अपराह्णे ससर्पिष्कमोदनमामलकयूषेण भुञ्जीतैवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यत इति।

कृष्णतिलभल्लातकतैलामलकरससर्पिषां द्रोणं शालसा-रादिकषायस्य च त्रिफलात्रिकटुकपरूषफलमज्जाविड़ङ्गफल्ग-सारचित्रकार्कवल्गुजहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकातिवि-षारसाञ्जनप्रियङ्गूनां पालिकाभागांस्तानैकध्यं स्नेहपाक-विधानेन पचेत् तत्साधुसिद्धमवतार्य्य परिस्राव्यानुगुप्तं निद-ध्यात् तत उपसंस्कृतशरीरः प्रातः प्रातरुत्थाय पाणिशुक्ति-मात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत जीर्णे मुद्गामलकयूषे-णालवणेन सर्पिष्मन्तं खदिरोदकसिद्धं मृद्वोदनमश्नीयात्

खदिरोदकसेवीत्येवं द्रोणमुपयुज्य सर्व्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान्वर्षशतायुररोगो भवति।

भवति चात्र।

सुरामन्थासवारिष्टांल्लेहांश्चूर्णान्ययस्कृतीः।
सहस्रशोऽपि कुर्वीत वीजेनानेन वुद्धिमान्॥

---

## एकादशोऽध्यायः।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः। द्वौ प्रमेहौ सहजोऽपथ्यनिमित्तश्च भवतः। तत्र सहजो मातृपितृवीजदोषकृतः। अहिताहारजोऽपथ्यनिमित्तः। तयोः पूर्व्वेणोपद्रुतः कृशोरूक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति। उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति। तत्र कृशमन्नपान प्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत्। स्थूलमपतर्पणयुक्ताभिः।

सर्वं एव च परिहरेयुः सौवीरकतुषोदकशुक्तमैरेयसुरासवतोयपयस्तैलघृतेक्षुविकारदधिपिष्टान्नाम्लपानकानि ग्राम्यानूपौदकमांसानि चेति।

ततः शालिषष्टिकयवगोधूमकोद्रवोद्दालकाननवान्भुञ्जीत। चणकाढकीकुलत्थमुद्गविकल्पेन तिक्तकषायाभ्यां शाकगणाभ्यां निकुम्भेङ्गुदीसर्षपातसीतैलसिद्धाभ्यां वद्धमूत्रैर्वा जाङ्गलैर्मांसैरपहृतमेदोभिरनम्लै रघृतैश्चेति।

तत्रादित एव प्रमेहिणं स्निग्धमन्यतमेन तैलेन प्रियङ्ग्वादि-

सिद्धेन वा घृतेन वामयेदगाढं विरेचयेच्च। विरेचनादनन्तरं सुरसादिकषायेणास्थापयेन्महौषधभद्रदारुमुस्तावापेन मधु-सैन्धवयुक्तेन दह्यमानञ्च न्यग्रोधादिकषायेण निःस्नेहेन ततः संशुद्धदेहमामलकरसेन हरिद्रां मधुसंयुक्तां पाययेत् त्रिफ-लाविशाला देवदारुमुस्तकषायं वा शालकम्पिल्लकमुष्कक-कल्कमक्षमात्रं वा मधु मधुरमामलकरसेन हरिद्रायुतम् ; कुटजकपित्थरोहितविभीतकसप्तपर्णपुष्पकल्कं वा । निम्बा-रग्वधसप्तपर्णमूर्वाकुटजसोमवृक्षपलाशानां वा त्वक्पत्रमूल-फलपुष्पकषायाणि । एते पञ्च प्रयोगाः सर्वमेहानामपह-न्तारो व्याख्याताः ।

विशेषतस्त्वत ऊर्द्धम् । तत्रोदकमेहिनं पारिजात-कषायं पाययेत् । इक्षुमेहिनं वैजयन्तीकषायम् । सुरा-मेहिनं निम्बकषायम् । सिकतामेहिनं चित्रककषायम् । शनैर्मेहिनं खदिरकषायम् । लवणमेहिनं पाठागुरुकषायम् । पिष्टमेहिनं हरिद्रादारुहरिद्राकषायम् । सान्द्रमेहिनं सप्त-पर्णकषायम् । शुक्रमेहिनं दुर्व्वाशैवलप्लवहठकरञ्जकसेरुक-कषायं ककुभचन्दनकषायं वा । फेनमेहिनं त्रिफलारग्वध-मृद्वीकाकषायं मधुरं कफजे तु मधु मधुरमिति । पैत्तिकेषु नीलमेहिनं शालसारादिकषायमश्वत्थकषायं वा पाययेत् । हरिद्रामेहिनं राजवृक्षकषायम् । अम्लमेहिनं न्यग्रोधादि-कषायं मधुमिश्रम् । क्षारमेहिनं त्रिफलाकषायम् । म-ञ्जिष्ठामेहिनं मञ्जिष्ठाचन्दनकषायम् । शोणितमेहिनं गुडू-चीतिन्दुकास्थिकाश्मर्य्यखर्जूरकषायं मधुमिश्रम् ।

अतऊर्द्ध्वमसाध्येष्वपि योगान्यापनार्थं वक्ष्यामः। तद्यथा। सर्पिर्मेहिनं कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्कं गुडूचीचित्रककषायेण पाययेत्। वसामेहिनमग्निमन्थकषायं शिंशपाकषायं वा। क्षौद्रमेहिनं खदिरक्रमुककषायं हस्तिमेहिनं तिन्दुककपित्थशिरीषपलाशपाठामूर्व्वादुःस्पर्शाकषायं मधुमिश्रं हस्त्यश्वशूकरखरोष्ट्रास्थिक्षारं चेति। दह्यमानमौदककन्दक्वाथसिद्धां यवागूं क्षीरेक्षुरसमधुरां पाययेत्।

ततः प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाड़िमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीवकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टानयस्कृतीर्लेहानासवान्कुर्व्वीत। शृङ्गाटकगिलोड्यविसमृणालकसेरुकमधुकाम्रजम्ब्वसनतिनिशककुभकट्वङ्गरोध्रभल्लातकचर्म्मवृक्षगिरिकर्णिकाशीतशिवनिचुलदाड़िमाजकर्णहरिवृक्षराजादनगोपघोण्टाविकङ्कतेषु वा। यवान्नविकारांश्च सेवेत। यथोक्त कषायसिद्धां चास्मै यवागूं प्रयच्छेत्। कषायाणि वा पातुं महाधनमहिताहारमौषधद्वेषिणमीश्वरं वा पाठाभयाचित्रकप्रगाढ़मनल्पमाक्षिकमन्यतममासवं पाययेदङ्गारशूल्यावदंशं वा माध्वीकमभीक्ष्णम्। मधुकपित्थमरिचानुविद्धानि चास्मैपानान्युपहरेत्। उष्ट्राश्वतरखरपुरीषचूर्णानि चास्मै दद्यादशनेषु॥ हिङ्गुसैन्धवयुक्तैर्यूषैः सार्षपैश्च रागैर्भोजयेत्। अविरुद्धानि चास्मै पानभोजनान्युपहरेद्रसवन्ति। प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीड़ागजतुरगरथपदातिचर्य्यापरिक्रमणान्यस्त्रोपास्त्रे वा सेवेरन्।

अधनस्त्वबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशी ग्रामैकरात्रानुवासी मुनिरिव संयतात्मा योजनशतमधिकं वा गच्छेत् । महाधनो वा श्यामाकनीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारी मृगैः सह वसेत्तन्मूत्रशकृद्वृत्ती सततमनुव्रजेद्गां ब्राह्मणो वा शिलोञ्छवृत्तिर्भूत्वा ब्रह्मरथमुपधारयेत् । पठेत्सततमितरः खनेद्वा कूपं । कृशन्तु सततं रक्षेत् ।

भवति चात्र ।

अधनो वैद्यसन्देशादेवं कुर्व्वन्नतन्द्रितः ।
संवत्सरादन्तराद्वा प्रमेहात्प्रतिमुच्यते ॥

---

## द्वादशोऽध्यायः ।

अथातः प्रमेहपिड़काचिकित्सितं व्याख्यास्यामः ।

शराविकाद्या नव पिड़काःप्रागुक्तास्ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ता मृदवोऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः ।

ताभिरुपद्रुतं प्रमेहिणमुपचरेत्तत्र पूर्व्वरूपेष्वपतर्प्पणं कषायं वस्तमूत्रं चोपदिशेत् । एवमकुर्व्वतस्तस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरो भवति प्रमेहश्चाभिव्यक्तो भवति तत्रोभयतः संशोधनमासेवेत । एवमकुर्व्वतस्तस्य दोषाः प्रवृद्धा मांसशोणितं प्रदूष्य शोफं जनयन्त्युपद्रवान्वा कांश्चित्तत्रोक्तः प्रतीकारः शिरामोक्षश्च । एवमकुर्व्वतस्तस्य

शोफो वृद्धोऽतिमात्ररुजो विदाहमापद्यते तत्र शस्त्रप्रणिधान-मुक्तं व्रणक्रियोपसेवा च। एवमकुर्वतस्तस्य पूयोऽभ्यन्तरम-वदार्य्योत्सङ्गं महान्तमवकाशं कृत्वा प्रवृद्धो भवत्यसाध्यः। तस्मादादित एव प्रमेहिणमुपक्रमेत्।

भल्लातकविल्वाम्बुपिप्पलीमूलोदकीर्य्यावर्षाभूपुनर्नवाचि-त्रकशठीस्नु हीवरुणकपुष्करदन्तीपथ्यादशपलोन्मितान् यवको-लकुलत्थांश्च प्रास्थिकान्सलिलद्रोणे निःक्वाथ्य चतुर्भागावशि-ष्टेऽवतार्य्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पली-विडङ्गशिरीषाणां भागैरर्द्धपलिकैर्घृतप्रस्थं विपाचयेन्मेहश्व-यथुकुष्ठगुल्मोदरार्शः प्लीहविद्रधिपिडकानां नाशनं नाम्ना धान्वन्तरम्।

दुर्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीर-त्वात्तस्मात्तीक्ष्णमेतेषां शोधनं कुर्वीत। पिड़कापीड़िताः सोपद्रवाः सर्व्वएव प्रमेहा मूत्रादिमाधुर्य्यं मधुगन्धसामा-न्यात्पारिभाषिकीं मधुमेहतां लभन्ते। नचैतान्कथञ्चिदपि स्वेदयेत् मेदोबहुलत्वादेवेषां विशीर्य्यते देहः स्वेदेन रसायनो-नाञ्च दौर्बल्यान्नोर्द्धमुत्तिष्ठन्ति प्रमेहिणां दोषाः। ततो मधु-मेहिनामधःकाये पिड़काः प्रादुर्भवन्ति। अपक्वानां पिड़-कानां शोफवत्प्रतीकारः पक्वानां व्रणवदिति। तैलन्तु व्रण-रोपणादौ कुर्वीत। आरग्वधादिकषायमुत्सादनार्थं शाल-सारादिकषायं परिषेचने पिप्पल्यादिकषायं पानभोजनेषु पाठाचित्रकशार्ङ्गेष्टाक्षुद्रबृहतीसारिवासोमवल्कसप्तपर्णारग्व-धकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात्। शालसा-

रादिवर्गकषायं चतुर्भागावशिष्टमवतार्य्य परिस्राव्य पुनरुप-नीय साधयेत् सिध्यति चामलकरोध्रप्रियङ्गुदन्तीकृष्णाय-स्ताम्रचूर्णान्यावपेदेतदनुपदग्धलेहीभूतमवतार्य्यानुगुप्तं नि-दध्यात्ततो यथायोगमुपयुञ्जीत। एष लेहः सर्वमेहानां हन्ता ।

त्रिफलाचित्रकत्रिकटुविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायसूर्णस्य तत्सर्वमैकध्यं कृत्वा यथायोगं मात्रां सर्पि-र्मधुभ्यां संसृज्योपयुञ्जीत। एतन्नवामसमेतेन जाठर्य्यं न भवति सन्नोऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोगाविपा-ककासश्वासप्रमेहाश्च न भवति ।

शालसारादिनिर्य्यूहे चतुर्थांशावशेषिते ।
परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥
फाणितीभावमापन्नं गुडं शोधितमेव च ।
श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥
ऐकध्यमावपेत्कुम्भे संस्कृते घृतभाविते ।
पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तः शुचौ दृढे ॥
श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ।
खदिराङ्गारतप्तानि बहुशः सन्निपातयेत् ॥
सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत् ।
मासांस्त्रींश्चतुरो वापि यावदालोहसङ्क्षयात् ॥
ततो जातरसं तन्तु प्रातः प्रातर्यथाबलम् ।
निषेवेत यथायोगमाहारं चास्य कल्पयेत् ॥
कार्श्यकृद्बलिनामेष सन्नस्याग्नेः प्रसाधकः ।

शोफनुद्गुल्महृत्कुष्ठमेहपाण्डामयापहः ॥
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ।
अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥
प्रमेहिणो यदा मूत्रमपिच्छिलमनाविलम् ।
विशदन्तिक्तकटुकं तदारोग्यं प्रचक्षते ॥

---

## त्रयोदशोऽध्यायः।

अथातोमधुमेहचिकित्सितं व्याख्यास्यामः ॥
मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितम् ।
योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥
मासे शुक्रे शुचौ चैव शैलाः सूर्य्यांशुतापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥
शिलाजत्विति विख्यातं सर्वव्याधिविनाशनम् ।
त्रप्वादीनान्तु लोहानां षणामन्यतमान्वयम् ॥
ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ ।
लोहाद्भवति तद्यस्माच्छिलाजतु जतुप्रभम् ॥
तस्य लोहस्य तद्वीर्य्यं रसञ्चापि विभर्त्ति तत् ।
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥
यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः ।
यत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥
कटुपाक्युष्णवीर्य्यञ्च शोषणं छेदनं तथा ।

तेषु यत्कृष्णमलघु स्निग्धं निःशर्करञ्च यत् ॥
गोमूत्रगन्धि यच्चापि तत्प्रधानं प्रचक्षते ।
तद्भावितं सारगणैर्हृतदोषो दिनोदये ॥
पिबेत्सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम् ।
जाङ्गलेन रसेनान्नं तस्मिञ्जीर्णे तु भोजयेत् ॥
उपयुज्य तुलामेवं गिरिजादमृतोपमात् ।
वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ॥
जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः ।
शतं शतं तुलायान्तु सहस्रं दश तौलिके ॥
भल्लातकविधानेन परिहारविधिः स्मृतः ।
मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम् ॥
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम् ।
अपोहत्यचिरात्कालाच्छिलाजतु निषेवितम् ॥
न सोऽस्ति रोगो यश्चापि निहन्यान्न शिलाजतु ।
शर्करां चिरसम्भूतां भिनत्ति च तथाश्मरीम् ॥
भावनालोड़ने चास्य कर्त्तव्ये भेषजैर्हितैः ।
एवञ्च माक्षिकं धातुं तापीजममृतोपमम् ॥
मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् ।
पिबन्हन्ति जराकुष्ठमेहपाण्ड्वामयक्षयान् ॥
तद्भावितः कपोतांश्च कुलत्थांश्च विवर्जयेत् ।
पञ्चकर्मगुणातीतं श्रद्धावन्तं जिजीविषुम् ॥
योगेनानेन मतिमान्साधयेत्कुष्ठिनं नरम् ।
वृक्षास्तुवरका ये स्युः पश्चिमार्णवभूमिषु ॥

वीचीतरङ्गविक्षेपमारुतोद्धूतपल्लवाः।
तेषां फलानि गृह्णीयात्सुपक्कान्यम्बुदागमे॥
मज्जस्तेभ्योऽपि संहृत्य शोषयित्वा विचूर्ण्य च।
तिलवत्पीड़येद्द्रोण्यां स्रावयेद्वा कुसुम्भवत्॥
तत्तैलं संहृतं भूयः पचेदातोयसंचयात्।
अवतार्य्य करीषे च पक्षमात्रं निधापयेत्॥
स्निग्धः स्विन्नो हृतमलः पश्चादूर्द्ध्वं प्रयत्नवान्।
चतुर्थभक्तान्तरितः शुक्लादौ दिवसे शुभे॥
मन्त्रपूतस्य तैलस्य पिबेन्मात्रां यथाबलम्।
तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्रयेत्॥
मज्जसार महावीर्य्य सर्वान्धातून्विशोधय।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः॥
तेनास्योर्द्ध्वमधश्चापि दोषा यान्त्यसकृत्ततः।
अस्नेहलवणां सायं यवागूं शीतलां पिबेत्॥
पञ्चाहं प्रपिबेत्तैलमनेन विधिना नरः।
पक्षं परिहरेच्चापि मुद्गयूषौदनाशनः॥
पञ्चभिर्द्दिवसैरेवं सर्वकुष्ठैर्विमुच्यते।
तदेव खदिरक्काथे त्रिगुणे साधु साधितम्॥
निहन्ति पूर्ववत्पक्कं पिबेन्मासमतन्द्रितः।
तेनाभ्यक्तशरीरश्च कुर्व्वीताहारमीरितम्॥
भिन्नस्वरं रक्तनेत्रं विशीर्णं क्रिमिभक्षितम्।
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम्॥
सर्पिर्मधुयुतं पीतं तदेव खदिराम्बुना।

पक्षिमांसरसाहारं करोति द्विशतायुषम् ॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ।
वपुष्मन्तं श्रुतिधरं करोति त्रिशतायुषम् ॥
शोधयन्ति नरं पीता मज्जानस्तस्य मात्रया ।
महावीर्य्यस्तुवरकः कुष्ठमेहापहः परः ॥
सान्तर्द्धमस्तस्य मज्जा तु दग्धः क्षिप्तस्तैले सैन्धवं चाञ्जनञ्च ।
एतैर्हन्याद्दर्मनक्ताभ्यकाचान्नीलीरोगं तैमिरं चाञ्जनेन ॥

---

## चतुर्दशोऽध्यायः ।

अथात उदराणां चिकित्सितं व्याख्यास्यामः ।

अष्टावुदराणि पूर्व्वमुद्दिष्टानि तेष्वसाध्यं बद्धगुदं परिस्रावि चावशिष्टानि कृच्छ्रसाध्यानि सर्व्वाण्येव च प्रत्याख्यायोपक्रमेत । तेष्वाद्यश्चतुर्वर्गो भेषजसाध्यः । कालप्रकर्षात् सर्व्वाण्येव शस्त्रसाध्यानि वर्जयितव्यानि वा ।

उदरी तु गुर्व्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान्परिहरेत् । शालिषष्टिकयवगोधूमनीवारान्नित्यमश्नीयात् ।

तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा तिल्वकविपक्वेनानुलोम्य चित्राफलतैलप्रगाढ़ेन विदारिगन्धाकषायेणास्थापयेदनुवासयेच्च शाल्वणेन चोपनाहयेदुदरम् । भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन चाभीक्ष्णं स्वेदयेत् ।

पित्तोदरिणन्तु मधुरगणविपक्वेन सर्पिषा स्नेहयित्वा श्यामात्रिफलात्रिवृद्विपक्वेनानुलोम्य शर्करामधुघृतप्रगाढ़ेन न्यग्रोधादिकषायेणास्थापयेदनुवासयेच्च पायसेनोपनाहयेदुदरं भोजयेच्चैनं विदारिगन्धादिसिद्धेन पयसा।

श्लेष्मोदरिणं पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीर विपक्वेनानुलोम्य त्रिकटुकमूत्रक्षारतैलप्रगाढ़ेन मुष्ककादिकषायेणास्थापयेदनुवासयेच्च शणातसीधातकी-किण्वसर्षपमूलकबीजकल्कैश्चोपनाहयेदुदरं भोजयेच्चैनं त्रिक-टुकप्रगाढ़ेन कुलत्थयूषेण पायसेन वा स्वेदयेच्चाभीक्ष्णम्।

दूष्योदरिणन्तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरससिद्धेन सर्पिषा विरेचयेन्मासमर्द्धं मासं वा महावृक्षक्षीरसुरागो-मूत्रसिद्धेन वा शुद्धकोष्ठन्तु मद्येनाश्वमारकगुञ्जाकाकादनी-मूलकल्कं पाययेत्। इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेत्। वल्लीफलानि वा मूलजं कन्दजं वा विषमासेव-येत् तेनागदो भवत्यन्यं वा भावमापद्यते।

भवति चात्र।

कुपितानिलमूलत्वात्सञ्चयित्वान्मलस्य च।
सर्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम्॥

अत ऊर्द्धं सामान्ययोगान्वक्ष्यामः। तद्यथा। एरण्डतैल-महरहर्मासं द्वौ वा केवलमूत्रयुक्तं क्षीरयुक्तं वा सेवेतोदकवर्जी-माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रम्। उष्ट्रीक्षीरा-हारो वात्रवारिवर्जी पिप्पलीं वा मासं पूर्वोक्तेन विधानेना-सेवेत। सैन्धवाजमोदायुक्तं वा निकुम्भतैलम्। आर्द्रक-

शृङ्गवेररसपात्रशतसिद्धं वा वातशूलेऽवचार्य्यम् । शृङ्गवेर-रसविपक्वं क्षीरमासेवेत । चव्यशृङ्गवेरकल्कं वा पयसा सरलदेवदारुचित्रकमेव वा । सुरङ्गीशालपर्णीश्यामापुन-र्नवाकल्कं वा । ज्योतिष्कफलतैलं वा क्षीरेण स्वर्जिकाहिङ्गु-मिश्रं पिबेत् । गुड़द्वितीयां वा हरीतकीं भक्षयेत् । स्नुही-क्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन पथ्याकृष्णा-चूर्णं वा स्नुहीभावितामुत्कारिकां पक्वां दापयेत् । हरी-तकीचूर्णप्रस्थमाढ़के घृतस्याङ्गारेष्वभिविलाप्य खजेनाभि-मथ्यानुगुप्तं कृत्वार्द्धमासं यवपल्ले वासयेत् ततश्चोद्धृत्य परि-स्राव्य हरीतकीक्वाथाम्लदधीन्यावाप्य विपचेत् तद्यथायोगं मासमर्द्धमासं वा पाययेत् । गव्ये पयसि महावृक्षक्षीर-मावाप्य विपचेद्विपक्वं चावतार्य्य शीतीभूतं मन्थानेनाभिमथ्य नवनीतमादाय भूयो महावृक्षक्षीरेणैव विपचेत्तद्यथायोगं मासं मासार्द्धं वा पाययेत् । चव्यचित्रकदन्त्यतिविषाकुष्ठ-सारिवात्रिफलाजमोदहरिद्राशङ्खिनी-त्रिवृत्त्रिकटुकानामर्द्ध-कार्षिका भागा राजवृक्षफलमज्ज्ञनामष्टौ कर्षा महावृक्ष-क्षीरपले द्वे गवां क्षीरमूत्रयोरष्टावष्टौ पलानि एतत्सर्वं घृत-प्रस्थे समावाप्य विपचेत् तद्यथायोगं मासमर्द्धं मासं वा पाययेत् । एतानि तिल्वकघृतचतुर्थानि सर्पींष्युदरगुल्म-विद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचना-र्थम् । मूत्रासवारिष्टसुराश्चाभीक्ष्णं महावृक्षक्षीरसंभृताः सेवेत । विरेचनद्रव्यकषायं वा शृङ्गवेरदेवदारुप्रगाढ़म् । वमनविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादिवचादि-

हरिद्रादिपरिपठितानाञ्च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानाञ्च लवणानां तत्सर्वं मूत्रगणे प्रक्षिप्य महावृक्षक्षीरप्रस्थञ्च मृद्वग्निना घट्टयन्विपचेदप्रदग्धकल्कं तत्साधु सिद्धमवतार्य्य शीतीभूतमक्षमात्रां गुटिकां वर्त्तयेत्तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रींश्चतुरो वा सेवेत। एषानाहवर्त्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते कोष्ठजांश्च क्रमीनपहन्ति कासश्वासक्रमिकुष्ठप्रतिश्यायारोचका विपाकोदावर्त्तांश्च नाशयति। मदनफलमज्जकुटजजीमूतकेक्ष्वाकुधामार्गववित्रिवृत्त्रिकटुसर्षपलवणानि , महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्ट्वाङ्गुष्ठमात्रां वर्त्तिं कल्पोदरिण आनाहे तैललवणाभ्यक्तगुदस्यैकां द्वे वा पायौ निदध्यादेषानाहवर्त्तिक्रिया वातमूत्र पुरीषोदावर्त्ताध्मानानाहेषु विधेया।

प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ कुर्प्पराभ्यन्तरतः सिरां विध्येद्विमर्द्दयेत्पाणिना प्लीहानं रुधिरस्यन्दनार्थं ततः संशुद्धदेहं समुद्रशुक्तिकाक्षारं पयसा पाययेतहिङ्गुसौवर्च्चिकाक्षारेण सुतेन पलाशक्षारेण वा यवाक्षारम्। पारिजातकेक्षुरकापामार्गक्षारं वा तैलसंसृष्टम्। शोभाञ्जनकषायं वा पिप्पलीसैन्धवचित्रकयुक्तम्। पूतिकरञ्जक्षारं वाम्लसुतं विड़लवणपिप्पलीप्रगाढ़म्।

पिप्पलीपिप्पलीमूलचित्रकशृङ्गवेरयवक्षारसैन्धवानां पालिकाभागा घृतप्रस्थं तत्तुल्यं क्षीरं तदैकध्यं विपाचयेदेतत् षट्पलकं नाम सर्पिः प्लीहाग्निवङ्गगुल्मोदरोदावर्त्तश्वयथुपाण्डुरोगकास-श्वास-प्रतिश्यायोर्द्ध-वातविषम-ज्वरानपहन्ति

मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत यकृद्दाल्प्येऽप्येष एव क्रियाविभागः विशेषतस्तु दक्षिणबाहौ सिराव्यधः ।

मणिबन्धं समुन्नाम्य वामाङ्गुष्ठसमीरिताम् ।
दहेत्सिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये ॥

बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणान्यन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं बालं वापोह्य मलजातं वा ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान्संशोध्य तच्छिद्रमन्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत् दष्टे च तासां कायानपहरेन्न शिरांसि ततः पूर्ववत्सीव्येत् सन्धानञ्च यथोक्तं कारयेत् यष्टीमधुकमिश्रया च कृष्णमृदावलिप्य बन्धेनोपचरेत्ततो निवातमागारं प्रवेश्याचारिकमुपदिशेद्वासयेच्चैनं तैलद्रोण्यां सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ।

उदकोदरिणस्तु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्य स्थितस्याप्तैः सुपरिगृहीतस्याकक्षात्परिवेष्टितस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत् । तत्र त्रपुसीसादीनामन्यतमस्य नाडीं द्विद्वारां पक्षनाडीं वा संयोज्य दोषोदकमवसिञ्चेत्ततो नाडीमपहृत्य तैललवणेनाभ्यज्य व्रणबन्धेनोपचरेन्नचैकस्मिन्नेव दिवसे सर्व्वं दोषोदकमपहरेत् सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दा-

तीसारश्वासपाददाहा उत्पद्येरन्नापूर्य्यते वा भूयतरमुद-रमसञ्जातप्राणस्य तस्मात्तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वा-दशषोड़शरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमव-सिञ्चेत्। निःसृते निःसृते च दोषे गाढ़तरमाविककौशेय-चर्म्मणामन्यतमेन परिवेष्टयेदुदरं तथा नाध्मायति वायुः षण्मासांश्च पयसा भोजयेज्जाङ्गलरसेन वा तत्र त्रीन्मासा-नर्द्धोदकेन पयसा फलाम्लेन जाङ्गलरसेन वावशिष्टं मासत्रय-मन्नं लघु हितं वा सेवेतैवं संवत्सरेणागदी भवति।

भवति चात्र।

आस्थापने चैव विरेचने च पाने तथाहारविधिक्रियासु।
सर्वोदरिभ्यः कुशलैः प्रयोज्यं क्षीरं शृतं जाङ्गलजो रसो वा॥

---

## पञ्चदशोऽध्यायः।

अथातो मूढ़गर्भचिकित्सितं व्याख्यास्यामः।

नातः कष्टतममस्ति यथामूढ़गर्भशल्योद्धरणमत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्त्तव्यं स्पर्शेन। उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदन-पीड़नजूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं वा हिंसता तस्मादधिपतिमापृच्छ्य परञ्च यत्नमास्थायोपक्रमेत।

तत्र समासेनाष्टविधा मूढ़गर्भगतिरुद्दिष्टा स्वभावगता अपि त्रयः सङ्गा भवन्ति शिरसोवैगुण्यादंसयोर्जघनस्य वा।

जीवति तु गर्भे सूतिका गर्भनिर्हरणे प्रयतेत निर्हर्त्तुमशक्ये च्यवनान्मन्त्रानुपश्रृणुयात् तान्वक्ष्यामः।

इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥
इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्री।
तदनलपवनार्कवासवास्ते सहलवणाम्बुधरैर्दिशन्तु शान्तिम्॥
मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्य्येण रश्मयः।
मुक्तः सर्वभयाद्गर्भ एह्येहि विरमावितः॥

औषधानि च विदध्याद्यथोक्तानि। मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वनगवृत्तिकाशाल्मलीमृत्स्नघृताभ्यां मृक्षयित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत्। तत्र सक्थिभ्यामागतमनुलोममेवाच्छेत्। एकसक्थिप्रपन्नस्येतरसक्थि प्रसार्य्यापहरेत्। स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्द्ध्वमुत्क्षिप्य सक्थिनी प्रसार्य्यापहरेत्। तिर्य्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्द्धमूर्द्ध्वमुत्क्षिप्य पूर्व्वार्द्धमपत्यपथं प्रत्यार्जवमानीयापहरेत्। पार्श्वापवृत्तशिरसमंसम्प्रपीड्योर्द्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्। बाहुद्वयप्रतिपन्नस्योर्द्ध्वमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत्। द्वावन्त्यावसाध्यौ मूढ़गर्भौ। एवमशक्ये शस्त्रमवचारयेत्।

सचेतनञ्च शस्त्रेण न कथञ्चन दारयेत्।
दार्य्यमाणो हि जननीमात्मानं चैव घातयेत्॥

तत्र म्रियमाणायास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो

विदार्य्य शिरःकपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वापहरेदभिन्ने शिरसि चाक्षिकूटे गण्डे वा अंसंसंसक्तस्यांसदेशे बाहुं च्छित्त्वा दृतिमिवाततं वातपूर्णोदरं वा विदार्य्य निरस्यान्त्राणि शिथिलीभूतमाहरेज्जघनसक्तस्य वा जघनकपालानीति।

यद्यदङ्गं हि गर्भस्य तस्य स्वजति तद्भिषक्।
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीञ्च यत्नतः॥
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः।
तत्रानल्पमतिर्वैद्यो वर्त्तेत विधिपूर्वकम्॥
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः।
स ह्याशु जननीं हन्ति निरुच्छासं पशुं यथा॥
मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता।
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात्कदाचन॥
अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक्।
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा॥
धुनुयाच्च मुहुर्नारीं पीड़येद्वांसपिण्डिकाम्।
तैलाक्तयोनेरेवं तां पातयेन्मतिमान्भिषक्॥
एवं निर्हृतशल्यान्तु सिञ्चेदुष्णेन वारिणा।
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत्॥
एवं मृद्वीभवेद्योनिस्तच्छूलं चोपशाम्यति।
कृष्णातन्मूलशुण्ठेलाहिङ्गुभार्गीसदीप्यकाः॥
वचामतिविषां रास्नां चव्यं सञ्चूर्ण्य पाययेत्।
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च।

क्वाथं चैषां तथा कल्कं चूर्णं वा स्नेहवर्जितम् ।
शाकत्वग्धिङ्गुतिविषापाठाकटुकरोहिणीः ॥
तथा तेजोवतीं चापि पाययेत्पूर्ववद्भिषक् ।
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत् ॥
पाययेद्दासवं नक्तमरिष्टं वा सुसंस्कृतम् ।
शिरीषककुभाभ्याञ्च तोयमाचमने हितम् ॥
उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ।
सर्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना ॥
स्वेदाभ्यङ्गपरा नित्यं भवेत्क्रोधविवर्जिता ।
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ॥
रसं दशाहं शेषे तु यथायोगमुपाचरेत् ।
व्युपद्रवां विशुद्धाञ्च ज्ञात्वा च बलवर्णिनीम् ॥
ऊर्द्धं चतुर्भ्यो मासेभ्यो विसृजेत्परिहारतः ।
योनिसन्तर्पणेऽभ्यङ्गे पाने वस्तिषु भोजने ॥
बलातैलमिदं वास्यै दद्यादनिलवारणम् ।
बलामूलकषायस्य दशमूलीकृतस्य च ॥
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ।
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ॥
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ।
तथागुरुं सर्जरसं सरलं देवदारु च ॥
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ।
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥

तत्साधु सिद्धं सौवर्णे राजते मृन्मयेऽपि वा॥
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत्।
बलातैलमिदं ख्यातं सर्ववातविकारनुत्॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत्।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्॥
वातक्षीणे मर्महते मथितेऽभिहते तथा।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते॥
एतदाक्षेपकादींश्च वातव्याधीनपोहति।
हिक्कां कासमधीमन्थं गुल्मं श्वासञ्च दुस्तरम्॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः॥
राज्ञामेतद्धि कर्त्तव्यं राजमात्राश्च ये नराः।
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः॥
बलाकषायपीतो यस्तिलेभ्यो वाप्यनेकशः।
तैलमुत्पाद्य तत्क्वाथशतपाककृतं शुभम्॥
निवाते निभृतागारे प्रयुञ्जीत यथाबलम्।
जीर्णेऽस्मिन्पयसा स्निग्धमश्नीयात्षष्टिकौदनम्॥
अनेन विधिना द्रोणमुपयुज्यान्नमीरितम्।
भुञ्जीत द्विगुणं कालं बलवर्णान्वितस्ततः॥
सर्वपापैर्विनिर्मुक्तः शतायुः पुरुषो भवेत्।
शतं शतं तथोत्कर्षो द्रोणे द्रोणे प्रकीर्त्तितः॥
बलाकल्पेनातिबलागुडूच्यादित्यपर्णिषु।
सैरेयके वीरतरौ शतावर्य्यां त्रिकण्टके॥

तैलानि मधुके कुर्य्यात् प्रसारण्याञ्च बुद्धिमान् ।
नीलोत्पलं वरीमूलं गव्ये चीरे विपाचयेत् ॥
शतपाकं ततस्तेन तिलतैलं पचेद्भिषक् ।
बलातैलस्य कल्कांस्तु सुपिष्टांस्तत्र दापयेत् ॥
सर्व्वेषामेव जानीयादुपयोगं चिकित्सकः ।
बलातैलवदेतेषां गुणांश्चैव विशेषतः ॥

---

## षोड़शोऽध्यायः ।

अथातोविद्रधीनां चिकित्सितं व्याख्यास्यामः ॥

उक्ता विद्रधयः षड्वै तेष्वसाध्यस्तु सर्व्वजः ।
शेषेष्वामेषु कर्त्तव्या त्वरितं शोफवत्क्रिया ॥
मुरङ्गीमूलकल्कैस्तु घृततैलवसायुतैः ।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥
सानूपौदकमांसस्तु काकोल्यादिः सतर्पणः ।
स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने ॥
वेशवारैः सकृशरैः पयोभिः पायसैस्तथा ।
स्वेदयेत्सततं चापि निर्हरेच्चापि शोणितम् ॥
सचेदेवमुपक्रान्तः पाकायाभिमुखो यदि ।
तं पाचयित्वा शस्त्रेण भिन्द्याद्भिन्नञ्च शोधयेत् ॥
पञ्चमूलकषायेण प्रचाल्य लवणोत्तरैः ।

तैलैर्भद्रादिमधुकसंयुक्तैः प्रतिपूरयेत् ॥
वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च।
पृथक्पर्ण्यादिसिद्धेन त्रैवृतेन च रोपयेत् ॥
पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः।
प्रदिह्यात्क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥
पाक्यैः शीतकषायैर्वा क्षीरैरिक्षुरसैस्तथा।
जीवनीयघृतैर्वापि सेचयेच्छर्करायुतैः ॥
त्रिवृद्धरीतकीनाञ्च चूर्णं लिह्यान्मधुद्रवम्।
जलौकोभिर्हरेच्चासृक्पक्वं चापाद्य बुद्धिमान् ॥
क्षीरवृक्षकषायेण प्रक्षाल्यौदकजेन वा।
तिलैः सयष्टिमधुकैः सक्षौद्रैः सर्पिषा युतैः ॥
उपदिह्य प्रतनुना वाससा वेष्टयेद्व्रणम्।
प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः ॥
सहरिद्रैः कृतं सर्पिः सक्षीरं व्रणरोपणम्।
क्षीरशुक्लापृथक्पर्णीसमङ्गारोध्रचन्दनैः ॥
न्यग्रोधादिप्रवालेषु देयं तच्चाथवा कृतम्।
नक्तमालस्य पत्राणि तरुणानि फलानि च ॥
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा।
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ॥
प्रियङ्गुः कुशमूलञ्च निचुलस्य त्वगेव च।
मञ्जिष्ठाचन्दनोशीरमुत्पलं सारिवा त्रिवृत् ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्।
दुष्टव्रणप्रशमनं नाड़ीव्रणविशोधनम् ॥

सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम् ।
दुष्टव्रणाश्च ये केचिद्ये चोत्सृष्टक्रिया व्रणाः ॥
नाड़्यो गम्भीरिका याश्च सद्यश्छिन्नास्तथैव च ।
अभिचारकृताश्चैव ये व्रणा दारुणा अपि ॥
करञ्जाद्येन हविषा प्रशाम्यन्ति न संशयः ।
इष्टकासिकतालोहगोशकृत्तुषपांशुभिः ॥
मूत्रैरुष्णैश्च सततं स्वेदयेत्श्लेश्मविद्रधिम् ।
कषायपानैर्वमनैरालेपैरुपनाहनैः ॥
हरेद्दोषानभीक्ष्णं चाप्यलाव्वास्त्रथैव च ।
आरग्वधकषायेण पक्वं चापाद्य धावयेत् ॥
हरिद्राचित्रताशक्तुतिलैर्मधुसमायुतैः ।
पूरयित्वा व्रणं सम्यग्बध्नीयात्कीर्त्तितं यथा ॥
ततः कुलत्थिकादन्तीत्रिवृच्छ्यामार्कतिल्वकैः ।
कुर्य्यात्तैलं सगोमूत्रं हितं तत्र ससैन्धवम् ॥
पित्तविद्रधिवत्सर्व्वाः क्रिया निरवशेषतः ।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥
वरुणादिगणक्काथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेद्विद्रधिशान्तये ॥
अनयोर्वर्गयोः सिद्धं सर्पिर्व्विरेचनेन च ।
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितम् ॥
एभिरेव गणैश्चापि संसिद्धं स्नेहसंयुतम् ।
कार्य्यमास्थापनं क्षिप्रं तथैवाप्यनुवासनम् ॥
पानालेपनभोज्येषु मधुशिग्रुर्द्रुमोऽपि वा ।

दत्त्वावापो यथादोषमपक्वं हन्ति विद्रधिम् ॥
तोयधान्याम्लमूत्रैस्तु पेयो वापि सुरादिभिः ॥
यथादोषगणक्वाथैः पिबेद्वापि शिलाजतु ॥
प्रधानं गुग्गुलुञ्चापि शुण्ठींच सुरदारु च।
स्नेहोपनाहौ कुर्य्याच्च सदा चाप्यनुलोमनम् ॥
यथोद्दिष्टां सिरां विध्येत्कफजे विद्रधौ भिषक्।
रक्तपित्तानिलोत्थेषु केचिद्दाहौ वदन्ति तु ॥
पक्वं वा बहिरुन्नद्धं भित्त्वा व्रणवदाचरेत्।
स्नुतेषूर्द्ध्वमधो वापि मैरेयाम्लसुरासवैः ॥
पेयो वरुणकादिस्तु मधुशिग्रुद्रुमोऽपि वा।
शिग्रुमूलजले सिद्धं ससिद्धार्थकमोदनम् ॥
यवकोलकुलत्थानां यूषैर्भुञ्जीत मानवः।
प्रातः प्रातश्च सेवेत मात्रया तैल्वकं घृतम् ॥
त्रिवृतादिगणक्वाथसिद्धं वाप्युपशान्तये।
नोपगच्छेद्यथापाकं प्रयतेत तथा भिषक् ॥
पर्य्यागते विद्रधौ तु सिद्धिर्नैकान्तिकी स्मृता।
प्रत्याख्याय तु कुर्वीत मज्जजातं तु विद्रधिम् ॥
स्नेहस्वेदोपपन्नानां कुर्य्याद्रक्तावसेचनम्।
विद्रध्युक्तां क्रियां कुर्य्यात्पक्वे वास्थि तु भेदयेत् ॥
निःशल्यमथ विज्ञाय कर्त्तव्यं व्रणशोधनम्।
धावेत्तिक्तकषायेण तिक्तं सर्पिस्तथा हितम्।
यदि मज्जपरिस्रावो न निवर्त्तेत देहिनः ॥
कुर्य्यात्संशोधनीयानि कषायादीनि बुद्धिमान्।

प्रियङ्गुधातकीरोध्रकट्फलं तिनिसैन्धवम् ॥
एतैस्तैलं विपक्तव्यं विद्रधिव्रणरोपणम् ॥

---

सप्तदशोऽध्यायः ।

अथातो विसर्पनाड़ीस्तनरोगचिकित्सितं व्याख्यास्यामः ।
साध्या विसर्पास्त्रय आदितो ये न सन्निपातक्षतजौ हि साध्यौ ।
साध्येषु तत्पथ्यगणैर्विदध्याद्घृतानि सेकांश्च तथोपदेहान् ॥
मुस्ताभ्रताह्वासुरदारुकुष्ठं वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातात्मके चोष्णगणाः प्रयोज्याः सेकेषु लेपेषु तथा घृतेषु ॥
यत्पञ्चमूलं खलु कण्टकाख्यमल्पं महच्चाप्यथ वल्लिजञ्च ।
तच्चोपयोज्यं भिषजा प्रदेहे सेके घृते चापि तथैव तैले ॥
कसेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ।
ह्रीवेरलामज्जकचन्दनानि स्रोतोजमुक्तामणिगैरिकाश्च ।
क्षीरेण पिष्टाः सघृताः सुशीता लेपाः प्रयोज्यास्तनवः सुखाय ॥
प्रपौण्डरीकं मधुकं पयस्या मञ्जिष्ठिका पद्मकचन्दने च ।
सुगन्धिका चेति सुखाय लेपाः पैत्ते विसर्पे भिषजा प्रयोज्याः ॥
न्यग्रोधवर्गैः परिषेचनञ्च घृतञ्च कुर्य्यात्स्वरसेन तस्य ।
शीतैः पयोभिश्च मधूदकैश्च सशर्करैरिक्षुरसैश्च सेकान् ॥
घृतस्य गौरीमधुकारविन्दरोध्राम्बुराजादनगैरिकेषु ।
तथार्षभे पद्मकसारिवासु काकोलिमेदाकुमुदोत्पलेषु ॥

सचन्दनायां मधुशर्करायां द्राक्षास्थिरापृश्निशताह्वयासु।
कल्कीकृतासूदकमत्र दत्वा न्यग्रोधवर्गस्य तथा स्थिरादेः॥
गणस्य विल्वादिकपञ्चमूल्याश्चतुर्गुणं क्षीरमथापि तद्वत्।
प्रस्थं विपक्कं परिषेचनेन पैत्तीर्निहन्यात्तु विसर्पनाड़ीः॥
विस्फोटदुष्टव्रणशीर्षरोगान्पाकं तथास्यस्य निहन्ति पानात्।
ग्रहाहिते शोषिणि चापि बाले,घृतं हि गौर्य्यादिकमेतदिष्टम्॥
अजाश्वगन्धा सरला सकाला सैकैषिका चाप्यथवाजशृङ्गी।
गोमूत्रपिष्टो विहितः प्रदेहो हन्याद्विसर्प्पं कफजं स शीघ्रम्॥
कालानुसार्य्यागुरुचोचगुञ्जारास्नावचाशीतशिवेन्द्रपर्ण्यः।
पालिन्दिमुञ्जातमहौकदस्वा हिता विसर्पेषु कफात्मकेषु॥
गणस्तु योज्यो वरुणप्रवृत्तः क्रियासु सर्वासु विचक्षणेन।
संशोधनं शोणितमोक्षणञ्च श्रेष्ठं विसर्पेषु चिकित्सितं हि॥
सर्वांश्च पक्कान्परिशोध्य धीमान्व्रणक्रमेणोपचरेद्यथोक्तम्।
नाड़ी त्रिदोषप्रभवा न सिध्येच्छेषास्तुतस्त्रः प्रतियत्नसाध्याः॥
तत्रानिलोत्थामुपनाह्य पूर्वमशेषतः पूयगतिं विदार्य्य।
तिलैरपामार्गफलैश्च पिष्ट्वा ससैन्धवैर्बन्धनमत्र कुर्य्यात्॥
प्रक्षालने चापि सदा व्रणस्य योज्यं महद्यत्खलु पञ्चमूलम्।
हिंस्रां हरिद्रां कटुकां बलाञ्च गोजिह्विकाञ्चापि सविल्वमूलाम्
संहृत्य तैलं विपचेद्व्रणस्य संशोधनं पूरणरोपणञ्च।
पित्तात्मिकां प्रागुपनाह्य धीमानुत्कारिकाभिः सपयोघृताभिः
निपात्य शस्त्रं तिलनागदन्तीयष्ट्याह्वकल्कैः परिपूरयेत्ताम्।
प्रक्षालने चापि ससोमनिम्बा निशा प्रयोज्या कुशलेन नित्यम्।
श्यामात्रिभण्डीत्रिफलासु सिद्धं हरिद्रयोरोध्रकवृक्षयोश्च।

घृतं सदुग्धं व्रणतर्पणेन हन्याद्गतिं कोष्ठगतापि या स्यात् ॥
नाड़ीं कफोत्थामुपनाह्य सम्यक्कुलत्थसिद्धार्थकशक्तुकिण्वैः ।
मृदूकृतामेष्य गतिं विदित्वा निपातयेच्छस्त्रमशेषकारी ॥
दद्याद्व्रणे निम्बतिलान्सुपिष्टान् सुराष्ट्रजासैन्धवसम्प्रयुक्तान् ।
प्रक्षालने चापि करञ्जनिम्बजात्यक्षपीलुस्वरसाः प्रयोज्याः ॥
सुवर्चिकासैन्धवचित्रकेषु निकुम्भतालीनलरूपिकासु ।
फलेष्वपामार्गभवेषु चैव कुर्य्यात्समूत्रेषु हिताय तैलम् ॥
नाड़ीन्तु शल्यप्रभवां विदार्य्य निर्हृत्य शल्यं प्रविशोध्य मार्गम् ।
संशोधयेत्क्षौद्रघृतप्रगाढ़ैस्तिलैस्ततो रोपणमस्य कुर्य्यात् ॥
कुम्भीकखर्जूरकपित्थविल्ववनस्पतीनाञ्च शलाटुवर्गे ।
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तासुरसाप्रियङ्गूः ॥
सुगन्धिकामोचरसाहिपुष्पं रोध्रं विदध्यादपि धातकीञ्च ।
एतेन शल्यप्रभवा च नाड़ी रोहेद्व्रणो वा सुखमाशु चैव ॥

कृशदुर्बलभीरूणां नाड़ी मर्म्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्नतु शस्त्रेण बुद्धिमान् ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।
सूचीं निदध्याद्गत्यन्ते तथोन्नम्याशु निर्हरेत् ॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत् ।
क्षाराक्तं मतिमान्वैद्यो यावन्नच्छिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता ॥
अर्व्वुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ।

मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम् ॥
या द्विव्रणीयेऽभिहितास्तु वर्त्त्यस्ताः सर्वनाड़ीषु भिषग्विदध्यात्।
घोण्टाफलत्वग्लवणानि लाक्षा पूगीफलं वा लवणञ्च पत्रम् ॥
स्नुह्यर्कदुग्धेन तु कल्क एष वर्त्तीकृतो हन्त्यचिरेण नाड़ीः ।
विभीतकाम्रास्थिवटप्रवाला हरेणुकाशङ्खिनिवीजमस्य ॥
वाराहिकन्दश्च तथा प्रदेयो नाड़ीषु तैलेन च मिश्रयित्वा ।

धुस्तूरजं मदनकोद्रवजञ्च वीजं
कोशातकीशुकनसाश्वगभोजनी च ।
अङ्कोठवीजकुसुमं गतिषु प्रयोज्यं
लाक्षोदकाहृतमलासु विकृत्य चूर्णम् ॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव
तैलप्रयुक्तमचिरेण गतिं निहन्ति ।
एष्वेव मूलसहितेषु विधाय तैलं
तत्साधितं गतिमपोहति सप्तरात्रात् ।
पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सीवहेषु ॥
तैलं कृतं गतिमपोहति शीघ्रमेत-
त्कन्देषु चामरवरायुधसाह्वयेषु ।
भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विड़ङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाड़ीं कफानिलकृतामपचीं व्रणांश्च ॥
स्तन्ये गते विकृतिमाशु भिषक्तु धात्रीं

पीतां घृतं परिणतेऽहनि वामयेत्तु ।
निम्बोदकेन मधुमागधिकायुतेन
वान्तागतेऽहनि च मुद्गरसाशना स्यात् ॥
एवं त्र्यहं चतुरहं षडहं वमेद्वा
सर्पिः पिबेत्त्रिफलया सह संयुतं वा ।
भार्गीं वचामतिविषां सुरदारु पाठां
मुस्तादिकं मधुरसां कटुरोहिणीञ्च ॥
धात्रीं पिबेत्तु पयसः परिशोधनार्थ-
मारग्वधादिषु वरं मधुना कषायम् ।
सामान्यमेतदुपदिष्टमतोविशेषा-
द्दोषान्पयोनिपतितान् शमयेद्यथास्वम् ॥
रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्यद्विद्रधावभिहितं बहुशो विधानम् ।
सम्पच्यमानमपि तन्तु विनोपनाहैः
सम्भोजनेन खलु पाचयितुं यतेत ॥
शीघ्रं स्तनोहि मृदुमांसतयोपनद्धः
सर्वं प्रकोथमुपयात्यवदीर्य्यते च ।
पक्वे च दुग्धहरिणीः परिहृत्य नाडीः
कृष्णञ्च चूचुकयुगं विदधीत शस्त्रम् ॥
आमे विदाहिनि तथैव गते च पाकं
धाव्याः स्तनौ सततमेव च निर्दहीत ॥

---

## अष्टादशोऽध्यायः।

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः॥

ग्रन्थिष्वथामेषु भिषग्विदध्याच्छोफक्रियायां विहितं विधिज्ञः।
रक्षेद्बलं चापि नरस्य नित्यं तद्रक्षितं व्याधिबलं निहन्ति॥
तैलं पिबेत्सर्पिरथो हयं वा दत्वा वसां वा विहृतं विदध्यात्।
अपेहिवातादशमूलसिद्धं वैद्यश्चतुःस्नेहमथो हयं वा॥
हिंस्राथ रोहिण्यमृताथ भार्गी श्योनाकविल्वागुरुकृष्णगन्धाः।
गोजी च पिष्टा सहतालपत्त्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः॥
स्वेदोपनाहान्विविधांश्च कुर्य्यात्तथा प्रसिद्धानपरांश्च लेपान्।
विदार्य्य वा पक्वमपोह्य पूयं प्रक्षाल्य विल्वार्कनरेन्द्रतोयैः॥
तिलैः सपञ्चाङ्गुलपत्त्रमिश्रैः संशोधयेत्सैन्धवसम्प्रयुक्तैः।
शुद्धं व्रणं चाप्युपरोपयेयुस्तैलेन रास्नासरलान्वितेन॥
विडङ्गयष्टीमधुकामृताभिः सिद्धेन वा क्षीरसमन्वितेन।
जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च॥
काकोलिवर्गस्य च शीतलानि पिबेत्कषायाणि सशर्कराणि।
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेच्चापि हरीतकीनाम्॥
मधूकजम्ब्वर्ज्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत।
सशर्क्करैर्व्वा तृणशून्यकन्दैर्दिह्यादभीक्ष्णं मुचुकुन्दजैर्वा॥
विदार्य्य वा पक्वमपोह्य पूयं धावेत्कषायेण वनस्पतीनाम्।
तिलैः सयष्टीमधुकैर्व्विशोध्य सर्पिः प्रयोज्यं मधुरैर्व्विपक्वम्॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु।
स्विन्नस्य विम्लापनमेव कुर्य्याद‌ङ्गुष्ठलोहोपलवेणुदण्डैः॥

विकङ्कतारग्वधकाकनन्तीकाकादनीतापसवृक्षमूलैः ।
आलेपयेत्पिण्डफलार्कभार्गीकरञ्जकालामदनैश्च विद्वान् ॥
अमर्मजातं भ्रममप्रयातमपक्वमेवापहरेद्विदार्य्य ।
दहेत्स्थिते वासृजि सिद्धकर्म्मा सद्यःक्षतोक्तञ्च विधिं विदध्यात्
या मांसकन्द्यः कठिना वृहत्यस्ताश्वेष योज्यश्च विधिर्विधिज्ञैः ।
शस्त्रेण वापाद्य सुपक्वमाशु प्रक्षालयेत्पथ्यतमैः कषायैः ॥
संशोधनैस्तञ्च विशोधयेयुः क्षारोत्तरैः क्षौद्रघृतप्रगाढैः ।
शुद्धे च तैलं लवणक्षारणीयं विडङ्गपाठारजनीविपक्वम् ॥
मेदःसमुत्थे तिलकल्कदिग्धं दत्वोपरिष्टाद्विगुणं पटान्तम् ।
हुताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमान्दहनं हिताय ॥
प्रलिप्य दार्व्वीमथ लाक्षया वा प्रतप्तया स्वेदनमस्य कार्य्यम् ।
निपात्य वा शस्त्रमपोह्य मेदो दहेत्सु पक्वान्यथ वा विदार्य्यम् ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः सुवर्चिकाद्यैर्हरितालमिश्रैः ।
ससैन्धवैः क्षौद्रघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य ॥
तैलं विदध्याद्विकरञ्जगुञ्जावंशावलेखेङ्गुदमूत्रसिद्धम् ।
जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु चैव ॥
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधाप्रवृत्तं तदुदारवीर्य्यम् ।
निर्गुण्डिजातीवरिहिष्ठयुक्तं जीमूतकं माक्षिकसैन्धवाढ्यम् ॥
अभिप्रतप्तं वमनं प्रगाढं दुष्टापचीषूत्तममादिशन्ति ।
कैटर्य्यबिम्बीकरवीरसिद्धं तैलं हितं मूर्द्धविरेचनञ्च ॥
शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्य विरेचनेषु ।
मधूकसारश्च हितोऽवपीड़े फलानि शिग्रोः खरमञ्जरेर्वा ॥
ग्रन्थीनमर्मप्रभवानपक्वानुधृत्य चाग्निं विदधीत पश्चात् ।

क्षारेण वापि प्रतिसारयेत्तु, संलिख्य शस्त्रेण यथोपदेशम् ॥
पार्ष्णिं प्रति द्वादशचाङ्गुलानि भित्त्वेन्द्रवस्तिं परिवर्ज्य धीमान्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो निःकृष्य जालान्यनलं विदध्यात्॥
आगुल्फकर्णात्सु मितस्य जन्तोस्तस्याष्टभागं खुलकादिभज्य।
घोणर्जु वेधः सुरराजवस्तेर्हित्वाक्षिमात्रं त्वपरे वदन्ति ॥
मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक्।
अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥
चूर्णैश्च काले प्रचलाककाकगोधाहिकूर्म्मप्रभवां मसीन्तु।
दद्याच्च तैलेन सहेङ्गुदीनां यद्वक्ष्यते श्लीपदिनाञ्च तैलम् ॥
विरेचनं धूममुपाददीत भवेच्च नित्यं यवमुद्गभोजी।
कर्क्कारुकैर्व्वारुकनारिकेरपियालपञ्चाङ्गुलबीजचूर्णैः ॥
वातार्वुदं क्षीरघृताम्बुसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु।
कुर्य्याच्च मुख्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेसवारैः ॥
स्वेदं विदध्यात्कुशलस्तु नाड्या शृङ्गेन रक्तं बहुशो हरेच्च।
वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धं शताख्यं त्रिवृतं पिबेद्वा ॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्व्वुदे कायविरेचनञ्च।
विघृष्य चोडुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गरोध्राञ्जनयष्टिकाह्वैः।
विस्राव्य चारग्वधगोजिसोमाः श्यामा च योज्या कुशलेन लेपे
श्यामागिरिह्वाञ्जनकीरसेषु द्राक्षारसे सप्तलिकारसे च।
घृतं पिबेत्क्लीतकसंप्रसिद्धं पित्तार्वुदी तज्जठरी च जन्तुः ॥
शुद्धस्य जन्तोः कफजेऽर्वुदे तु रक्तेऽवसिक्ते तु ततोऽर्वुदं तत्।
द्रव्याणि यान्यूर्द्ध्वमधश्च दोषान्हरन्ति तैः कल्ककृतैः प्रदिह्यात्

कपोतपारावतविड्विमिश्रैः सकांस्यनीलैः शुकलाङ्गलाख्यैः ।
मूत्रैस्तु काकादनिमूलमिश्रैः क्षारप्रदिग्धैरथ वा प्रदिह्यात् ॥
निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढ़ैर्दधिमस्तुयुक्तैः ।
लेपं विदध्यात् कृमयो यथात्र मूर्च्छन्ति मूर्च्छन्त्यथ मक्षिकाश्च ॥
अल्पावशिष्टे कृमिभिः कृते च लिखेत्ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसपट्टैः समावेष्ट्य तदायसैर्वा ॥
क्षाराग्निशस्त्राण्यसकृद्विदध्यात्प्राणानहिंसन् भिषगप्रमत्तः ।
आस्फोतजातीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम् ॥
शुद्धे च तैलं विदधीत भार्गीविड़ङ्गपठात्रिफलाविपक्वम् ।
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥
मेदोऽर्वुदं स्विन्नमथो विदार्य्य विशोध्य सीव्येद्गतरक्तमाशु ।
ततो हरिद्रागृहधूमरोध्रपत्तङ्गचूर्णैः समनःशिलालैः ॥
व्रणं प्रतिग्राह्य मधुप्रगाढैः करञ्जतैलं विदधीत शुद्धे ।
सशेषदोषाणि हि योऽर्वुदानि करोति तान्याशु पुनर्भवन्ति ॥
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथाहि वह्निः ।
संस्वेद्य गण्डं पवनोत्थमादौ नाड़्यानिलघ्नौषधपत्रभङ्गैः ॥
अम्लैः समूत्रैर्विविधैः पयोभिरुष्णैः सतैलैः पिशितैश्च विद्वान् ।
विस्रावयेत्स्विन्नमतन्द्रितश्च शुद्धं व्रणं चाप्युपनाहयेत्तु ॥
शणातसीमूलकशिग्रुकिण्वप्रियालमज्जानुयुतैस्तिलैस्तु ।
कालामृताशिग्रु पुनर्नवार्कगजादिनामाकरहाटकुष्ठैः ॥
एकैषिकावृश्चकतिल्वकैश्च सुराम्लपिष्टैरसकृद्विदिह्यात् ॥
तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृश्चकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी ॥

स्वेदोपनाहैः कफसम्भवन्तु संस्वेद्य विस्रावणमेव कुर्य्यात्।
ततोऽजगन्धातिविषाविशल्याविषाणिकाकुष्ठशुकाह्वयाभिः॥
पलाशभस्मोदकपेषिताभिर्दिह्यात्सगुञ्जाभिरशीतलाभिः।
दशार्द्धसङ्ख्यैर्लवणैश्च युक्तं तैलं पिबेन्मागधिकादिसिद्धम्॥
प्रच्छर्दनं मूर्द्धविरेचनञ्च धूमश्च वैरेचनिको हितस्तु।
पाकक्रमोवापि सदाविधेयो वैद्येन पाकं गतयोः कथञ्चित्॥
कटुत्रिकचौद्रयुताः समूत्रा भक्ष्या यवान्नानि रसाश्च मौद्गाः।
सश्टङ्गवेराः सपटोलनिम्बा हिताय देया गलगण्डरोगे॥
मेदः समुत्थे तु यथोपदिष्टां विध्येत्सिरां स्निग्धतनोर्नरस्य।
श्यामासुधालोहपुरीषदन्तीरसाञ्जनैश्चापि हितः प्रदेहः॥
मूत्रेण वालोड्य हिताय सारं प्रातः पिबेच्छालमहीरुहाणाम्।
शस्त्रेण वापाद्य विदार्य चैनं मेदः समुद्धृत्य हिताय सीव्येत्॥
मज्जाज्यमेदोमधुभिर्द्दहेद्वा दग्धे च सर्पिर्मधु चावचार्य्यम्।
कासीसतुल्ये च ततोऽत्र देये चूर्णीकृते रोचनया समेते॥
तैलेन चाभ्यज्य हिताय दद्यात्सारोद्भवं गोमयजञ्च भस्म॥
हितश्च नित्यं त्रिफलाकषायो गाढ़श्च बन्धो यवभोजनञ्च॥

---

## एकोनविंशोऽध्यायः।

अथातो वृद्धूपदंशश्लीपदानां चिकित्सितं व्याख्यास्यामः।
अन्त्रवृद्धा विना षड्वा वृद्धयस्तासु वर्जयेत्।
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम्॥

अत्यासनं चङ्क्रमणमुपवासं गुरूणि च।
तत्रादितो वातवृद्धौ स्वेदतस्निग्धमातुरम्॥
स्विन्नं चैनं यथान्यायं पाययेत विरेचनम्।
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरम्॥
सक्षीरं वा पिबेन्मासं तैलमेरण्डसम्भवम्।
ततः कालेऽनिलघ्नानां क्वाथैः कल्कैश्च बुद्धिमान्।
निरूहयेन्निरूढञ्च भुक्तवन्तं रसौदनम्॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत्।
स्नेहोपनाहौ कुर्य्याच्च प्रदेहांश्चानिलापहान्॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्जयेत्॥
भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत्।
पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः॥
पक्वां वा भेदयेद्भिन्नां शोधयेत्क्षौद्रसर्पिषा।
शुद्धायाञ्च भिषग्दद्यात्तैलं कल्कञ्च रोपणम्॥
रक्तजायां जलौकोभिः शोणितं निर्हरेद्भिषक्।
पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतम्।
पित्तग्रन्थिक्रमं कुर्य्यादामे पक्वे च सर्वदा॥
वृद्धिं कफात्मिकामुष्णैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम्॥
विम्लापनादृते वापि श्लेष्मग्रन्थिक्रमो हितः।
पक्वायाञ्च विभिन्नायां तैलं शोधनमिष्यते॥
सुमनारुष्कराङ्कोठसप्तपर्णेषु साधितम्।
मेदःसमुत्थां संस्वेद्य लेपयेत्सुरसादिना॥

शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः।
खिन्नां चाविध्य पट्टेन समाश्वास्य तु मानवम्॥
रचेत्फले सेवनीञ्च वृद्धिपत्रेण दारयेत्।
मेदस्ततः समुद्धृत्य दद्यात्कासीससैन्धवे॥
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलञ्च दापयेत्।
मनःशिलाललवणैः सिद्धमारुष्करेषु च॥
मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत्।
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन तु॥
अथात्र द्विमुखां नाड़ीं दत्वा विस्रावयेद्भिषक्।
मूत्रं नाड़ीमथोद्धृत्य स्थगिकाबन्धमाचरेत्॥
शुद्धायां रोपणं दद्याद्वर्ज्जयेदन्त्रहेतुकीम्।
अप्राप्तफलकोशायां वातवृद्धिक्रमो हितः॥
तत्र या वङ्क्षणस्था तां दहेदर्द्धेन्दुवक्त्रया।
सम्यग्मार्गविरोधार्थं कोशप्राप्तां तु वर्ज्जयेत्॥
त्वचं भित्त्वाङ्गुष्ठमध्ये दहेद्वाङ्गविपर्य्ययात्।
अनेनैव विधानेन वृद्धौ वातकफात्मिके॥
अदहेत्प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयोः।
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम्॥
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये।
उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः॥
सिरां विध्येन्मेढ्रमध्ये पातयेद्वा जलौकसः।
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान्॥
सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः।

यदि वा दुर्ब्बलो जन्तुर्नैवा प्राप्तं विरेचनम् ॥
निरूहेण हरेत्तस्य दोषानत्यर्थमुच्छ्रितान् ।
प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभिः ॥
सरलागुरुरास्नाभिर्व्वातजं संप्रलेपयेत् ।
निचुलैरण्डवीजानि यवगोधूमसक्तवः ॥
एतैश्च वातजं स्निग्धैः सुखोष्णैः सम्प्रलेपयेत् ।
प्रपौण्डरीकपूर्ब्बैश्च द्रव्यैः सेकः प्रशस्यते ॥
गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलपयेत् ॥
पद्मोत्पलमृणालैश्च ससर्ज्जार्ज्जुनवेतसैः ।
सर्पिः स्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत् ॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ।
अथ वापि सुशीतेन कषायेण वटादिना ॥
शालाश्वकर्णाजकर्णधवलम्भिः कफोत्थितम् ।
सुरापिष्टाभिरेताभिः सतैलाभिः प्रलेपयेत् ॥
रजन्यतिविषामुस्तासरलासुरदारुभिः ।
सपत्रपाठापत्तूरैरथ वा सम्प्रलेपयेत् ॥
सुरसारग्वधाद्याभ्यां क्वाथाभ्यां परिषेचयेत् ।
एवं संशोधनालेपसेकशोणितमोक्षणैः ॥
प्रतिकुर्य्यात्क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि ।
नायाति च यथापाकं प्रयतेत तथा भिषक् ॥
विदग्धैस्तु सिरास्नायुलङ्मांसैः क्षीयते ध्वजः ।
शस्त्रेणोपचरेच्चापि पाकमागतमाशु वै ॥

तदापोह्य तिलैः सर्पिः क्षौद्रयुक्तैः प्रलेपयेत्।
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा॥
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि।
सौराष्ट्रीगैरिकं तुत्थं पुष्पकासीससैन्धवम्॥
रोध्रं रसाञ्जनं दार्व्वीं हरितालं मनःशिलाम्।
हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत्॥
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितम्।
जम्ब्वाम्रसुमनानिम्बश्वेताकाम्बोजिपल्लवाः॥
शल्लकीबदरीबिल्वपलाशतिनिशत्वचः।
क्षीरिणाञ्च त्वचो योज्याः क्वाथे त्रिफलया सह॥
तेन क्वाथेन नियतं व्रणं प्रक्षालयेद्भिषक्।
अस्मिन्नेव कषाये तु तैलं धीरो विपाचयेत्॥
गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम्।
एतत् सर्व्वोपदंशेषु श्रेष्ठं रोपणमिष्यते॥
सर्जिकातुत्थकासीसं शैलेयञ्च रसाञ्जनम्।
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनम्॥
शुन्द्रान्दग्ध्वा कृतं भस्म हरितालं मनःशिला।
उपदंशविसर्पाणामेतच्छान्तिकरं परम्॥
मार्कवत्रिफलादन्ती ताम्रचूर्णमयोरजः।
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत्क्रियाम्।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम्॥
उपदंशे विशेषेण घ्रष्ण भूयस्त्रिदोषजे।

दुष्टव्रणविधिं कुर्य्यात्क्कथितं मेहनं त्यजेत् ॥
जाम्बौष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक्।
सम्यग्दग्धञ्च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥
शुद्धे च रोपणं दद्यात्कल्कं तैलं हितञ्च यत्।
स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक् ॥
कृत्वा गुल्फोपरि सिरां विध्येत्तु चतुरङ्गुले।
समाप्यायितदेहञ्च वस्तिभिः समुपाचरेत् ॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतम्।
पयसौदनमश्नीयौन्नागरक्कथितेन च ॥
त्रैवृतं चोपयुञ्जीत शस्तो दाहस्तथाग्निना।
गुल्फस्याधःसिरां विध्येच्छ्लीपदे पित्तसम्भवे ॥
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत्।
सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक् ॥
मधुयुक्तानि वाभीक्ष्णं कषायाणि पिबेन्नरः।
पिबेद्वाप्यभयाकल्कं मूत्रेणान्यतमेन च ॥
कटुकामम्मृतां शुण्ठीं विडङ्गं दारु चित्रकम्।
हितं वा लेपने नित्यं भद्रदारु सचित्रकम् ॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथ वा।
भद्रदार्वेलुकाख्ये च सर्वेषु लवणेषु च ॥
तैलं पक्कं पिबेद्वापि यवान्नञ्च हितं सदा।
पिबेत्सर्षपतैलं वा श्लीपदानां निवृत्तये ॥
पूतीकरञ्जपत्राणां रसं वापि यथाबलम्।
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ॥

प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित्।
केचुकाकन्दनिर्य्यासं लवणं त्वथ पाकिमम्॥
रसं दत्वाथ पूर्वोक्तं पेयमेतद्भिषग्जितम्।
काकादनीं काकजङ्घां वृहतीं कण्टकारिकाम्॥
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा।
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत्क्षारकल्पवित्॥
तत्र दद्यात्प्रतीवापं काकोडुम्बरिकारसम्।
मदनाच्च फलात्क्वाथं शुकाख्यास्वरसं तथा॥
एष क्षारस्तु पानीयः श्लीपदं हन्ति सेवितम्।
अपचीं गलगण्डञ्च ग्रहणीदोषमेव च॥
भक्तस्यानशनं चैव हन्यात्सर्वविषाणि च।
एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम्॥
एतानेवामयान्हन्ति ये च दुष्टव्रणा नृणाम्।
द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च॥
सप्तलां शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत्।
दद्याच्च त्रिफलाक्वाथमेष क्षारस्तु साधितः॥
अधो गच्छति पीतस्तु पूर्वैस्तात्पाश्चिषः समाः।

---

## विंशतितमोऽध्यायः।

अथातः क्षुद्ररोगचिकित्सितं व्याख्यास्यामः।

अत्राजगल्लिकामामां जलौकोभिरुपाचरेत्।
शुक्तिश्यामायवक्षारकल्कैस्तालेपयेद्भिषक्॥

श्यामालाङ्गलकीपाठाकल्कैर्वापि विचक्षणः ।
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ।
पाषाणगर्द्दभं चैव पूर्वं स्वेदेन योजयेत् ॥
मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत् ।
परिपाकगतान् भित्त्वा व्रणवत्समुपाचरेत् ॥
विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
इरिवेल्लीं गन्धनाम्नीं कक्षां विस्फोटकांस्तथा ॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् ।
रोपयेत् सर्पिषा पक्वान् सिद्धेन मधुरौषधैः ॥
चिप्यमुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक् ।
चक्रतैलेन चाभ्यज्य सर्जचूर्णेन चूर्णयेत् ॥
बन्धेनोपचरेच्चैनमशक्यं चाग्निना दहेत् ।
मधुरौषधसिद्धेन ततस्तैलेन रोपयेत् ॥
कुनखे विधिरप्येष कार्य्योहि भिषजा भवेत् ।
विदारिकां समभ्यज्य स्विन्नां विम्लाप्यलेपयेत् ॥
नगवृत्तिकवर्षाभूविल्वमूलैः सुपेषितैः ।
व्रणभावगतायां वा कृत्वा संशोधनक्रियाम् ॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ।
प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्वा विदारिका ॥
अजकर्णैः सपालाशैर्मूलकल्कैः प्रलेपयेत् ।
पक्वां विदार्य्य शस्त्रेण पटोलपिचुमन्दयोः ॥
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ।

बद्ध्वा च चीरवृक्षस्य कषायैः खदिरस्य च ॥
व्रणं प्रक्षालयेच्छुद्धांस्ततस्ता रोपयेत्पुनः ।
मेदोऽर्व्वुदविधानेन साधयेच्छर्कराव्वुदम् ॥
कच्छूं विचर्च्चिकां पामां कुष्ठवत् समुपाचरेत् ।
लेपश्च शस्यते सिक्थशताङ्गगौरसर्षपैः ॥
वचादार्व्वी सर्षपैर्वा तैलं वा नक्तमालजम् ॥
सारतैलमथाभ्यङ्गे कुर्व्वीत कटुकैः शृतम् ।
पाददार्य्यां सिरां विद्धा स्वेदाभ्यङ्गौ प्रयोजयेत् ॥
मधूच्छिष्टवसामज्जसर्ज्जचूर्णघृतैः कृतः ।
यवाङ्गगैरिकोन्मिश्रैः पादलेपः प्रशस्यते ॥
पादौ सिक्तारनालेन लेपनं ह्यलसे हितम् ।
कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः ॥
लाक्षारसोऽभया वापि कार्य्यं स्याद्रक्तमोक्षणम् ।
सिद्धं रसे कण्टकार्य्यास्तैलं वा सार्षपं हितम् ॥
कासीसरोचणशिलाचूर्णैर्वा प्रतिसारणम् ।
उद्धृत्य दग्ध्वा स्नेहेन जयेत्कदरसंज्ञकम् ॥
इन्द्रलुप्ते सिरां मूर्द्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ।
कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुल्यकैः ॥
कुटन्नटादारुकल्कैर्लेपनं वा प्रशस्यते ।
प्रच्छयित्वावगाढं वा गुञ्जाकल्कैर्मुहुर्मुहुः ॥
लेपयेदुपशान्त्यर्थं कुर्य्याद्वापि रसायनम् ।
मालतीकरवीराग्निनक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥

अरुंषिकां हृते रक्ते सेचयेन्निम्बवारिणा ॥
दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु।
हरितालनिशानिम्बकल्कैर्वा सपटोलजैः ॥
यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत्।
सिरां दारुणके विद्ध्वा स्निग्धस्विन्नस्य मूर्द्धनि ॥
अवपीड़ं शिरोवस्तिमभ्यङ्गञ्च प्रयोजयेत्।
क्षालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥
उपरिष्टात्प्रवक्ष्यामि विधिं पलितनाशनम्।
मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता ॥
पित्तश्लेष्मविसर्पोक्ता क्रियावा संप्रशस्यते।
जतुमणिं समुत्कृत्य मशकं तिलकालकम् ॥
क्षारेण प्रदहेद्युक्त्या वह्निना वा शनैः शनैः।
न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायाञ्च शस्यते ॥
यथान्यायं यथाभ्यासं ललाट्यादिसिराव्यधः।
घृष्ट्वा दिह्यात्त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुताम् ॥
बलातिबलयष्ट्याह्वरजनीर्वा प्रलेपनम्।
प्रयस्यागुरुकालीयलेपनं वा सगैरिकम् ॥
क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च।
कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥
यौवने पिड़कास्वेष विशेषाच्छर्द्दनं हितम्।
लेपनञ्च वचारोध्रसैन्धवैः सर्षपान्वितैः ॥
कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपनं हितम्।
पद्मिनीकण्टके रोगिच्छर्दयेन्निम्बवारिणा ॥

तेनैव सिद्धं सक्षौद्रं सर्पिः पानं प्रदापयेत्।
निम्बारग्वधयोः क्वाथो हित उत्सादने भवेत्॥
परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत्।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः शाल्वणादिभिः॥
ततोऽभ्यज्य शनैश्चर्म्म चानयेत् पीड़येन्मणिम्।
प्रविष्टे च मणौ चर्म्म स्वेदयेदुपनाहनैः॥
दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत्।
अवपाटिकां जयेदेवं यथादोषं चिकित्सकः॥
निरुद्धप्रकशे नाड़ीं लौहीमुभयतोमुखीम्।
दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत्॥
परिषेके वसामज्ज शिशुमारवराहयोः।
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम्॥
त्र्यहात्त्र्यहात् स्थूलतरां सम्यङ्नाड़ीं प्रवेशयेत्।
स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत्॥
भित्त्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत्।
सन्निरुद्धगुदं रोगं वल्मीकं वह्निरोहिणीम्॥
प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत्।
विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम्॥
संनिरुद्धगुदे योज्या निरुद्धप्रकशक्रिया।
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत्॥
वल्मीकन्तु भवेद्यस्य नातिवृद्धममर्म्मजम्॥
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक्।

कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च ॥
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ।
श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत् ॥
सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ।
पक्वं वा तद्विजानीयाद्गतीः सर्व्वा यथाक्रमम् ॥
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान्भिषक् ।
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ॥
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान्भिषक् ।
सुमना ग्रन्थयश्चैव भल्लातकमनःशिले ॥
कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ।
एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितम् ॥
पाणिपादोपरिष्टात्तु च्छिद्रैर्बहुभिरावृतम् ।
वल्मीकं यत्सशोफं स्यादवर्ज्यं तत्तु विजानता ॥
धात्र्याः स्तन्यं शोधयित्वा बाले साध्याहिपूतना ।
पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥
पीतं घृतं नाशयति क्षिप्रामप्यहिपूतनाम् ।
त्रिफलाकोलखदिरकषायं व्रणरोपणम् ॥
कासीसरोचनातुत्थहरितालरसाञ्जनैः ।
लेपोऽम्लपिष्टो बदरीत्वग्वा सैन्धवसंयुता ॥
कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत् ।
चिकित्सन्मुष्ककच्छूञ्चाप्यहिपूतनपानवत् ॥
गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ।
कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्म्मणा ॥

विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः।
क्षीरं महापञ्चमूलं मूषिकां चान्त्रवर्जिताम्॥
ततस्तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतम्।
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत्॥

---

## एकविंशतितमोऽध्यायः।

अथातः शूकरोगचिकित्सितं व्याख्यास्यामः।
संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत्।
कषायेष्वेव तैलञ्च कुर्व्वीत व्रणरोपणम्॥
अष्ठीलिकाञ्जलौकोभिर्ग्राहयेत् कुशलो भिषक्।
तथाचानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत्॥
स्वेदयेद्ग्रथितं शश्वन्नाड़ीस्वेदेन बुद्धिमान्।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत्॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धां तु रोपयेत्।
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु॥
ग्राहयित्वा जलौकोभिरलजीं सेचयेत्ततः।
कषायैस्तेषु सिद्धञ्च तैलं रोपणमिष्यते॥
बलातैलेन कोष्णेन मृदितं परिषेचयेत्।
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत्॥
संमूढ़पिड़कां क्षिप्रं जलौकोभिरुपाचरेत्।
भित्त्वा पथ्यागतां चापि लेपयेत् क्षौद्रसर्पिषा॥

अवमन्थे गते पाकं भिन्ने तैलं विधीयते ।
धवाश्वकर्णपत्तङ्गसल्लकीतिन्दुकीत्वतम् ॥
क्रियां पुष्करिकायान्तु शीतां सर्वां प्रयोजयेत् ।
जलौकोभिर्हरेच्चासृक्सर्पिषा चावसेचयेत् ॥
स्पर्शहान्यां हरेद्रक्तं प्रदिह्यान्मधुरैरपि ।
क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥
पिड़कामुत्तमाख्याञ्च वड़िशेनोद्धरेद्भिषक् ।
उद्धृत्य मधुसंयुक्तैः कषायैरवचूर्णयेत् ॥
रसक्रिया विधातव्या लिखिते शतपोनके ।
पृथक्पर्ण्यादिसिद्धञ्च देयं तैलमनन्तरम् ॥
क्रियां कुर्य्याद्भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ।
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रिया ।
शोधनं रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥
यथास्वं सर्पिषः पानं पथ्यञ्चापि विरेचनम् ।
हितः शोणितमोक्षश्च यच्चापि लघु भोजनम् ॥
अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकम् ।
प्रत्याख्याय प्रकुर्व्वीत भिषक् सम्यक्प्रतिक्रियाम् ॥

---

## द्वाविंशतितमोऽध्यायः ।

तो मुखरोगाणां चिकित्सितं व्याख्यास्यामः ।

चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ।

वातजेऽभ्यञ्जनं कुर्य्यान्नाड़ीस्वेदञ्च बुद्धिमान्॥
मतिमानोष्ठकोपे तु शाल्वणं चोपनाहने।
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम्॥
श्रीवेष्टकं सर्जरसं सुरदारु सगुग्गुलु।
यष्टीमधुकचूर्णन्तु विदध्यात्प्रतिसारणम्॥
पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः॥
शिरोविरेचनं धूमः स्वेदः कवल एव च।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके॥
त्र्यूषणं स्वर्जिकाक्षारो यवक्षारो विड़ं तथा।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम्॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम्॥
एतदोष्ठप्रकोपानां साध्यानां कर्म्म कीर्त्तितम्।
दन्तमूलगतानान्तु रोगाणां कर्म्म वक्ष्यते॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलामुस्तं गण्डूषः सरसाञ्जनः॥
प्रियङ्गवश्च मुस्ताश्च त्रिफला च प्रलेपनम्।
नस्यञ्च त्रिफलासिद्धं मधुकोत्पलपद्मकैः॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्।
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम्॥
हितः शिरोविरेकश्च नस्यं स्निग्धञ्च भोजनम्।
विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत्॥

रोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरैः ।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥
काकोल्यादौ दशक्षीरसिद्धं सर्पिश्च नस्यतः ।
शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ।
सारिवोत्पलयष्ट्याह्वसागरागुरुचन्दनैः ॥
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ।
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः ॥
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा ।
काकोडुम्बरिकागोजीपत्रैर्विस्रावयेदसृक् ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ।
पिप्पलीसर्षपांश्चैव नागरं नैचुलं फलम् ॥
सुखोदकेन संहृष्टं कवलं चापि धारयेत् ।
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च शीतलाः ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
क्रिमिदन्तकवच्चापि विधिः कार्य्यो विजानता ॥
छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ।
वचातेजोवतीपाठासर्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ।

वातजेऽभ्यञ्जनं कुर्य्यान्नाड़ीस्वेदञ्च बुद्धिमान् ॥
मतिमानोष्ठकोपे तु शाल्वणं चोपनाहने।
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ॥
श्रीवेष्टकं सर्जरसं सुरदारु सगुग्गुलु।
यष्टीमधुकचूर्णन्तु विदध्यात्प्रतिसारणम् ॥
पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥
शिरोविरेचनं धूमः स्वेदः कवल एव च।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥
त्र्यूषणं स्वर्जिकाक्षारो यवक्षारो विड़ं तथा।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलारोध्रं सक्षौद्रं प्रतिसारणम् ॥
एतदोष्ठप्रकोपानां साध्यानां कर्म्म कीर्त्तितम्।
दन्तमूलगतानान्तु रोगाणां कर्म्म वक्ष्यते ॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलामुस्तं गण्डूषः सरसाञ्जनः ॥
प्रियङ्गवश्च मुस्तञ्च त्रिफला च प्रलेपनम्।
नस्यञ्च त्रिफलासिद्धं मधुकोत्पलपद्मकैः ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्।
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम् ॥
हितः शिरोविरेकश्च नस्यं स्निग्धञ्च भोजनम्।
विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत् ॥

लोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरैः ।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥
काकोल्यादौ दशक्षीरसिद्धं सर्पिश्च नस्यतः ।
शौषिरे हृतरक्ते तु लोध्रमुस्तरसाञ्जनैः ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ।
सारिवोत्पलयष्ट्याह्वसागरागुरुचन्दनैः ॥
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ।
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः ॥
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा ।
काकोडुम्बरिकागोजीपत्त्रैर्विस्रावयेदसृक् ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ।
पिप्पलीसर्षपांश्चैव नागरं नैचुलं फलम् ॥
सुखोदकेन संसृष्टं कवलं चापि धारयेत् ।
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च शीतलाः ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
क्रिमिदन्तकवच्चापि विधिः कार्य्यो विजानता ॥
छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ।
वचातेजोवतीपाठासर्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ।

सामान्यं कर्म्म नाड़ीनां विशेषं चात्र मे शृणु ॥
यन्दन्तमधिजायेत नाड़ी तं दन्तमुद्धरेत्।
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत्॥
शोधयित्वा दहेद्वापि क्षारेण ज्वलनेन वा।
भिनत्त्युपेक्षिते दन्ते हनुकास्थिगतिर्ध्रुवम्॥
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च।
उद्धृतेतूत्तरे दन्ते समूले स्थिरबन्धने॥
रक्तातियोगात्पूर्व्वोक्ता रोगा घोरा भवन्ति हि।
काणः सञ्जायते जन्तुरर्दितं चास्य जायते॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक्।
धावने जातिमदनस्वादुकण्टकखादिरम्॥
कषायं जातिमदनकटुकस्वादुकण्टकैः।
यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत्कृतम्॥
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम्।
कीर्त्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धश्च भोजनम्।
रसो रसयवाग्व्यश्च क्षीरं सन्तानिका घृतम्।
शिरोवस्तिर्हितश्चापि क्रमो यश्चानिलापहः॥
अहिंसन्दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत्॥
दन्तहर्षक्रिया चापि कुर्य्यान्निरवशेषतः।

कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम्।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः।
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च ॥
ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुकैः।
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥
हनुमोक्षे समुद्दिष्टां कुर्य्याच्चार्द्दितवत्क्रियाम्।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥
तथातिकठिनान्भक्ष्यान्दन्तरोगी विवर्ज्जयेत्।
साध्यानां दन्तरोगाणां चिकित्सितमुदीरितम् ॥

जिह्वागतानां साध्यानां कर्म्म वक्ष्यामि सिद्धये।
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितम् ॥
कण्टकेष्वनिलोत्थेषु तत्कार्य्यं भिषजा भवेत्।
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते ॥
प्रतिसारणगण्डूषनस्यञ्च मधुरं हितम्।
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे।
गृह्णीयात्कवलांश्चापि गौरसर्षपसैन्धवैः ॥
पटोलनिम्बवार्त्ताकुक्षारयूषैश्च भोजयेत्।
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ॥
शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत्।
जिह्वागतानां कर्म्मोक्तं तालव्यानां प्रवक्ष्यते ॥

अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकाम् ।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद्भिषक् ।
अत्यादानात्स्रवेद्रक्तं तन्निमित्तं म्रियेत च ॥
हीनच्छेदाद्भवेच्छोफो लालानिद्राभ्रमस्तमः ।
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्म्मा विशारदः ॥
गलशुण्डीन्तु संच्छिद्य कुर्य्यात्मार्गमिमं क्रमम् ।
मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ॥
क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ।
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ॥
निःक्वाथ्य पिचुमन्दञ्च कवलं तत्र योजयेत् ।
इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः ॥
पश्चाच्चोङ्कारयेत्पिष्टैर्वर्त्तिं गन्धोत्तरां शुभाम् ।
ततो धूमं पिबेज्जन्तुर्द्विरह्नः कफनाशनम् ॥
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ।
तुण्डिकेय्यध्रुषे कूर्म्मे सङ्घाते तालुपुप्पुटे ॥
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ।
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ।
कीर्त्तितं तालुजानान्तु कण्ठ्यानां कर्म्म वक्ष्यते ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम् ।
छर्द्दनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत् ।

सुखोष्णान् स्नेहगण्डूषान्धारयेच्चाप्यभीक्ष्णशः ॥
पत्तङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत्।
द्राक्षापरूषकक्वाथौ हितौ च कवलग्रहे ॥
आगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत्।
श्वेताविड़ङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥
नस्यकर्म्मणि योक्तव्यं तथा कवलधारणे।
पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ॥
विस्राव्य कण्टशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम्।
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ॥
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्।
अमर्म्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम् ॥
वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः।
शालराजादनैरण्डसारेङ्गुदिमधूकजाः ॥
मज्जानो गुग्गुलुध्याममांसीकालानुसारिवाः।
श्रीसर्जरसशैलेयमधूच्छिष्टानि वाहरेत् ॥
तत्सर्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः।
टुण्टुकवृन्तं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥
एष सर्वसरे धूमः प्रशस्तः स्नैहिको मतः।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः॥
प्रतिसारणगण्डूषधूमसंशोधनानि च।
कफात्मके सर्वसरे विधिं कुर्य्यात्कफापहम्॥
पिबेदतिविषां पाठां मुस्तञ्च सुरदारु च।
रोहिणीं कटुकाख्याञ्च कुटजस्य फलानि च॥
गवां मूत्रेण मनुजो भागैर्धरणसम्मितैः।
एष सर्व्वान्कफकृतान्रोगान्योगोऽपकर्षति॥
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः।
विदध्यात्कवलान्वीक्ष्य दोषं तैलघृतैरपि॥
रोगाणां मुखजातानां साध्यानां कर्म कीर्त्तितम्।
असाध्या अपि वक्ष्यन्ते रोगा ये यत्र कीर्त्तिताः॥
ओष्ठप्रकोपा वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः
दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः॥
जिह्वागतेष्वलासस्तु तालव्येष्वर्बुदं तथा।
स्वरघ्नो वलयो वृन्दो वलासश्च विदारिका॥
गलौघो मांसतानश्च शतघ्नी रोहिणी गले।
असाध्याः कीर्त्तिता ह्येते रोगा नव दशैव च।
तेषां चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत्॥

---

गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा तुल्यगुड़ं शृङ्ग-
वेरं वा वर्षाभूकषायं मूलकल्कं वा सशृङ्गवेरं पयोऽनुपान-
महरहर्मासम् । व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा
मुङ्गोलुम्बाभ्यञ्जयेत् । पिप्पलीपिप्पलीमूलं चव्यचित्रकमयूर-
वर्षाभूसिद्धं वा क्षीरं पिबेत् । महौषधसुरङ्गीमूलसिद्धं वा ।
त्रिकटुकैरण्डमूलश्यामामूलसिद्धं वा । वर्षाभू शृङ्गवेर-
सहादेवदारुसिद्धं वा । तथालाबूविभीतकफलकल्कं वा
तण्डुलाम्बुना ।

क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणाल-
वणेनाल्पस्नेहेन भोजयेद्यवान्नं गोधूमान्नं वा वृश्चिकार्कन-
क्तमालनिम्बवर्षाभूक्वाथैश्च परिषेकः सर्षपसौवर्चलसैन्धवशा-
र्ङ्गेष्टाभिश्च प्रदेहः कार्यः । यथादोषञ्च विरेचनास्थाप-
नानि तीक्ष्णान्यजस्रमुपसेवेतस्नेहस्वेदोपनाहांश्च सिराभि-
श्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ।

भवति चात्र ।

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च ।
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्जयेत्तु ॥

---

## चतुर्विंशतितमोऽध्यायः ।

अथातोऽनागताबाधप्रतिषेधनीयं चिकित्सितं व्याख्यास्यामः ।

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता ।
धीमता यदनुष्ठेयं तत्सर्वं सम्प्रवक्ष्यते ॥

तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम्।
कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम् ॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्।
अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत् ॥
कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः।
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा।
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च ॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्।
एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च ॥
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥
तद्दौर्गन्ध्योपदेहौतु श्लेष्माणं चापकर्षति।
वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च ॥
न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे।
अथास्यपाके श्वासे च कासहिक्कावमीषु च ॥
दुर्ब्बलो जीर्णभक्तश्च मूर्च्छार्त्तो मदपीड़ितः।
शिरोरुगार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥
अर्द्दिती कर्णशूली च दन्तरोगी च मानवः।
जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥
तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम्।
मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखम् ॥
दन्तकरं दार्ढ्यरुच्यं स्नेहगण्डूषधारणम्।
क्षीरवृक्षकषायैर्व्वा क्षीरेण च विमिश्रितैः ॥

## त्रयोविंशतितमोऽध्यायः ।

अथातः शोफानां चिकित्सितं व्याख्यास्यामः ।

षड्‌विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतस्तु सर्वसरस्तु पञ्चविधः । तद्यथा । वातपित्तश्लेष्मसन्निपातविषनिमित्तः । तत्रापि तर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीणस्य वातिमात्रमम्लमुपसेवमानस्य मृत्पङ्कलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्मसेवनाद्विरुद्धाहारसेवनाद्धस्त्यश्वोष्ट्ररथपदातिसङ्क्षोभणाद्दोषा धातून्प्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे ।

तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थितस्तोदादयश्चात्र वेदनाविशेषाः ॥

पित्तश्वयथुः पीतो रक्तो वा शीघ्रानुसार्य्योषचोषादयश्चात्र वेदनाविशेषाः ॥

श्लेष्मश्वयथुः पाण्डुः शुक्लो वा स्निग्धः कठिनः शीतो मन्दानुसारी कण्ड्‌वादयश्चात्र वेदनाविशेषाः ॥

सन्निपातश्वयथुः सर्ववर्णवेदनः ॥

विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात्कोथोदकावगाहनात्सविषसत्त्वदिग्धचूर्णेनावचूर्णनाद्वा सविषमूत्रपुरीषशुक्रसृष्टानां तृणकाष्ठादीनां संस्पर्शनात् स तु मृदुः क्षिप्रोत्थानोऽवलम्बो चलो वा दाहपाकप्रायश्च भवति ॥

भवन्ति चात्र ॥

दोषाः श्वयथुमूर्द्धं हि कुर्व्वन्त्यामाशयस्थिताः।
पक्वाशयस्था मध्ये च वर्च्चःस्थानगतास्त्वधः॥
कृत्स्नं देहमनुप्राप्ताः कुर्य्युः सर्व्वसरं तथा।
श्वयथुर्मध्यदेशे यः स कष्टः सर्वगश्च यः॥
अर्द्धाङ्गेऽरिष्टभूतश्च यश्चोर्द्ध्वं परिसर्पति।
श्वासः पिपासा दौर्ब्बल्यं ज्वरश्छर्द्दिररोचकः॥
हिक्कातीसारकासश्च शूनं सङ्क्षपयन्ति हि।
सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजम्॥

शोफिनः सर्व्व एव परिहरेयुरम्ललवणदधिगुड़वसापयस्तैलघृतपिष्टमयगुरूणि।

तत्र वातश्वयथौ त्रैवृतमैरण्डतैलं वा मासमर्द्धमासं वा पाययेत्। न्यग्रोधादिककषायसिद्धं सर्पिः पित्तश्वयथौ। आरग्वधादिसिद्धं श्लेष्मश्वयथौ। सन्निपातश्वयथौ स्नुहीक्षीरपात्रं द्वादशभिरम्लपात्रैः प्रतिसंसृष्टं दन्तीप्रतिवापं सर्पिः पाचयित्वा पाययेत्। विषनिमित्ते कल्पेषु प्रतीकारः।

अथातः सामान्यचिकित्सितं व्याख्यास्यामः।

तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु तु ततोऽन्यतममुपयुज्यमानं श्वयथुमपहन्ति। मूत्रवर्त्तिक्रियां वा सेवेत। नवायसं वा हरस्तन्मधुना। विड़ङ्गातिविषाकुटजफलभद्रदारुनागरमरिचचूर्णं वा धरणमुष्णाम्बुना। त्रिकटुक्षारायश्चूर्णानि वा त्रिफलाकषायेण मूत्रं वा तुल्यक्षीरं हरितकीं वा तुल्यगुड़ामुपयुञ्जीत। देवदारुशुण्ठीं वा

भिल्लोदककषायेण तथैवामलकस्य वा।
प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा॥
निलीकां मुखशोषञ्च पिड़कां व्यङ्गमेव च।
रक्तपित्तकृतान् रोगान्सद्य एव विनाशयेत्॥
मुखं लघु निरीक्षेत दृढ़ं पश्यति चक्षुषा।
मतं शीतोऽञ्जनं श्रेष्ठं विशुद्धं सिन्धुसम्भवम्॥
दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहम्।
अक्ष्णोरूपावहञ्चैव सहते मारुतातपौ॥
न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत्।
भुक्तवान् शिरसा स्नातः श्रान्तश्छर्दनवाहनैः॥
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च।
कर्पूरजातिकक्कोललवङ्गकटकाह्वयैः॥
सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम्।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्॥
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम्।
प्रसेकशमनं हृद्यं गलामयविनाशनम्॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे।
रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम्॥
रूक्षदुर्बलमर्त्यानां न हितं चास्य शोषिणाम्।
शिरोगतांस्तथा रोगान्शिरोऽभ्यङ्गोऽपकर्षति॥
केशानां मार्दवं दैर्घ्यं बहुत्वं स्निग्धकृष्णताम्।
करोति शिरसस्तृप्तिं सुत्वक्कमपि चाननम्॥
सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणम्।

मधुकं चोरपुष्पा च सरलं देवदारु च ॥
क्षुद्रकं पञ्चनामानं समभागानि संहरेत्।
तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत्।
सदैव शीतलं जन्तोर्मूर्द्धि तैलं प्रदापयेत्।
केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम्।
अभ्यङ्गो मार्द्दवकरः कफवातनिरोधनः ॥
धातूनां पुष्टिजननो मृजावर्णबलप्रदः।
सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः ॥
क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः।
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते।
सिरामुखै रोमकूपैर्धमनीभिश्च तर्पयन् ॥
शरीरबलमाधत्ते युक्तः स्नेहोऽवगाहने।
तत्र प्रकृतिसात्म्यर्त्तुदेशदोषविकारवित् ॥
तैलं घृतं वा मतिमान्युञ्ज्यादभ्यङ्गसेकयोः।
केवलं सामदोषेषु न कथञ्चन योजयेत् ॥
तरुणज्वर्य्यजीर्णी च नाभ्यक्तव्यौ कथञ्चन।
तथाविरिक्तो वान्तश्च निरूढो यश्च मानवः ॥
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा।
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः ॥
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत्।
शरीरायासजननं कर्म्म व्यायामसंज्ञितम् ॥

तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः ।
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ॥
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ।
श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥
आरोग्यं चापि परमं व्यायामादुपजायते ।
न चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणम् ॥
नच व्यायामिनं मर्त्यमर्दयन्त्यरयो भयात् ।
नचैनं सहसाक्रम्य जरा समधिरोहति ॥
स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च ।
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ॥
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ।
वयोरूपगुणैर्हीनमपि कुर्य्यात्सुदर्शनम् ॥
व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनम् ।
विदग्धमविदग्धं वा निर्दोषं परिपच्यते ॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् ।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥
सर्वेष्वृतुष्वहरहःपुम्भिरात्महितैषिभिः ।
बलस्यार्द्धेन कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते ।
व्यायामं कुर्वतो जन्तोस्तद्बलार्द्धस्य लक्षणम् ॥
वयोबलशरीराणि देशकालाशनानि च ।
समीक्ष्य कुर्य्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥
क्षयतृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः ।

कासशोषज्वरश्वासा अतिव्यायामसम्भवाः ॥
रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः ।
भुक्तवान्स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्ज्जयेत् ॥
उद्वर्त्तनं वातहरं कफमेदोविलापनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥
सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ।
उद्धर्षोत्सादनाभ्यां जायेयातामसंशयम् ॥
उत्सादनाद्भवेत्स्त्रीणां विशेषात्कान्तिमद्वपुः ।
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ॥
उद्धर्षणन्तु विज्ञेयं कण्डूकोठानिलापहम् ।
ऊर्व्वीः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे ॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ।
तेजनं त्वग्गतस्याग्नेः सिरामुखविरेचनम् ॥
उद्घर्षणन्विष्टिकया कण्डूकोठविनाशनम् ।
निद्रादाहश्रमहरं स्वेदकण्डूतृषापहम् ॥
हृद्यं मलहरं श्रेष्ठं सर्वेन्द्रियविशोधनम् ।
तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनम् ॥
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ।
उष्णेन शिरसः स्नानमहितञ्चक्षुषः सदा ॥
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत् ।
श्लेष्ममारुतकोपेतु ज्ञात्वा व्याधिबलाबलम् ॥
काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् ।
अतिशीताम्बुशीते च श्लेष्ममारुतकोपनम् ॥

अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनम्।
तच्चातिसारज्वरितकर्णशूलानिलार्त्तिषु॥
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम्।
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनम्॥
स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम्।
स्नानं येषां निषिद्धन्तु तेषामप्यनुलेपनम्॥
रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम्।
सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनम्॥
मुखालेपाद्दृढ़ं चक्षुःपीनगण्डं तथाननम्।
अव्यङ्गपिड़कं कान्तं भवत्यम्बुजसन्निभम्॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम्।
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम्॥
यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनम्।
देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनम्॥
आहारः प्रीणनः सद्योबलकृद्देहधारकः।
आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः॥
पादप्रक्षालनं पादमलरोगश्रमापहम्।
चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम्॥
निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत्।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः॥
पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम्।
सुखप्रचारमोजस्यं सदापादत्रधारणम्॥
अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्।

पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणाम् ॥
पापोपशमनं केशनखरोमापमार्ज्जनम् ।
हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनम् ॥
वाणवारं मृजावर्णतेजोबलविवर्द्धनम् ।
पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम् ॥
वर्षानिलरजोघर्महिमादीनां निवारणम् ।
वर्ण्यं चक्षुष्यमौजस्यं शङ्करं छत्रधारणम् ॥
शुनः सरीसृपव्यालविषाणिभ्यो भयापहम् ।
अमस्खलनदोषघ्नं स्थविरेच प्रशस्यते ॥
सत्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनम् ।
अवष्टम्भकरञ्चापि भयघ्नं दण्डधारणम् ॥
आस्या वर्णकफस्थौल्यसौकुमार्य्यकरी सुखा ।
अध्वा वर्णकफस्थौल्यसौकुमार्य्यविनाशनः ।
अत्यध्वा विपरीतोऽस्माज्जरादौर्व्वल्यकृच्च सः ॥
यत्तु चंक्रमणं नातिदेहपीड़ाकरं भवेत् ।
तदायुर्व्वलमेधाग्निप्रदमिन्द्रियबोधनम् ॥
श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम् ।
सुखं शय्यासनं दुःखं विपरीतगुणं मतम् ॥
बालव्यजनमौजस्यं मक्षिकादीनपोहति ।
शोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः ॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ।
संवाहनं मांसरक्तत्वक्प्रसादकरं सुखम् ॥
प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत् ।

स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ॥
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ।
निवातं त्वायुषे सेव्यमारोग्याय च सर्वदा ॥
आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ।
दाहवैवर्ण्यकारी च छाया चैतानपोहति ॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ।
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः ॥
पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रिताम् ।
करोति धातुसाम्यञ्च निद्रा काले निषेविता ॥

तत्रादित एव नीचनखरोम्णा शुचिना शुक्लवाससा लघूष्णीषच्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्व्वाभिभाषिणा बन्धुभूतेन भूतानान्तु गुरुवृद्धानुमतेन सुसहायेनानन्यमनसाखलूपचरितव्यं तदपि न रात्रौ न केशास्थिकण्टकाश्मतुषभस्मोत्करकपालाङ्गारामेध्यस्थानवलिभूमिषु न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात् ।

न राजद्विष्टपरुषपैशुन्यानृतानिवदेत् । न देवब्राह्मणपितृपरिवादांश्च न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचाचारानुपासीत ।

वृक्षपर्व्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानिपरिहरेत् पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि । भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसम्भ्रमव्यालभुजङ्गकीटसेवाग्रामाघातकलहशस्त्रसन्निपाताग्निसम्भ्रमव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ।

नाग्निगोगुरुब्राह्मणप्रेङ्खादम्भत्यन्तरेणाभियायात्। न शवमनुयायात्। देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणाञ्च छायांनाक्रमेत। नास्तं गच्छन्तमुद्यन्तं वादित्यं वीचेत। गान्धयन्तीं परस्य वा चरन्तीं परस्मै न कस्मैचिदाचक्षीत नचोल्कापातेन्द्रधनूंषि। नाग्निं मुखेनोपधमेत्। नापो भूमिं वा पाणिपादेनाभिहन्यात्।

न वेगान्धारयेत्। न वहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेन्न प्रकाशं न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखम्।

न भूमिं विलिखेत्। नासम्वृतमुखः सदसि जृम्भोद्गारश्वासक्षवथूनुत्सृजेत्। न पर्य्यस्तिकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्य्यात्।

न वालकर्णनासाश्रोतोदशनविवराण्यभिकुष्णीयात्। न वीजयेत्केशमुखनखवस्त्रगात्राणि। न गात्रनखवक्त्रवादित्रं कुर्य्यात्। न काष्ठलोष्टतृणादीनभिहन्याच्छिन्द्याद्वा।

न प्रतिवातातपं सेवेत न भुक्तमात्रोऽग्निमुपासीत नोत्कटुकस्तिष्ठेत्। नात्यकाष्ठासनमध्यासीत। न ग्रीवां विषमं धारयेत्। न विषमकायः क्रियां भजेद्भुञ्जीत वा। न प्रततमीचेत विशेषाज्ज्योतिर्भास्करसूक्ष्मचलभ्रान्तानि। न भारं शिरसा वहेत्। न स्वप्नजागरणशयनासनस्थानचङ्क्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत।

उचितादप्यहितात्क्रमशो विरमेत् हितमनुचितमप्यासे-वेत क्रमशो न चैकान्ततः पादहीनात् ।

नावाक्शिराः शयीत न भिन्नपात्रे नाञ्जलिपुटेनापः पिबेत् काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यवे-वेदितमश्नीयात् । दासजनखलविमानितरुग्णमनुष्यपतितनिर्णी-जनानि परिहरेत् । शेषाण्यपि चानिष्टरूपरसगन्धस्पर्श-शब्दान्नसात्म्यान्यविगुणान्यपि वा सम्भूयदत्तानि सान्नानि मक्षिकावालोपहतानि । नाप्रक्षालितपाणिपादः शुचिर्न मूत्रोच्चारपीडितो न सन्ध्ययोरपाङ्क्तिको नातीतकालं नाल्प-मतिमात्रं चेति न भुञ्जीतोत्कृष्टवेश्म ।

नोदके पश्येदात्मानं न नग्नः प्रविशेज्जलम् ।
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ॥
नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ।

अन्यथा कुष्ठवीसर्पादिं जनयेत् । द्यूतमद्यातिसेवा-प्रतिभूसाक्षित्वसमाक्रान्तगोष्ठीवादित्राणि न सेवेत । स्वक-च्छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धार-येत् । ब्राह्मणाग्निं गाश्च नोच्छिष्टः स्पृशेत् ।

भवन्ति चात्र ।

सुखमात्रं समासेन सद्वृत्तस्यैतदीरितम् ।
आरोग्यमायुरर्थौ वा नासद्भिः प्राप्यते नृभिः ॥
यस्मिन्यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ॥
तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥
वर्षासु न पिबेत्तोयं पिबेच्छरदि मात्रया ।

वर्षासु चतुरो मासान्मात्रावदुदकं पिबेत् ॥
उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम्।
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः॥
शृतशीतं पिबेद्ग्रीष्मे प्रावृट्काले रसं पिबेत्।
यूषं वर्षति तस्यान्ते प्रपिबेच्छीतलं जलम्॥
स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः।
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम्॥
पिबेदग्निविवृद्ध्यर्थं नच वेगान्विधारयेत्।
अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति॥
प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत्।
कफे प्रच्छर्द्दनं पित्ते विरेको वस्तिरीरणे॥
शस्यते त्रिष्वपि सदा व्यायामो दोषनाशनः।
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति॥
उत्सर्गमैथुनाहारशोधने स्यात्तु तन्मनाः।
नेच्छेद्रोगभयात्प्राज्ञः पीड़ां वा कायमानसीम्॥
अतिस्त्रीसंप्रयोगाच्च रक्षेदात्मानमात्मवान्।
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः॥
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः।
आयुष्मन्तो मन्दजरा वपुर्व्वर्णबलान्विताः॥
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः।
त्रिभिस्त्रिभिरहोभिर्हि समीयात्प्रमदां नरः॥
सर्व्वेष्वृतुषु घर्मेषु पक्षात्पक्षाद्व्रजेद्बुधः।
रजस्वलामकामाञ्च मलिनामप्रियां तथा॥

वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ।
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्विताम् ॥
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ।
सन्ध्यापर्वस्वगम्याश्च नोपेयात्प्रमदां नरः ॥
गोसर्गे चार्द्धरात्रे च तथामध्यन्दिनेषु च ।
लज्जासमावहे देशे विवृतेऽशुद्ध एव च ॥
क्षुधितो व्याधितश्चैव क्षुब्धचित्तश्च मानवः ।
वातविण्मूत्रवेगी च पिपासुरतिदुर्ब्बलः ॥
तिर्य्यग्योनावयोनौ च प्राप्तशुक्रविधारणम् ।
दुष्टयोनौ विसर्गन्तु बलवानपि वर्जयेत् ॥
रेतसश्चातिमात्रन्तु मूर्द्धवक्रमेव च ।
स्थितावुत्तानप्रयत्ने विशेषेणैव गर्हितम् ॥
क्रीड़ायामपि मेधावी हितार्थी परिवर्जयेत् ।
रजस्वलां प्राप्तवतो नरस्यानियतात्मनः ॥
दृष्ट्यायुस्तेजसां हानिरधर्म्मश्च ततो भवेत् ।
लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्वसु ॥
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवितक्षयः ।
गर्भिण्यां गर्भपीड़ा स्याद्व्याधितायां बलक्षयः ॥
हीनाङ्गीं मलिनां द्वेष्यां कामं वन्ध्यामसंवृते ।
देशेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत् ॥
क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः ।
स्थितस्य हानिं शुक्रस्य वायोः कोपञ्च विन्दति ॥
अतिप्रसङ्गाद्भवति शोषः शुक्रक्षयावहः ।

व्याधितस्य रुजा पीडा मृत्युर्मूर्च्छा च जायते ।
अत्यूषसि च मध्याह्ने वातपित्ते प्रकुप्यतः ॥
तिर्य्यग्योनावयोनौ च दुष्टयोनौ तथैव च ।
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः ॥
उच्चारिते मूत्रिते च रेतसश्च विधारणे ।
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्याश्च सम्भवः ॥
सर्वं परिहरेत्तस्मादेतल्लोकद्वये हितम् ।
शुक्रं चोपस्थितं मोहान्न सन्धार्य्यं कथञ्चन ॥
वयोरूपगुणोपेतां तुल्यशीलां गुणान्विताम् ।
अभिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ॥
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ।
भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च ॥
स्नानं व्यजनं स्वप्नो व्यवायान्ते हितानि तु ।

---

## पञ्चविंशतितमोऽध्यायः ।

अथातो मिश्रकचिकित्सितं व्याख्यास्यामः ॥
पाल्यामयास्तु विख्याता इत्युक्तं प्राग्निबोध तान् ॥
परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः ।
पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः ॥
सौकुमार्य्याच्चिरोत्सृष्टे सहसाभिप्रवर्द्धिते ।
कर्णशोफो भवेत्पाल्यां सरुजः परिपोटवान् ॥

कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ।
गुर्व्वाभरणसंयोगात्ताड़नाद्घर्षणादपि ॥
शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वितः ।
रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदो मतः ॥
बलाद्वर्द्धयतः कर्णं पाल्यां वायुः प्रकुप्यति ।
गृहीत्वा सकफं कुर्य्याच्छोफं तद्वर्णवेदनम् ॥
उन्मन्थकः सकण्डूको विकारः कफवातजः ।
वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वितः ॥
शोफो भवति पाकश्च त्वक्स्थोऽसौ दुःखवर्द्धनः ।
कफासृक्कृमयः कुर्य्युः सर्षपाभा विकारिणीः ॥
स्राविणीः पिड़काः पाल्यां कण्डूदाहरुगन्विताः ।
कफासृक्कृमिसम्भूतः सविसर्पान्वितस्ततः ॥
लिह्यात्सशष्कुलीं पालीं परिलेहीति स स्मृतः ।
पाल्यामन्ये ह्यमी घोरा नरस्याप्रतिकारिणः ॥
मिथ्याहारविहारस्य पालिं हिंस्युरुपेक्षिताः ।
तस्मादाशु भिषक्तेषु स्नेहादिक्रममाचरेत् ॥
तथाभ्यङ्गपरीषेकप्रदेहासृग्विमोक्षणम् ।
सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जनं प्रति ॥
खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभिः ।
सुपिष्टैः साश्वगन्धैश्च मूलकावल्गुजैः फलैः ॥
सर्पिस्तैलवसामज्जमधूच्छिष्टानि पाचयेत् ।
सक्षीराण्यथ तैः पालिं प्रदिह्यात्परिपोटके ॥
मञ्जिष्ठातिलयष्ट्याह्वसारिवोत्पलपद्मकैः ।

सरीसृपैः सकदम्बैश्च बलाजम्ब्वाम्रपल्लवैः ॥
सिद्धं धान्याम्लसंयुक्तं तैलमुत्पातनाशनम्।
तालपत्र्यश्वगन्धार्कवाकूचीफलसैन्धवैः।
तैलं कुलीरगोधाभ्यां वसया सह पाचितम् ॥
सरलालाङ्गलीभ्याञ्च हितमुन्मन्थनाशनम्।
तथाश्मन्तकजम्ब्वाम्रपत्रक्काथेन सेचनम् ॥
प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयैः।
चूर्णैरुद्वर्त्तनैः पालीं तैलाक्तामवचूर्णयेत् ॥
लाक्षाविड़ङ्गकल्केन तैलं पक्वावचारयेत्।
स्विन्नां गोमयपिण्डेन प्रदिह्यात्परिलेहिके ॥
पिष्टैर्व्विड़ङ्गैरथ वा त्रिवृच्छ्यामार्कसंयुतैः।
करञ्जेङ्गुदिवीजैर्व्वा कुटजारग्वधायुतैः ॥
सर्व्वैर्व्वा सार्षपं तैलं सिद्धं मरिचसंयुतम् ॥
सनिम्बपत्रैरभ्यङ्गे मधूच्छिष्टान्वितं हितम्।
पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च ॥
पुष्ट्यर्थं मार्द्दवार्थञ्च कुर्य्यादभ्यञ्जनं हितम्।
लोपाकानूपमज्जानं वसां तैलं नवं घृतम् ॥
पचेद्दशगुणं क्षीरमावाप्य मधुरं गणम्।
अपामार्गाश्वगन्धे च तथा लाक्षारसं शुभम् ॥
तत्सिद्धं परिपूतञ्च स्वनुगुप्तं निधापयेत्।
तेनाभ्यञ्जयात् सदा पालिं सुस्विन्नामतिमर्द्दिताम् ॥
एतेन पाल्यो वर्द्धन्ते निरुजो निरुपद्रवाः।
हृद्याः पुष्टाः समाः स्निग्धा जायन्ते भूषणक्षमाः ॥

नीलोत्पलं भृङ्गरजोऽर्जुनत्वक्पिण्डीतकं कृष्णमयोरजश्च ।
बीजोद्भवं सहचरञ्च पुष्पं पथ्याश्च धात्रीसहितं विचूर्ण्य ॥
एकीकृतं सर्व्वमिदं प्रमाय पङ्केन तुल्यं नलिनीभवेन ।
संयोज्य पत्त्रं कलशे निधाय लौहे घटे सद्मनि सापिधाने ॥
अनेन तैलं विपचेद्विमिश्रं रसेन भृङ्गत्रिफलाभवेन ।
आसन्नपाके च परीक्षणार्थं पत्त्रं बलाकाभवमाक्षिपेच्च ॥
भवेद्यदा तद्भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रम् ।
कृष्णायसे मासमवस्थितं तदभ्यङ्गयोगात्पलितानि हन्यात् ॥
सैरीयजम्ब्वर्जुनकाश्मरीजं पुष्पं तिलाम्राकवचूतबीजे ।
पुनर्नवाकर्दमकण्टकार्य्यौ कासीसपिण्डीतकबीजसारम् ॥
फलत्रयं लौहरजोऽञ्जनञ्च यष्ट्याह्वयं नीरजसारिवे च ।
पिष्ट्वाथ सर्व्वं सहमीदयन्त्या साराम्भसा बीजकसम्भवेन ॥
साराम्भसः सप्तभिरेव पश्चात्प्रस्थैःसमालोड्य दशाहगुप्तम् ।
लौहे सुपात्रे विनिधाय तैलमक्षोद्भवं तच्च पचेत्प्रयत्नात् ॥
पक्वञ्च लौहेऽभिनवे निधाय नस्यं विदध्यात्परिशुद्धकायः ।
अभ्यङ्गयोगैश्च नियुज्यमानं भुञ्जीत माषान्कृशरामथो वा ॥
मासोपरिष्टाद्घनकुञ्चिताग्राः केशा भवन्ति भ्रमराञ्जनाभाः ।
केशास्तथान्ये खलती भवेयुर्जरा न चैनं सहसाभ्युपैति ॥
बलं परं सम्भवतीन्द्रियाणां भवेच्च वक्त्रं वलिभिर्व्विमुक्तम् ।
नाकामिनेऽनर्थिनि नाकृताय नैवार्य्ये तैलमिदं प्रदेयम् ॥
लाक्षारोध्रं द्वे हरिद्रे शिलाले कुष्ठं नागं गैरिकावर्णकाश्च ।
मञ्जिष्ठोग्रा स्यात्सुराष्ट्रोद्भवा च पत्तङ्गो वै रोचना चाञ्जनञ्च ॥
हेमाङ्गत्वक्पाण्डुपत्त्रं वटस्य कालीयं स्यात् पद्मकं पद्ममध्यम् ।

रक्तं श्वेतं चन्दनं पारदञ्च काकोल्यादिः क्षीरपिष्टश्च वर्गः॥
लेहोऽल्लाभिक्ष्यकङ्गोघृतञ्च दुग्धं क्वाथः क्षीरिणाञ्च द्रुमाणाम्।
एतत्सर्व्वं पक्कमेकध्यतस्तु वक्त्राभ्यङ्गे सर्पिरुक्तं प्रधानम्॥
हन्याद्व्यङ्गं नीलिकाञ्चातिवृद्धां वक्त्रेजाताः स्फोटिकाश्चापिकाश्चित्
पद्माकारं निर्व्वलीकञ्च वक्त्रं कुर्य्यादेतत्पीनगण्डं मनोज्ञम्।
राज्ञामेतद्योषितां चापि नित्यं कुर्य्याद्वैद्यस्तत्समानां नृणाञ्च।
कुष्ठघ्नं वै सर्पिरेतत्प्रधानं येषां पादे सन्ति वैपादिकाश्च॥
हरीतकीचूर्णमरिष्टपत्रं चूतत्वचं दाडिमपुष्पवृन्तम्।
पदञ्च दद्यान्मदयन्तिकाया लेपाङ्गरागो नरदेवयोग्यः॥

---

## षड्विंशतितमोऽध्यायः।

अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः॥

काम्यस्योदग्रवयसो वाजीकरणसेविनः।
सर्व्वेष्वृतुष्वहरहर्व्यवायो न निवारितः॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम्।
योषित्प्रसङ्गात्क्षीणानां क्लीवानामल्परेतसाम्॥
विलासिनामर्थवतां रूपयौवनशालिनाम्।
नृणाञ्च बहुभार्य्याणां योगा वाजीकरा हिताः॥
सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान्।
नारीस्तर्पयते तेन वाजीकरणमुच्यते॥
भोजनानि विचित्राणि पानानि विविधानि च।
वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा॥

यामिनी सेन्दुतिलका कामिनी नवयौवना ।
गीतं श्रोत्रमनोहारि ताम्बूलं मदिराः स्रजः ॥
मनसश्चाप्रतिघातो वाजीकुर्वन्ति मानवम् ॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् ॥
कट्वम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयो दृष्टः क्लैव्यं तदपरं स्मृतम् ॥
अतिव्यवायशीलो यो नच वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥
महता मेढ्ररोगेण मर्म्मच्छेदेन वा पुनः ।
क्लैव्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम् ॥
जन्मप्रभृति यः क्लीवः क्लैव्यं तत्सहजं स्मृतम् ।
बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः ॥
षष्ठं क्लैव्यं मतं तत्तु स्थिरशुक्रनिमित्तजम् ।
असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत् ॥
साध्यानामितरेषान्तु कार्य्यो हेतुविपर्य्ययः ।
विधिर्वाजीकरो यस्तु तं प्रवक्ष्याम्यतः परम् ॥
तिलमाषविदारीणां शालीनां चूर्णमेव वा ।
पौण्ड्रकेक्षुरसेनार्द्रं मर्दितं सैन्धवान्वितम् ॥
वराहमेदसा युक्तां घृतेनोत्कारिकां पचेत् ।
तां भक्षयित्वा पुरुषो गच्छेत्तु प्रमदाशतम् ॥
वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
शिशुमारवसापक्वाः शष्कुल्यस्तैस्तिलैः कृताः ॥

यः खादेत्स पुमान् गच्छेत् स्त्रीणां शतमपूर्ववत्।
पिप्पलीलवणोपेतं वस्ताण्डं चीरसर्पिषा ॥
साधितं भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम्।
पिप्पलीमाषशालीनां यवगोधूमयोस्तथा ॥
चूर्णभागैस्समैस्तैस्तु घृते पूपालिकां पचेत्।
तां भक्षयित्वा पीत्वातु शर्करामधुरं पयः ॥
नरश्चटकवद्गच्छेद्दश वारान्निरन्तरम्।
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम् ॥
सर्पिर्म्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छति ॥
एवमामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिवेत् ॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति।
पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते ॥
शिशुमारस्य वा खादेत्ते तु वाजीकरे भृशम्।
कुलीरकूर्म्मनक्राणामण्डान्येवं तु भक्षयेत् ॥
महिषर्षभवस्तानां पिवेच्छुक्राणि वा नरः।
अश्वत्थफलमूलत्वक्शुङ्गासिद्धं पयो नरः ॥
पीत्वा सशर्कराचौद्रं कुलिङ्ग इव हृष्यति।
विदारिमूलकल्कन्तु घृतेन पयसा नरः ॥
उडुम्बरसमं पीत्वा वृद्धोऽपि तरुणायते।
माषाणां पलमेकन्तु संयुक्तं चौद्रसर्पिषा ॥
अवलिह्य पयः पीत्वा तेन वाजीभवेन्नरः।
चीरपक्वांस्तु गोधूमानात्मगुप्ताफलैः सह ॥

शीतान्घृतयुतान्खादेत्ततः पश्चात्पयः पिबेत् ।
नक्रमूषिकमण्डूकचटकाण्डकृतं घृतम् ॥
पादाभ्यङ्गेन कुरुते बलं भूमिन्तु न स्पृशेत् ।
यावत्स्पृशति नो भूमिं तावद्गच्छेन्निरन्तरम् ॥
स्वयंगुप्तेक्षुरकयोः फलचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ।
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ।
शतावर्य्युच्चटामूलं पेयमेवं बलार्थिना ॥
स्वयंगुप्ताफलैर्युक्तं माषसूपं पिबेन्नरः ।

गुप्ताफलं गोक्षुरकाच्च वीजं तथोच्चटां गोपयसा विपाच्य ।
खजाहतं शर्करया च युक्तं पीत्वा नरो हृष्यति सर्वरात्रम् ॥
माषान् विदारीमपि सोच्चटाञ्च क्षीरे गवां क्षौद्रघृतोपपन्नाम् ।
पीत्वा नरः शर्करया सुयुक्तां कुलिङ्गवद्धृष्यति सर्वरात्रम् ॥

गृष्टीनां वृद्धवत्सानां माषपर्णभृतां गवाम् ।
यत्क्षीरं तत्प्रशंसन्ति बलकामेषु जन्तुषु ।
क्षीरमांसगणः सर्वः काकोल्यादिश्च पूजितः ।
वाजीकरणहेतोर्हि तस्मात्तत्तु प्रयोजयेत् ॥
एते वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः ।
सेव्या विशुद्धोपचितदेहैः कालाद्यपेक्षया ॥

---

## सप्तविंशोऽध्यायः ।

अथातः सर्वोपघातशमनीयं रसायनं व्याख्यास्यामः ॥

पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम् ।
प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः ॥
शरीरस्योपघाता ये दोषजा मानसास्तथा ।
उपदिष्टाः प्रदेशेषु तेषां वक्ष्यामि वारणम् ॥
शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः ।
त्रिशः समस्तमथ वा प्राक्पीतं स्थापयेद्वयः ॥

तत्र विड़ङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुयुक्तं यथाबलं शीततो येनोपयुञ्जीत शीततोयं चानुपिबेदेवमहरहर्मासं तदेव मधुयुक्तं भल्लातककाथेन वा मधुद्राक्षाकाथयुक्तं वा मध्वामलकरसाभ्यां वा गुड़ूचीकाथेन वा। एवमेते पञ्च प्रयोगा भवन्ति जीर्णे मुद्गा मलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्। एते खल्वर्शांसि क्षपयन्ति क्रमोनुपन्नति ग्रहणधारणशक्तिं जनयन्ति मासे मासे प्रयोगे वर्षशतमायुषोऽभिवृद्धिर्भवति ॥

विड़ङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं स्विन्नमवतार्य्य दृषदि पिष्टमायसे दृढ़े कुम्भे मधूदकोत्तरं प्रावृषि भस्मराशावन्तर्गृहे चतुरो मासान्नि-दध्यात् वर्षाभिगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसम्पा-

ताभिहुतं कृत्वा प्रातः प्रातर्यथा बलमुपयुञ्जीत। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात् पांशुशय्यायां शयीत तस्य नासादूर्द्धं सर्वाङ्गेभ्यः कृमयो निःक्रामन्ति तानणुतैलेनाभ्यज्य वंशविदलेनापहरेत्। द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत् चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते अमानुषं चादित्यप्रकाशं वपुरधिगच्छति दूराच्छ्रवणानि दर्शनानि चास्य भवन्ति रजस्तमसी चापोह्य सत्वमधितिष्ठति। श्रुतिनिगाद्यपूर्वोत्पादी गजबलोऽश्वजवः पुनर्युवाष्टौ वर्षशतान्यायुरवाप्नोति। तस्याणुतैलमभ्यङ्गार्थे अजकर्णकषायमुत्सादनार्थे सोमोरं कूपोदकं स्नानार्थे चन्दनमुपलेपनार्थे भल्लातकविधानवदाहारः परिहारश्च। काश्मर्य्याणां निष्कुलीकृतानामेष एव कल्पः पांशुशय्याभोजनवर्ज्जम्। अत्र हि पयसा शृतेन भोक्तव्यम्। चार्टिषश्च पूर्वेण समानाः शोणितपित्तनिमित्तेषु विकारेष्वेतेषामुपयोगः।

यथोक्तमागारं प्रविश्य बलामूलार्द्धपलं पलं वा पयसालोड्य पिबेत्। जीर्णे पयःसर्पिरोदन इत्याहारः। एवं द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति। एवं दिवसशतमुपयुज्य वर्षशतं वयस्तिष्ठति। एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः। विशेषतस्त्वतिबलामुदकेन नागबलाचूर्णं मधुना विदारीचूर्णं वा क्षीरेण शतावरीमप्येवं पूर्वेणान्यत्समानमाशिषश्च समाः। एताश्चौ-

षधयो बलकामानां शोणितच्छर्दयतां विरिच्यमानानां चोपदिश्यन्ते।

वाराहीमूलतुलाचूर्णं कृत्वा ततोमात्रां मधुयुक्तां पयसालोड्य पिबेत् जीर्णे पयःसर्पिरोदन इत्याहारः। प्रतिषेधोऽत्र पूर्ववत्क्रियाप्रयोगमुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम्। एतेनैव चूर्णेन पयोऽवचूर्ण्य शृतशीतमभिमथ्याज्यमुत्पाद्य मधुयुतमुपयुञ्जीत सायम्प्रातरेककालं वा जीर्णे पयःसर्पिरोदन इत्याहारः। एवं मासमुपयुज्य वर्षशतायुर्भवति। जीर्णे पयः सर्पिरोदन इत्याहारः।

चक्षुःकामः प्राणकामो वा वीजकसाराग्निमन्थमूलं निःक्वाथ्य माषप्रस्थं साधयेत् तस्मिन्सिध्यति चित्रकमूलानामक्षमात्रं कल्कं दद्यादामलकरसचतुर्थभागं ततः स्विन्नमवतार्य्य सहस्रसम्पाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिर्भ्यां संसृज्योपयुञ्जीत यथा बलं लवणं परिहरन्भक्षयेत् जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नीयात् पयसा वा मासत्रयमेवमाभ्यां प्रयोगाभ्यां चक्षुःसौपर्ण्यवद्भवत्यनल्पबलो बलवांस्त्रीषु चाक्षयो वर्षशतायुर्भवतीति।

भवति चात्र।

> पयसा सह सिद्धानि नरः सनफलानि यः।
> भक्षयेत्पयसा सार्द्धं वयस्तस्य न शीर्य्यते॥

## अष्टाविंशोऽध्यायः ।

अथातो मेधायुष्कामीयं रसायनं चिकित्सितं व्याख्यास्यामः ।

मेधायुःकामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सह समालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात् सप्तरात्रादुद्धृत्य कृतदोषश्च यथाबलं पिण्डं प्रयच्छेदनुदिते सूर्य्ये उष्णोदकं चानुपिवेत् । भल्लातकविधानवच्चागारप्रवेशो जीर्णौषधश्चापराह्ने हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरेणौदनमश्नीयादेवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतिनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति ॥ कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोर्मूत्रेणालोड्यार्द्धपलिकं पिण्डं विगतलौहित्ये सवितरि पाययेत् पराह्ने चालवणेनामलकयूषेण सर्पिष्मन्तमोदनमश्नीयात । एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति । एष एवोपयोगस्त्विक्मूलानां रजन्यास्त्विक्मूले विशेषो द्विपलिकं पिण्डं परं प्रमाणं शेषं पूर्व्ववत् ।

हृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसा लोड्य पिवेत्पयोऽनुपानं वा तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत तिलैर्व्वा सह भक्षयित्वा त्रीन्मासान् पयोऽनुपानं जीर्णे पयः सर्पिरोदन इत्याहारः । एवमुपयुञ्जानो ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशतमायुरवा-

श्नाति त्रिरात्रोपोषितस्य त्रिरात्रमेनां भक्षयेत्। त्रिरात्रा-दूर्द्ध्वं पयःसर्पिरिति चोपयुञ्जीत। विल्वमात्रं पिण्डं वा पयसालोड्य पिबेदेवं दशरात्रमुपयुज्य मेधावी वर्षशता-युर्भवति।

हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वर-समादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत् क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति। द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पा-दयति। नष्टञ्चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति। एवमेकविंशतिरात्रमुप-युज्यालक्ष्मीरपक्रामति मूर्त्तिमती चैनं वाग्देव्यनुप्रवि-शति सर्वाश्चैनं श्रुतय उपतिष्ठन्ति। श्रुतधरः पञ्चवर्ष-शतायुर्भवति।

ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विड़ङ्गतण्डुलानां कुड़वं द्वे द्वे पले वचात्रिवृतयोर्द्वादश हरीतक्यामलकविभीतकानि श्लक्ष्णपिष्टान्यावाप्यैकध्यं साधयित्वा खनुगुप्तं निदध्यात्। ततः पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत जीर्णे पयः-सर्पिरोदन इत्याहारः। एतेनोर्द्ध्वमधस्तिर्य्यक्कृमयो निः-क्रामन्ति। अलक्ष्मीरपक्रामति। पुष्करवर्णः स्थिरवयाः श्रुतनिगादी त्रिवर्षशतायुर्भवत्येतदेव कुष्ठविषमज्वराप-स्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु च संशो-धनमादिशन्ति।

हृतदोष एवागारं प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं पयसालोड्य पिवेत् जीर्णे पयःसर्पिरोदन इत्याहार एवन्द्वादशरात्रमुपयुञ्जीत ततोऽस्य श्रोत्रं विव्रियते द्विरभ्यासात्स्मृतिमान् भवति त्रिरभ्यासाच्छ्रुतमादत्ते चतुर्द्वादशरात्रमुपयुज्य सर्वं तरति किल्बिषं तार्क्ष्यदर्शनमुत्पद्यते शतायुश्च भवति। द्वे द्वे पले इतरस्या वचाया निःक्वाथ्य पिवेत् पयसा समानं भोजनं समाः पूर्वेणाशिषश्च।

वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति।

अथायुःकामीयं वक्ष्यामः।

मन्त्रौषधसमायुक्तं संवत्सरफलप्रदम्।
विल्वस्य चूर्णं पुष्ये तु हुतं वारान्सहस्रशः॥
श्रीसूक्तेन नरः काल्ये ससुवर्णं दिने दिने।
सर्पिर्मधुयुतं लिह्यादलक्ष्मीनाशनं परम्॥
त्वचं विल्वस्य मूलस्य मूलक्वाथं दिने दिने।
प्राश्नीयात्पयसा सार्द्धं स्नात्वा हुत्वा समाहितः॥
दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत्।
हुत्वा विशानां क्वाथन्तु मधुलाजैश्च संयुतम्॥
अमोघं शतसाहस्रं दृक्तं युक्तरथं स्मृतम्।
सुवर्णपद्मवीजानि मधुलाजाः प्रियङ्गवः॥
गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत्।
नीलोत्पलदलक्वाथो गव्येन पयसा शृतः॥

ससुवर्णतिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः।
गव्यं पयः सुवर्णञ्च मधूच्छिष्टञ्च माक्षिकम्॥
पीतं शतसहस्राभिहुतं युक्तरथं स्मृतम्।
वचाघृतसुवर्णञ्च विल्वचूर्णमिति त्रयम्॥
मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्द्धनम्।
वासामूलतुलाक्काथे तैलमावाप्य साधितम्॥
हुत्वा सहस्रमश्नीयान्मेध्यमायुष्यमुच्यते।
यावकांस्तावकान्भक्षेदभिभूययवांस्तथा॥
पिप्पलीमधुसंयुक्तान् शिचाचरणवद्भवेत्।
मध्वामलकचूर्णानि सुवर्णमिति च त्रयम्॥
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात्।
शतावरीघृतं सम्यगुपयुक्तं दिने दिने॥
सक्षौद्रं ससुवर्णञ्च नरेन्द्रं स्थापयेद्वशे।
गोचन्दनामोहनिकामधुकं माक्षिकं मधु॥
सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता।
पद्मनीलोत्पलक्काथे यष्टीमधुकसंयुते।
सर्पिरासादितं गव्यं ससुवर्णं सदा पिवेत्॥
पयश्चानुपिवेत्सिद्धं तेषामेव समुद्भवे।
अलक्ष्मीघ्नं सदायुष्यं राज्याय सुभगाय च॥
यत्र नोदीरितो मन्त्रो योगेष्वेतेषु साधने।
शब्दिता तत्र सर्वत्र गायत्री त्रिपदी भवेत्॥
पाप्मानं नाशयन्त्येता दृष्टुषौषधयः श्रियम्।
कुर्य्युर्नागबलं चापि मनुष्यममरोपमम्॥

सतताध्ययनं वादः परतन्त्रावलोकनम् ।
तद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः ॥
आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणम् ।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनम् ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

अथातः स्वभावव्याधिप्रतिषेधनीयं रसायनं व्याख्यास्यामः ।

ब्रह्मादयोऽसृजन्पूर्वममृतं सोमसंज्ञितम् ।
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥

एक एव खलु भगवान्सोमः स्थाननामाकृतिवीर्य्यविशेषैश्चतुर्विंशतिधा भिद्यते । तद्यथा—

अंशुमान्मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥
प्रतानवांस्तालवृन्तः करवीरोंऽशवानपि ।
स्वयम्प्रभो महासोमो यश्चापि गरुड़ाहृतः ॥
गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥
गायत्र्या त्रिपदा युक्तो यश्चोड़ुपतिरुच्यते ।
एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥
सर्वेषामेव चैतेषामेको विधिरुपासने ।

सर्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते ॥

अतोऽन्यतमं सोममुपयुयुक्षुः सर्व्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरागारे कृतमङ्गलः सोमकन्दं सुवर्णसूच्याविदार्य्य पयोगृह्णीयात्सौवर्णे पात्रेऽञ्जलिमात्रं ततः सकृदेवोपयुञ्जीत नास्वादयंस्ततउपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत्।

रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः।
आसीत तिष्ठेत्क्रामेच्च न कथञ्चन संविशेत् ॥

सायं वा भुक्तवान् श्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत तृषितोवा शीतोदकमात्रां पिबेत् ततः प्रातरुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्टा तथैवासीत। तस्य जीर्णे सोमे छर्दिरुपपद्यते ततः शोणिताक्तं क्रिमिव्यामिश्रं छर्दितवतः सायं शृतशीतं क्षीरं वितरेत् ततस्तृतीयेऽहनि क्रिमिव्यामिश्रमतिसार्य्यते स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति ततः सायं स्नातस्य पूर्ववदेव क्षीरं वितरेत्। क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत ततश्चतुर्थेऽहनि तस्य श्वयथुरुत्पद्यते। ततः सर्व्वाङ्गेभ्य क्रमयो निष्क्रामन्ति तदहस्स शय्यायां पांशुभिरवकीर्य्यमाणः शयीत। ततः सायं पूर्ववदेव क्षीरं वितरेत्। एवं पञ्चमषष्ठयोर्दिवसयोर्वर्त्तेत

केवलमुभयकालमस्मै क्षीरं वितरेत्ततः सप्तमेऽहनि निर्मांस-
स्त्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति। तदहश्च
क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं
पयःपाययेत्। ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दन-
प्रदिग्धगात्रं पयःपाययित्वा पांशुशय्यां समुत्सृज्य क्षौमा-
स्तृतायां शाययेत्ततो मांसमाप्यायते त्वक्चावदलति। दन्त-
नखरोमाणि चास्य पतन्ति। तस्य नवमदिवसात्प्रभृत्यणु-
तैलाभ्यङ्गः सोमवल्ककषायपरिषेकः। ततो दशमेऽहन्ये-
तदेव वितरेत ततोऽस्य त्वक्स्थिरतामुपैति। एवमेका-
दशाद्द्वादशयोर्व्वर्त्तेत। तत्र त्रयोदशात्प्रभृति सोमवल्ककषाय-
परिषेकः। एवमाषोड़शादावर्त्तेत ततःसप्तदशाष्टादशयोर्दि-
वसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिक-
निकाशाः समाः स्थिराः सहिष्णवः। तदा प्रभृति चानवैः
शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत्पञ्चविंशतिरिति।
ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा ततोऽस्य
नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः स्थिराः
स्निग्धा लक्षणसम्पन्नाः केशाश्च जायन्ते त्वक्च नीलोत्पला-
तसीपुष्पवैदुर्य्यप्रकाशा। ऊर्द्धञ्च मासात्केशान्वापयेद्वापयित्वा
चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा
स्नापयेत्।

ततोऽस्यानन्तरं सप्तरात्रात्केशा जायन्ते भ्रमराञ्जन-
निभाः कुञ्चिताः स्निग्धास्ततस्त्रिरात्रात्प्रथमपरिसरान्निःक्रम्य
मूहूर्त्तं स्थित्वा पुनरेवान्तःप्रविशेत्। ततोऽस्य बलातैल-

मभ्यङ्गार्थेऽवचार्य्यम्। यवपिष्टमुद्वर्त्तनार्थे। सुखोष्णञ्च पयः परिषेकार्थे। अजकर्णकषायमुत्सादनार्थे। सौभीरं कूपोदकं स्नानार्थे चन्दनमनुलेपार्थे। आमलकरसविमिश्राश्चास्य यूषसूपविकल्पाः। क्षीरमधुकसिद्धञ्च कृष्णतिलमवचारणार्थे। एवं दशरात्रं ततोऽन्यद्दशरात्रं द्वितीये परिसरे वर्त्तेत। ततस्तृतीये परिसरे स्थिरीकुर्वन्नात्मानमन्यद्दशरात्रमासीत। किञ्चिदातपपवनान् वा सेवेत पुनश्चान्तःप्रविशेत्। नचात्मानमादर्शेषु वा निरीक्षेत रूपशालित्वात् ततोऽन्यद्दशरात्रं क्रोधादीन् परिहरेदेवं सर्व्वेषामुपयोगः। विशेषतस्तु वल्लीप्रतानक्षुपादयः सोमा भक्षयितव्याः। तेषान्तु प्रमाणमञ्जलिचतुर्थमुष्टयः।

अंशवन्तं सौवर्णे पात्रेऽभिषुणुयात्। चन्द्रमसं राजते चोपयुज्याष्टगुणमैश्वर्य्यमवाप्येशानन्देवमनुप्रविशति। शेषांस्तु ताम्रमये मृन्मये वा रोहिते वा चर्म्मणि वितते शूद्रवर्ज्जं त्रिभिर्वर्णैः सोमा उपयोक्तव्याः। ततश्चतुर्थे मासे पौर्णमास्यां शुचौ देशे ब्राह्मणानर्चयित्वा कृतमङ्गलो निःक्रम्य यथोक्तं व्रजेदिति।

ओषधीनां पतिं सोममुपयुज्य विचक्षणः।
दशवर्षसहस्राणि नवान्धारयते तनुम्॥
नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च।
तस्यालमायुःक्षपणे समर्थाश्च भवन्ति हि॥
भद्राणां षष्टिवर्षाणां प्रसुतानामनेकधा।
कुञ्जराणां सहस्रस्य बलं समधिगच्छति॥

क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि ।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः ॥
कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः ।
प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥
साङ्गोपाङ्गांश्च निखिलान्वेदान्विन्दति तत्त्वतः ।
चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत् ॥
सर्व्वेषामेव सोमानां पत्राणि दशपञ्च च ।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥
एकैकं जायते पत्रं सोमस्याहरहस्तदा ।
शुक्लस्य पौर्णमास्यान्तु भवेत्पञ्चदशच्छदः ॥
शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः ।
कृष्णपक्षक्षये चापि लता भवति केवला ॥
अंशुमानाज्यगन्धस्तु कन्दवान्रजतप्रभः ।
कदल्याकारकन्दस्तु मुञ्जवाल्लशुनच्छदः ॥
चन्द्रमाः कनकाभासो जले चरति सर्वदा ।
गरुड़ाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ॥
सर्पनिर्म्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ ।
तथान्यैर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ॥
सर्वं एव तु विज्ञेयाः सोमाः पञ्च दशच्छदाः ।
क्षीरकन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः ॥
हिमवत्यर्बुदे सह्ये महेन्द्रमलये तथा ।
श्रीपर्व्वते देवगिरौ गिरौ देवसहे तथा ॥
पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ।

उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ॥
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ॥
हठवत्प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि ॥
काश्मीरेषु सरोदिव्यं नाम्ना क्षुद्रकमानसम् ॥
गायत्र्यस्त्रैष्टुभः पांक्तो जागतः शाङ्करस्तथा ॥
अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः ।
न तान्पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः ॥
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ।

---

## त्रिंशत्तमोऽध्यायः ।

अथातो निवृत्तसन्तापीयं रसायनं व्याख्यास्यामः ॥
यथानिवृत्तसन्तापा मोदन्ते दिवि देवताः ।
तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः ॥

अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन् । तद्यथा । अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद्भेषजापमानी चेति । सप्तभिरेव कारणैर्न सम्पद्यते । अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधा-लाभाच्चेति ।

अथौषधीर्व्याख्यास्यामः । श्वेतकापोती कृष्णकापोती

गोनसी वाराही कन्या छत्रातिच्छत्रा करेणुरजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी चाजलोमी महावेगवती चेत्यष्टादश सोमसमवीर्य्या महौषधयो व्याख्याताः । तासां सोमवत्क्रियाशीःस्तुतयः शास्त्रेऽभिहितास्तासामागारेऽभिहुतानां याः क्षीरवत्यस्तासां क्षीरकुड़वं सकृदेवोपयुञ्जीत ।

यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि क्षीरिकाण्डानि प्रमाणमुपयोगे । श्वेतकापोती समूलपत्रा भक्षयितव्या गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभुञ्जीत । चक्रकायाः पयःसकृदेव । ब्रह्मसुवर्चला सप्तरात्रमुपयोक्तव्या ।

भक्ष्यकल्पेन शेषाणां पञ्च पलानि क्षीराढ़कक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति ।

भवन्ति चात्र ।

युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनम् ।
कुर्य्युरेताः क्रमेणैव द्विसाहस्रायुषं नरम् ॥
अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः ।
चरत्यमोघसङ्कल्पो नभस्यम्बुदद्गमे ॥
व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदाः ।
गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा ॥

अथ वक्ष्यामि विज्ञानमौषधीनां पृथक् पृथक्।
मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी॥
पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधैः।
निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता॥
सर्पाकारा लोहिताग्रा श्वेतकापोतिरुच्यते।
द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम्॥
द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिम्।
सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम्॥
एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत्।
कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा॥
एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा।
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे॥
जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते।
कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः॥
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी।
करेणुः सुबहुक्षीरा कन्देन गजरूपिणी॥
हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी॥
अजास्तनाभंकन्दातु सक्षीरा क्षुपरूपिणी।
अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा॥
श्वेतां विचित्रकुसुमां काकादन्या समां क्षुपाम्।
चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीम्॥
मूलिनी पञ्चभिः पत्रैः सुरक्तांशुककोमलैः।
आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी॥

कनकाभा जलान्तेषु सर्वतः परिसर्पति ।
सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥
अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः ।
पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः ।
श्रावणी महती ज्ञेया कनकाभा पयस्विनी ।
श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा ।
गोलोमी चाजलोमी च रोमशे कन्दसम्भवे ।
हंसपादीव विच्छिन्नैः पत्रैः कूलसमुद्भवैः ॥
अथवा शङ्खपुष्पी च रक्तान्ता सर्परूपतः ।
वेगेन महताविष्टा सर्पनिर्मोकसन्निभा ।
एषा वेगवती नाम जायते ह्यम्बुदक्षये ।
समादी सर्वरूपिण्यो याश्चौषध्यः प्रकीर्त्तिताः ।
तासामुद्धरणं कार्य्यं मन्त्रेणानेन सर्वदा ।
महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि ।
तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै ।
मन्त्रेणानेन मतिमान् सर्वानप्यभिमन्त्रयेत् ।
अश्रद्दधानैरलसैः कृतघ्नैः पापकर्मभिः ।
नैवासादयितुं शक्याः सोमाः सोमसमास्तथा ॥
पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः ।
निहितं सोमवीर्य्यासु सोमे चाप्योषधीपतौ ॥
देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे ।
दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला ॥
आदित्यपर्णिनी ज्ञेया तथैवाहि हिमक्षये ।

दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्।
करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा ॥
गोलोमी चाजलोमीच महती श्रावणी तथा ॥
वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते।
कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः ॥
क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम्।
विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु ॥
मलये नलसेतौ च वेगवत्यौषधी ध्रुवा।
कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः।
सोमवञ्चात्र वर्त्तन फलं तावच्च कीर्त्तितम् ॥
सर्वा विज्ञेयास्त्वौषध्यः सोमेचाप्यर्वुदे गिरौ।
सशृङ्गैर्देवचरितैरम्बुदानीकभेदिभिः ॥
व्यासस्तीर्थैश्च विख्यातैः सिद्धर्षिसुरसेवितैः।
गुहाभिर्भीमरूपाभिः सिंहोन्नादितकुक्षिभिः ॥
गजालोड़िततोयाभिरापगाभिः समन्ततः।
विविधैर्धातुभिश्चित्रैः सर्व्वचैवोपशोभितः ॥
नदीषु शैलेषु सरस्सु चापि पुण्येष्वरण्येषु तथाश्रमेषु।
सर्व्वत्र सर्वाः परिमार्गितव्याः सर्व्वत्र भूमिर्हि वसूनि धत्ते।

## एकत्रिंशत्तमोऽध्यायः ।

अथातः स्नेहोपयौगिकं चिकित्सितं व्याख्यास्यामः ।

स्नेहसारोऽयं पुरुषः प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति। स्नेहोहि पानानुवासनमस्तिष्कशिरोवस्त्युत्तरवस्तिनस्यकर्णपूरणगात्राभ्यङ्गभोजनेषूपयोज्यः ।

तत्र द्वियोनिश्चतुर्विकल्पोऽभिहितः स्नेहः स्नेहगुणाश्च ; तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानम्। स्थावरेभ्यस्तिलतैलं प्रधानमिति ।

अत ऊर्द्धं यथाप्रयोजनं यथाविधानं च स्थावरस्नेहानुपदेक्ष्यामः ।

तत्र तिल्वकैरण्डकोशाम्रदन्तीद्रवन्तीसप्तलाशङ्खिनीपलाशविषाणिकागवाक्षीकम्पिल्लकशम्याकनीलिनीस्नेहा विरेचयन्ति ।. जीमूतककुटजकृतवेधनेक्ष्वाकुधामार्गवमदनस्नेहा वामयन्ति । विडङ्गखरमञ्जरीमधुशिग्रुसूर्य्यवल्लीपीलुसिद्धार्थकज्योतिष्मतीस्नेहाः शिरोविरेचयन्ति ।

करञ्जपूतिकक्रतमालमातुलुङ्गेङ्गुदीकिराततिक्तकस्नेहा दुष्टव्रणेषूपयुज्यन्ते। तुवरककपित्थकम्पिल्लकभल्लातकपटोलस्नेहा महाव्याधिषु। त्रपुसैर्व्वारुककर्कारुकतुम्बीकुष्माण्डस्नेहा। मूत्रसङ्गेषु। कपोतवङ्कावल्गुजहरीतकीस्नेहाः शर्कराश्मरीषु । कुसुम्भसर्षपातसीपिचुमर्दातिमुक्तकभाण्डीकटुतुम्बीकटभीस्नेहाः प्रमेहेषु। तालनालिकेरपनसमोचपियालविल्वमधूकश्लेष्मातकाम्रातकफलस्नेहाः पित्तसंसृष्टे

वायौ। विभीतकभल्लातकपिण्डीतकस्नेहाः कृष्णीकरणे-श्रवणकङ्कटुण्टुकस्नेहाः पाण्डुकरणे। शिंशपागुरुसार-स्नेहा दद्रुकुष्ठकिटिमेषु।

सर्वं एव स्नेहा वातमुपघ्नन्ति। तैलगुणाश्च समासेन व्याख्याताः।

अतऊर्द्धं कषायस्नेहपाकक्रममुपदेक्ष्यामः।

तत्र केचिदाहुस्त्वक्पत्रमूलादीनां भागस्तच्चतुर्गुणजल-मावाप्यचतुर्भागावशेषं निःक्वाथ्यापहरेदित्येष कषायपाक-कल्पः। स्नेहप्रस्तेषु षट्सु चतुर्गुणं द्रवमावाप्य चतुरश्चा-चसमान् भेषजपिण्डानित्येष स्नेहपाककल्पः। एतत्तु न सम्यक्कस्मादागमासिद्धत्वात्।

पलकुड़वादीनामतो मानन्तु व्याख्यास्यामः।

तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषकः। ते षोड़श सुवर्णम्। अथ मध्यमनिष्पावा वा एकोनविंशति-र्द्धरणम्। तान्यर्द्धतृतीयानि कर्षः। ततश्चोर्द्धं चतुर्गुण-मभिवर्द्धयन्तः पलकुड़वप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते तुला पलशतं तानि विंशतिर्भारः शुष्काणामिदं मानमार्द्रद्रवा-णाञ्च द्विगुणमिति।

तत्रान्यतमपरिमाणसंमितानां यथायोगं त्वक्पत्र-मूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छे-दयित्वा भेद्यान्यणुशोभेदयित्वावकुट्याष्टगुणेन षोड़शगुणेन वाम्भसाभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्वाथयित्वा-पहरेदित्येष कषायपाककल्पः स्नेहाच्चतुर्गुणो द्रवः

स्नेहचतुर्थांशो भेषजकल्कस्तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः ।

अथ वा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः । स्नेहकुडवे भेषजपलं पिष्टं कल्कं चतुर्गुणं द्रवमावाप्य विपचेदित्येष स्नेहपाककल्पः ।

भवतश्चात्र ।

स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम् ।
तत्रायं विधिरास्थेयो निर्द्दिष्टे तत्तदेव तु ॥
अनुक्तद्रवकार्य्ये तु सर्वत्र सलिलं मतम् ।
कल्कक्काथावनिर्द्दिष्टे गणात्तस्मात्प्रयोजयेत् ।

अतऊर्द्धं स्नेहपाकक्रममुपदेक्ष्यामः ।

स तु त्रिविधस्तद्यथा मृदुर्म्मध्यमः खर इति । तत्र स्नेहौषधिविवेकमात्रं यत्र भेषजं स मृदुरिति । मधूच्छिष्टमिव विशदमविलेपि भेषजं यत्र स मध्यमः । कृष्णमवसन्नमीषद्विशदं चिक्कणं च यत्र भेषजं स खर इति । अतऊर्द्धं दग्धस्नेहो भवति । तं पुनः साधु साधयेत् । तत्रपानाभ्यवहारयोर्मृदुः ; नस्याभ्यङ्गयोर्मध्यमः । वस्तिकर्णपूरणयोस्तु खर इति ।

भवतश्चात्र ।

शब्दस्योपशमे प्राप्ते फेणस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥
घृतस्यैवं विपक्वस्य जानीयात्कुशलो भिषक् ।
फेणोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत ॥

अतऊर्द्धं स्नेहपानक्रममनुपदेच्यामः। अथ लघुकोष्ठा-यातुरायकृतमङ्गलस्वस्तिवाचनायोदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि यथाबलं तैलस्य घृतस्य वा मात्रां पातुं प्रयच्छेत्। पीतमात्रे चोष्णोदकेनोपस्पृश्य सोपानत्को यथासुखं विहरेत्।

रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम्।
हीनमेधास्मृतीनाञ्च सर्पिः पानं प्रशस्यते॥
क्रमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः।
पिवेयुस्तैलसात्म्याश्च तैलं दार्ढ्यार्थिनश्च ये॥
व्यायामकर्षिताः शुष्करेतोरक्तामहारुजः।
महाग्निमारुतप्राणा वसायोग्या नराः स्मृताः॥
क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः।
मज्जानमाप्नुयुः सर्वे सर्पिर्वा स्यौषधान्वितम्॥
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
दोषाणामल्पभूयस्त्वं संसर्गं समवेक्ष्य च।
युञ्ज्यात्त्रिषष्टिधा भिन्नैः समासव्यासतो रसैः॥
स्नेहसात्म्यः क्लेशसहः काले नात्युष्णशीतले।
अच्छमेव पिवेत्स्नेहमच्छपानं हि पूजितम्॥
शीतकाले दिवा स्नेहमुष्णकाले पिवेन्निशि।
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा॥
वातपित्ताधिकस्योष्णे तृष्णामूर्च्छोन्मादकारकः।
शीते वातकफार्त्तस्य गौरवारुचिशूलकृत्॥

स्नेहपीतस्य चेत्तृष्णा पिबेदुष्णोदकं नरः।
एवं चानुपशाम्यन्त्यां स्नेहमुष्णाम्बुना वमेत्
दित्वाच्छीतैः शिरः शीतं तोयं चाप्यवगाहयेत्
या मात्रा परिजीर्य्येत चतुर्भागगतेऽहनि।
सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता॥
या मात्रा परिजीर्य्येत तथार्द्धदिवसे गते।
सा वृष्या वृंहणी चैव मध्यदोषे च पूजिता।
या मात्रा परिजीर्य्येत चतुर्भागावशेषिते।
स्नेहनीया च सा मात्रा बहुदोषे च पूजिता
या मात्रा परिजीर्य्येत्तु तथा परिणतेऽहनि
ग्लानिमूर्च्छामदान्हित्वा सा मात्रा पूजिता भवेत्
अहोरात्रादसन्दुष्टा या मात्रा परिजीर्य्यति।
सा तु कुष्ठविषोन्मादग्रहापस्मारनाशिनी॥
यथाग्नि प्रथमां मात्रां पाययेत विचक्षणः।
पीतोह्यतिवह्णस्नेहो जनयेत्प्राणसंशयम्॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति।
विष्टभ्यचापि जीर्य्यंन्तं वारिणोष्णेन वामयेत्॥
जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत्
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा॥
स्नुः पच्यमाने दृड्दाहभ्रमसादारतिक्लमाः।
परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम्॥
यवागूं पाययेत्कोष्णां कामं क्लिन्नाल्पतण्डुलाम्।
देयौ यूषरसौ वापि सुगन्धौ स्नेहवर्जितौ॥

कृतौ वाच्छल्पसर्पिष्कौ यवागूर्वा विधीयते ।
द्विवित्र्यहं चतुरहं पञ्चाहं षड़हं तथा ॥
सप्त रात्रात्परं स्नेहः सात्मीभवति सेवितः ।
सुकुमारं कृशं वृद्धं शिशुं स्नेहद्विषं तथा ॥
तृष्णार्त्तमुष्णकाले च सह भक्तेन पाययेत् ।
पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तकः ॥
पीतमैकध्यमेतद्धि सद्यःस्नेहनमुच्यते ।
भृष्टमांसरसे स्निग्धा यवागूः स्वल्पकल्पिता ॥
सक्षुद्रा पीयमाना तु सद्यःस्नेहनमुच्यते ।
सर्पिष्मती पयःसिद्धा यवागूः स्वल्पतण्डुला ॥
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते ।
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम् ॥
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यःस्नेहनमुच्यते ।
यवकोलकुलत्थानां क्वाथो भागत्रयान्वितः ॥
पयोदधिसुराक्षीरघृतभागैः समन्वितः ।
सिद्धमेतैर्घृतं पीतं सद्यःस्नेहनमुत्तमम् ॥
राज्ञे राजसमेभ्यो वा देयमेतद्घृतोत्तमम् ।
बलहीनेषु वृद्धेषु मृदग्निस्त्रीमहात्मसु ॥
अल्पदोषेषु योज्याः स्युर्ये योगाः सम्यगीरिताः ॥
विवर्जयेत्स्नेहपानमजीर्णी चोदरी ज्वरी ॥
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीड़ितः ।
छर्द्यर्दितः पिपासार्त्तः श्रान्तः पानक्लमान्वितः ॥
दत्तवस्तिर्विरिक्तश्च वान्तो यश्चापि मानवः ।

अकाले दुर्द्दिने चैव नच स्नेहं पिबेन्नरः ॥
अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् ।
स्नेहपानाद्भवन्त्येषां नृणां नानाविधा गदाः ॥
गदा वा कृच्छ्रतां यान्ति न सिध्यन्त्यथ वा पुनः ।
गर्भाशये सशेषाः स्युरक्तक्लेदमलास्ततः ॥
स्नेहं जह्यान्निषेवेत पाचनं रूक्षमेव च ।
दश रात्रात्ततः स्नेहं यथावदवचारयेत् ॥
पुरीषं ग्रथितं रूक्षं कृच्छ्रादन्नं विपच्यति ।
उरोविदहते वायुः कोष्ठादुपरि धावति ॥
दुर्व्वर्णो दुर्व्वलश्चैव रूक्षो भवति मानवः
ग्लानिः सदनमङ्गानामधस्तात्स्नेहदर्शनम् ॥
सम्यक् स्निग्धस्य लिङ्गानि स्नेहद्वेषस्तथैव च ।
भक्तद्वेषो मुखस्रावो गुददाहः प्रवाहिका ॥
पुरीषातिप्रवृत्तिश्च भृशस्निग्धस्य लक्षणम् ।
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् ॥
श्यामाककोरदूषान्नतक्रपिण्याकशक्तुभिः ॥
दीप्तान्तरग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्ब्बलवर्णयुक्तः ।
दृढ़ेन्द्रियो मन्दजरः शतायुः स्नेहोपयोगी पुरुषो भवेत्तु ॥
स्नेहो हितो दुर्व्बलवह्निदेहसन्धुक्षणे व्याधिनिपीड़ितस्य ।
बलान्वितौभोजनदोषजातैः प्रमर्द्दितुं तौ सहसा न साध्यौ ॥

---

द्वात्रिंशत्तमोऽध्यायः ।

अथातः स्वेदावचारणीयं चिकित्सितं व्याख्यास्यामः ।

चतुर्विधः स्वेदस्तद्यथा । तापस्वेद उष्मस्वेद उपनाह-स्वेदोद्रवस्वेद इति । अत्र सर्व्वस्वेदविकल्पावरोधः ।

तत्र तापस्वेदः । पाणिकांस्यकन्दुकपालवालुकावस्त्रैः प्रयुज्यते शयानस्यचाङ्गतापो बहुशः खादिराङ्गारैरिति ।

उष्मस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णान्-द्भिरासिञ्चेदम्लद्रव्यैर्वातैरार्द्रलक्तकपरिवेष्टितमङ्गप्रदेशं स्वेद-येत् । मांसरसपयोदधिधान्याम्लवातहरपत्रभङ्गक्वाथपूर्णां वा कुम्भीमनुतप्तां प्राच्छाद्योष्माणं गृह्णीयात् । पार्श्वच्छिद्रेण वा कुम्भेनाधोमुखेन तस्य मुखमभिन्धाय तस्मिन् छिद्रे हस्तिशुण्डाकारां नाड़ीं प्रणिधाय तं स्वेदयेत् ।

सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम् ।
हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥
सुखा सर्व्वाङ्गगा ह्येषा न च क्लिश्नाति मानवम् ।
व्यामार्द्धमात्रा त्रिवक्रा हस्तिहस्तसमाकृतिः ॥
स्वेदनार्थे हिता नाड़ी कैलिञ्जी हस्तिशुण्डिका ।
पुरुषायाममात्राञ्च भूमिमुत्कीर्य्य खादिरैः ॥
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः ।
पत्रभङ्गैरवच्छाद्य शयानं स्वेदयेत्ततः ॥
पूर्ववत्स्वेदयेद्दग्ध्वा भस्मापोह्यापि वा शिलाम् ।

पूर्ववत् कुटीं वा चतुर्द्वारां कृत्वा तस्यामुपविष्ट-

स्थान्तस्वतुर्वारेऽङ्गारानुपसन्धाय तं स्वेदयेत् । धान्यानि वा सम्यगुपस्वेद्यास्तीर्य्यकिलिञ्जेऽन्यस्मिन्वा तत्प्रतिरूपके शयानं प्रावृत्य स्वेदयेदेवं पांशुगोशकृत्तुषबुसपलालोष्मभि स्वेदयेत् ।

उपनाहस्वेदस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढैः सुस्निग्धैः सुखोष्णैः प्रदिह्य स्वेदयेत् । एवं काकोल्यादिभिः सुरसादिभिस्तिलातसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः शाल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत् ।

द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्ठे कटाहे द्रोण्यां वा विगाह्य स्वेदयेत् । एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत सुखोष्णैः कषायैः परिषिञ्चेदिति

तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ । उपनाहस्वेदो वातघ्नः । अन्यतरस्मिन्पित्तसंसृष्टे द्रवस्वेद इति कफमेदोऽन्विते वायौ निवातातपगुरुप्रावरणनियुद्धाध्वव्यायामभारहरणामर्षैः स्वेदमुत्पादयेदिति ।

भवन्ति चात्र ।

चतुर्विधो योऽभिहितो द्विधा स्वेदः प्रयुज्यते ।
सर्वस्मिन्नेव देहे तु देहस्यावयवे तथा ॥
येषां नस्यं विधातव्यं वस्तिश्चैव हि देहिनाम् ।
शोधनीयाश्च ये केचित्पूर्वं स्वेद्यास्तु ते मताः ॥
पश्चात्स्वेद्या हृते शल्ये मूढगर्भानुपद्रवाः ।
सम्यक् प्रजाता काले या पश्चात्स्वेद्या विजानता ॥
स्वेद्यं पूर्वं च पश्चाच्च भगन्दर्य्यर्शसस्तथा ।

अश्मर्य्याचातुरो जन्तुः शेषान् शास्त्रे प्रचक्ष्महे ॥

नानभ्यक्ते नापि चास्निग्धदेहे स्वेदो योज्यः स्वेदविद्भिः कथञ्चित् ।
दृष्टं लोके काष्ठमस्निग्धमाशु गच्छेद्भङ्गं स्वेदयोगैर्गृहीतम् ॥
अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्म्मलत्वम् ।
कुर्य्यात्स्वेदो हन्ति निद्रां सतन्द्रां सन्धींस्तब्धांश्चेष्टयेदाशु युक्तः ॥
स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः स्वस्थानस्था ये च मार्गेषु लीनाः ।
सम्यक्स्वेदैर्य्योजितैस्ते द्रवत्वं प्राप्ताः कोष्ठं यान्ति देहादशेषात् ॥
स्वेदास्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वं मार्दवं चातुरस्य ।
सम्यक् स्विन्ने लक्षणं प्राहुरेतन्मिथ्या स्विन्ने व्यत्ययेनैतदेव ॥
स्विन्नेऽत्यर्थं सन्धिपीड़ा विदाहः स्फोटोत्पत्तिः पित्तरक्तप्रकोपः ।
मूर्च्छाभ्रान्तिर्दाहतृष्णे क्लमश्च कुर्य्यात्तूर्णं तत्र शीतं विधानम् ॥
पाण्डुर्मेही पित्तरक्तीक्षयार्त्तः क्षामोऽजीर्णी चोदरार्त्तो विषार्त्तः ।
तृट्छर्द्यार्त्तौ गर्भिणी पीतमद्यो नैते स्वेद्या यश्च मर्त्त्योऽतिसारी ॥
स्वेदादेषां यान्ति देहा विनाशञ्चासाध्यत्वं यान्ति चैषां विकाराः ।

एतेषां स्वेदसाध्या ये व्याधयस्तेषु बुद्धिमान् ।
मृदून् स्वेदान् प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ॥
सर्व्वान् स्वेदान्निवाते च जीर्णान्नस्यावचारयेत् ।
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ॥
स्विद्यमानस्य च मुहुर्हृदयं शीतलैः स्पृशेत् ।
सम्यक् स्विन्नं विमृदितं स्नानमुष्णाम्बुभिः शनैः ॥
स्वभ्यक्तं प्रावृताङ्गञ्च निवातशरणस्थितम् ।
भोजयेदनभिष्यन्दि सर्व्वं वाचारमादिशेत् ।

---

## त्रयस्त्रिंशत्तमोऽध्यायः।

अथातो वमनविरेचनसाध्योपद्रवचिकित्सितं व्याख्यास्यामः।

दोषाः क्षीणा बृंहयितव्याः कुपिताः प्रशमयितव्या वृद्धा निर्हर्त्तव्याः समाः परिपाल्या इति सिद्धान्तः। प्राधान्येन वमनविरेचने वर्त्तेते निर्हरणे दोषाणाम्। तस्मात्तयोर्विधानमुच्यमानमुपधारय।

तथातुरं स्निग्धं स्विन्नमभिष्यन्दिभिराहारैरनवबद्धदोषमवलोक्य श्वोवमनं पाययितास्मीति सम्भोजयेत् तीक्ष्णाग्निं बलवन्तं बहुदोषं महाव्याधिपरीतं वमनसात्म्यञ्च।

भवति चात्र।

पेयलैर्विविधैरन्नैर्दोषानुत्क्लेश्य देहिनः।
स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्त्तते॥

अथापरेद्युः पूर्व्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य मात्रां पाययित्वा वामयेत्। यथायोगं कोष्ठविशेषमवेक्ष्यासात्म्यबीभत्सदुर्गन्धदुर्दर्शनानि च वमनानि विदध्यात्। अतो विपरीतानि विरेचनानि।

तत्र सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधितक्रयवागूनामन्यतममाकण्ठं पाययेत्। पीतौषधञ्च पाणिभिरग्नितप्तैः प्रताप्यमानं मुहूर्त्तमुपेक्षेत।

तस्य च स्वेदप्रादुर्भावेण शिथिलतामापन्नं स्वेभ्यः स्थानेभ्यः प्रचलितं कुक्षिमनुसृतं जानीयात्ततः प्रवृत्तहृल्लासं

ज्ञात्वा जानुमात्रासनोपविष्टमाप्तैर्ललाटे पृष्ठे पार्श्वयोः कण्ठे च पाणिभिः सुपरिगृहीतमङ्गुलीगन्धर्वहस्तोत्पलनालानामन्यतमेन कण्ठमभिस्पृशन्तं वामयेत्तावद्यावत्सम्यग्वान्तलिङ्गानीति।

भवतश्चात्र।

कफप्रसेकं हृदयाविशुद्धिं कण्डूञ्च दुश्छर्दितलिङ्गमाहुः।
पित्तातियोगञ्च विसंज्ञताञ्च हृत्कण्ठपीडामपि चातिवान्ते॥
पित्ते कफस्यानुसुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंस्रवे च स्थितेसुवान्तं पुरुषं व्यवस्येत्।

सम्यग्वान्तं चैनमभिसमीक्ष्य स्नेहनविरेचनशमनानां धूमानामन्यतमं सामर्थ्यतः पाययित्वाचारिकमादिशेत्।

भवन्तिचात्र।

ततोऽपराह्ने शुचिशुद्धदेहमुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलत्थमुद्गाढ़किजाङ्गलानां यूषैरसैर्व्वाप्युपभोजयेत्तु॥
कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।
कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित्।
छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजन्ति॥
तथाहृते श्लेष्मणि शोधनेन तज्जा विकाराः प्रशमं प्रयान्ति।
न वामयेत्तैमिरिकोर्द्ध्ववातगुल्मोदरप्लीहकृमिश्रमार्त्तान्॥
स्थूलक्षतक्षीणकृशातिवृद्धमूत्रातुरान्केवलवातरोगान्।
स्वरोपघाताध्ययनप्रसक्तदुश्छर्दिदुःकोष्ठतृड़ार्त्तबालान्॥
ऊर्द्ध्वास्रपित्तिक्षुधितातिरूक्षगर्भिण्युदावर्त्तिनिरूहितांश्च।
अवम्यवमनाद्रोगाः कृच्छ्रतां यान्ति देहिनाम्।

असाध्यतां वा गच्छन्ति नैते वाम्याः स्मृताः ।
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अतीव चोल्वणकफास्ते च स्युर्मधुकाम्बुना ॥

वाम्यास्तु विषशोषस्तन्यदोषविषममन्दाग्न्युन्मादापस्मार-श्लीपदार्बुदविदारिकामेदोमेहगरज्वरारुच्यपच्यामातीसारहृ-द्रोगचित्तविभ्रमविसर्पविद्रध्यजीर्णमुखप्रसेकहृल्लासश्वासका-सपीनसपूतीनासकण्ठौष्ठवक्त्रपाककर्णस्रावाधिजिह्वोपजिह्वि-कागलशुण्डिकाधःशोणितपित्तिनः कफस्थानजेषु विकारे-ष्वन्येषु कफव्याधिपरीतेष्विति ।

विरेचनमपि स्निग्धस्विन्नाय वान्ताय च देयम् । अथा-तुरं श्वोविरेचनं पाययितास्मीति लघु भोजयेत् फलाम्ल-मुष्णोदकं चैनमनुपाययेत् । अथापरेऽहनि विगतश्लेष्माण-मातुरोपक्रमणीयादवेक्ष्यातुरमथास्मै औषधमात्रामातुं प्रयच्छेत् ।

तत्र मृदुः क्रूरो मध्य इति त्रिविधः कोष्ठो भवति । तत्र बहुपित्तोमृदुः स दुग्धेनापि विरिच्यते बहुवातश्लेष्मा क्रूरः स दुर्विरेच्यः । समदोषो मध्यमः स साधारण इति । तत्र मृदौ मात्रा मृद्वी तीक्ष्णा क्रूरे मध्ये मध्या कर्त्तव्येति । पीतौषधश्च तन्मनाः शय्यास्थासे विरिच्यते ।

विरेचनं पीतवांस्तु न वेगान्धारयेद्बुधः ।
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत् ॥

यथा च वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति । एवं विरेचने मूत्रपुरीषपित्तौषधकफा इति ।

भवन्ति चात्र ।

स्याद्दुर्विरिक्ते कफपित्तकोपो दाहोऽरुचिर्गौरवमग्निसादः ।
हृत्कुच्यशुद्धिः परिदाहकण्डूविण्मूत्रसङ्गाश्च न सद्विरिक्ते ॥
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ।
गतेषु दोषेषु कफान्वितेषु नाभ्या लघुत्वे मनसश्च तुष्टौ ॥
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेताहनि तत्र पेयाम् ।
क्षीणं तृड़ार्त्तं सुविरेचितञ्च तन्वीमशीतां लघु पाययेत ॥
बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं बलमग्निदीप्तिम् ।
चिराच्च पाकं वयसः करोति विरेचनं सम्यगुपास्यमानम् ॥
यथौदकानामुदकेऽपनीते चरस्थिराणां भवति प्रणाशः ।
पित्ते हृते त्वेवमुपद्रवाणां पित्तात्मकानां भवति प्रणाशः ॥
मन्दाग्न्यतिस्निग्धवालवृद्धस्थूलाः क्षतक्षीणभयोपतप्ताः ।
श्रान्तस्तृडार्त्तोऽपरिजीर्णभक्ती गर्भिण्यधोगच्छति यस्य चासृक् ॥
नवप्रतिश्यायमदात्ययी च नवज्वरी या च नवप्रसूता ।
शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्येऽत्वनुपस्कृताश्च ॥
अत्यर्थपित्ताभिपरीतदेहान्विरेचयेत्तानपि मन्दवीर्य्यैः ।
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥
विरेच्यास्तु ज्वरगरारुच्यर्शोऽर्बुदोदरग्रन्थिविद्रधिपाण्डुरोगा
पस्मारहृद्रोगवातरक्तभगन्दरच्छर्दियोनिरोगविसर्पगुल्मपक्वाशय
रुग्विबन्धविसूचिकालसकमूत्राघातकुष्ठविस्फोटकप्रमेहानाह
प्लीहशोफवृद्धिशस्त्रक्षतक्षाराग्निदग्धदुष्टव्रणाक्षिपाककाचतिमिरा
भिष्यन्दशिरःकर्णाक्षिनासास्यगुदमेढ्रदाहोर्द्ध्वरक्तपित्तक्रिमिको

ष्ठिनः पित्तस्थानजेषु विकारेष्वन्येषु च पैत्तिकव्याधिपरीतादति।

सरलत्वौत्त्स्यतैत्स्यै स्याग्रविकाग्निलैर्विरेचनम्।
वमनन्तु हरेद्दोषं प्रकृत्यागतमन्यथा॥
यात्यधोदोषमादाय पच्यमानं विरेचनम्।
गुणोत्कर्षाद्व्रजत्यूर्द्धमपक्वं वमनं पुनः॥
मृदुकोष्ठस्य दीप्ताग्नेरतितीक्ष्णं विरेचनम्।
न सम्यग्निर्हरेद्दोषानतिवेगप्रधावितान्॥
पीतं यदौषधं प्रातर्भुक्तपाकसमे क्षणे।
पक्तिं गच्छति दोषांश्च निर्हरेत्तत्प्रशस्यते॥
दुर्बलस्य चलान्दोषानल्पानल्पान् पुनः पुनः।
हरेत् प्रभूतानल्पांस्तु शमयेत्प्रच्युतानपि॥
हरेद्दोषांश्चलान्पक्वान्बलिनो दुर्बलस्य च।
चलाह्युपेक्षिता दोषाः क्लेशयेयुश्चिरं नरम्॥
मन्दाग्निं क्रूरकोष्ठञ्च सक्षारलवणैर्घृतैः।
सन्धुक्षिताग्निं स्निग्धञ्च स्विन्नञ्चैव विरेचयेत्॥
स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात्।
विलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम्॥
नचातिस्नेहपीतस्तु पिबेत्स्नेहविरेचनम्।
दोषाः प्रचलिताः स्थानाद्भूयः श्लिष्यन्ति वर्त्मसु॥
विषाभिघातपिडकाशोफपाण्डुविसर्पिणः।
नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठप्रमेहिणः॥
विरूक्ष्य स्नेहसात्म्यन्तु भूयः संस्नेह्य शोधयेत्॥
तेन दोषा हृतास्तस्य भवन्ति बलवर्द्धनाः॥

प्रागपीतं नरं शीघ्रं पाययेतौषधं मृदु ।
ततो विज्ञातकोष्टस्य कार्य्यं संशोधनं पुनः ॥
सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम् ।
व्यापत्स्वल्पात्ययं चापि पिबेन्नृपतिरौषधम् ॥
स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिबेत् ।
दारुशुष्कमिवानामे देहस्तस्य विशीर्य्यति ॥
स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ।
दोषाः कोष्ठगता जन्तोः सुखा हर्त्तुं विशोधनैः ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः ।

वैद्यातुरनिमित्तं वमनं विरेचनं च पञ्चदशधा व्यापद्यते तत्र वमनस्याधोगतिरूर्द्धं विरेचनस्येति पृथक् । सामान्यमुभयोः सावशेषौषधत्वं जीर्णौषधत्वं हीनाधिकदोषापहृतत्वं वातशूलमयोगोतियोगौ जीवादानमाध्मानं परिकर्त्तिका परिस्रावः प्रवाहिका हृदयोपसरणं विबन्ध इति ।

तत्र बुभुक्षापीड़ितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्यचावतिष्ठमानं दुर्ब्बलस्य वा गुणसामान्यभावाद्वमनमधोगच्छति । तच्चेप्सितानवाप्तिर्दोषोत्कर्षश्च तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्व्वामयेत् । अपरिशुद्धामाशयस्योत्क्लिष्टश्लेष्मणः सशेषा-

तस्य वाऽहृद्यमतिभूतप्रविरेचनं पीतमूर्द्ध्वं गच्छति तत्रा शुद्धामाशयमुल्वणश्लेष्माणमाशु वामयित्वा भूयस्तोक्ष्णतरैर्विरेचयेत्। आमान्वये त्वामवत्संविधानम्। अहृद्येऽतिप्रभूते च हृद्यं प्रमाणं युक्तञ्च। अतऊर्द्ध्वं कुक्षिऽस्थौषधेन तृतीयं पाययेत्। ततस्त्वेनं मधुघृतक्षाणितकुक्षेलेहैर्विरेचयेत्।

दोषविग्रथितमल्पमौषधमवस्थितमूर्द्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान्। तत्र तृष्णापार्श्वशूलं छर्द्दिर्मूर्च्छा-पर्वभेदोहृल्लासारत्युद्गाराविशुद्धिश्च भवति। तमुष्णाभिरद्भिराशु वामयेत्। सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तमप्येवं वामयेत्। क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत्पाकमुपैति तत्र समुदीर्णा दोषा यथा कालमनिर्ह्रियमाणा व्याधिं बलविभ्रमञ्चापादयन्ति। तमनल्पममन्दमौषधञ्च पाययेत्। अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान्दोषान्हन्ति।

तत्र वमने दोषशेषः गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिं करोति तत्र यथायोगं पाययित्वा वामयेद्दृढतरम्। विरेचने गुदपरिकर्त्तनमाध्मानं शिरोगौरवमनिस्सरणं वा वायोर्व्याधिवृद्धिं करोति। तमुपपाद्य भूयःस्नेहस्वेदाभ्यां विरेचयेद्दृढतरम्। दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणं चेति।

अस्निग्धस्विन्नेन रूक्षमौषधमुपयुक्तमब्रह्मचारिणा वा वायुं कोपयति। तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणिमन्या-मर्म्मशूलं मूर्च्छां भ्रमं संज्ञानाशञ्च करोति। तमभ्यज्य

धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत्। स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्द्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लिश्य तैः सह बलक्षयमापादयति। तत्राध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति तमयोगमित्याचक्षते तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च। दुर्व्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिड़काज्वराङ्गमर्दनिस्तोदनानि कुर्व्वन्ति। ततस्तानवशेषात्तदौषधेनापहरेत्। अस्निग्धस्विन्नस्य मृदुविरिक्तस्याधोनाभेःस्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गःकण्डूमण्डलप्रादुर्भावो भवति तमास्थाप्य पुनःसंस्नेह्य विरेचयेत्तीक्ष्णेन। नातिप्रवर्त्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्। ततःप्रवर्त्तन्ते दोषाः। अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलञ्चावेक्ष्य भूयोमात्रां विदध्यात्। अप्रवृत्तदोषं दशरात्रादूर्द्ध्वमुपसंस्नातदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत्। दुर्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत्।

ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति। तस्मादेते दुर्विरेच्या बहुवातत्वादत एव तानतिस्निग्धान् स्वेदोपपन्नान् शोधयेत्। स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वा तीक्ष्णाधिकदत्तमौषधमतियोगं कुर्य्यात्।

तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविस्रंसो वात-

कोपश्च बलवान् भवति तं घृतेनाभ्यज्यावगाह्य शीताम्बुषु शर्करामधुमिश्रैर्लेहैरुपचरेद्यथास्वम् । विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालञ्च सरक्तस्य तत्रापि बलविस्रंसो वातकोपश्च बलवान् भवति तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत् । पिच्छावस्तिं चास्मै दद्यात् क्षीरसर्पिषा चैनमनुवासयेत् प्रियङ्ग्वादि चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत् । क्षीररसयोश्चान्यतरेण भोजयेत् ।

तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा तत्र जिह्वानिःसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्काज्वरौ वैसंज्ञ्यमित्युपद्रवा भवन्ति तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत् । फलरसैर्वा सघृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्च्चोग्राहिभिर्वा पयसा जाङ्गलरसेन वा भोजयेत् । अतिस्रुतशोणितविधानेनोपचरेत् ।

जिह्वामतिसर्पितान्त्रिकटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वा पीड़येत् प्रविष्टायामम्लमन्ये तस्य पुरस्तात्खादयेयुः । व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीड़येत् । हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात् । तृष्णादिषु च यथास्वं प्रतिकुर्वीत । विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत् ।

विरेचनातियोगे च सचन्द्रकं सलिलमधःस्रवति ततो मांसधावनप्रकाशमुत्तरकालं जीवशोणितञ्च ततो गुदनिःसरणं वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति तमपि

निस्रुतशोणितविधानेनोपचरेत्। निःसर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्तःपीड़येत् क्षुद्ररोगचिकित्सितं वा वीक्षेत। वेपथौ वातव्याधिविधानं कुर्व्वीत। जिह्वानिस्सरणादिषूक्तः प्रतीकारः। अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलवदरीदूर्व्वोशीरैः शृतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्। न्यग्रोधादिकषायक्षीरेक्षुरसघृतशोणितसंसृष्टैरेनं वस्तिभिरुपाचरेत्। शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्। न्यग्रोधादिश्चास्य विदध्यात्पानभोजनेषु।

जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुप्लोतं वाक्षिपेत्। यद्युष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति तज्जीवशोणितमवगन्तव्यं सभक्तं च शुने दद्यात् शक्तुसंमिश्रं वा स यद्युपभुञ्जीत तज्जीवशोणितमवगन्तव्यम्।

सशेषान्नेन बहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णमस्निग्धं वा पीतमौषधमाध्मापयति तत्रानिलमूत्रपुरीषसङ्गः समुन्नद्धोदरतापार्श्वभङ्गौ गुदवस्तिनिस्तोदनं भक्तारुचिश्च भवति तच्चाध्मानमित्याचक्षते तमुपस्वेद्यानाहवर्त्तिदीपनवस्तिक्रियाभिरुपचरेत्।

क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वातितीक्ष्णोष्णातिलवणमतिरूक्षं वा पीतमौषधं पित्तानिलौ प्रदूष्य परिकर्त्तिकामापादयति तत्र गुदनाभिमेढ्रवस्तिशिरःसु परिकर्त्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति तत्र पिच्छावस्तिर्य्यष्टीमधुकक्रष्णतिलकल्कमधुघृतयुक्तः। शीता-

म्बुपरिषिक्तञ्चैनं पयसाभुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वानुवासयेत् ।

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान्न निःशेषानपहरति ततस्ते दोषाः परिस्रावमापादयन्ति तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति सवेदनौ चात्र पित्तश्लेष्माणौ परिस्रवतस्तं परिस्रावमित्याचक्षते तमजकर्णधवतिनिशपलाशकषायैर्मधुरसंयुक्तैरास्थापयेत् । उपशान्तदोषं स्निग्धञ्च भूयः संशोधयेत् ; अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं वा वातवर्च्चं उदीरयेत् । वेगाघातेन वा प्रवाहिका भवति तत्र सवातं सदाहं सशूलं सशीतं सपिच्छिलं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति तं परिस्रावविधानेनोपचरेत् ।

यस्तूर्द्ध्वमधोवा भेषजवेगं प्रवृत्तमज्ञत्वाद्विनिहन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः । तत्र प्रधानमर्मसन्तापाद्वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किटकिटायते उद्वृताक्षो जिह्वां खादति प्रताम्यत्यचेताश्च भवति तं परिवर्जयन्ति मूर्खाः । तमभ्यज्य धान्यस्वेदेन स्वेदयेद्यष्टिमधुकसिद्धेन च तैलेनानुवासयेत् । शिरोविरेचनं चास्मै तीक्ष्णं विदध्यात् । ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना च्छर्द्दयेद्यथा दोषोच्छ्रायेण चैनं वस्तिभिरुपाचरेत् ।

यस्तूर्द्ध्वमधोवा प्रवृत्तदोषः शीतागारमुदकमनिलमन्यद्वासेवेत । तस्य दोषाः स्रोतःस्ववलीयमानाः घनीभावमापन्ना वातमूत्रशकृद्ग्रहमापाद्य विबध्नन्ति तस्याटोपो दाहो

ज्वरो वेदनाश्च तीव्रा भवन्ति तस्माद्वामयित्वा प्राप्तकालां क्रियां कुर्व्वीत। अधोभागेऽधोभागहरद्रव्यसन्धवाम्लमूत्र-संसृष्टं विरेचनं पाययेत्। आस्थापनमनुवासनञ्च यथा-दोषं विदध्यात्। यथादोषमाहारक्रमञ्चोभयतोभागेऽप-द्रवविशेषान्यथास्वं प्रतिकुर्व्वीत।

यातुविरेचने गुदपरिकर्त्तिका तद्वमने कण्ठक्षणनं यदधःपरिस्रवणं सऊर्द्ध्वभागे श्लेष्मप्रसेको यात्वधःप्रवा-हिका सातूर्द्ध्वं शुष्कोद्गारा इति।

भवति चात्र।

चास्वेता व्यापदः प्रोक्ता दश पञ्च च तत्त्वतः।
एता विरिक्तातियोगदुर्य्योगायोगजाः स्मृताः॥

---

पञ्चत्रिंशत्तमोऽध्यायः।

अथातोनेत्रवस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः।

तत्र स्नेहादीनां कर्म्मणां वस्तिकर्म्म प्रधानतममाहुरा-चार्य्याः। कस्मादनेककर्म्मकरत्वादस्तेरिह वस्तिर्नानाविध-द्रव्यसंयोगाद्दोषाणां संशोधनसंशमनसङ्ग्रहणानि करोति। क्षीणशुक्रं वाजी करोति कृशं वृंहयति स्थूलं कर्षयति चक्षुः प्रीणयति वलीपलितमुपहन्ति वयःस्थापयति। शरीरोप-चयं वर्णबलमारोग्यमायुषः परिवृद्धिञ्च करोति वस्तिःसम्य-

गुणासितः। तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगा-धिमन्थार्दिताक्षेपकपक्षाघातैकाङ्गसर्वाङ्गरोगाध्मानोदरशर्करा-शूलवृद्ध्युपदंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्रपुरीषो-दावर्त्तशुक्रार्त्तवस्तन्यनाशहृद्ग्रहहनुमन्याग्रहार्शोऽश्मरीमूढगर्भप्र-भृतिषु चात्यर्थमुपयुज्यते। भवति चात्र।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते।
संसर्गे सन्निपाते च वस्तिरेव हितः सदा॥

तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षड्दशद्वादशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रे ऽध्यर्द्धाङ्गुलद्व्य-ङ्गुलार्द्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनबर्हिपक्षना-डीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यान्ने-त्राणि तेषु त्वास्थापनद्रव्यप्रमाणमातुरहस्तसम्मितेन प्रसृतेन सम्मितौ प्रसृतौ द्वौ चत्वारोऽष्टौ विधेयाः।

भवति चात्र।

वर्षोत्तरेषु नेत्राणां वस्तिमानस्य चैव हि।
वयोबलशरीराणि समीक्ष्य वर्द्धयेद्भिषक्॥

पञ्चविंशतेरूर्द्ध्वं द्वादशाङ्गुलं मूलेऽङ्गुष्ठोदरपरीणाहमग्रे कनिष्ठिकोदरपरीणाहमग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं गृध्रपक्ष-नाडीतुल्यप्रवेशं कोलास्थिमात्रं छिद्रं क्लिन्नकलायमात्रं छिद्रमित्येके। सर्व्वाणि मूले वस्तिनिबन्धनार्थं द्विकर्णि-कानि। आस्थापनद्रव्यप्रमाणं तु विहिता द्वादशप्रसृताः। सप्ततेरूर्द्ध्वं नेत्रप्रमाणमेतदेवद्रव्यप्रमाणन्तु द्विरष्टवर्षवत्।

तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरु-

सारमयानि श्लक्ष्णानि दृढ़ानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि। वस्तयस्त्वाहुद्धानां मृदवो नातिबहला दृढ़ाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम्।

नेत्रालाभे हिता नाड़ी नलवंशास्थिसम्भवा।
वस्त्यलाभे हितं चर्म्म सूक्ष्मं वा तान्तवं घनम्॥
वस्तिं निरुपदिग्धन्तु शुद्धं सुपरिमार्जितम्।
मृदनुद्धूतहीनञ्च मुहुः स्नेहविमर्द्दितम्॥
नेत्रमूले प्रतिष्ठाप्य न्युब्जन्तु विवृताननम्॥
बद्ध्वा लोहेन तप्तेन चर्म्मस्रोतसि निर्द्दहेत्।
परिवर्त्त्य ततो वस्तिं बद्ध्वा गुप्तं निधापयेत्॥
आस्थापनञ्च तैलञ्च यथावत्तेन दापयेत्।
मृदुर्वस्तिः प्रयोक्तव्यो विशेषाद्बालवृद्धयोः॥
तयोस्तीक्ष्णः प्रयुक्तस्तु वस्तिर्हिंस्याद्बलायुषी।

तत्र द्विविधो वस्तिः नैरूहिकः स्नैहिकश्च। आस्थापनं निरूह इत्यनर्थान्तरम्। तस्य विकल्पो माधुतैलिकः। तस्य पर्य्यायशब्दो यापनो युक्तरथः सिद्धवस्तिरिति। स दोषनिर्हरणाच्छरीररोगहरणाद्वा निरूहः वयःस्थापनादायुःस्थापनाद्वास्थापनम्। माधुतैलिकविधानञ्च निरूहक्रमचिकित्सिते वक्ष्यामः।

तत्र यथाप्रमाणगुणविहितःस्नेहवस्तिविकल्पोऽनुवासनः पादावकृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धार्द्धमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति।

निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः ।
निरूहशोधितान्मार्गान्सम्यक् स्नेहोऽनुगच्छति ॥
अपेतसर्वदोषासु नाड़ीष्विव वहज्जलम् ।
सर्वदोषहरश्चासौ शरीरस्य च जीवनः ॥
तस्माद्विशुद्धदेहस्य स्नेहवस्तिर्विधीयते ॥

तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शः पाण्डुरोगभ्रममदमूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुस्त्रिमासगर्भिणीदुर्वलाग्निसहा वालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः ।

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः ।
अवश्यं स्थापनीयाश्च नानुवास्याः कथञ्चन ॥
असाध्यता विकाराणां स्यादेषामनुवासनात् ।
असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत् ॥
पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ।
सम्यक्प्रणिहितो वस्तिःस्थानेष्वेतेषु तिष्ठति ॥
पक्वाशयाद्वस्तिवीर्यं स्वैर्देहमुपसर्पति ।
वृक्षमूले निषिक्तानामपां वीर्य्यमिव द्रुमम् ॥
सचापि सहसा वस्तिः केवलः समलोऽपि वा ।
प्रत्येति त्वनिलैर्वीर्य्यमपानाद्यैर्विनीयते ॥
वीर्य्येण वस्तिरादत्ते दोषानापादमस्तकात् ।
पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥
सकटीपृष्ठकोष्ठस्थान्वीर्य्येणालोड्य सञ्चयान् ।
उत्खातमूलान् हरति दोषाणां साधुयोजितः ॥

दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः।
तस्मात्तस्यातिवृद्धस्य शरीरमभिनिघ्नतः॥
वायोर्विंषहते वेगं नान्या वस्तेऋते क्रिया।
पवनाविद्धतोयस्य वेलावेगमिवोदधेः॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः।
कुरुते परिवृद्धिंच वस्तिः सम्यगुपासितः॥
अतऊर्द्धं व्यापदोवच्यामः॥

तत्रनेत्रं चलितं विवर्त्तितं पार्श्वावपीड़ितमत्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तमिति षट्प्रणिधानदोषाः। अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमति ह्रस्वमित्येकादश नेत्रदोषाः। बहलताल्पतासच्छिद्रता प्रस्तीर्णता दुर्बद्धतेति पञ्च वस्तिदोषाः। अतिपीड़ितता शिथिलपीड़ितता भूयोभूयोऽवपीड़नं कालातिक्रम इति चत्वारः पीड़नदोषाः। आमता हीनतातिमात्रताऽतिशीततात्युष्णतातितीक्ष्णतातिमृदुतातिस्निग्धतातिरूक्षतातिसान्द्रतातिद्रवतेत्येकादश द्रव्यदोषाः। अवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थितता दक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषाः। एवमेताश्चतुश्चत्वारिंशद्व्यापदो वैद्यनिमित्ताः। आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वच्यन्ते।

स्नेहस्त्वष्टाभिः कारणैः प्रतिहतो न प्रत्यागच्छति त्रिभिर्दोषैरन्नाभिभूतो मलव्यामिश्रो दूरानुप्रविष्टोऽस्विन्नस्यानुष्णोऽल्पोऽभुक्तवतोऽल्पाशनस्य चेति वैद्यातुरनिमित्ता

भवन्ति । अयोगस्तूभयोराध्मानं परिकर्त्तिका परिस्रावः प्रवाहिका हृदयोपसरणमङ्गग्रहोऽतियोगो जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति ।

भवति चात्र ।

षट्सप्ततिः समासेन व्यापदः परिकीर्त्तिताः ।
तासां वक्ष्यामि विज्ञानं सिद्धिञ्च तदनन्तरम् ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः ।

अथातो नेत्रवस्तिव्यापच्चिकित्सितं व्याख्यास्यामः ॥
अथ नेत्रे विचलिते तथा चैव विवर्त्तिते ।
गुदे क्षतं रुजा वा स्यात्तत्र सद्यःक्षतक्रिया ॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा ।
विधिरत्रापि पित्तघ्नः कार्य्यः स्नेहैश्च सेचनम् ॥
तिर्य्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीड़िते ।
मुखस्यावरणाद्वस्तिर्न सम्यक्प्रतिपद्यते ॥
ऋजु नेत्रं विधेयं स्यात्तत्र सम्यग्विजानता ।
अतिस्थूले कर्कशे च नेत्रे चावनते तथा ॥
गुदे भवेत्क्षतं रुक्च साधनं पूर्ववत् स्मृतम् ।
आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाप्यपार्थकः ॥
अवसेको भवेद्वस्तेस्तस्माद्दोषान्विवर्जयेत् ।

प्रक्लिष्टकर्णिके रक्तं गुदमर्मप्रपीड़नात् ॥
चरत्यत्रापि पित्तघ्नो विधिर्वस्तिश्च पिच्छिलः।
ह्रस्वेत्वणुस्रोतसि च क्लेशो वस्तिश्च पूर्ववत् ॥
प्रत्यागच्छंस्ततः कुर्य्याद्रोगान्वस्तिविघातजान्।
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीड़वत् ॥
प्रस्तीर्णे बहले चापि वस्तौ दुर्बद्धदोषवत्।
वस्तावल्पेऽल्पता वापि द्रव्यस्याल्पगुणा मताः ॥
दुर्बद्धे चाणुभिन्ने च विज्ञेयं भिन्ननेत्रवत्।
अतिप्रपीड़ितो वस्तिः प्रयात्यामाशयं ततः ॥
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते।
तत्र त्वर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान्।
शनैः प्रपीड़ितो वस्तिः पक्वाधानं न गच्छति ॥
न च सम्पादयत्यर्थांस्तस्माद्युक्तं प्रपीड़येत्।
भूयोभूयोऽवपीड़ेन वायुरन्तः प्रपीड्यते।
तेनाध्मानं रुजश्चोग्रा यथास्वं तत्र वस्तयः ॥
कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्द्धते।
तत्र व्याधिबलघ्नन्तु भूयो वस्तिं निधापयेत् ॥
गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि।
तत्र संशोधनो वस्तिर्हितं चापि विरेचनम् ॥
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ मतौ ॥
अतिमात्रौ तथानाहक्लमातीसारकारकौ।
मूर्च्छादाहमतीसारं पित्तं चात्युष्णतीक्ष्णकौ ॥

मृदुशीतावुभौ वाऽतविबन्धाध्मानकारकौ ।
तत्र हीनादिषु हितः प्रत्यनीकः क्रियाविधिः ॥
तत्र सान्द्रे तनुं वस्तिं तनौ सान्द्रञ्च दापयेत् ।
स्निग्धोऽतिजाड्यकृद्रूक्षः स्तम्भाध्मानकृदुच्यते ॥
वस्तिं रूक्षमतिस्निग्धे स्निग्धं रूक्षे च दापयेत् ।
अतिपीड़ितवद्दोषान्विधिं चाप्यवशीर्षके ।
उच्छीर्षके समुन्नाहं वस्तिः कुर्य्याच्च मेहनम् ।
तत्रोत्तरो हितो वस्तिः सुस्विन्नस्य सुखावहः ॥
न्युब्जस्य वस्तिर्नाप्नोति पक्वाधानं विमार्गगः ॥
हृद्गुदं बाधते चात्र वायुः कोष्ठमथापि च ।
उत्तानस्यावृते मार्गे वस्तिर्नान्तः प्रपद्यते ॥
नेत्रसम्वेजनभ्रान्तो वायुस्तान्तः प्रकुप्यति ।
देहे सङ्कुचिते दत्तः सक्थ्नोरण्युभयोस्तथा ॥
न सम्यगनिलाविष्टो वस्तिः प्रत्येति देहिनः ।
स्थितस्य वस्तिर्दत्तस्तु चिप्रमायात्यवाङ्मुखः ॥
नचाशयं तर्पयति तस्मान्नार्थकरो हि सः ।
नाप्नोति वस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः ॥
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो हितः ।
न्युब्जादीनां प्रदानञ्च वस्तेर्नैव प्रशस्यते ॥
यस्मादनिलकोपोऽत्र यथास्वं तत्र कारयेत् ।
व्यापदः स्नेहवस्तेस्तु वक्ष्यन्तेऽत्र चिकित्सिते ॥
अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः ।
अनुष्णोऽल्पौषधो हीनो वस्तिर्नैति प्रयोजितः ॥

विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते।
तत्र तीक्ष्णो हितो वस्तिस्तीक्ष्णं चापि विरेचनम्॥
सम्भिषान्ने तथाभुक्ते बहुदोषे च योजितः।
अत्याश्रितस्यातिबहुर्वस्तिर्मन्दोष्ण एव च॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः।
तथा बहुपुरीषंच क्षिप्रमाध्मापयेन्नरम्॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम्।
तत्र तीक्ष्णतरोवस्तिर्हितं चाप्यनुवासनम्॥
अतितीक्ष्णोष्णलवणो रूक्षो वस्तिः प्रयोजितः।
सपित्तं कोपयेद्वायुं कुर्य्याच्च परिकर्त्तिकाम्॥
नाभिवस्तिगुदं तत्रच्छिन्नत्तीवाति देहिनः।
पिच्छावस्तिर्हितस्तत्र स्नेहश्च मधुरैः शृतः॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते।
दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः॥
परिस्रवेत्ततः पित्तं दाहं सञ्जनयेद्गुदे।
पिच्छावस्तिर्हितस्तत्र वस्तिः क्षीरघृतस्य च॥
प्रवाहिका भवेत्तीक्ष्णान्निरूहात्सानुवासनात्।
सदाहशूलं कृच्छ्रेणवाहन्नोपविश्यति॥
पिच्छावस्तिर्हितस्तत्र पयसा चत्र भोजनम्।
सर्पिर्मधुरकैः सिद्धं तैलं चाप्यनुवासनम्॥
अतितीक्ष्णानिरूहो वा सवाते चानुवासनः॥
हृदयस्योपसरणं कुरुते चाङ्गपीडनम्॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाङ्गगौरवम्

सर्व्वदोषहरं वस्तिं शोधनं तत्र दापयेत् ॥
रूक्षस्य बहुवातस्य तथा दुःशयितस्य च ।
वस्तिरङ्गग्रहं कुर्य्याद्रूक्षो मृद्वल्पभेषजः ॥
तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः ।
पर्व्वभेदश्च तत्रेष्टाः स्वेदोऽभ्यञ्जनवस्तयः ॥
अत्युष्णोऽतीक्ष्णोऽतिबहुर्दत्तोऽतिस्विन्नस्य च ।
अल्पदोषस्य वा वस्तिरतियोगाय कल्पते ॥
विरेचनातियोगेन समानं तच्चिकित्सितम् ।
पिच्छावस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥
अतियोगात्परं यत्र जीवादानं विरिक्तवत् ।
देयस्तत्र हितश्चापि पिच्छावस्तिः सशोणितः ॥
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः ।
स्नेहवस्तिष्वपि हिता विज्ञेया कुशलैरिह ॥
इत्युक्ता व्यापदः सर्व्वाः सलक्षणचिकित्सिताः ।
भिषजा च तथा कार्य्यं यथैता न भवन्ति हि ॥
पक्षाद्विरेकी वान्तस्य ततश्चापि निरूहणम् ।
सद्योनिरूढोऽनुवास्यः सप्तरात्राद्विरेचितः ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

अथातोऽनुवासनोत्तरवस्तिचिकित्सितं व्याख्यास्यामः ॥
विरेचनात्सप्तरात्रे गते जातबलाय च ।

कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥
यथावयोनिरूहाणां या मात्राः परिकीर्त्तिताः ।
पादावकृष्टास्ताः कार्य्याः स्नेहवस्तिषु देहिनाम् ॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं विधापयेत ।
एतैर्हि विहतः स्नेहोनैवान्तः प्रतिपद्यते ॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥
स्नेहवीर्य्यं तथा दत्ते देहं चानुविसर्पति ।
अत ऊर्द्धं प्रवक्ष्यामि तैलानीह यथाक्रमम् ॥
पानान्वासननस्येषु यानि हन्युर्गदान्बहून् ।
शठीपुष्करकृष्णाह्वामदनामरदारुभिः ॥
शताह्वाकुष्ठयष्ट्याह्ववचाविल्वकृताशनैः ॥
सुपिष्टैर्द्विगुणं क्षीरं तैलं तोयचतुर्गुणम् ।
पक्का वस्तौ विधातव्यं मूढ़वातानुलोमनम् ॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ।
कट्यूरुपृष्ठकोष्ठस्थान्वातरोगांश्च नाशयेत् ॥
वचापुष्करकुष्ठैलामदनामरसिन्धुजैः ।
काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः ॥
पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः ।
सरलागुरुविल्वाम्बुवाजिगन्धाग्निहृद्धिभिः ॥
विड़ङ्गारग्वधश्यामात्रिवृन्मागधिकर्द्धिभिः ॥
पिष्टैस्तैलं पचेत्क्षीरं पञ्चमूलरसान्वितम् ॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिना ।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥

चित्रकातिविषापाठादन्तीबिल्ववचामिषैः ।
सरलांशुमतीरास्नानीलिनीचतुरङ्गुलैः ॥
चव्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः ।
जीवकर्षभवर्षाभूवत्सगन्धशताह्वयैः ॥
रेण्वश्वगन्धामञ्जिष्ठाशटीपुष्करतस्करैः ।
सक्षीरं विपचेत्तैलं मारुतामयनाशनम् ॥
गृध्रसीखञ्जकुब्जाढ्यमूत्रोदावर्त्तरोगिणाम् ।
शस्यतेऽल्पबलाग्नीनां वस्तावाशु नियोजितम् ॥
भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः ।
दशमूलसहाभार्गीबृहत्यासुरदारुभिः ।
बलानागबलामूर्वावाजिगन्धामृताह्वयैः ।
सहाचरवरीविश्वाकाकनासाविदारिभिः ॥
यवमाषातसीकोलकुलत्थैः क्वथितैः शृतम् ।
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम् ॥
जङ्घोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान् ।
हन्याद्वातविकारांस्तु वस्तियोगैर्निषेवितम् ॥
जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः ।
ऋषभातिविषाकृष्णाकाकनासावचामरैः ॥
रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः ।
स्वयङ्गुप्ताशटीशृङ्गीकलसीसारिवाद्वयैः ॥
पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु ।
तच्चानुवासने देयं शुक्राग्निबलवर्द्धनम् ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ।

नस्ये पाने च संयुक्तमूर्द्ध्वजत्रुगदापहम् ॥
मधुकोशीरकाश्मर्य्यकटुकोत्पलचन्दनैः।
श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः॥
तैलपादं पचेत्सर्पिः पयसाष्टगुणेन च।
न्यग्रोधादिगणक्काथयुक्तं वस्तिषु योजितम् ॥
दाहासृग्दरवीसर्पवातशोणितविद्रधीन्।
पित्तरक्तज्वराद्यांश्च हन्यात्पित्तकृतान्गदान् ॥
मृणालोत्पलशालूकसारिवाद्वयकेशरैः।
चन्दनद्वयभूनिम्बपद्मवीजकसेरुकैः॥
पटोलकटुकारत्नागुन्द्रापर्पटवासकैः।
पिष्टैस्तैलमिदं पक्वं तृणमूलरसेन च॥
क्षीरद्विगुणसंयुक्तं वस्तिकर्म्मणि योजितम्।
नस्येऽभ्यञ्जनपाने वा हन्यात्पित्तगदान्बहून् ॥
त्रिफलातिविषामूर्व्वात्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः॥
गुड़ूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः॥
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम्।
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ॥
स्थूलतालस्वकण्ड्वादीन् जयेत्कफकृतान्गदान्।
पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः॥
सरलागुरुकालीयभार्गीचव्यामरद्रुमैः।
मरिचैलाभयाकट्वीशटीग्रन्थिककट्फलैः॥
तैलमेरण्डतैलं वा पक्वमेभिः समायुतम्।

वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च ॥
हन्यादन्वासनैर्दत्तं सर्वान्कफकृतान् गदान् ।
विडङ्गोदीच्यसिन्धूत्थशटीपुष्करचित्रकैः ॥
कट्फलातिविषाभार्गीवचाकुष्ठसुराकृतैः ।
मेदामदनयष्ट्याक्कश्यामानिचुलनागरैः ॥
शताह्वानीलिनीरास्नाकदलीवृषरेणुभिः ।
विल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः ॥
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ।
प्लीहोदावर्त्तवातासृग्गुल्मानाहकफामयान् ।
प्रमेहशर्कराशांसि हन्यादाश्वनुवासनात् ।
अशुद्धमपि वा तेन केवलेनातिपीड़ितम् ॥
अहोरात्रस्य कालेषु सर्व्वेष्वेवानुवासयेत् ।
रूक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनम् ॥
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ।
अस्निग्धमपि वा तेन केवलेनातिपीड़ितम् ॥
स्नेहप्रगाढ़ैर्मतिमान्निरूहैः समुपाचरेत् ।
अथ सम्यङ्निरूढ़ंतु वातादिष्वनुवासयेत् ॥
विल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रमम् ।
रात्रौ वस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः ॥
स्नेहो वीर्य्ययुतः कुर्य्यादाध्मानं गौरवं ज्वरम् ।
अह्नि स्थानस्थिते दोषे वह्नौ वान्नरसान्विते ।
स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति ॥
पित्तेऽधिके कफे क्षीणे रूक्षे वातरुगर्दिते ।

नरे रात्रौ च दातव्यं काले चोष्णेऽनुवासनम् ॥
उष्णे पित्ताधिके वापि दिवा दाहादयो गदाः ।
सम्भवन्ति यतस्तस्मात् प्रदोषे योजयेद्भिषक् ॥
शीते वसन्ते च दिवा ग्रीष्मे प्राविड्घनात्यये ।
स्नेहो दिनान्ते पानीत्तान्दोषान्परिजिहीर्षता ॥
अहोरात्रेषु कालेषु सर्वेष्वेवानिलाधिकम् ।
तीव्रायां रुजि जीर्णान्नं भोजयित्वानुवासयेत् ॥
नवाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन ।
शुद्धत्वाच्छून्यकोष्ठस्य स्नेहः ऊर्द्ध्वमथोत्पतेत् ॥
सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम् ।
ज्वरं विदग्धभुक्तस्य कुर्य्यात्स्नेहः प्रयोजितः ॥
नचातिस्निग्धमशनं भोजयित्वानुवासयेत् ।
मदं मुर्च्छां च जनयेद्द्विधा स्नेहः प्रयोजितः ॥
रुक्षं भुक्तवतो ह्यन्नं बलं वर्णं च हापयेत् ।
युक्तस्नेहमतो जन्तुं भोजयित्वानुवासयेत् ॥
यूषक्षीररसैस्तस्माद्यथाव्याधिमवेक्ष्य वा ।
यथोचितात्पादहीनं भोजयित्वानुवासयेत् ॥
अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः ।
भोजयित्वा यथाशास्त्रं कृतचङ्क्रमनं ततः ॥
विसर्ज्यंच शकृन्मूत्रं योजयेत्स्नेहवस्तिना ।
प्रणिधानविधानन्तु निरूहे च प्रवक्ष्यते ॥
ततः प्रणिहिते स्नेह उत्तानो वाक्छतं भवेत् ।
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं विसर्पति ॥

ताड़येत्तलयोरेनं त्रींस्त्रीन्वारान् शनैः शनैः ।
स्फिजोश्चैनं ततः शय्यां त्रीन्वारानुत्क्षिपेत्ततः ॥
एवं प्रणिहिते वस्तौ मन्दायामोऽथ मन्दवाक् ।
स्वास्तीर्णे शयने काममासीताचारिके रतः ॥
स तु सैन्धवचूर्णेन शताह्वेन च योजितः ।
देयः सुखोष्णश्च तथा निरेति सहसा सुखम् ॥
यस्यानुवासनो दत्तः सक्तद्न्वचमात्रजित् ।
अत्यौष्ण्यादतितैक्ष्ण्याद्वा वायुना वा प्रपीड़ितः ॥
सवातोऽधिकमात्रो वा गुरुत्वाद्वा सभेषजः ।
तस्यान्योऽल्पतरो देयो नहि स्निह्यत्यतिष्ठति ॥
विष्टब्धानिलविण्मूत्रःस्नेहहीनोऽनुवासनः ।
दाहक्लमप्रवाहार्त्तिकरश्चात्यनुवासनः ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ।
ओषचोषौ विना शीघ्रं स सम्यगनुवासितः ॥
जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ।
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ॥
प्रातरुष्णोदकं देयं धान्यनागरसाधितम् ।
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ॥
स्नेहवस्तिक्रमेष्वेव विधिमाहुर्मनीषिणः ।
अनेन विधिना षड्वा सप्त वाष्टौ नवैव वा ॥
विधेया वस्तयस्तेषामन्तरा तु निरूहणम् ।
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ॥
सम्यग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ।

जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ॥
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेत्तथा।
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ॥
अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम्।
एवं शुक्रगतान्दोषान्द्विगुणः साधु साधयेत् ॥
अष्टादशाष्टादशकान्वस्तीनां यो निषेवते।
यथोक्तेन विधानेन परिहारक्रमेण तु ॥
स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभः।
वीतपाप्मा श्रुतिधरः सहस्रायुर्नरो भवेत् ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।
स्नेहादग्निवधोत्क्लेशौ निरूहात्पवनाद्भयम् ॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः।
नैव पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥
रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने।
दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात्त्र्यहात् ॥
स्नेहोऽल्पमात्रो रूक्षाणां सर्वकालमनत्ययः।
तथा निरूहः स्निग्धानां स्वल्पमात्रः प्रशस्यते ॥
अतऊर्द्ध्वं प्रवक्ष्यामि व्यापदः स्नेहवस्तिजाः।
बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥
अल्पवीर्य्यं तदा स्नेहमभिभूय पृथग्विधान्।
कुर्वन्त्युपद्रवान्स्नेहः सचापि न निवर्त्तते ॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता।
जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥

पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ।
दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ।
गौरवं छर्दिरुच्छ्रासः स्तम्भः शीतज्वरोऽरुचिः ॥
तत्र दोषाभिभूते तु स्नेहे वस्तिं निधापयेत् ।
यथास्वं दोषशमनान्युपयोज्यानि यानि च ।
अत्याशितेऽन्नाभिभवात्स्नेहो नैति यदा तदा ।
गुरुरामाशयः शूलं वायोश्चाप्रतिसञ्चरः ।
हृत्पीड़ामुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः
तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ।
तदाङ्गसदनाध्मानौ श्वासः शूलञ्च जायते ॥
पक्वाशयगुरुत्वं च तत्र दद्यान्निरूहणम् ।
अतितीक्ष्णौषधैरेवं सिद्धं चाप्यनुवासनम् ॥
शुद्धस्य दूरानुस्रुते स्नेहे स्नेहस्य दर्शनम् ।
गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनम् ।
स्नेहगन्धि मुखं तत्र कासश्वासारुचिर्वमथु ।
अतिपीड़ितवत्तत्र विधिरास्थापनं तथा ॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः सम्प्रयोजितः ।
शीतोमृदुश्च नाभ्येति ततोमन्दं प्रवाहयेत् ।
विबन्धगौरवाध्मानशूलाः पक्वाशयं प्रति ॥
तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम् ।
अल्पं भुक्तवतोऽल्पोहि स्नेहो मन्दगुणस्तथा ॥

दत्तो नैति क्षणेनाक्तो भ्रमं वा रतिमावहेत्।
तत्रावास्थापनं कार्य्यं शोधनीयेन वस्तिना ॥
अन्वासनञ्च स्नेहेन शोधनीयेन शस्यते।
अहोरात्रादपि स्नेहः प्रत्यागच्छेन्न दूष्यति ॥
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्।
यस्य नोपद्रवं कुर्य्यात्स्नेहवस्तिरनिःसृतः ॥
सर्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स विजानता।
अनायान्तं त्वहोरात्रात्स्नेहं संशोधनैर्जयेत् ॥
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते।
इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ॥
वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम्।
चतुर्द्दशाङ्गुलं नेत्रमातुराङ्गुलसम्मितम् ॥
मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम्।
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥
स्नेहप्रमाणं परमं कुञ्चश्चात्र प्रकीर्त्तितः।
पञ्चविंशाद्धोमात्रां विदध्याद्बुद्धिकल्पिताम् ॥
निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले।
मूत्रस्रोतःपरीणाहं मुद्गवाहिद्व्यङ्गुलम् ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ॥
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानान्त्वेकमङ्गुलम्।
विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा ॥
स्नेहस्य प्रसृतश्चात्र स्वाङ्गुलीमूलसंमितम्।
देयं प्रमाणं परममर्वाग्बुद्धिविकल्पितम् ॥

औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः ।
तदलाभे प्रयुञ्जीत गलचर्म्म तु पक्षिणाम् ॥
अस्यालाभे दृतेः पादौ मृदुचर्म ततोपि वा ।
अथातुरमुपस्निग्धं सुस्विन्नं प्रथिताशयम् ॥
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ।
निषस्समाजानुसमे पीठे स्थानाश्रये समे ॥
स्वभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन मानवम् ।
ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् ॥
पूर्वं शलाकयान्विष्य ततो नेत्रमनन्तरम् ।
शनैःशनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् ॥
ततोऽवपीडयेद्वस्तिं शनैर्नेत्रं च निर्हरेत् ।
ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः ॥
भोजयेत्पयसामात्रां यूषेणाथ रसेन वा ।
अनेन विधिना दद्याद्वस्तींस्त्रींश्चतुरोऽपि वा ॥
ऊर्द्ध्वजान्वै स्त्रियै दद्यादुत्तानायै विचक्षणः ।
कल्पेतरस्यै कन्यायै दद्यात्सु मृदु पीड़ित ॥
त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति ।
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ।
अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते ॥
भूयोवस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः ।
गुदे वर्त्तिं निदध्याद्वा शोधनद्रव्यसंभृताम् ॥
प्रवेशयेद्वा मतिमान्वस्तिद्वारमथैषणीम् ।
पीड़येद्वाप्यधोनाभेर्बलेनोत्तरमुष्टिना ॥

आरग्वधस्य पत्रेषु निर्गुण्ड्याः स्वरसेषु च।
कुर्य्याद्गोमूत्रपिष्टेषु वर्त्तीर्वापि ससैन्धवाः॥
मुद्गैलासर्षपसमाः प्रविभज्य वयांसितु।
वस्तेरागमनार्थाय ता निदध्याच्छलाकया॥
आगारधूमबृहतीपिप्पलीफलसैन्धवैः।
कृता वा शुक्तगोमूत्रसुरापिष्टैः सनागरैः॥
अनुवासनसिद्धिञ्च वीक्ष्य कर्म्म प्रयोजयेत्।
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना॥
दह्यमाने तदा वस्तौ दद्याद्वस्तिं विचक्षणः।
क्षीरवृक्षकषायेण पयसा शीतलेन च॥
शुक्रं दुष्टं शोणितं चाङ्गनानां पुष्पोद्रेकं तस्य नाशञ्च कष्टम्।
मूत्राघातान्मूत्रदोषान् प्रवृद्धान्योनिव्याधिं संस्थितिं चापरायाः।
शुक्रोत्सेकं शर्करामश्मरीञ्च शूलं वस्तौ वङ्क्षणे मेहने च।
घोरानन्यान्वस्तिजांश्चापि रोगान्हित्वा मेहानुत्तरो हन्ति वस्तिः।
सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना॥

---

## अष्टात्रिंशत्तमोऽध्यायः।

अथातो निरूढ़ोपक्रमचिकित्सितं व्याख्यास्यामः।

अथानुवासितमास्थापयेत्स्वभ्यक्तस्विन्नशरीरमुत्सृष्टवह्नि-

र्व्वंगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामधः-सुपरिग्रहायां श्रोणिप्रदेशव्यूढ़ायामनुपधानायां वामपार्श्वशायिनमाकुञ्चित दक्षिणसक्थिमितरप्रसारितसक्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषस्तदेहं विदित्वा ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिकामुपरिनिष्पीड्य सव्यपाणिकनिष्ठिकानामिकाभ्यां वस्तेर्मुखार्द्धं सङ्कोच्य मध्यमप्रदेशिन्यङ्गुष्ठैरर्द्धन्तु विवृतास्यं कृत्वा वस्तावौषधं प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्यां चानुसिक्तमनायतमवुद्वुदमसङ्कुचितमवातमौषधासन्नमुपसंगृह्य पुनरितरेण गृहीत्वा दक्षिणेनावसिञ्चेत्ततः सूत्रेणैवौषधान्ते द्विस्त्रिर्व्वावेष्ट्य बध्नीयात्। अथ दक्षिणेनोत्तानेन पाणिना वस्तिं गृहीत्वा वा सहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं विधाय घृताभ्यक्ताग्रनेत्रं घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंशं सममुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात्।

वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्।
एकेनैवावपीड़ेन न द्रुतं न विलम्बितम्॥

ततोनेत्रमपनीय त्रिंशन्मात्राः पीड़नकालादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात्। आतुरमुपवेशयेदुत्कटुकं वस्त्यागमनार्थम्। निरूहप्रत्यागमनकालस्तु मुहूर्त्तो भवति।

अनेन विधिना वस्तिं दद्याद्वस्तिविशारदः।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः॥

सम्यग्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत्।
अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम्॥

विशेषात्सुकुमाराणां हीनएव क्रमो हितः।
यस्य स्याद्वस्तिरत्यल्पवेगो हीनमलानिलः॥
दुर्निरूढ़ः स विज्ञेयो मूत्रार्त्यरुचिजाड्यवान्।
यान्येव प्राक्प्रयुक्तानि लिङ्गान्यतिविरेचिते॥
तान्येवातिनिरूढ़ेऽपि विज्ञेयानि विपश्चिता।
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः॥
लाघवं चोपजायेत सुनिरूढ़ं तमादिशेत्।
सुनिरूढ़ं ततोजन्तुं स्नानवन्तं तु भोजयेत्॥
पित्तश्लेष्मानिलाविष्टं चीरयूषरसैः क्रमात्।
सर्व्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः॥
त्रिभागहीनमर्द्धं वा हीनमात्रमथापि वा।
यथाग्निदोषं मात्रेयं भोजनस्य विधीयते॥
अनन्तरं ततो युञ्ज्याद्यथास्वं स्नेहवस्तिना।
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः॥
आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्षणम्।
तदहस्तस्य पवनाद्भयं बलवदिष्यते॥
रसौदनस्तेन शस्तस्तदहश्चानुवासनम्।
पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम्॥
अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्व्विधीयते।
अनायान्तं मुहूर्त्तात्तु निरूहं शोधनैर्हरेत्॥
तीक्ष्णैर्निरूहैर्मतिमान्क्षारमूत्राम्लसंयुतैः।
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्॥
शूलारतिज्वरानाहं मरणं वा प्रवर्त्तयेत्।

नतु भुक्तवते देयमास्थापनमिति स्थितिः ॥
विसूचिकां वा जनयेच्छर्द्दिं वापि सुदारुणम् ।
कोपयेत्सर्व्वदोषान्वा तस्माद्दद्यादभोजिते ॥
जीर्णा .स्याशये दोषाः पुंसः शय्यक्तिमागताः ।
निःशेषाः सुखमायान्ति भोजनेनाप्रपीड़िताः ।
न चास्थापनविच्छिन्नमन्नमग्निः प्रधावति ।
तस्मादास्थापनं देयं निराहाराय जानता ॥
आवस्थिकं क्रमञ्चापि मत्वा कार्य्यं निरूहणम्
सम्यक्प्रकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥
क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा
लवणानि फलक्षौद्रं शताह्वा सर्षपं वचा ॥
एला त्रिकटुकं रास्ना सरलं देवदारु च ।
रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च ॥
कटुका शर्करा मुस्तमुशीरं चन्दनं शठी ।
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥
बिल्वमध्यं यमानी च फलिनी शक्रजा यवाः ।
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ।
निरूहेषु यथालाभमेष वर्गो विधीयते ॥
स्वस्थेक्वाथस्य चत्वारो भागाः स्नेहस्य पञ्चमः ।
क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः ॥
सर्व्वेषु चाष्टमो भागः कल्कानां लवणं पुनः ।
क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं तथा ॥

कृत्वा प्रकल्पयेद्धीमान् निरूहे कल्पनात्त्वियम्।
कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः॥
वस्तिस्तु कल्पितःसम्यक्तस्यादानं यथार्थकृत्।
दत्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्॥
पात्रे तत्तेन मथ्नीयादनुस्नेहं शनैः शनैः।
सम्यक्सुमथिते दद्यात्फलकल्कमतः परम्॥
ततो यथोचितान्कल्कान्भागैः स्वैः श्लक्ष्णपेषितान्।
गम्भीरे भाजनेऽन्यस्मिन्मथ्नीयात्तं खजेन च॥
यथा च साधु मन्येत न सान्द्रो न तनुः समः।
कषायप्रसृतान्पञ्च सुपूतांस्तत्र दापयेत्।
रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु॥

अतऊर्द्ध्वं द्वादशप्रसृतान्वक्ष्यामः।

दत्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम्।
विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतित्रयम्॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत्।
संमूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम्॥
वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्॥
ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम्।
अपकर्षे भिषक्कुर्य्यात्तद्वत्प्रसृतिह्रापनम्॥
यथावयो निरूहाणां कल्पनेयमुदाहृता।
सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः॥

अत ऊर्द्ध्वं प्रवक्ष्यन्ते वस्त्योश्च विभागशः।

यथादोषं प्रयुक्ता ये हन्युर्नानाविधान्गदान् ॥
अम्भाकोरवुवर्षाभूवाजिगन्धानिशाच्छदैः ।
पञ्चमूलीबलारास्नागुडूचीसुरदारुभिः ॥
क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः ।
कल्कैर्मागधिकाभीरुहवुषामिसिसैन्धवैः ॥
वत्साकयप्रियङ्ग्वाग्यष्ट्याह्वयरसाञ्जनैः ।
दद्यादास्थापनं कोष्णं क्षौद्राद्यैरभिसंस्कृतम् ॥
पृष्ठोरुत्रिकशूलाश्मविण्मूत्रानिलसङ्गिनाम् ।
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥
गुडूचीत्रिफलारास्नादशमूलबलापलैः ।
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्ग्वञ्जनसैन्धवैः ॥
शतपुष्पावचाकृष्णायवानीकुष्ठबिल्वजैः ।
सगुडैरक्षमात्रैस्तु मदनार्द्धपलान्वितैः ॥
क्षौद्रतैलघृतक्षीरशुक्तकाञ्जिकमस्तुभिः ।
समालोड्य च मूत्रैस्तु दद्यादास्थापनं परम् ॥
तेजोवर्णबलोत्साहवीर्य्याग्निप्राणवर्द्धनम् ।
सर्व्वमारुतरोगघ्नं वयःस्थापनमुत्तमम् ॥
कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः ।
शारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥
पालिकैः क्वथितैः सम्यग्द्रव्यैरेभिश्च पेषितैः ।
शृङ्गाटकाब्जगुप्तेभकेसरागुरुचन्दनैः ॥
विदारीमिसिमञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः ।
फलपद्मकयष्ट्याह्वैः क्षीरक्षौद्रघृताप्लुतैः ॥

दत्तमास्थापनं शीतमम्लहीनैस्तथाद्रवैः ।
दाहासृग्दरपित्तासृक्पित्तगुल्मज्वराञ्जयेत् ॥
रोध्रचन्दनमञ्जिष्ठारास्नानन्ताबलर्द्धिभिः ।
सारिवावृषकाश्मर्य्यमेदामधुकपद्मकैः ॥
स्थिरादितृणमूलैश्च क्वाथैः कर्षत्रयोन्मितैः ।
पिष्टैर्जीवककाकोलीयुगर्द्धिमधुकोत्पलैः ॥
प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः ।
अभीरूमिसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥
कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः ।
द्रवैस्तैस्त्वाम्लवर्ज्यैश्च दत्तो वस्तिःसुशीतलः ॥
गुल्मासृग्दरहृत्पाण्डुरोगान्सविषमज्वरान् ।
असृक्पित्तातिसारौ च हन्यात्पित्तकृतानगदान्
भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः ।
सारिवाबृहतीपाठामूर्व्वारग्वधवत्सकैः ॥
क्वाथः कल्कास्तु कर्त्तव्यो बलामदनसर्षपैः ।
सैन्धवामरकुष्ठैलापिप्पली विल्वनागरैः ॥
कटुतैलमधुक्षारमूत्रतैलाम्लसंयुतैः ।
कार्य्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥
मेदस्विनामनग्नीनां कफरोगाशनद्विषाम् ।
गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥
दशमूलीनिशाविल्वपटोलत्रिफलामरैः ।
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥
पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः ।

कुर्य्यादास्थापनं सम्यग् मूत्राम्लफलयोजितम् ॥
कफपाण्डुमदालस्यमूत्रमारुतसंज्ञिनाम् ।
आमाटोपापचीप्लीहगुल्मक्रिमिविकारिणाम् ॥
वृषाश्मभेदवर्षाभूधान्यगन्धर्व्वहस्तकैः ।
दशमूलबलामूर्व्वायवकोलनिशाच्छदैः ॥
कुलत्थविल्वभूनिम्बैः क्वथितैः पलसम्मितैः ।
कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥
पिप्पलीमूलसिन्धूत्थयमानीमिशिवत्सकैः ।
क्षौद्रेक्षुक्षीरगोमूत्र सर्पिस्तैलरसप्लुतैः ॥
तूर्णमास्थापनं कार्य्यं संसृष्टबहुरोगिणाम् ।
रुध्रसीशर्कराष्ठीलातूणीगुल्मगदापहम् ॥
रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ।
त्रायमाणामृतारक्तापञ्चमूलविभीतकैः ॥
सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ।
यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥
रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ।
युक्तो वस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम् ॥
आयुषोऽग्नेश्च संकर्त्ता हन्ति चाशु गदानिमान् ।
गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥
विषमज्वरमर्शांसि ग्रहणीं वातकुण्डलीम् ।
जानुजङ्घाशिरोवस्तिग्रहोदावर्त्तमारुतान् ॥
वातासृक्शर्कराष्ठीलाकुक्षिशूलोदरारुचीः ।
रक्तपित्तकफोन्मादप्रमेहाध्मानहृद्ग्रहान् ॥

वातघ्नौषधनिःक्वाथाः सैन्धवत्रिवृतायुताः ।
साम्लाः सुखोष्णा योज्याः स्युर्वस्तयः कुपितेऽनिले ॥
न्यग्रोधादिगणक्वाथाः काकोल्यादिसमायुताः ।
विधेया वस्तयः पित्ते ससर्पिष्काः सशर्कराः ॥
आरग्वधादिनिःक्वाथाः पिप्पल्यादिसमायुताः ।
सक्षौद्रमूत्रा देयाःस्युर्वस्तयः कुपिते कफे ॥
शर्करेक्षुरसक्षीरघृतयुक्ताः सुशीतलाः ।
क्षीरवृक्षकषायाढ्या वस्तयः शोणिते हिताः ॥
शोधनद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः ।
युक्ताः खजेन मथिता वस्तयः शोधनाः स्मृताः ॥
त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः ।
ऊषकादिप्रतीवापा वस्तयो लेखनाः स्मृताः ॥
बृंहणद्रव्यनिःक्वाथाः कल्कैर्मधुरकैर्युताः ।
सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः ॥
चटकाण्डोक्षटाक्वाथाः सक्षीरघृतशर्कराः ।
आत्मगुप्ताफलावापाः स्मृता वाजीकरा नृणाम् ॥
विदार्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ।
क्षीरसिद्धाः क्षौद्रयुताः सास्राः पिच्छिलसंज्ञिताः ॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम् ।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु ॥
प्रियङ्ग्वादिगणक्वाथा अम्बष्ठाद्येन संयुताः ।
सक्षौद्राः सघृताश्चैव ग्राहिणो वस्तयः स्मृताः ॥
एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक्पृथक् ।

समस्तेष्वथ वा सम्यग्विधेयाः सुहवस्तथः॥
वन्ध्यानां शतपाकेन शोधितानां यथाक्रमम्।
बलातैलेन देयाः स्युर्वस्तयस्त्रैवृतेन च॥
नरस्योत्तमसत्त्वस्य तीक्ष्णं वस्तिं निधापयेत्।
मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम्॥
एवं कालं बलं दोषं विकारञ्च विकारवित्।
वस्तिद्रव्यबलं चैव वीक्ष्य वस्तीन् प्रयोजयेत्॥
दद्यादुत्क्लेशनं पूर्व्वं मध्ये दोषहरं पुनः।
पश्चात्संशमनीयञ्च दद्याद्वस्तिं विचक्षणः॥
एरण्डवीजं मधुकं पिप्पलीसैन्धवं वचा।
हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः॥
शताह्वा मधुकं वीजं कौटजं फलमेव च।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः॥
प्रियङ्गुमधुकं मुस्ता तथैव च रसाञ्जनम्।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः परः॥
नृपाणां तत्समानानां तथा सुमहतामपि
नारीणां सुकुमाराणां शिशुस्थविरयोरपि॥
दोषनिर्हरणार्थाय बलवर्णोदयाय च।
समासेनोपदेक्ष्यामि विधानं माधुतैलिकम्॥
यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते।
फलञ्च विपुलं दृष्टं व्यापदाञ्चाप्यसम्भवः॥
योज्यस्त्वतः सुखेनैव निरूहक्रममिच्छता।
यदेच्छति तदेवैष प्रयोक्तव्यो विपश्चिता॥

मधुतैले: समे स्यातां क्वाथश्चैरण्डमूलजः।
पलार्द्धं शतपुष्पायास्ततोऽर्द्धं सैन्धवस्य च॥
फलेनैकेन संयुक्तः खजेन च विलोड़ितः।
देयः सुखोष्णो भिषजा माधुतैलिकसंज्ञितः॥
वचामधुकतैलञ्च क्वाथः सरससैन्धवः।
पिप्पलीफलसंयुक्तो वस्तिर्युक्तरथः स्मृतः॥
सुरदारु वरा रास्ना शतपुष्पा वचा मधु।
हिङ्गुसैन्धवसंयुक्तो वस्तिर्दोषहरः स्मृतः॥
पञ्चमूलीकषायश्च तैलं मागधिका मधु।
वस्तिरेष विधातव्यः सशताह्वः ससैन्धवः॥
यवकोलकुलत्थानां क्वाथो मागधिका मधु।
ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः॥
मुस्तापाठामृतातिक्ताबलारास्नापुनर्नवाः।
मञ्जिष्ठारग्वधोशीरत्रायमाणाख्यगोक्षुरान्॥
पालिकान्पञ्चमूलाल्पसहितान्मदनाष्टकम्।
जलाढ़के पचेत्क्वाथं पादशेषं पुनः पचेत्॥
क्षीरप्रस्थेन संयुक्तं क्षीरशेषं परिस्रुतम्।
पादेन जाङ्गलरसस्तथा मधुघृतं समम्॥
शताह्वाफलिनीयष्टीवत्सकैः सरसाञ्जनैः।
कार्षिकैः सैन्धवयुतैः कल्कैर्वस्तिः प्रयोजितः॥
वातासृग्मोहशोफार्शोगुल्ममूत्रविबन्धनुत्।
विसर्पज्वरविड्भङ्गरक्तपित्तविनाशनः॥
बल्यः सञ्जीवनो वृष्यश्चक्षुष्यः शूलनाशनः।

स्थापनानामयं राजा वस्तिसुस्तादिको मतः ॥
अवेच्य भेषजं बुद्धा विकारञ्च विकारवित् ।
वीजेनानेन मतिमान्कुर्य्यादस्तिशतान्यपि ॥
अजीर्णे न प्रयुञ्जीत दिवास्वप्नं च वर्ज्जयेत् ।
आहाराचारिकं शेषमन्यद्युक्तं समाचरेत् ॥
यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते ।
माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥
रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कल्पिते ।
यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः ॥
बलोपचयवर्णानां यस्माच्चाधिशतस्य च ।
भवत्येतेन सिद्धिस्तु सिद्धवस्तिरतोमतः ॥
सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नराः ।
मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिकाः ॥
मृदुत्वात्पादहीनत्वादक्षतत्त्वविधिसेवनात् ।
एकवस्तिप्रदानाच्च सिद्धवस्तिष्वयन्त्रणा

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

अथात आतुरोपद्रवचिकित्सितं व्याख्यास्यामः ॥
स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ।
निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥

सोऽन्नैरत्यर्थगुरुभिरुपयुक्तैः प्रशाम्यति ।
अल्पोमहद्भिर्वहुभिश्छादितोऽग्निरिवेन्धनैः ॥
सचाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्द्धते ।
काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः ॥
हृतदोषप्रमाणेन सदाहारविधिःस्मृतः ।
त्रीणि चात्र प्रमाणानि प्रस्थोऽर्द्धाढ़कमाढ़कम् ॥
तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे ॥
प्रस्थे परिस्रुते देया यवागूः स्वल्पतण्डुला ।
द्वे चैवार्द्धाढ़के देये तिस्रश्चाप्याढ़के गते ॥
विलेपीमुचिताद्भक्ताच्चतुर्थांशकृतां ततः ।
दद्यादुक्तेन विधिना क्षिन्नसिक्थामपिच्छिलाम् ॥
असिग्धलवणां स्वच्छमुद्गयूषयुतान्ततः ।
अंशद्वयप्रमाणेन दद्यात्सुस्निग्धमोदनम् ॥
ततः सघृतमण्डेन हृद्येनेन्द्रियबोधिना ॥
त्रीनंशान्वितरेद्भोक्तुमातुरायौदनं मृदुम् ।
ततो यथोचितं भक्तम्भोक्तुमस्मै विचक्षणः ॥
लावर्णैर्हरिणादीनां रसैर्दद्यात्सुसंस्कृतैः ।
हीनमध्योत्तमेष्वेव विरेकेषु विधिः स्मृतः ॥
एकद्वित्रिगुणः सम्यगाहारस्य क्रमो हितः ।
कफपित्ताधिकान्मद्यनित्यान्हीनविशोधितान् ॥
पेयाभिष्यन्दयेत्तेषां तर्पणादिक्रमो हितः ।
वेदनालाभनियमशोकवैचित्यहेतुभिः ॥
नरानुपोषितांश्चापि विरिक्तवदुपाचरेत् ।

आढ़काद्‌द्वीढ़कप्रस्थसङ्ख्या ज्ञेया विरेचने ॥
एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन ।
वलं यत्त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ॥
तत्रानुक्रममेकन्तु बलस्थः सकृदाचरेत् ।
द्विराचरेन्मध्यवलस्त्रीन्वारान्दुर्ब्बलस्तथा ॥
केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु ।
संसर्गेण विवृद्धेऽग्नौ दोषकोपभयाद्भजेत् ॥
प्राक्स्वादुतिक्तौ स्निग्धाम्ललवणान्कटुकं ततः ।
स्वाद्वम्ललवणान्भूयः स्वादुतिक्तावतः परम् ॥
स्निग्धरूक्षान्‌रसांश्चैव व्यत्यासात्स्वस्थवत्ततः ।
केवलं स्नेहपीतो वा वान्तो यश्चापि केवलम् ॥
स सप्तरात्रं मनुजो भुञ्जीत लघु भोजनम् ।
कृतः सिराव्यधो यस्य कृतं यस्य च शोधनम् ॥
स ना परिहरेन्मासं यावद्वा बलवान्भवेत् ।
एकैकस्मिन्परिहरेद्वस्तौ वस्तौ त्र्यहं त्र्यहम् ॥
तृतीये तु परीहारे यथायोगं समाचरेत् ।
तैलपूर्णमिवाङ्गाण्डसधर्माणो व्रणातुराः ॥
स्निग्धशुद्धाच्छिरोगार्त्ता ज्वरातीसारिणश्च ये ।
क्रुध्यतः कुपितं पित्तं कुर्य्यात्तांस्तानुपद्रवान् ॥
आयास्यतः शोचतो वा चित्तं विभ्रममृच्छति ।
मैथुनोपगमाद्घोरान्व्याधीनाप्नोति दुर्मतिः ॥
आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च ।
गुह्यप्रदेशे श्वयथुं कासश्वासौ च दारुणौ ॥

शुक्रवच्चापि रुधिरं सरजस्कं प्रवर्त्तते।
लभते च दिवास्वप्नात्तांस्तान्व्याधीन्कफात्मकान्॥
प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम्।
मोहं सदनमङ्गानामविपाकं तथारुचिम्॥
तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति।
उच्चैःसम्भाषणाद्वायुः शिरस्यापादयेद्रुजम्॥
आन्ध्यं जाड्यमजिघ्रत्वं वाधिर्य्यं मूकतां तथा॥
हनुमोक्षमधीमन्थमर्दितञ्च सुदारुणम्।
नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम्॥
लभते दन्तचालंच तांस्तांश्चान्यानुपद्रवान्।
यानयानात्तु लभते च्छर्द्दिं मूर्च्छाभ्रमक्लमान्॥
तथैवाङ्गग्रहं घोरमिन्द्रियाणाञ्च विभ्रमम्।
चिरासनात्तथा स्थानच्छ्रोण्यां भवति वेदना॥
अतिचंक्रमणाद्वायुर्जङ्घयोः कुरुते रुजः।
सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा॥
शीतसम्भोगतोयानां सेवा मारुतवृद्धये।
ततोऽङ्गमर्द्दं विष्टम्भशूलाध्मानप्रवेपकाः॥
वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात्।
विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति॥
असात्म्यभोजनं हन्याद्बलवर्णमसंशयम्।
अनात्मवन्तः पशुवद्भुञ्जते ये प्रमाणतः॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि।
व्यापदां कारणं वीक्ष्य व्यापत्स्वेतासु बुद्धिमान्॥

प्रयतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥
विरिक्तवान्तैर्हरिणैणलावकाः शशश्च सेव्यः समयूरतित्तिरिः।
सषष्टिकाश्चैव पुराणशालयस्तथैव मुद्गा लघु यच्च कीर्त्तितम् ॥

——

## चत्वारिंशत्तमोऽध्यायः।

अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः

धूमः पञ्चविधो भवति। तद्यथा। प्रायोगिकः स्नैहिको वैरेचनः कासघ्नो वामनीयश्चेति।

तत्रैलादिना कुष्ठतगरवर्ज्जेन सूत्रादिष्टेन द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेदेषा वर्त्तिः प्रायोगिके। स्नेहफलसारमधूच्छिष्टसर्ज्जरसगुग्गुलुप्रभृतिभिः स्नेहमिश्रैः स्नैहने। शिरोविरेचनद्रव्यैर्वैरेचने। बृहतीकण्टकारिकात्रिकटुकासमर्द्दहिङ्गुइङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने। स्नायुचर्म्मखुरशृङ्गकर्कटकास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्वामनीयैश्च वामनीये।

तत्र वस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति। धूमनेत्रन्तु कनिष्ठिकापरिणाहमग्रे कलायमात्रं स्रोतः मूलेऽङ्गुष्ठपरिणाहं धूमवर्त्तिप्रवेशस्रोतोऽङ्गुलान्यष्टचत्वारिंशत्प्रायोगिके। द्वात्रिंशत् स्नैहने। चतुर्विंशतिर्वैरेचने। षोड-

श्राङ्गुलं कासघ्ने वामनीयेच। एतेऽपि कोलास्थिमात्रच्छिद्रे भवतः। व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहिस्रोत इति।

अथ सुखोपविष्टःसुमनाऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्ताग्रां वर्त्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत्।

मुखेन तं पिबेत्पूर्वं नासिकाभ्यां ततः पिबेत्।
मुखपीतं मुखेनैव वमेत्पीतञ्च नासया॥
मुखेन धूममादाय नासिकाभ्यां न निर्हरेत्।
तेन हि प्रतिलोमेन दृष्टिस्तत्र विहन्यते॥

विशेषतस्तु प्रायोगिकं घ्राणेनाददीत स्नेहनं मुखनासाभ्यां नासिकया वैरेचनं मुखेनैवेतरौ तत्र प्रायोगिके वर्त्तिं व्यपगतशरकाण्डां निवातातपशुष्कामङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेतिब्रूयात्। एवं स्नेहनं वैरेचनिकञ्च कुर्य्यादिति। इतरयोर्व्यपेतधूमाङ्गारे स्थिरे समाहिते शरावे प्रक्षिप्य वर्त्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेरेष धूमपानोपायविधिः।

तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासा पाण्डुरोगतालुशोषच्छर्द्दिशिरोऽभिघातोद्गारापतर्पिततिमिरप्रमेहोदराध्मानोर्द्ध्ववातार्त्ता बालवृद्धदुर्बलविरिक्तास्थापितजागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन्॥

अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः ।
घ्राणश्रोत्राक्षिजिह्वानामुपघातञ्च दारुणम् ॥

आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः । तद्यथा ; क्षुतदन्तप्रक्षालननस्यस्नानभोजनदिवास्वप्नमैथुनच्छर्दिमूत्रो- च्चारहसित रुषितशस्त्रकर्मान्तेष्विति ! तत्र मूत्रोच्चारक्षवथुरुषितमैथुनान्तेषु स्नैहिकः स्नानच्छर्दनदिवास्वप्नान्तेषु वैरेचनः ।

दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्मान्तेषु प्रायोगिक इति । तत्र स्नेहनो वातं शमयति स्नेहादुपलेपाच्च वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति रौक्ष्यात्तैक्ष्ण्याद्वैशद्याच्च । प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात् पूर्वाभ्यामिति ।

भवति चात्र ।

नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः ।
दृढकेशद्विजश्मश्रुसुगन्धिविशदाननः ॥

कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुतन्द्रा- निद्राहनुमन्यास्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमि- त्ताश्चास्य मुखरोगा न भवन्ति ।

तस्य योगातियोगौ विज्ञातव्यौ तत्र योगो रोगप्रशमनोऽतियोगो रोगाप्रशमनस्तालुगलशोषपरिदाहपिपासामूर्च्छा- भ्रममदकर्णाक्षिदृष्टिनासारोगदौर्बल्यानीत्ययोगो जनयति ।

प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत । मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरोवेति । स्नैहिकं यावदश्रुप्रवृत्तिः । वैरेचनिकमादोषदर्शनात् । तिलतण्डुलयवागूपीतेन पातव्यो

वामनीयः। श्वासान्तरेषु कासश्च इति। व्रणधूमं शराव-सम्पुटोपनीतेन नेत्रेण व्रणमानयेत् धूमनाद्वेदनोपशमो व्रण-वैशद्यमास्रावोपशमश्च भवति।

विधिरेष समासेन धूमस्याभिहितो मया।
नस्यस्यातः प्रवक्ष्यामि विधिं निरवशेषतः॥

औषधमौषधसिद्धो वा स्नेहो वा नासिकाभ्यां दीयत इति नस्यं तद्विविधं शिरोविरेचनं स्नेहनञ्च तद्द्विधमपि पञ्चधा तद्यथा नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीड़ः प्रध-मनञ्च। तेषु नस्यं प्रधानं शिरोविरेचनञ्च नस्यविकल्पः प्रति-मर्शः शिरोविरेचनविकल्पोऽवपीड़ः प्रधमनञ्च। ततो नस्य शब्दः पञ्चधा निपातितः। तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो विधीयते तस्मिन्वैशेषिकी नस्यशब्दः। तत्तु नस्यं देयं वाता-भिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुण कर्णशूलकर्णक्ष्वेड-तिमिरस्वरोपघातनासारोगास्यशोषापबाहुकाकालजवलीपलि-तप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति।

शिरोविरेचनं श्लेष्मणाभिव्याप्ततालुकण्ठशिरसामरोचकशि-रोगौरवशूलपीनसार्द्धावभेदकक्रिमिप्रतिश्यायापस्मारगन्धाज्ञा-नेष्वन्येषु चोर्द्धजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यै-स्तत्सिद्धेन वा स्नेहेनेति॥

तच्चैतद्विविधमभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्णे वातरोगिणाम्।

अथ पुरुषाय शिरोविरेचनीयाय दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोलललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बुतप्तं रजतसुवर्णताम्रमृत्पात्रशुक्तीनामन्यतमस्थं शुक्त्यापिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदव्यवच्छिन्नधारं यथा नेत्रे न प्राप्नोति ।

स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् ।
न कुप्येन्न प्रभाषेच्च न क्षुयान्न हसेत्तथा ॥
एतैर्हि विहतः स्नेहो न सम्यक्प्रतिपद्यते ।
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः ॥

तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृताः प्रथममात्रा द्वितीया शुक्तिस्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः । स्नेहनस्यं नचोपगिलेत्कथंचिदपि ।

शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा ।
कफोत्क्लेशभयाच्चैव निष्ठीवेदविधारयन् ॥

दत्ते च पुनरपि संस्वेद्य गलकपोलादीन्धूममासेवेत भोजयेच्चैनमभिष्यन्दि ततोऽस्याचारिकमादिशेत । रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत् ।

तस्य योगातियोगानां विज्ञानं भवति ।

लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम्।
विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम्॥
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः।
लक्षणं मूर्द्ध्नातिस्निग्धे रूक्षं तत्रावचारयेत्॥
अयोगे चैव वैगुण्यमिन्द्रियाणाञ्च रूक्षता।
रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत्॥
चत्वारो बिन्दवः षड्वा तथाष्टौ वा यथाबलम्।
शिरोविरेकस्नेहस्य प्रमाणमभिनिर्दिशेत्॥
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः।
शुद्धहीनातिसंज्ञानि विशेषाच्छास्त्रचिन्तकैः॥
लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम्॥
कण्डूपदेहौ गुरुता स्रोतसाङ्कफसंस्रवः।
मूर्द्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्त्तितम्॥
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः।
शून्यता शिरसश्चापि मूर्द्ध्नि गाढ़विरेचिते॥
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्।
सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत्॥
एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनः पुनः।
एकविंशतिरात्रं वा यावद्वा साधु मन्यते॥
मारुतेनाभिभूतस्य वात्यन्तं यस्य देहिनः।
द्विकालञ्चापि दातव्यं नस्यं तस्य विजानता॥

अवपीड़स्तु शिरोविरेचनवदभिष्यन्दसर्पदष्टविसंज्ञेभ्यो

दद्याच्छिरोविरेचनद्रव्याणामन्यतममव पीड्यावपिब्य चेतो-विकारकृमि विषाभिपन्नानां चूर्णं प्रधमेत्। शर्करेक्षुरस-क्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विद-ध्यात्।

कृशदुर्बलभीरूणां सुकुमारस्य योषिताम्।
शस्ताः स्नेहाः शिरःशुद्धौ कल्कास्तेभ्यो यथाहिताः॥

नस्येन परिहर्त्तव्यो भुक्तवानपतर्पितोऽत्यर्थंतरुणप्रति-श्यायीगर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्त्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः शिरःस्नातुकामश्चेति। अनार्त्तवे चाभ्रे नस्य-धूमौ परिहरेत्। तत्र हीनातिमात्रातिशीतोष्णसहसाप्र-दानातिप्रविलम्बितशिरस उच्छिंघतो विचलतोऽभ्यवहरतो वा प्रतिसिद्धप्रदानाच्च व्यापदो भवन्ति द्वयोद्वारादयो दोषनिमित्ताः क्षयजाश्च।

भवतश्चात्र।

नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः।
दोषोत्क्लेशात्क्षयाच्चैव विज्ञेयास्ता यथाक्रमम्॥
दोषोत्क्लेशनिमित्तांस्तु जयेच्छमनशोधनैः।
अथ क्षयनिमित्तांस्तु यथास्वं बृंहणं हितम्॥

प्रतिमर्शश्चतुर्दशस्तु कालेषूपादेयः। तद्यथा। तल्पो-त्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्व-परिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्दितवता-दिवास्वप्नोत्थितेन सायञ्चेति।

तत्र तल्पोत्थितेनासेवितः प्रतिमर्शो रात्रावुपचितनासा-स्रोतोगतं मलमुपहन्ति मनःप्रसादञ्च करोति। प्रक्षालित-दन्तेनासेवितो दन्तानां दृढ़तांवदनसौगन्ध्यं चापादयति। गृहान्निर्गच्छतासेवितो नासास्रोतसः क्लिन्नतया रजोधूमो वा नाबाधते व्यायाममैथुनाध्व परिश्रान्तेनासेवितः श्रममुप-हन्ति। मूत्रोच्चारान्ते वा सेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति। अभुक्तवता सेवितः स्रोतसां विशुद्धिं लघुतां चापादयति। वान्तेना-सेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति। दिवास्वप्नोत्थितेनासेवितो निद्राशेषं गुरुत्वं मलं चापोह्य चित्तै-काग्र्यं जनयति। सायं चासेवितः सुखनिद्राप्रबोधं चेति।

ईषदुच्छिंघतः स्नेहो यावद्वक्त्रं प्रपद्यते।
नस्ये निषिक्तं तं विद्यात्प्रतिमर्शं प्रमाणतः॥
नस्येन रोगाः शाम्यन्ति नराणामूर्द्धजत्रुजाः।
इन्द्रियाणां च वैमल्यं कुर्य्यादास्यं सुगन्धि च॥
हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम्।
वलीपलितखालित्यव्यङ्गानां चाप्यसम्भवः॥
तैलं कफे सवाते स्यात्केवलं पवने वसाम्।
दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुते॥
चतुर्विधस्य स्नेहस्य विधिरेव प्रकीर्त्तितः।
श्लेष्मस्थानाविरोधित्वात्तेषु तैलं विधीयते॥
अतः परं प्रवक्ष्यामि कवलग्रहणे विधिम्।
चतुर्द्धा कवलः स्नेहो प्रसादी शोधिरोपणौ॥

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रूक्षोष्णैः शोधनः कफे॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे।
चतुर्विधस्य चैवास्य विधिरेषोऽयं प्रकीर्त्तितः॥

तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलशुक्त-सुरामूत्रचारमधुनामन्यतमेन सलवणमभिप्रतप्तमनुपस्विन्न-मृदितगलकपोलललाटप्रदेशो धारयेत्।

सुखं सञ्चार्य्यते या तु मात्रा सा कवले स्मृता।
असञ्चार्य्या तु या मात्रा गण्डूषः स प्रकीर्त्तितः॥

तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरि-पूर्णकपोलत्वं नासास्रोतनयनपरिस्रावश्च भवति तदा विमो-क्तव्यः पुनश्चान्यो ग्रहीतव्य इति।

एवं स्नेहपयःक्षौद्ररसमूत्राम्लसम्भृताः।
कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः॥
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च।
अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः॥
शोधनीयविशेषेण भवन्त्येवं न संशयः।
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च॥
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः।
कवलस्य विधिर्ह्येष समासेन प्रकीर्त्तितः॥
विभज्य भेषजं बुद्ध्या कुर्व्वीत प्रतिसारणम्।

कल्को रसक्रिया चौद्रं चूर्णं चेति चतुर्व्विधम् ॥
अङ्गुल्यग्रप्रणीतन्तु यथास्वं मुखरोगिणाम् ।
तस्मिन्योगमयोगञ्च कवलोक्तं विभावयेत् ॥
तानेव शमयेद्याधीन्कवलो यानपोहति ।
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥

इति श्री सौश्रुत आयुर्वेदशास्त्रे चतुर्थं चिकित्सितस्थानं समाप्तम् ।

---

# कल्पस्थानम् ।



## ॥ प्रथमोऽध्यायः ॥

॥ अथातोऽन्नपानरक्षाकल्पं व्याख्यास्यामः ॥

धन्वन्तरिः काशिपतिस्तपोधर्म्मभृतांवरः ।
सुश्रुतप्रभृतीन् शिष्यान् शशासाहतशासनः ॥
रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः ।
सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥
विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः ।
स्त्रियो वा विविधान् योगान् कदाचित्सुभगेच्छया ॥
विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः ।
तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥
यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम् ।
न विश्वस्यात्ततो राजा कदाचिदपि कस्यचित् ॥
कुलीनं धार्म्मिकं स्निग्धं सुभृतं सततोत्थितम् ।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥
क्रोधपारुष्यमात्सर्य्यमदालस्यविवर्ज्जितम् ।

वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते।
क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्यपि॥
आलभेतासकृद्दीनः करेण च शिरोरुहान्।
निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः॥
वर्त्तते विपरीतस्तु विषदाता विचेतनः।
केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया॥
असतामपि सन्तोऽपि चेष्टां कुर्व्वन्ति मानवाः।
तस्मात् परीक्षणं कार्य्यं भृत्यानामादितो नृपैः॥
अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने।
उत्सादने कषाये च परिषेकेऽनुलेपने॥
स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च।
पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम्॥
विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु।
लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम्॥
नृपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये।
तत्रैव ते विनश्यन्ति मक्षिकावायसादयः॥
हुतभुक्तेन चान्नेन भृशं चटचटायते।
मयूरकण्ठप्रतिमो जायते चापि दुःसहः॥
भिन्नार्च्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति।
चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु॥
दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः।
कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति॥
हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके।

जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥
मेधाविनमसंश्रान्तमनुरक्तं हितैषिणम् ।
पटुं प्रगल्भं निपुणं दक्षं मायाविवर्ज्जितम् ॥
पूर्व्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् ।
महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥
प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि ।
सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम् ॥
विकक्षसृष्टसंसृष्टं सवितानं कृतार्च्चनम् ।
परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् ॥
तत्राध्यक्षं नियुञ्जीत प्रायोवैद्यगुणान्वितम् ।
शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः ॥
संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः ।
स्नाता दृढ़ं संयमिनः कृतोष्णीषाः सुसंयताः ॥
तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्म्मिणः ।
आहारस्थितयश्चापि भवन्ति प्राणिनो यतः ॥
तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् ।
माहानसिकवोढारः सौपौदनिकपौपिकाः ।
भवेयुर्वैद्यवशगा येचाप्यन्य तु केचन ।
इङ्गितज्ञो मनुष्याणां वाक्चेष्टमुखवैकृतैः ॥
विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान् ।
न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च ॥
अपार्थवहु सङ्कीर्णं भाषते चापि मूढ़वत् ।
स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत् ॥

वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते ।
क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि ॥
आलभेतासकृद्दीनः करेण च शिरोरुहान् ।
निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः ॥
वर्त्तते विपरीतस्तु विषदाता विचेतनः ।
केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया ॥
असतामपि सन्तोऽपि चेष्टां कुर्व्वन्ति मानवाः ।
तस्मात् परीक्षणं कार्य्यं भृत्यानामादितो नृपैः ॥
अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने ।
उत्सादने कषाये च परिषेकेऽनुलेपने ॥
स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च ।
पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम् ॥
विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु ।
लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम् ॥
नृपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये ।
तत्रैव ते विनश्यन्ति मक्षिकावायसादयः ॥
हुतभुक्तेन चान्नेन भृशं चटचटायते ।
मयूरकण्ठप्रतिमो जायते चापि दुःसहः ॥
भिन्नार्च्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति ।
चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु ॥
दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः ।
कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति ॥
हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके ।

हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति ॥
पृषतो विसृजत्यश्रु विष्ठां मुञ्चति मर्कटः ।
सन्निकृष्टांस्ततः कुर्य्याद्राज्ञस्तान् मृगपक्षिणः ॥
वेश्मनोऽथ विभूषार्थं रक्षार्थञ्चात्मनः सदा ।
उपक्षिप्तस्य चान्नस्य वाष्पेणोर्द्धं प्रसर्पता ॥
हृत्पीड़ा भ्रान्तनेत्रत्वं शिरोदुःखञ्च जायते ।
तत्र नस्याञ्जने कुष्ठं रामठं नलदं मधु ॥
कुर्य्याच्छिरीषरजनीचन्दनैश्च प्रलेपनम् ।
हृदि चन्दनलेपस्तु तथासुखमवाप्नुयात् ॥
पाणिप्राप्तं पाणिदाहं नखशातं करोति च ।
अत्र प्रलेपःश्यामेन्द्रगोपासोमोत्पलानि च ॥
स चेत् प्रमादान्मोहाद्वा तदन्नमुपसेवते ।
अष्ठीलावत्ततो जिह्वा भवत्यरसवेदिनी ॥
तुद्यते दह्यते चापि श्लेष्मा चास्यात् प्रसिच्यते ।
तत्र वाष्पेरितं कर्म्म यच्च स्याद्दान्तकाष्ठिकम् ॥
मूर्च्छां छर्द्दिमतीसारमाध्मानं दाहवेपथू ।
इन्द्रियाणाञ्च वैकृत्यं कुर्य्यादामाशयं गतम् ॥
तत्राशु मदनालाबुबिम्बीकोशातकीफलैः ।
छर्द्दनं दध्युदश्विद्भ्यामथ वा तण्डुलाम्बुना ॥
दाहं मूर्च्छामतीसारं तृणामिन्द्रियवैकृतम् ।
आटोपपाण्डुतां कार्श्यं कुर्य्यात्पक्वाशयं गतम् ॥
विरेचनं ससर्पिष्कं तत्रोक्तं नीलिनीफलम् ।
दध्ना दूषी विषारिश्च पेयो वा मधुसंयुतः ॥

द्रवद्रव्येषु सर्व्वेषु क्षीरमद्योदकादिषु।
भवन्ति विविधा राज्यः फेणबुद्बुदजन्म च।
छायाश्चात्र न दृश्यन्ते दृश्यन्ते यदि वा पुनः॥
भवन्ति यमलाश्छिद्रास्तन्वग्रीवा विकृतास्तथा।
शाकसूपान्नमांसानि क्लिन्नानि विरसानि च॥
सद्यः पर्य्युषितानीव विगन्धानि भवन्ति च।
गन्धवर्णरसैर्हीनाः सर्व्वे भक्ष्याः फलानि च॥
पक्वान्याशु विशीर्य्यन्ते पाकमामानि यान्ति च।
विशीर्य्यते कूर्च्चकस्तु दन्तकाष्ठगते विषे॥
जिह्वादन्तौष्ठमांसानां श्वयथुश्चोपजायते।
अथास्य धातकीपुष्पपथ्याजम्बूफलास्थिभिः॥
सक्षौद्रैः प्रच्छिते शोफे कर्त्तव्यं प्रतिसारणम्।
अथ वाङ्कोठमूलानि त्वचः सप्तच्छदस्य वा॥
शिरीषमाषका वापि सक्षौद्राः प्रतिसारणम्।
जिह्वानिर्लेखकवलौ दन्तकाष्ठवदादिशेत्।
पिच्छिलो बहुलोऽभ्यङ्गो विवर्णो वा विषान्वितः॥
स्फोटजन्मरुजास्रावत्वक्पाकः स्वेदनं ज्वरः।
दरणं चापि मांसानामभ्यङ्गे विषसंयुते॥
तत्र शीताम्बुसिक्तस्य कर्त्तव्यमनुलेपनम्।
चन्दनं तगरं कुष्ठमुशीरं वेणुपत्रिका॥
सोमवल्लग्मृता श्वेता पद्मं कालीयकं त्वचम्।
कपित्थरसमूत्राभ्यां पानमेतच्च युज्यते॥
उत्सादने परीषेके कषाये चानुलेपने।

श्याववस्नतनुलेषु ज्ञेयमभ्यङ्गलक्षणैः ॥
केशशातः शिरोदुःखं खेभ्यश्च रुधिरागमः ।
ग्रन्थिजन्मोत्तमाङ्गेषु विषजुष्टे तु लेपने ॥
प्रलेपो बहुशस्तत्र भाविताः कृष्णमृत्तिकाः ।
ऋष्यपित्तघृतश्यामापालिन्दीतण्डुलीयकैः ॥
गोमयस्वरसोवापि हितो वा मालतीरसः ।
रसो मूषिकपर्ण्यावा धूमोवागारसम्भवः ॥
शिरोऽभ्यङ्गः शिरस्त्राणं स्नानमुष्णीषमेव च ।
स्रजश्च विषसंसृष्टाः साधयेदनुलेपवत् ॥
मुखलेपे मुखं श्यावं युक्तमभ्यङ्गलक्षणैः ।
पद्मिनीकण्टकप्रख्यैः कण्टकैश्चोपचीयते ॥
तत्र क्षौद्रघृतं पानं प्रलेपश्चन्दनं घृतं ।
पयस्या मधुकं फञ्जी बन्धुजीवपुनर्नवा ॥
अश्वाश्वंत्र कुञ्जरादीनां लालास्रावोऽक्षिरक्तता ।
स्फिक्पायुमेढ्रमुष्केषु युक्तेषु स्फोटसम्भवः ॥
तत्राभ्यङ्गवदेवेष्टा यात्ववाहनयोः क्रिया ।
शोणितागमनं खेभ्यः शिरोरुक् कफसंस्रवः ॥
नस्यधूमगते लिङ्गमिन्द्रियाणान्तु वैकृतम् ।
तत्र दुग्धै र्गवादीनां सर्पिः सातिविषैः स्मृतम् ॥
पाने नस्ये च सश्वेतं हितं समदयन्तिकं ।
गन्धहानिर्विवर्णत्वं पुष्पाणां म्लानता भवेत् ॥
जिघ्रतश्च शिरोदुःखं वारिपूर्णे च लोचने ।
तत्र वाष्पेरितं कर्म मुखालेपे च यत्स्मृतम् ॥

कर्णतैलगते श्रोत्रवैगुण्यं शोफवेदने।
कर्णस्रावश्च तत्राशु कर्त्तव्यं प्रतिपूरणम्॥
स्वरसो बहुपुत्रायाः सघृतः चौद्रसंयुतः।
सोमवल्करसश्चापि सुशीतो हित इष्यते॥
अश्रूपदेहो दाहश्च वेदना दृष्टिविभ्रमः।
अञ्जने विषसंसृष्टे भवेदान्ध्यमथापि वा॥
तत्र सद्योघृतं पेयं तर्पणञ्च समागधम्।
अञ्जनं मेषशृङ्गस्य निर्य्यासो वरुणस्य च॥
मुष्ककस्याजकर्णस्य फेणो गोपित्तसंयुतः।
कपित्थमेषशृङ्गोश्च पुष्पं भल्लातकस्य वा॥
एकैकं कारयेत् पुष्पं वन्धूकाङ्कोठयोरपि।
शोफः स्रावस्तथास्वापः पादयोः स्फोटजन्म च॥
भवन्ति विषजुष्टाभ्यां पादुकाभ्यामसंशयम्।
उपानत्पादपीठानि पादुकावत् प्रसाधयेत्॥
भूषणानि हतार्चीं षि न विभान्ति यथा पुरा।
स्वानि स्थानानि हन्युश्च दाहपाकावदारणैः॥
पादुकाभूषणे युक्तमभ्यङ्गविधिमाचरेत्।
विषोपसर्गो वाप्यादिर्भूषणान्तोयईरितः॥
समीक्ष्योपद्रवांस्तस्य विदधीत चिकित्सितम्।
महासुगन्धिमगदं यं प्रवक्ष्यामि तं भिषक्॥
पानालेपननस्येषु विदधीताञ्जनेषु च।
विरेचनानि तीक्ष्णानि कुर्य्यात् प्रच्छर्द्दनानि च॥
सिराश्च व्यधयेत् क्षिप्रं प्राप्तं विस्रावणं यदि।

मूषिकाजरुहा वापि हस्ते बद्धा तु भूपतिः।
करोति निर्व्विषं सर्व्वमन्नं विषसमायुतम्।
हृदयावरणं नित्यं कुर्य्याच्च मित्रमध्यगः॥
पिवेद्घृतमजेयाख्यममृताख्यञ्च वुद्धिमान्।
सर्पिर्दधिपयः चौद्रं पिवेद्दा शीतलं जलम्॥
मयूरान्नकुलान् गोधाः पृषतान् हरिणानपि।
सततं भक्षयेच्चापि रसांस्तेषां पिवेदपि॥
गोधानकुलमांसेषु हरिणस्य च बुद्धिमान्।
दद्यात् सुपिष्टां पालिन्दीं मधुकं शर्करान्तथा॥
शर्करातिविषे देये मायूरे समक्षौषधे।
पार्षते चापि देयाः स्युः पिप्पल्यः समक्षौषधाः॥
सचौद्रः सघृतश्चैव शिम्बीयूषो हितः सदा।
विषघ्नानि च सेवेत भक्ष्यभोज्यानि वुद्धिमान्॥
पिप्पलीमधुकचौद्रशर्करेक्षुरसाम्बुभिः।
छर्दयेद्गुप्तहृदयो भक्षितं यदिवा विषम्॥

---

## द्वितीयोऽध्यायः।

अथातः स्थावरविषविज्ञानीयमध्यायं व्याख्यास्यामः॥

स्थावरञ्जङ्गमञ्चैव द्विविधं विषमुच्यते।
दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम्॥
मूलं पत्रं फलं पुष्पं त्वक् चीरं सारएवच।

निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः ॥

तत्र क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाटविद्युच्छिखा विजयानीत्यष्टौ मूलविषाणि ॥

विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भाणि पञ्च पत्रविषाणि ॥

कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि ॥

वेत्रकादम्बवल्लिजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि॥

अन्त्रपाचककर्त्तरीयसौरीयककरघाटकरम्भनन्दनवराटकानि सप्तत्वक्सारनिर्य्यासविषाणि ॥

कुमुदघ्नीस्नुहीजालक्षीर्य्याणि त्रीणि क्षीरविषाणि ॥

फेणाश्मभस्म हरितालञ्च द्वे धातुविषे ॥

कालकूटवत्सनाभसर्षपपालककर्द्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्द विषाणि। इत्येवं पञ्च पञ्चाशत् स्थावरविषाणि भवन्ति ॥

चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्त्तिते ।
षट्चैव सर्षपाण्याहुः शेषाण्येकैकमेव तु ॥
उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ।
जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेयाः पत्रविषेण तु ॥
मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च ।
भवेत्पुष्पविषैश्छर्द्दिराध्मानं मोह एव च ॥
त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि ।
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥

फेणागमः चीरविषे विड्भेदो जिह्वजिह्वता ।
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥
प्रायेण कालघातीनि विषाण्येतानि निर्द्दिशेत् ।
कान्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम् ॥
स्पर्शाज्ञानं कालकूटे वपेथुः स्तम्भ एव च ।
ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥
सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च ।
ग्रीवादौर्ब्बल्यवाक्सङ्गा पालकेऽनुमताविह ॥
प्रसेकः कर्द्दमाख्ये तु विड्भेदो नेत्रपीतता ।
वैराटके नाङ्गदुःखं शिरोरोगश्च जायते ॥
गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु ।
शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः ॥
पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे ।
वैवर्ण्यं मूलकैश्छर्द्दिर्हिक्काशोफप्रमूढ़ताः ॥
चिरेणोच्छ्वसिति श्यावो नरो हालाहलेन वै ।
महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥
कर्क्कटेनोत्पतत्यूर्द्ध्वं हसन्दन्तान्दशत्यपि ।
कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश ॥
सर्व्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः ।
रूक्षमुष्णं तथातीक्ष्णं सूक्ष्ममाशुव्यवायि च ॥
विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृतम् ।
तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम् ॥
मानसं मोहयेत्तैक्ष्ण्यादङ्गबन्धान्छिनत्त्यपि ।

फेणागमः चौरविषे विड्भेदो जिह्वजिह्वता ।
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥
प्रायेण कालघातीनि विषाख्येतानि निर्द्दिशेत् ।
कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम् ॥
स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च ।
ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥
सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च ।
ग्रीवादौर्व्वल्यवाक्सङ्गौ पालकेऽनुमताविह ॥
प्रसेकः कर्द्दमाख्ये तु विड्भेदो नेत्रपीतता ।
वैराटके नाङ्गदुःखं शिरोरोगश्च जायते ॥
गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु ।
शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः ॥
पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे ।
वैवर्ण्यं मूलकैश्छर्द्दिर्हिक्काशोफप्रमूढ़ताः ॥
चिरेणोच्छसिति श्यावो नरो हालाहलेन वै ।
महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥
कर्क्कटेनोत्पतत्यूर्द्ध्वं हसन्दन्तान्दशत्यपि ।
कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश ॥
सर्व्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः ।
रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशुव्यवायि च ॥
विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृतम् ।
तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम् ॥
मानसं मोहयेत्तैक्ष्ण्यादङ्गबन्धान्छिनत्त्यपि ।

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः।
यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम्॥
स्थावरस्योपयुक्तस्य वेगे तु प्रथमे नृणाम्।
श्यावा जिह्वा भवेत् स्तब्धा मूर्च्छा श्वासश्च जायते॥
द्वितीये वेपथुः स्वेदो दाहः कण्डुरुजस्तथा।
विषमामाशयप्राप्तं कुरुते हृदि वेदनाम्॥
तालुशोषं तृतीये तु शूलं चामाशये भृशम्।
दुर्व्वर्णे हरिते शूने जायेते चास्य लोचने॥
पक्वाशयगते तोदो हिक्का कासोऽन्त्रकूजनम्।
चतुर्थे जायते वेग शिरसश्चातिगौरवम्॥
कफप्रसेको वैवर्ण्यं पर्व्वभेदश्च पञ्चमे।
सर्व्वदोषप्रकोपश्च पक्वाधाने च वेदना॥
षष्ठे प्रज्ञाप्रणाशश्च भृशं वाप्यतिसार्य्यते।
स्कन्धपृष्ठकटीभङ्गः सन्निरोधश्च सप्तमे॥
प्रथमे विषवेगे तु वान्तं शीताम्बुसेवितम्।
अगदं मधुसर्पिर्भ्यां पाययेत समायुतम्॥
द्वितीये पूर्व्ववद्वान्तं पाययेत्तु विरेचनम्।
तृतीयेऽगदपानन्तु हितं नस्यं तथाञ्जनम्॥
चतुर्थे स्नेहसंमिश्रं पाययेतागदं भिषक्।
पञ्चमे क्षौद्रमधुकक्काथयुक्तं प्रदापयेत्॥
षष्ठेऽतीसारवत्सिद्धिरवपीडश्च सप्तमे।
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत्
वेगान्तरे त्वन्यतमे कृते कर्म्मणि शीतलाम्।

यवागूं सघृतक्षौद्रामिमां दद्याद्विचक्षणः ॥
कोषातक्योऽग्निकः पाठासूर्य्यवल्ल्यमृताभयाः ।
शिरीषः किणिही शेलुर्गिर्य्याह्वारजनीद्वयम् ॥
पुनर्नवे हरेणुश्च त्रिकटुः सारिवे बला ।
एषां यवागूर्निःक्वाथे कृता हन्ति विषद्वयम् ॥
मधुकं तगरं कुष्ठं भद्रदारु हरेणवः ।
पुन्नागैलैलवालूनि नागपुष्पोत्पलं सिता ॥
विडङ्गं चन्दनं पत्रं प्रियङ्गुध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरा सहा ॥
कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्व्वाणि शीघ्रमेवाजितं क्वचित् ॥
दूषीविषार्त्तं सुस्विन्नमूर्द्धञ्चाधश्च शोधितम् ।
पाययेतागदं नित्यमिमं दूषीविषापहम् ॥
पिप्पल्यो ध्यामकं मांसी सावरः परिपेलवम् ।
सुवर्च्चिका ससूक्ष्मैला तोयं कनकगैरिकम् ॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति ।
एष नाम्ना विषारिस्तु न चान्यत्रापि वार्य्यते ॥
ज्वरे दाहे च हिक्कायामानाहे शुक्रसंक्षये ॥
शोफेऽतिसारे मूर्च्छायां हृद्रोगे जठरेऽपि वा ॥
उन्मादे वेपथौ चैव ये चान्ये स्युरुपद्रवाः ।
यथास्वं तेषु कुर्व्वीत विषघ्नैरौषधैः क्रियाम् ।
साध्यमात्मवतः सद्यो याप्यं सम्वत्सरोत्थितम् ॥
दूषीविषमसाध्यन्तु क्षीणस्याहितसेविनः ।

## तृतीयोऽध्यायः ।

अथाऽतो जङ्गमविषविज्ञानीयमध्यायं व्याख्यास्यामः ।
जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश ।
समासेन मया यानि विस्तरस्तेषु वक्ष्यते ॥

तत्र दृष्टिनिश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुख-सन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानीति ।

तत्र दृष्टिनिश्वासविषास्तु दिव्याः सर्पाः । भौमास्तु दंष्ट्रा विषाः । मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाश-म्बूकप्रचलाक गृहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रा-नखविषाः ।

चिपिटपिच्चटककषायवासिकसर्षपवासिक तोटकवर्च्चः कीटकौण्डिन्यकाःशकृन्मूत्रविषाः ।

मूषिकाः शुक्रविषाः । लूताश्च लालामूत्रपुरीषमुखसन्दंश नख शुक्रार्त्तवविषाः ।

वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्चाल विषाः ।

चित्रशिरःसरावकुर्दिंशतदारुकारिमेदकशारिकामुखामुख सन्दंशविशर्द्धितमत्रपुरीषविषाः । मक्षिकाकणभजलायुका मुख सन्दंशविषाः ।

विषहतास्थिसर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि ।
शकुली मत्स्यरक्तराजीवरकीमत्स्याश्च पित्तविषाः ।

सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः ।

कीटसर्पदेहा गतासवः शवविषाः शेषास्त्वनुक्ता मुख-सन्दंशविषेष्वेव गणयितव्याः ।

भवन्ति चात्र ।

राज्ञोऽरिदेशे रिपवस्तृणाम्बुमार्गान्नधूमश्वसनान् विषेण ।
संदूषयन्त्येभिरतिप्रदुष्टान् विज्ञाय लिङ्गैरभिशोधयेच्च ॥
दुष्टं जलं पिच्छिलमुग्रगन्धि फेणान्वितं राजिभिरावृतञ्च ।
मण्डूकमत्स्यं म्रियते विहङ्गा मत्ताश्च सानूपचरा भ्रमन्ति ॥
मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्दिमोहज्वरदाहशोफान् ।
गच्छन्ति तेषामपहृत्य दोषान् दुष्टं जलं शोधयितुं यतेत ॥
धवाश्वकर्णासनपारिभद्राः सपाटलाः सिन्नकमोच्चकौ च ।
दग्धाः सराजद्रुमसोमवल्कास्तद्भस्मशीतं वितरेत्सरःसु ॥
भस्माञ्जलिश्चापि घटे निधाय विशोधयेदीप्सितमेवमम्भः ।
क्षितिप्रदेशं विषदूषितन्तु शिलास्थलीं तीर्थमथेरिणं वा ॥
स्पृशन्ति गात्रेण तु येन येन गोवाजिनागोष्ट्रखरा नरा वा ।
तच्छूनतां यात्यथ दह्यते च विशीर्य्यते रोमनखास्तथैव ॥
तत्राप्यनन्तां सहसर्व्वगन्धैः पिष्ट्वा सुराभिर्व्विनियोज्य मार्गम् ।
सिञ्चेत् पयोभिस्तु मृदन्वितैस्तं विडङ्गपाठाकटभीजलैर्वा ॥
तृणेषु भक्तेषु च दूषितेषु सीदन्ति मूर्च्छन्ति वमन्ति चान्ये ।
विड्भेदमृच्छन्त्यथ वा म्रियन्ते तेषां चिकित्सा प्रणयेद्यथोक्ताम् ॥
विषापहैर्व्वाप्यगदैर्व्विलिप्य वाद्यानि चित्राण्यपि वादयेत ।
तारः सुतारः ससुरेन्द्रगोपः सर्व्वैश्च तुल्यः कुरुविन्दभागः ॥
पित्तेन युक्तैः कपिलान्वयेन वाद्यप्रलेपो विहितः प्रशस्तः ।

वाद्यस्य शब्देन हि यान्ति नाशं विषाणि घोराण्यपि यानि सन्ति ॥
धूमेऽनिले वा विषसम्प्रयुक्ते खगाः श्रमार्त्ताः प्रपतन्ति भूमौ।
कासप्रतिश्यायशिरोरुजैश्च भवन्ति तीव्रा नयनामयाश्च ॥
लाक्षाहरिद्रातिविषाभयाब्दहरेणुकैलादलवल्ककुष्ठम्।
प्रियङ्गु काञ्चाप्यनले निधाय धूमानिलौ चापि विशोधयेत ॥

प्रजामिमामात्मयोनेर्ब्रह्मणः सृजतः किल।
अकरोदसुरोविघ्नं कैटभोनाम दर्पितः ॥
ततः क्रुद्धस्य वै वक्त्राद्ब्रह्मणस्तेजसोनिधेः।
क्रोधो विग्रहवान् भूत्वा निपपाताऽथ दारुणः ॥
स तं ददाह गर्ज्जन्तमन्तकाभंमहाबलम्।
ततोऽसुरं घातयित्वा तत्तेजोऽवर्द्धताद्भुतम् ॥
ततो विषादो देवानामभवत्तं निरीक्ष्य वै।
विषादजननत्वाच्च विषमित्यभिधीयते ॥
ततः सृष्ट्वा प्रजाः शेषं तदा तं क्रोधमीश्वरः।
विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च ॥
यथाव्यक्तरसं तोयमन्तरीक्षान्महीगतम्।
तेषु तेषु प्रदेशेषु रसत्वं तं नियच्छति ॥
एवमेव विषं यद्यद्द्रव्यं व्याप्यावतिष्ठते।
स्वभावादेव तं तस्य रसं समनुवर्त्तते ॥
विषे यस्माद्गुणाः सर्व्वे तीक्ष्णाः प्रायेण सन्ति हि।
विषं सर्व्वमतो ज्ञेयं सर्व्वदोषप्रकोपणम् ॥
ते तु वृत्तिं प्रकुपिता जहतिस्वां विषार्द्दिताः।
नोपयाति विषं पाकमतः प्राणान् रुणद्धि च ॥

श्लेष्मणावृतमार्गत्वादुच्छ्वासोऽस्य निरुध्यते ।
विसंज्ञः सति जीवेऽपि तस्मात्तिष्ठति मानवः ॥
शुक्रवत् सर्व्वसर्पाणां विषं सर्व्वशरीरगम् ।
क्रुद्धानामेति चाङ्गेभ्यः शुक्रं निर्म्मन्थनादिव ॥
तेषां वडिशवद्दंष्ट्रास्तासु सज्जति चागतम् ।
अनुद्वृत्ता विषं तस्मान्न मुञ्चन्ति च भोगिनः ॥
यस्मादत्यर्थमुष्णञ्च तीक्ष्णञ्च पठितं विषम् ।
अतः सर्व्वविषेषूक्तः परिषेकस्तु शीतलः ॥
मन्दं कीटेषु नात्युक्तं बहुवातकफं विषम् ।
अतः कीटविषे चापि स्वेदो न प्रतिषिध्यते ॥
कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेत् ।
स्वभावादेव तिष्ठेत्तु प्रहारादंसयोर्व्विषम् ॥
व्याप्य सावयवं देहं दिग्धविद्धाहिदष्टयोः ॥
लौल्याद्विषान्वितं मांसं यः खादेन्मृतमात्रयोः ।
यथाविषं स रोगेण क्लिश्यते म्रियतेऽपि वा ॥
अतश्चाप्यनयोर्म्मांसमभक्ष्यं मृतमात्रयोः ।
मुहूर्त्तात्तदुपादेयं प्रहारादंसवर्जितम् ॥
सवातं गृहधूमाभं पुरीषं योऽतिसार्य्यते ।
आध्मातोऽत्यर्थमुष्णास्रो विवर्णः सादपीडितः ॥
उद्वमत्यथ फेणञ्च विषपीतं तमादिशेत् ।
नचास्य हृदयं वह्निर्व्विषदुष्टं दहत्यपि ॥
तद्धि स्थानं चेतनायाः स्वभावाद्व्याप्य तिष्ठति ।
अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु ।

याम्ये सपित्ते परिवर्ज्जनीया ऋच्चे नरा मर्म्मसु ये च दष्टाः ॥
दर्व्वीकराणां विषमाशुघाति सर्व्वाणि चोष्णे द्विगुणीभवन्ति ।
अजीर्णपित्तातपपीडितेषु बालप्रमेहेष्वथ गर्भिणीषु ॥
वृद्धातुरक्षीणबुभुक्षितेषु रूक्षेषु भीरुष्वथ दुर्द्दिनेषु ।
शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति ॥
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्ज्जयेत्तम् ।
जिह्वा सिता यस्य च केशशातो नासावभङ्गश्च सकण्ठभङ्गः ॥
कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वञ्च स वर्ज्जनीयः ।
वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्ध्वमधश्च यस्य ॥
दंष्ट्रानिपाताः सकलाश्च यस्य तच्चापि वैद्यः परिवर्ज्जयेत्तु ॥
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथ वा विवर्णम् ।
सारिष्टमत्यर्थमवेगिनञ्च जह्याच्च तं कर्म्म न तत्र कुर्य्यात् ॥

---

## चतुर्थोऽध्यायः ॥

अथातः सर्पदष्टविषविज्ञानीयमध्यायं व्याख्यास्यामः ।

धन्वन्तरिं महाप्राज्ञं सर्व्वशास्त्रविशारदम् ।
पादयोरुपसंगृह्य सुश्रुतः परिपृच्छति ॥
सर्पसङ्ख्यां विभागञ्च दष्टलक्षणमेव च ।
ज्ञानञ्च विषवेगानां भगवन् वक्तुमर्हसि ॥
तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजांवरः ।
असङ्ख्या वासुकिमुखा विख्यातास्तक्षकादयः ॥
महीधराश्च नागेन्द्रा हुताग्निसमतेजसः ।

येचाप्यजस्रं गर्ज्जन्ति वर्षन्ति च तपन्ति च ॥
ससागरा गिरिद्वीपा यैरियं धार्य्यते मही।
क्रुद्धा निःश्वासदृष्टिभ्यां ये हन्युरखिलं जगत् ॥
नमस्तेभ्योऽस्ति नो तेषां कार्य्यं किञ्चिच्चिकित्सया।
ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् ॥
तेषां सङ्ख्यां प्रवक्ष्यामि यथावदनुपूर्व्वशः।
अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा ॥
दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैवच।
निर्व्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः ॥
दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः।
तेषु दर्व्वीकरा ज्ञेया विंशतिः षट्च पन्नगाः ॥
द्वाविंशतिर्म्मण्डलिनो राजिमन्तस्तथा दश।
निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा ॥
वैकरञ्जोद्भवाः सप्त चित्रा मण्डलिराजिलाः।
पदाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा ॥
ते दशन्ति महाक्रोधास्तद्धि त्रिविधमुच्यते।
सर्पितं रदितं वापि तृतीयमथ निर्व्विषम् ॥
सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः।
पदानि यत्र दन्तानामेकं द्वे वा बहूनि च ॥
निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि।
चञ्चुमालकयुक्तानि वैकृत्यकरणानि च ॥
सङ्क्षिप्तानि सशोफानि विद्यात्तत् सर्पितं भिषक्।
राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा ॥

विज्ञेयं रदितं लघु ज्ञेयमल्पविषञ्च तत् ।
अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः ॥
पदं पदानि वा विद्यादविषं तच्चिकित्सकः ।
सर्पस्पृष्टस्य भीरोर्हिभयेन कुपितोऽनिलः ॥
कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत् ।
व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि तु ॥
तथातिवृद्धबालाभिदष्टमल्पविषं स्मृतम् ।
सुपर्णदेवब्रह्मर्षियक्षसिद्धनिषेविते ॥
विषघ्नौषधियुक्ते च देशे न क्रमते विषम् ।
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥
ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः ।
मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ॥
ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः ।
स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्धन्तु राजिभिः ॥
चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः ।
मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः ॥
सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः ॥
क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः ॥
सूर्य्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम् ।
कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा ॥
धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः ॥
महिषद्वीपिवर्णाभास्तथैव परुषत्वचः ।
भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः ॥

कोपयन्त्यनिलं जन्तोः फणिनः सर्व्वे एव तु ।
पित्तं मण्डलिनश्चापि कफञ्चानेकराजयः ॥
अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम् ।
ज्ञेयौ दोषैश्च दम्पत्योर्विशेषश्चात वक्ष्यते ॥
रजन्याः पश्चिमे यामे सर्पाश्चिताश्चरन्ति हि ।
शेषेष्वन्ता मण्डलिनो दिवादर्व्वीकराः स्मृताः ॥
दर्व्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा ।
राजिमन्तो वयोमध्ये जायन्ते मृत्युहेतवः ॥
नकुलाकुलिता बाला वारिविप्रहताः कृशाः ।
वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः ॥

तत्र दर्व्वीकराः । कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो महाकपोतो वलाहको महासर्पः शङ्खपालो लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः ककुदः पद्मो महापद्मो दर्भपुष्पोदधिमुखः पुण्डरीको भ्रुकुटीमुखो विष्किरःपुष्पाभिकीर्णो गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अलगर्द्दो आशीविष इति ॥

मण्डलिनस्तु । आदर्शमण्डलःश्वेतमण्डलो रक्तमण्डलश्चित्रमण्डलः पृषतो रोध्रपुष्पो मिलिन्दको गोनसो वृद्धगोनसः पनसो महापनसो वेणुपत्रकः शिशुको मदनः पालिंहिरः पिङ्गलस्तन्तुकःपुष्प पाण्डुःषडगोऽग्निको वभ्रुः कषायः कलुषः पारावतो हस्ताभरणश्चित्रक एणीपद इति ॥

राजिमन्तस्तु । पुण्डरीको राजिचित्रोऽङ्गुलराजिविन्दुराजिः कर्दमकस्तृणशोषकः सर्षपकः श्वेतहनुर्दर्भपुष्पश्चक्रको गोधूमकः किक्किसाद इति ॥

निर्व्विषास्तु । गलगोली शूकपत्रोऽजगरो दिव्यको वर्षाहिकः पुष्पशकली ज्योतीरथः चीरिका पुष्पकोऽहिपताको ऽन्धाहिकोगौ राहिको वृक्षेशय इति ।

वैकरञ्जास्तु त्रयाणां दर्व्वीकरादीनां व्यतिकराज्जाताः । तद्यथा । माकुलिः पोटगलः स्निग्धराजिरिति । तत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः । राजिलेन गोनस्यां वैपरीत्ये न वा जातः पोटगलः । कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति । तेषामाद्यस्य पितृवद्विषोत्कर्षो द्वयोर्मातृवदित्येके ॥

त्रयाणां वैकरञ्जानां पुनर्दिव्येलकरोध्रपुष्पकराजिचित्रकाः पोटगलः पुष्पाभिकीर्णो दर्भपुष्पो वेल्लितकः सप्त तेषामाद्यास्त्रयो राजिलवत् शेषा मण्डलिवत् । एवमेतेतां सर्पाणामशीतिरिति ॥

तत्र महानेत्रजिह्वास्यशिरसः पुमांसः सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः। उभयलक्षणमन्दविषा अक्रोधा नपुंसका इति।

तत्र सर्व्वेषां सर्पाणां सामान्यतएव दष्टलक्षणं वक्ष्यामः ॥ किं कारणं विषं हि निशितनिस्त्रिंशाशनिहुतवहदेश्यमाशुकारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति । नचावकाशोऽस्ति वाक् समूहमनुसर्त्तुम् ।

प्रत्येकमपि दष्टलक्षणेऽभिहिते सर्व्वत्रैविध्यं भवति। तस्मात्त्रैविध्यमेव वक्ष्यामः । एतद्ध्यातुरहितमसम्मोहकरञ्च । अपि चात्रैव सर्व्वसर्पव्यञ्जनावरोधः ॥

तत्र दर्व्वीकरविषे ण त्वङ्नयननखदशनमूत्रपुरीषदंश-

कृष्णत्वं रौच्यं शिरसो गौरवं सन्धिवेदनाकटीपृष्ठग्रीवादौर्ब्बल्यं जृम्भणं वेपथुः स्वरावसादो घुर्घुरको जड़ता शुष्कोद्गारःकास श्वासौ हिक्का वायोरूर्द्ध्वगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेणागमनं स्रोतोऽवरोधस्तस्तास्ताश्च वातवेदना भवन्ति ॥

मण्डलिविषेण त्वगादीनां पीतत्वं शीताभिलाषः परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरःशोणितागमनमूर्द्धमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति ॥

राजिमद्विषेण शुक्लत्वं त्वगादीनां शीतज्वरो रोमहर्षस्तब्धत्वं गात्राणामादंशशोफः सान्द्रकफप्रसेकश्छर्द्दिरभीक्ष्णमक्ष्णोः कण्डूः कण्ठे श्वयथुर्घुर्घुरकउच्छ्वासनिरोधस्तमः प्रवेशस्तास्ताश्च कफ वेदना भवन्ति ।

पुरुषाभिदष्ट ऊर्द्धं प्रेक्षतेऽधस्तात् स्त्रिया सिराश्चोत्तिष्ठन्ति ललाटे । नपुंसकाभिदष्टस्तिर्य्यक्प्रेक्षी भवति । गर्भिण्या पाण्डुमुखोध्मातश्च । सूतिकया शूलार्त्तो रुधिरं मेहत्युपजिह्विका चास्य भवति । ग्रासार्थिनान्नं काङ्क्षति । वृद्धेन मन्दा वेगाश्च । बालेनाशु मृदवश्च निर्व्विषेणाविषलिङ्गम् । अन्धाहिकेनान्धत्वमित्येके । ग्रसनादजगरः शरीरप्राणहरो न विषात् । तत्र सद्यः प्राणहराहिदष्टः पतति शस्त्राशनिहत इव भूमौ स्रस्ताङ्गः स्वपिति ॥

तत्र सर्व्वेषां सर्पाणांविषस्य सप्त वेगा भवन्ति ॥

तत्र दर्व्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति तत् प्रदुष्टं कृष्णतामुपैति तेन कार्ष्ण्यं पिपीलिकापरिसर्पणमिव

चाङ्गे भवति द्वितीये मांसं दूषयति तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति तृतीये मेदो दूषयति तेन दंशक्लेदः शिरो गौरवं स्वेदश्चक्षुर्ग्रहणञ्च । चतुर्थे कोष्ठमनुप्रविश्य कफप्रधाना-न्दोषान् दूषयति । तेन तन्द्राप्रसेकसन्धिविश्लेषा भवन्ति । पञ्चमेऽस्थीन्यनुप्रविशति प्राणमग्निञ्च दूषयति तेन पर्व्वभेदो हिक्का दाहश्च भवति । षष्ठे मज्जानमनुप्रविशति ग्रहणीञ्चा-त्यर्थं दूषयति तेन गात्राणां गौरवमतीसारो हृत्पीड़ा मूर्च्छा च भवति । सप्तमे शुक्रमनुप्रविशति व्यानञ्चात्यर्थं कोपयति कफञ्च सूक्ष्मस्रोतोभ्यः प्रच्यावयति तेन श्लेष्मवर्त्तिप्रादुर्भावः कटीपृष्ठ-भङ्गश्च सर्व्व चेष्टाविघातो लालास्वेदयोरतिप्रवृत्तिरुच्छ्वासनि-रोधश्च भवति ॥

तत्र मण्डलिनां प्रथमे वेगे विषं शोणितं दूषयति तत्तत्र प्रदुष्टं शीततामुपैति तत्र परिदाहःपीतावभासता चाङ्गानां भवति । द्वितीये मांसं दूषयति तेनात्यर्थं पीततापरिदाहौ दंशे श्वयथुश्च भवति । तृतीये मेदो दूषयति तेन पूर्व्ववच्चक्षुर्ग्र-हणंतृष्णा दंशे क्लेदः स्वेदश्च । चतुर्थे कोष्ठमनुप्रविश्य ज्वर-मापादयति पञ्चमे परिदाहं सर्व्वगात्रेषु करोति । षष्ठ-सप्तमयोः पूर्व्ववत् ॥

राजिमतां प्रथमे वेगे विषं शोणितं दूषयति तत्प्रदुष्टं-पाण्डुतामुपैति तेन रोमहर्षःशुक्लावभासश्चपुरुषो भवति । द्वितीये मांसं दूषयति तेन पाण्डुतात्यर्थं जाड्यं शिरःशोफश्च भवति । तृतीये मेदो दूषयति तेन चक्षुर्ग्रहणं दन्तक्लेदः स्वेदो घ्राणाक्षिस्रावश्च भवति । चतुर्थे कोष्ठमनुप्रविश्य

मन्यास्तम्भं शिरोगौरवं चापादयति ॥ पञ्चमे वाक्सङ्गं शीतज्वरञ्च करोति षष्ठसप्तमयोः पूर्व्ववदिति

भवन्ति चात्र ॥ धात्वन्तरेषु याः सप्त कलाः सम्परिकीर्त्तिताः ।

तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥
येनान्तरेण हि कलां कालकल्पं भिनत्ति हि ।
समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम् ॥
शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः ।
लालास्रावो द्वितीये तु कृष्णाङ्गः पीड्यते हृदि ॥
तृतीये च शिरोदुःखं कण्ठग्रीवञ्च भज्यते ।
चतुर्थे वेपते मूढः खादन् दन्तान् जहात्यसून् ॥
केचिद्वेगत्रयं प्राहुरन्तमेवैतेषु तद्विदः ।
ध्यायति प्रथमे वेगे पक्षी मुह्यत्यतः परम् ॥
द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति
केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि ।
मार्ज्जारनकुलादीनां विषं नातिप्रवर्त्तते ॥

---

॥ पञ्चमोऽध्यायः ॥

अथातः सर्पदष्ट चिकित्सितकल्पं व्याख्यास्यामः ॥

सर्व्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः ।
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥
प्लोतचर्म्मान्तवल्कानां मृदुनान्यतमेन च ।
न गच्छति विषं देहमरिष्टाभिर्निवारितम् ॥

दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते।
आचूषणच्छेददाहाः सर्व्वत्रैव तु पूजिताः॥
प्रतिपूर्य्य मुखं वस्त्रैर्हितमाचूषणं भवेत्।
स दष्टव्योऽथ वा सर्पो लोष्टो वापि हि तत्क्षणम्॥
अथ मण्डलिना दष्टं न कथञ्चन दाहयेत्।
स पित्तविषबाहुल्याद्दंशो दाहाद्विसर्पति॥
अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविदः।
सा तु रज्ज्वादिभिर्व्विद्धा विषप्रतिकरी मता॥
देवब्रह्मर्षिभिः प्रोक्ता मन्त्राः सत्यतपोमयाः।
भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम्॥
विषं तेजोमयैर्म्मन्त्रैःसत्यब्रह्मतपोमयैः।
यथा निवार्य्यते क्षिप्रं प्रयुक्तैर्न्न तथौषधैः॥
मन्त्राणां ग्रहणं कार्य्यं स्त्रीमांसमधुवर्ज्जिना।
जिताहारेण शुचिना कुशास्तरणशायिना॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः।
पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः॥
मन्त्रास्तु विधिना प्रोक्ता हीना वा स्वरवर्णतः।
यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रमः॥
समन्ततः सिरादंशाद्विध्येत्तु कुशलो भिषक्।
शाखाग्रे वा ललाटे वा वेध्यास्ता विसृते विषे॥
रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम्।
तस्माद्विस्रावयेद्रक्तं साह्यस्य परमा क्रिया॥
समन्तादगदैर्दंशं प्रच्छयित्वा प्रलेपयेत्।

चन्दनोशीरयुक्तेन वारिणा परिषेचयेत्॥
पाययेतागदांस्तांस्तान् क्षीरक्षौद्रघृतादिभिः।
तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका॥
कोविदारशिरीषार्ककटभीर्व्वापि भक्षयेत्।
न पिबेत्तैलकौलत्थमद्यसौवीरकाणि च॥
द्रवमन्यत्तु यत्किञ्चित् पीत्वा पीत्वा तदुद्वमेत्।
प्रायोहि वमनेनैव सुखं निर्ह्रियते विषम्॥
फणिनां विषवेगे तु प्रथमे शोणितं हरेत्।
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक्॥
नस्यकर्म्माञ्जने युञ्ज्यात्तृतीये विषनाशने।
वान्तं चतुर्थे पूर्व्वोक्तां यवागूमथ दापयेत्॥
शीतोपचारं कृत्वादौ भिषक् पञ्चमषष्ठयोः।
दापयेच्छोधनं तीक्ष्णं यवागूञ्चापि कीर्त्तिताम्॥
सप्तमे त्ववपीडेन शिरस्तीक्ष्णेन शोधयेत्।
तीक्ष्णमेवाञ्जनं दद्यात्तीक्ष्णशस्त्रेण मूर्द्धनि च॥
कुर्य्यात् काकपदं चर्म्म सासृग्वा पिशितं क्षिपेत्।
पूर्व्वे मण्डलिनां वेगे दर्व्वीकरवदाचरेत्॥
अगदं मधुसर्पिर्भ्यां द्वितीये पाययेतच।
वामयित्वा यवागूञ्च पूर्व्वोक्तामथ दापयेत्॥
तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धिताम्।
चतुर्थे पञ्चमे वापि दर्व्वीकरवदाचरेत्॥
काकोल्यादिर्हितः षष्ठे पयश्च मधुरो गणः।
हितोऽवपीडे त्वगदः सप्तमे विषनाशनः॥

अथ राजिमतां वेगे प्रथमे शोणितं हरेत् ।
अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च ॥
वान्तं द्वितीये त्वगदं पाययेद्विषनाशनम् ।
तृतीयादिषु तिष्वेव विधिर्दर्व्वीकरो हितः ॥
षष्ठे ऽञ्जनं तीक्ष्णतममवपीडश्च सप्तमे ।
गर्भिणीबालवृद्धानां सिराव्यधविवर्जितम् ॥
विषार्त्तानां यथोद्दिष्टं विधानं शस्यते मृदु ।
रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके ॥
गवश्वयोश्च द्विगुणं त्रिगुणं महिषोष्ट्रयोः ।
चतुर्गुणन्तु नागानां केवलं सर्व्वपक्षिणाम् ॥
परिषेकान् प्रदेहांश्च सुशीतानवचारयेत् ।
माषकं त्वञ्जनस्योक्तं द्विगुणं नस्यतो हितम् ॥
पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः ।
देशप्रकृतिसात्म्यर्त्तुविषवेगबलाबलम् ॥
प्रधार्य्य निपुणो बुद्ध्या ततः कर्म्म समाचरेत् ।
वेगानुपूर्व्वमित्येतत् कर्म्मोक्तं विषनाशनम् ॥
कर्म्मावस्थाविशेषेण विषयोरुभयोः शृणु ।
विवर्णे कठिने शूने सरुजेऽङ्गे विषार्द्दिते ॥
तूर्णं विस्रावणं कार्य्यमुक्तेन विधिना ततः ।
क्षुधार्त्तमनिलप्रायं तद्विषार्त्तं समाहितः ॥
पाययेद्दधितक्रं वा सर्पिः क्षौद्रं तथा रसम् ।
तृड्दाहघर्म्मसंमोहे पैत्तं पैत्ते विषातुरम् ॥
शीतैः संवाहनस्नानप्रदेहैः समुपाचरेत् ।

शीते शीतप्रसेकार्त्तं श्लैष्मिकं कफकृद्विषम्॥
वामयेद्वमनैस्तीक्ष्णैस्तथा मूर्च्छामदान्वितम्।
कोष्ठदाहरुजाध्मानमूत्रसङ्गरुगन्वितम्॥
विरेचयेच्छकृद्वायुसङ्गपित्तातुरं नरम्।
शूनाक्षिकूटं निद्रार्त्तं विवर्णाविललोचनम्॥
विवर्णञ्चापि पश्यन्तमञ्जनैः समुपाचरेत्।
शिरोरुग्गौरवालस्यहनुस्तम्भगलग्रहे॥
शिरोविरेचयेत् क्षिप्रं मन्यास्तम्भे च दारुणे।
नष्टसंज्ञं विवृत्ताक्षं भग्नग्रीवं विरेचनैः॥
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्त्तं समुपाचरेत्।
ताडयेच्च सिराः क्षिप्रं तस्य शाखाललाटजाः॥
तास्वप्रसिच्यमानासु मूर्द्ध्नि शस्त्रेण शस्त्रवित्।
कुर्य्यात् काकपदाकारं व्रणमेवं स्रवन्ति ताः॥
सरक्तं चर्म्म मांसंवा निक्षिपेच्चास्य मूर्द्ध्नि च।
चर्म्मवृक्षकषायं वा चूर्णं वा कुशलो भिषक्॥
वादयेच्चागदैर्लिप्ता दुन्दुभीस्तस्य पार्श्वयोः।
लब्धसंज्ञं पुनश्चैनमूर्द्ध्वञ्चाधश्च शोधयेत्॥
निःशेषं निर्हरेच्चैव विषं परमदुर्ज्जयम्।
अल्पमप्यवशिष्टं हि भूयो वेगाय कल्पते॥
कुर्य्याद्वा सादवैवर्ण्यं ज्वरकासशिरोरुजः।
शोफशोषप्रतिश्यायतिमिरारुचिपीनसान्॥
तेषु चापि यथादोषं प्रतिकर्म्म प्रयोजयेत्।
विषार्त्तोपद्रवांश्चापि यथास्वं समुपाचरेत्॥

अथारिष्टां विमुच्याशु प्रच्छयित्वाङ्कितं तथा।
दिह्यात्तत्र विषंस्कन्नं भूयो वेगाय कल्पते॥
एवं क्रियाक्रमैर्मन्त्रैरौषधीभिश्च यत्नतः।
विषे हृतगुणे देहाद्यदा दोषः प्रकुप्यति॥
तदा पवनमुद्वृत्तं स्नेहाद्यैः समुपाचरेत्।
तैलमत्स्यकुलत्थाम्लवर्जैर्मारुतनाशनैः॥
पित्तज्वरहरैः पित्तं कषायैःस्नेहवस्तिभिः।
कफमारग्वधाद्येन सक्षौद्रेण गणेन तु॥
श्लेष्मघ्नैरगदैश्चापि तिक्तै रूक्षैश्च भोजनैः।
वृक्षप्रपातविषमपतितं मृतमम्भसि॥
उद्वृत्तञ्च मृतं सद्यश्चिकित्से न्नष्टसंज्ञवत्॥

गाढं बद्धेऽरिष्टया प्रच्छितेऽपि तीक्ष्णैर्लेपैस्तद्विधैर्व्वा विशेषैः।
शूने गात्रे क्लिन्नमत्यर्थपूति ज्ञेयं मांसं तद्विषत्पूतिकष्टम्॥
सद्योविद्धं निस्रवेत् कृष्णरक्तं पाकं यायाद्दह्यते चाप्यभीक्ष्णम्।
कृष्णीभूतं क्लिन्नमत्यर्थपूति शीर्णं मांसं यात्यजस्रं क्षताच्च॥
तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च यस्य स्युस्तं दिग्धविद्धं व्यवस्येत्
पूर्व्वोद्दिष्टं लक्षणं सर्व्वमेतज्जुष्टं यस्मात्तं विषेण व्रणाःस्युः॥
लतादष्टा दिग्धविद्धा विषैर्व्वा जुष्टा ये स्युर्ये व्रणाः पूतिमांसाः।
तेषां युक्त्या पूतिमांसान्यपोह्य वार्य्यौकोभिः शोणितं चापहृत्य॥
हृत्वा दोषान् क्षिप्रमूर्द्धन्त्वधश्च सम्यक् सिञ्चेत् क्षीरिणां त्वक्कषायैः
अन्तर्वस्त्रं दापयेच्च प्रदेहान् शीतैर्द्रव्यैराज्ययुक्तै र्विषघ्नैः॥
भिन्नेऽस्थ्नां वै दुष्टजातेन कार्य्यः पूर्व्वो मार्गः पैत्तिके यो विषे च।
त्रिद्विद्विमल्ये मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः॥

कटुत्रिकं चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ।
एषोऽगदो हन्ति विषं प्रयुक्तः पानाञ्जनाभ्यञ्जननस्ययोगैः ॥
अवार्य्यवीर्य्यो विषवेगहन्ता महागदो नाम महाप्रभावः ।
विडङ्गपाठात्रिफलाजमोदाहिङ्गूनि वक्रं त्रिकटूनि चैव ।
सर्व्वश्च वर्गो लवणश्च सूक्ष्मः सचित्रकः चौद्रयुतो निधेयः ।
शृङ्गे गवां शृङ्गमयेन चैव प्रच्छादितः पक्षमुपेक्षितश्च ॥
एषोऽगदः स्थावरजङ्गमानां जेता विषाणामजितोहि नाम्ना ।
प्रपौण्डरीकं सुरदारुमुस्ता कालानुसार्य्या कटुरोहिणी च ॥
स्थौणेयकं ध्यामकपद्मकानि पुन्नागतालीशसुवर्च्चिका च ।
कुटन्नटैलासितसिन्धुवाराः शैलेयकुष्ठे तगरं प्रियङ्गु ॥
रोध्रं जलं काञ्चनगैरिकञ्च समागधञ्चन्दनसैन्धवञ्च ।
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसंयुतानि ॥
एषोऽगदस्तार्च्यं इति प्रदिष्टो विषं निहन्यादपि तक्षकस्य ।
मांसीहरेणुत्रिफलासुरङ्गीरक्तालतायष्टिकपद्मकानि ॥
विडङ्गतालीशसुगन्धिकैलात्वक्कुष्ठपत्राणि सचन्दनानि ।
भार्गीपटोलं किणिही सपाठा मृगादनी कर्कटिका पुरञ्च ॥
पालिन्द्यशोकौ क्रमुकं सुरस्याः प्रसूनमारुष्करजञ्च पुष्पम् ।
चूर्णान्यथैषां निहितानि शृङ्गे न्यसेच्च पित्तानि समाक्षिकानि ॥
वराहगोधाशिखिश्वल्लकानां मार्जारजं पार्षतनाकुले च ।
यस्यागदोऽयं सुकृतो गृहे स्यान्नाम्नर्षभो नाम नरर्षभस्य ॥
न तत्र सर्पाः कुत एव कीटाः त्यजन्ति वीर्य्याणि विषाणि चैव ।
एतेन भेर्य्यः पटहाश्च दिग्धा नानद्यमाना विषमाशु हन्युः ॥
दिग्धाः पताकाश्च निरीक्ष्य सद्यो विषाभिभूता ह्यविषा भवन्ति।

लाक्षाहरेणुर्नलदं प्रियङ्गु शिग्रुद्वयं यष्टिकपृथ्विकाश्च ॥
चूर्णीकृतोऽयं रजनीविमिश्रो वर्गो निधेयो मधुसर्पिषाक्तः।
शृङ्गे गवां पूर्व्ववदापिधानस्ततः प्रयोज्योऽञ्जननस्यपानैः ॥
सञ्जीवनो नाम गतासुकल्पमेषोऽगदो जीवयतीह मर्त्यम्।
श्लेष्मातकी कटफलमातुलुङ्गः श्वेता गिरिह्वा किणिही सिता च॥
सतण्डुलीयोऽगद एष मुख्यो विषेषु दर्व्वीकरराजिलानाम्।
द्राक्षासुगन्धानगवृत्तिका च पिष्टा समङ्गा समभागयुक्ता ॥
देयो द्विभागः सुरसा च्छदस्य कपित्थविल्वादपि दाडिमाच्च ॥
तथार्द्धभागोऽसितसिन्धुवारादङ्कोठमूलादपि गैरिकाच्च।
एषोऽगदः क्षौद्रयुतो निहन्ति विशेषतो मण्डलिनां विषाणि॥
वंशत्वगार्द्रामलकं कपित्थं कटुत्रिकं हैमवती सकुष्ठा।
करञ्जवीजं तगरं शिरीषपुष्पञ्च गोपित्तयुतं निहन्ति ॥
विषाणि लूतोन्दुरुपन्नगानां कीटञ्च लेपाञ्जननस्ययोगैः।
पुरीषमूत्रानिलगर्भसङ्गान्निहन्ति वर्त्यञ्जननाभिलेपैः ॥
काचार्म्मकोथान् पटलांश्च घोरान् पुष्पञ्च हन्त्यञ्जननस्ययोगैः।
समूलपुष्पाङ्कुरवल्कवीजात् क्वाथः शिरीषात्त्रिकटुप्रगाढः ॥
सलावणः क्षौद्रयुतोऽथ पीतो विशेषतः कीटविषं निहन्ति॥

कुष्ठं त्रिकटुकं दार्वीमधूकलवणद्वयम्।
मालतीनागपुष्पञ्च सर्व्वाणि मधुराणिच ॥
कपित्थरसपिष्टोऽयं शर्कराक्षौद्रसंयुतः।
विषं हन्त्यगदःसर्व्वं मूषिकाणां विशेषतः ॥
सोमराजीफलं पुष्पं कटभीसिन्धुवारकः।
चोरको वरुणः कुष्ठं सर्पगन्धा ससप्तला ॥

पुनर्न्नवा शिरीषस्य पुष्पमारग्वधार्कजम् ।
श्यामाम्बष्ठा विडङ्गानि तथाम्राश्मन्तकानि च ॥
भूमी कुरवकश्चैव गण एकसरः स्मृतः ॥
एकशोद्विस्त्रिशो वापि प्रयोक्तव्यो विषापहः ।

---

षष्ठोऽध्यायः ।

अथातो मूषिककल्पं व्याख्यास्यामः ॥

पूर्व्वमुक्ताः शुक्रविषा मूषिका ये समासतः ।
नामलक्षणभैषज्यैरष्टादश निबोध तान् ॥
लालनः पुत्रकः कृष्णो हंसिरश्चिक्किरस्तथा ।
छुछून्दरोऽलसश्चैव कषायदशनोऽपि च ॥
कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ।
कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तथोन्दुरः ॥
श्वेतेन महता सार्द्धं कपिलेनाखुना तथा ।
मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥
शुक्रं पतति यत्रैषां शुक्रदृष्टैः स्पृशन्ति वा ।
नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति ॥
जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ।
पिडकोपचयश्चोग्रा विसर्पाः किटिभानि च ॥
पर्व्वभेदोरुजस्तीव्रा ज्वरोमूर्च्छा च दारुणा ।
दौर्व्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् ॥

दष्टरूपं समासोक्तमेतच्च व्यासतः शृणु ।
लालास्रावो लालनेन हिक्काच्छर्दिश्च जायते ॥
तण्डुलीयककल्कन्तु लिह्यात्तत्र समाक्षिकम् ।
पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च जायते ॥
चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभः ।
शिरीषेङ्गुदकल्कन्तु लिह्यात्तत्र समाक्षिकम् ॥
कृष्णेनासृक् च्छर्दयति दुर्दिनेषु विशेषतः ।
शिरीषफलकुष्ठन्तु पिबेत् किंशुकभस्मना ॥
हंसिरेणान्नविद्वेषो जृम्भा लोमाञ्चहर्षणम् ।
पिबेदारग्वधादिन्तु सुवान्तस्तत्र मानवः ॥
चिक्किरेण शिरोदुःखं शोफो हिक्का वमी तथा ।
जालिनीमदनाङ्कोठकषायैर्वामयेत्तु तम् ॥
छुच्छुन्दरेण तृट् छर्दिर्ज्वरो दौर्बल्य मेवच ।
ग्रीवास्तम्भः पृष्ठ शोफो गन्धाज्ञानं विसूचिका ॥
चव्यं हरीतकी शुण्ठी विडङ्गं पिप्पली मधु ।
श्वेतकबीजं चारग्व वृहत्याश्चात्र दापयेत् ॥
ग्रीवास्तम्भोऽलसेनोर्द्ध्ववायुर्दंशे रुजा ज्वरः ।
महागदं ससर्पिष्कं लिह्यात्तत्र समाक्षिकम् ॥
निद्रा कषायदन्तेन हृच्छोषः कार्श्यमेव च ।
चौद्रोपेताः शिरीषस्य लिह्यात् सारफलत्वचः ।
कुलिङ्गेन रुजः शोफो राज्यश्च दंशमण्डले ॥
सहे ससिन्धुवारे च लिह्यात्तत्र समाक्षिके ।
अजितेन वमी मूर्च्छा हृद्ग्रहः कृष्णनेत्रता ॥

तत्र स्नुहीक्षीरपिष्टां पालिन्दीं मधुना लिहेत् ।
चपलेन भवेच्छर्द्दिर्मूर्च्छा च सह तृष्णया ॥
सभद्रकाष्ठां सजटां क्षौद्रेण त्रिफलां लिहेत् ।
कपिलेन व्रणे कोथो ज्वरो ग्रन्थुद्गमस्तथा ॥
लिह्याम्मधुयुताश्वेतां श्वेतां चापि पुनर्नवाम् ।
ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः ॥
वर्षाभूनीलिनीक्वाथसिद्धं तत्र घृतं पिबेत् ।
अरुणेनानिलः क्रुद्धो वातजान् कुरुते गदान् ॥
महाकृष्णेन पित्तञ्च श्वेतेन काफ एव च ।
महता कपिलेनासृक् कपोतेन चतुष्टयम् ॥
भवन्ति चैषां दंशेषु ग्रन्थिमण्डलकर्णिकाः ।
पिडकोपचयाश्चोग्राः शोफश्च भृशदारुणः ॥
दधिक्षीरघृतप्रस्थास्त्रयः प्रत्येकशो मताः ॥
करञ्जारग्वधव्योषब्रहत्यंशुमतीस्थिराः ।
निःक्वाथ्य चैषां क्वाथस्य चतुर्थांशः पुनर्भवेत् ॥
त्रिवृत्तिलामृतावक्रसर्वगन्धा समृत्तिका ।
कपित्थदाड़िमत्वक् च सुपिष्टानि तु दापयेत् ॥
तत्सर्व्वमेकतः कृत्वा शनैर्म्मृद्वग्निना पचेत् ।
पञ्चानामरुणादीनां विषमेतद्व्यपोहति ॥
काकादनीकाकमाचीस्वरसेष्वथ वा कृतम् ।
सिराश्च स्रावयेत् प्राज्ञः कुर्य्यात् संशोधनानि च ॥
सर्व्वेषाञ्च विधिः कार्य्यो मूषिकाणां विषेष्वयम् ।
दग्धा विस्रावयेद्दंशं प्रच्छितञ्च प्रलेपयेत् ॥

शिरीषरजनीकुष्ठकुङ्कुमैरमृतायुतैः।
छर्द्दनं जालिनीक्वाथैः शुकाख्याङ्कोठयोरपि॥
शुकाख्याकोषवत्योश्च मूलं मदन एव च।
देवदालीफलञ्चैव दध्ना पीत्वा विषं वमेत्।
फलं वचा देवदाली कुष्ठं गोमूत्रपेषितम्।
पूर्व्वकल्पेन योज्याः स्युः सर्व्वोन्दुरुविषच्छिदि॥
विरेचने त्रिवृद्दन्ती त्रिफला वल्क इष्यते।
शिरोविरेचने सारः शिरीषफलमेव च॥
कटुत्रिकाद्यश्च हितो गोमयस्वरसोऽञ्जने।
कपित्थगोमयरसः सक्षौद्रो लेह इष्यते॥
रसाञ्जनहरिद्रेन्द्रयवकटुषु वा कृतम्।
कल्कं सातिविषं प्रातर्लिह्याच्च क्षौद्रसंयुतम्॥
तण्डुलीयकमूलेषु सर्पिः सिद्धं पिबेन्नरः।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा॥
मूषिकाणां विषं प्रायः कुप्यत्यभ्रेषु निर्हृतम्।
तत्राप्येषु विधिः कार्य्यो यश्च दूषीविषापहः॥
स्थिराणां रुजतां वापि व्रणानां कर्णिका भिषक्।
पाटयित्वा यथादोषं व्रणवच्चापि शोधयेत्॥
शृगालश्वतरक्ष्वृक्षव्याघ्रादीनां यदानिलः।
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः।
तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान्।
अत्यर्थंबधिरोऽन्धश्च सोऽन्योन्यमभिधावति॥
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु।

सुप्तता जायते दंशे कृष्णाच्चातिस्रवत्यसृक् ॥
दिग्धविद्धस्य लिङ्गैन प्रायशश्चोपलक्षितः।
येन चापि भवेद्दष्टस्तस्य चेष्टा रुतं नरः॥
बहुशः प्रतिकुर्व्वाणः क्रियाहीनो विनश्यति।
दंष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति॥
अप्सु वा यदि वादर्शे रिष्टं तस्य विनिर्द्दिशेत्।
त्रस्यत्यकस्माद्यो ऽभीक्ष्णं श्रुत्वाद्दृष्ट्वापि वा जलम्॥
जलत्रासन्तु विद्यात्तं रिष्टं तमपि कीर्त्तितम्।
अदष्टोवा जलत्रासी न कथञ्चन सिध्यति॥
प्रसुप्तोऽथोत्थितोवापि स्वस्थस्त्रस्तो न सिध्यति।
विस्राव्य दंशं तैर्दंष्टे सर्पिषा परिदाहितम्॥
प्रदिह्यादगदैः सर्पिः पुराणं वापि पाययेत्।
अर्कक्षीरयुतञ्चास्य दद्याच्छीर्षविरेचनम्॥
श्वेतां पुनर्नवाञ्चास्य दद्याद्धत्तूरकायुताम्।
पललं तिलतैलञ्च रूपिकायाः पयो गुडः॥
निहन्ति विषमालर्कं मेघवृन्दमिवानिलः।
मूलस्य शरपुङ्खायाः कर्षं धुत्तूरकार्द्धिकम्॥
तण्डुलोदकमादाय पेषयेत्तण्डुलैः सह।
उन्मत्तकस्य पत्रैस्तु संवेष्ट्यापूपकं पचेत्॥
खादेदौषधकाले तदलर्कविषदूषितः।
करोत्यन्यान् विकारांस्तु तस्मिन् जीर्य्यति चौषधे॥
विकाराः शिशिरे याप्या गृहे वारिविवर्ज्जिते।
ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि॥

शालिषष्टिकयोर्भक्तं क्षीरेणोष्णेन भोजयेत्।
दिनत्रये पञ्चमे वा विधिरेषोऽर्द्धमात्रया॥
कर्त्तव्यो भिषजावश्यमलर्कविषनाशनः।
कुप्येत् स्वयं विषं यस्य न स जीवति मानवः॥
तस्मात् प्रकोपयेदाशु स्वयं यावन्न कुप्यति।
वीजरत्नौषधीगर्भैः कुम्भैः शीताम्बुपूरितैः॥
स्नापयेत्तं नदीतीरे समन्त्रैर्व्वा चतुष्पथे।
वलिं निवेद्य तत्रापि पिण्याकपललं दधि॥
माल्यानि च विचित्राणि मांसं पक्वामकं तथा।
अलकाधिपते यक्ष सारमेयगणाधिप॥
अलर्कजुष्टमेतन्मे निर्व्विषं कुरु माचिरात्।
दद्यात् संशोधनं तीक्ष्णमेवं स्नातस्य देहिनः॥
अशुद्धस्य सुरूढेऽपि व्रणे कुप्यति तद्विषम्।
श्वादयोऽभिहिता व्याला वातपित्तप्रकोपणाः॥
अतः करोति दृष्टस्तु तेषां चेष्टां रुतं नरः।
बहुशः प्रतिकुर्व्वाणो नचिराम्म्रियते च सः॥
नखदन्तक्षतं व्यालैर्य्यत्क्षतं तद्विमर्द्दयेत्।
सिञ्चेत्तैलेन कोष्णेन ते हि वातप्रकोपजाः॥

---

## सप्तमोऽध्यायः।

अथातो दुन्दुभिस्वनीयमध्यायं व्याख्यास्यामः॥

धवाश्वकर्णतिनिशपलाशपिचुमर्द्दपाटलिपारिभद्रकाम्रोडु-
म्बरकरहाटकार्जुनककुभसर्ज्जकपीतनश्लेष्मातकाङ्कोठामलकप्र-

अह कुटजशमीकपित्थाश्मन्तकार्कचिरविल्वमहावृक्षारुष्करारलुमधुक मधुशिग्रु शाकगोजीमूर्व्वातिल्वकेक्षुरकगोपघण्डारिमेदानां भस्मान्याहृत्य गवां मूत्रेण चारकल्पेन परिस्राव्य विपचेद्द्याश्चात्र पिप्पलीमूलतण्डुलीयकवराङ्गचोचकमञ्जिष्ठाकरञ्जिकाहस्तिपिप्पलीमरिचोत्पलसारिवाविडङ्गगृहधूमानन्तासोमसरलावाह्लीक गुहाकोशाम्रश्वेतसर्षपवरुणलवणप्लचनिचुलकवर्द्धमानवञ्जुलपुत्र श्रेणी सप्तपर्णटुण्डकैलवालुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठहरिद्रावचाचूर्णानि लोहानाञ्च समभागानि ततः चारवदागतपाकमवतार्य्य लौहकुम्भे निदध्यात् ॥

अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च ॥
श्रवणाद्दर्शनात् स्पर्शात् विषात् सम्प्रतिमुच्यते ।
एष चारागदो नाम शर्करास्वश्मरीषु च ॥
अर्शःसु वातगुल्मेषु कासशूलोदरेषु च ।
अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे ॥
शोफे सर्व्वसरे चापि देयः श्वासे च दारुणे ।
एष सर्व्वविषार्त्तानां सर्व्वथैवोपयुज्यते ॥
तथा तक्षकमुख्यानामयं दर्पाङ्गशोऽगदः ।
विडङ्गत्रिफलादन्तीभद्रदारुहरेणवः ॥
तालीशपत्रमञ्जिष्ठा केशरोत्पलपद्मकम् ।
दाडिमं मालतीपुष्पं रजन्यौ सारिवे स्थिरे ॥
प्रियङ्गुस्तगरं कुष्ठं वृहत्यौ चैलवालुकम् ।
सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहम् ॥

सर्पिः कल्याणकं ह्येतद्ग्रहापस्मारनाशनम्।
पाण्ड्वामयगरश्वासमन्दाग्निज्वरकासनुत्॥
शोषिणां स्वल्पशुक्राणां बन्ध्यानाञ्च प्रशस्यते।
अपामार्गस्य वीजानि शिरीषस्य तथैव च॥
श्वेते द्वे काकमाचीं च गवां मूत्रेण पेषयेत्।
सर्पिरेतैस्तु संसिद्धं विषसंशमनं परम्॥
अमृतं नाम विख्यातमपि सञ्जीवयेन्मृतम्।
चन्दनागुरुणी कुष्ठं तगरं तिलपर्णिकम्॥
प्रपौण्डरीकं नलदं सरलं देवदारु च।
भद्रश्रियं यवफलां भार्गीं नीलीं सुगन्धिकाम्॥
कालेयकं पद्मकञ्च मधुकं नागरं जटाम्।
पुन्नागैलैलवालूनि गैरिकं ध्यामकं बलाम्॥
तोयं सर्ज्जरसं मांसीं सितपुष्पां हरेणुकाम्।
तालीशपत्रं क्षुद्रैलां प्रियङ्गुं सकुटन्नटाम्॥
शैलपुष्पं सशैलेयं पत्रं कालानुसारिवाम्।
कटुत्रिकं शीतशिवं काश्मर्य्यं कटुरोहिणीम्॥
सोमराजीमतिविषां पृथ्विकामिन्द्रवारुणीम्।
उशीरं वरुणं मुस्तं नखं कुस्तुम्बुरुं तथा॥
श्वेते हरिद्रे स्थौणेयं लाक्षाञ्च लवणानि च।
कुमुदोत्पलपद्मानि पुष्पञ्चापि तथार्कजम्॥
चम्पकाशोकसुमनस्तिलकप्रसवानि च।
पाटलीशाल्मलीशेलुशिरीषाणां तथैव च॥
सुरस्यास्तृणशून्यायाश्च सिन्धुवारस्य यानि च।

धवाश्वकर्णयोश्चापि पुष्पाणि तिनिशस्य च ॥
गुग्गुलुं कुङ्कुमं विम्बीं सर्पाक्षीं गन्धनाकुलीम् ।
एतत् सम्भृत्य सम्भारं सूक्ष्मचूर्णानि कारयेत् ॥
गोपित्तमधुसर्पिर्भिर्युक्तं शृङ्गे निधापयेत् ।
भग्नस्कन्धं विवृत्ताक्षं मृत्योर्दंष्ट्रान्तरं गतम् ॥
अनेनागदमुख्येन मनुष्यं पुनराहरेत् ।
एषोऽग्निकल्पं दुर्व्वारं क्रुद्धस्यामिततेजसः ॥
विषं नागपतेर्हन्यात् प्रसभं वासुकेरपि ।
महासुगन्धिनामायं पञ्चाशीत्यङ्गयोजितः ॥
राजा गदानां सर्व्वेषां राज्ञो हस्ते भवेत् सदा ।
तेनानुलिप्तस्तु नृपो भवेत् सर्व्वजनप्रियः ॥
भ्राजिष्णुताञ्च लभते शक्रमध्यगतोऽपि सन् ।
उष्णवर्ज्यो विधिःकार्य्यो विषार्त्तानां विजानता ॥
मुक्त्वा कीटविषं तद्धि शीतेनाभिप्रवर्द्धते ।
अन्नपानविधावुक्तमुपधार्य्य शुभाशुभम् ॥
शुभं देयं विषार्त्तेभ्यो विरुद्धेभ्यश्च वारयेत् ।
फाणितं शिग्रुसौवीरमजीर्णाध्यशनं तथा ॥
वर्ज्जयेच्च समासेन नवधान्यादिकं गणम् ।
दिवास्वप्नं व्यवायञ्च व्यायामं क्रोधमातपम ॥
सुरातिलकुलत्थांश्च वर्ज्जयेद्धि विषातुरः ।
प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकाङ्क्षं सममूत्रजिह्मम् ॥
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥

---

## अष्टमोऽध्यायः।

अथातः कीटकल्पं व्याख्यास्यामः॥
सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः।
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः॥
सर्व्वदोषप्रकृतिभिर्युक्तास्तेपरिणामतः।
कीटत्वेऽपि सुघोरास्तुः सर्व्वं एव चतुर्व्विधाः॥
कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः।
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका॥
आवर्त्तकस्तथोरभ्रसारिकामुखवैदलौ।
शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः॥
शतवाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः।
अष्टादशेति वायव्याः कीटाः पवनकोपनाः॥
तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः।
कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः॥
विनासिका ब्रह्मणिका विन्दुलो भ्रमरस्तथा।
वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी॥
क्लीतः क्रमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः।
एते ह्यग्निप्रकृतयश्चतुर्व्विंशतिरेवच॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः।
विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः॥
सैरेयकः प्रचलको वलभः किटिमस्तथा।

सूचीमुखः कृष्णगोधा यश्च काषायवासिकः ॥
कीटगर्द्दभकश्चैव तथा त्रोटक एव च ।
त्रयोदशैते सौम्याः स्युः कीटाः श्लेषप्रकोपणाः ॥
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ।
तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ।
कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः ॥
तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा ।
अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः ॥
क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ।
ज्वराङ्गमर्द्दरोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णा च दाहो मोहविजृम्भिका ॥
वेपथुश्वासहिक्काश्च दाहः शीतञ्च दारुणम् ॥
पिडकोपचयः शोफो ग्रन्थयो मण्डलानि च ।
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ॥
तैर्भवन्तीह दष्टानां यथास्वञ्चाप्युपद्रवाः ।
येऽन्ये तेषां विशेषास्तु तर्ण तेषां समादिशेत् ॥
दूषीविषप्रकोपाच्च तथैव विषलेपनात् ।
लिङ्गं तीक्ष्णविषेष्वेतत्कृष्ण मन्दविषेष्वतः ॥
प्रसेकोऽरोचकश्छर्दिःशिरोगौरवशीतता ।
पिडकाकोठकण्डूनां जन्म दोषविभागतः ॥
योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत् ।

दूषीविषप्रकाराणां तथैवाप्यनुलेपनात् ॥
एकजातीनतस्तद्वँ कीटान् वच्यामि भेदतः।
सामान्यतो दृष्टलिङ्गैः साध्यासाध्यक्रमेण च ॥
त्रिकण्ठकः कुणी चापि हस्तिकच्चोऽपराजितः।
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ॥

तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां दंशःकृष्णश्च भवति ॥

प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः।
तथा निरूपमश्चापि पञ्च गौधेरकाः स्मृताः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्।
रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः ॥

गलगोली श्वेतकृष्णा रक्तराजी रक्तमण्डला सर्व्वश्वेता सर्षपिकेत्येवं षट् ताभिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति। सर्षपिकया हृदयपीडातिसारश्च ॥

शतपद्यस्तु परुषा कृष्णा चित्रा कपिलिका पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ ताभिर्दष्टे शोफोवेदनादाहश्च हृदये। श्वेताग्नि प्रभाभ्यामेतदेव दाहो मूर्च्छा चातिमात्रं श्वेतपिडकोत्पत्तिश्च।

मण्डूकाः कृष्णः सारः कुहको हरितो रक्तो यववर्णाभो भृकुटी कोटिकश्चेत्यष्टौ तैर्दष्टस्य दंशकण्डूर्भवति पीतफेणागमश्च वक्त्रात्। भृकुटी कोटिकाभ्यामेतदेव दाहश्छर्द्दिर्मूर्च्छा चातिमात्रम्।

विश्वम्भराभिर्दष्टे दंशः सर्षपाकाराभिः पिडकाभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति ॥

अहिण्डुकाभिर्दष्टे तोददाहकण्डुश्वयथवो मोहश्च। कण्डूमका भिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते। शूकवृन्ता दिभिर्दष्टे कण्डूकोठाः प्रवर्द्धन्ते शूकञ्चात्र लक्ष्यते॥

पिपीलिकाः स्थूलशीर्षा सम्वाहिका ब्राह्मणिकाङ्गुलिका कपिलिका चित्रवर्णेति षट् ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्श-वद्दाहशोफौ भवतः॥

मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिकेत्येवं षट् ताभिर्दष्टस्य दाहशोफौ भवतः स्थालिका काषायीभ्यामेतदेव पिडकाश्च सोपद्रवा भवन्ति॥

मशकाः सामुद्रः परिमण्डलो हस्तिमशकः कृष्णः पार्व्वतीय इति पञ्च तैर्दष्टस्य तीव्रकण्डूर्दंशशोफश्च पार्व्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः॥ नखावकृष्टेऽत्यर्थं पिडकाः सदाहपाका भवन्ति॥ जलौकसां दृष्टलक्षणमुक्तं चिकित्सितञ्च॥

भवन्ति चात्र। गोधेरकः स्थालिका च ये च श्वेताग्निसंप्रभे।

भृकुटीकोटिकश्चैव न सिध्यन्त्येकजातिषु॥

शवमूत्रपुरीषैस्तु सविषैरवमर्षणात्।

स्युः कण्डूदाहकोठारुःपिडकातोदवेदनाः॥

प्रक्लेदवांस्तथास्रावो भृशं सम्पाचयेत्त्वचम्।

दिग्धविद्धक्रियास्तत्र यथावदवचारयेत्॥

नावसन्नं नचोत्सन्नमतिसंरम्भवेदनम्।

दंशादौ विपरीतार्त्तिं कीटदष्टं सुबाधकम्॥

कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेत्।

त्रिविधानान्तु सर्पाणां त्रैविध्येन क्रिया हिता॥

स्वेदमालेपनं सेकं चोष्णमत्रावचारयेत्।
अन्यत्र मूर्च्छिताद्दंशात् पाककोथप्रपीडितात्॥
विषघ्नञ्च विधिं सर्व्वं कुर्य्यात्संशोधनानि च॥
शिरीषकटुकं कुष्ठं वचा रजनिसैन्धवैः।
क्षीरमज्जवसासर्पिः शुण्ठीपिप्पलिदारुषु॥
उत्कारिका स्थिरादीवा सुकृता स्वेदने हिता।
स स्वेदयेत्तथा दंशं धूमं वक्ष्यामि वृश्चिके॥
अगदानेकजातीषु प्रवक्ष्यामि पृथक्पृथक्।
कुष्ठं वक्रं वचा विल्वमूलं पाठा सुवर्च्चिका॥
गृहधूमं हरिद्रे द्वे त्रिकण्टकविषे हिताः।
अगारधूमरजनीवक्रं कुष्ठं पलाशजम्॥
गलगोलिकदष्टानामगदो विषनाशनः।
कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम्॥
अगदो जलपिष्टोऽयं शतपद्विषनाशनः।
मेषशृङ्गी वचा पाठा निचुलो रोहिणी जलम्॥
सर्व्वमण्डूकदष्टानामगदो विषनाशनः।
वचाश्वगन्धातिबलाबलासातिगुहागुहाः॥
विश्वम्भराभिदष्टानामगदो विषनाशनः।
शिरीषं तगरं कुष्ठं हरिद्रेऽंशुमती सह॥
अहिण्डुकाभिदंष्टानामगदोविषनाशनः॥
कण्डूमकाभिदंष्टानां रात्रौ शीताः क्रिया हिताः।
दिवा ते नैव सिध्यन्ति सूर्य्यरश्मिबलाद्धिताः॥
अर्क कुष्ठमपामार्गः शूकवृन्तविषेऽगदः।

भृङ्गस्वरसपिष्टा वा कृष्णवल्मीकमृत्तिका ॥
पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा।
गोमूत्रेण युतो लेपः कृष्णवल्मीकमृत्तिका ॥
प्रतिसूर्य्यकदष्टानां सर्पदष्टवदाचरेत्।
त्रिविधा वृश्चिकाः प्रोक्ता मन्दमध्यमहाविषाः ॥
गोशकृत्कोथजा मन्दा मध्याः काष्ठेष्टिकोद्भवाः।
सर्पकोथोद्भवास्तीक्ष्णा ये चान्ये विषसम्भवाः ॥
• मन्दाद्वादश मध्यास्तु त्रयः पञ्चदशोत्तमाः।
दशविंशतिरित्येते सङ्ख्यया परिकीर्त्तिताः ॥

कृष्णःश्यावः कर्बुरः पाण्डुवर्णो गोमूत्राभः कर्कशो मेचकश्च।
श्वेतोरक्तो रोमशः शाद्वलाभो रक्तश्चैते मन्दवीर्य्या मतास्तु ॥
एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च।
शाखादष्टे वेदना चोर्द्ध्वमेति दाहस्वेदौ दंशशोफो ज्वरश्च ॥
रक्तः पीतः कापिलेनोदरेण सर्व्वे धम्रा पर्व्वभिश्च त्रिभिः स्युः।
एते मूत्रोच्चारपूत्यण्डजाता मध्या ज्ञेयास्त्रिप्रकारोरगाणाम् ॥
यस्यैतेषामन्वयाद्यः प्रसूतो दोषोत्पत्तिं तत्स्वरूपाच्च कुर्य्यात्।
जिह्वाशोफो भोजनस्यावरोधो मूर्च्छा चोग्रा मध्यवीर्य्याभिदष्टे ॥
श्वेतश्चित्रः श्यामलो लोहिताभो रक्तः श्वेतो रक्तनीलोदरौच।
पीतो रक्तो नीलपीतोऽपरस्तु रक्तो नीलो नीलशुक्लस्तथा च ॥
रक्तो वभ्रुः पूर्व्ववच्चैकपर्व्वा यश्चापर्व्वा पर्व्वणी द्वे च यस्य।
नानारूपा वर्णतश्चापि घोरा ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः ॥
जन्मैतेषां सर्पकोथात्प्रदिष्टं देहेभ्योवा घातितानां विषेण।
एभिर्दष्टे सर्पवेगप्रवृत्तिः स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च।

खेभ्यः कृष्णं शोणितञ्चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव॥

उग्रमध्यविषैर्दष्टं चिकित्सेत् सर्पदष्टवत्।
दंशं मन्दविषाणान्तु चक्रतैलेन सेचयेत्॥
विदार्य्यादिसुसिद्धेन सुखोष्णेनाथ वा पुनः।
कुर्य्याच्चोत्कारिकास्वेदं विषघ्नैरुपनाहनैः॥
आदंशं स्वेदितं चूर्णैः प्रच्छितं प्रतिसारयेत्।
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः॥
मातुलुङ्गाम्लगोमूत्रपिष्टञ्च सुरसाग्रजम्।
लेपे स्वेदे सुखोष्णञ्च गोमयं हितमिष्यते॥
पाने क्षौद्रयुतं सर्पिः क्षीरंवा बहुशर्करम्।
गुडोदकं वा सुहिमं चातुर्जातकवासितम्॥
पानमस्मै प्रदातव्यं क्षीरं वा सगुडं हिमम्।
शिखिकुक्कुटबर्हाणि सैन्धवं तैलसर्पिषी॥
धूपो हन्ति प्रयुक्तोऽयं शीघ्रं वृश्चिकजं विषम्।
कुसुम्भपुष्पं रजनी निशा वा कोद्रवं तृणम्॥
एभिर्घृताक्तैर्धूपस्तु पायुदेशे प्रयोजितः।
नाशयेदाशु कीटोत्थं वृश्चिकस्य च यद्विषम्॥
लूताविषं घोरतमं दुर्विज्ञेयतमन्तु तत्।
दुश्चिकित्स्यतमं वापि भिषग्भिर्मन्दबुद्धिभिः॥
सविषं निर्विषञ्चैतदित्येवं परिशङ्किते।
विषघ्नमेव कर्त्तव्यमविरोधि यदौषधम्॥
अगदानां हि संयोगो विषजुष्टस्य युज्यते।
निर्विषे मानवे युक्तोऽगदः सम्पद्यतेऽसुखम्॥

तस्मात् सर्व्वैः प्रयत्नेन ज्ञातव्यो विषनिश्चयः ।
अज्ञात्वा विषसद्भावं भिषग्व्यापादयेन्नरम् ॥
प्रोद्भिद्यमानस्तु यथाङ्कुरेण न व्यक्तजातिः प्रविभाति वृक्षः ।
तद्वद्दुरालक्ष्यतमं हि तासां विषं शरीरे प्रविकीर्णमात्रम् ॥
ईषच्च कण्डूप्रचलं सकोठमव्यक्त वर्णं प्रथमेऽहनि स्यात् ।
अन्तेषु शूनं परिनिम्नमध्यं प्रव्यक्तरूपञ्च दिने द्वितीये ॥
त्र्यहेण तद्दर्शयतीह दंशं विषं चतुर्थेऽहनि कोपमेति ।
अतोऽधिकेऽह्नि प्रकरोति जन्तोर्व्विषप्रकोपप्रभवान् विकारान् ॥
षष्ठे दिने विप्रसृतञ्च सर्व्वान् मर्म्मप्रदेशान् भृशमावृणोति ।
तत् सप्तमे ऽत्यर्थपरीतगात्रं व्यापादयेन्मर्त्यमतिप्रवृद्धम् ॥
यास्तीक्ष्णचण्डोग्रविषा हि लूतास्ताः सप्तरात्रेण विनाशयन्ति ।
अतोऽधिकेनापि निहन्युरन्या यासां विषं मध्यमवीर्य्यमुक्तम् ॥
यासां कनीयो विषवीर्य्यमुक्तं ताः पक्षमात्रेण विनाशयन्ति ।
तस्मात् प्रयत्नं भिषगत्र कुर्य्याद्दादंशपाताद्विषवातियोगैः ॥
विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण ।
सप्तप्रकारं विसृजन्ति लतास्तदुग्रमध्यावरवीर्य्ययुक्तम् ॥
सकण्डुकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति ।
शोफश्च कण्डुश्च पुलानिका च धूमायनं चैव नखाग्रदंशे ॥
दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम् ।
दंष्ट्राभिरुग्रं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डल...
रजःपुरीषेन्द्रियजं हि विद्धि स्फोटं विपक्वामलपीलु...
एतावदेतत् समुदाहृतन्तु वक्ष्यामि लताप्रभवं पुरा...
सामान्यतो दृष्टमसाध्यसाध्यं चिकित्सितञ्चापि यथा...

विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्।
वशिष्ठं कोपयामास गत्वाश्रमपदं किल ॥
कुपितस्य मुनेस्तस्य ललाटात्स्वेदविन्दवः।
अपतन्दर्शनादेवमधस्तात्तीव्रवर्चसः।
लूनेतृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च।
ततो जातास्त्विमा घोरा नानारूपा महाविषाः।
अपकाराय वर्त्तन्ते नृपसाधनवाहने।
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदविन्दवः॥
तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोडश।
कृच्छ्रसाध्यास्तथाऽसाध्या लूतास्तु द्विविधाः स्मृताः।
तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु॥
त्रिमण्डला तथा श्वेता कपिला पीतिका तथा॥
आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता।
ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना॥
भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः।
सौवर्णिका लाजवर्णा जालिन्यै णीपदी तथा॥
कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता।
ताभिर्दष्टे दंशशोथः प्रवृत्तिः क्षतजस्य च॥
ज्वरोदाहोऽतिसारश्च गदाःस्युश्च त्रिदोषजाः।
पिडका विविधाकारा मण्डलानि महान्ति च॥
शोफा महान्तो मृदवो रक्ताःश्यावाश्चलास्तथा।
सामान्यं सर्व्वलूतानामेतदादंशलक्षणम्॥
विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितम्।

त्रिमण्डलाया दंशेऽसृक् कृष्णं स्रवति दीर्य्यते ॥
वाधिर्य्यं कलुषा दृष्टिस्तथा दाहश्च नेत्रयोः।
तत्रार्कमूलं रजनी नाकुली पृश्निपर्णिका ॥
नस्यकर्म्मणि शस्यन्ते पानाभ्यङ्गाञ्जनेषु च।
श्वेतायाः पिडका दंशे श्वेता कण्डुमती भवेत् ॥
दाहमूर्च्छाज्वरवती विसर्पक्लेदरुक्करी।
तत्र चन्दनरास्नैला हरेणुनलवञ्जुलाः ॥
कुष्ठं लामज्जकं वक्रं नलदं चागदो हितः।
अदंशे पिडका ताम्रा कपिलायाः स्थिरा भवेत् ।
शिरसो गौरवं दाहस्तिमिरं भ्रमएव च ॥
तत्र पद्मककुष्ठैलाकरञ्जककुभत्वचः।
स्थिरार्कपर्ण्यपामार्गदूर्व्वा ब्राह्मी विषापहाः ॥
आदंशे पीतिकायास्तु पिडका जायते स्थिरा।
तथाच्छर्द्दिर्ज्वरः शूलं रक्ते स्याताञ्च लोचने ॥
तत्रेष्टाः कुटजोशीरतुङ्गपद्मकवञ्जुलाः।
शिरीषकिणिहीशेलुकदम्बककुभत्वचः ॥
रक्तामण्डनिभे दंशे पिडकाः सर्षपा इव।
जायन्ते तालुशोषश्च दाहश्चालविषान्विते ॥
तत्र प्रियङ्गुह्रीवेरं कुष्ठं लामज्जवञ्जुलाः।
अगदः शतपुष्पा च सपिप्पलवटाङ्कुराः ॥
पूतिमूत्रविषादंशो विसर्पी कृष्णशोणितः।
कासश्वासवमीमूर्च्छाज्वरदाहसमन्वितः ॥
मनःशिलालमधुककुष्ठचन्दनपद्मकैः।

मधुमिश्रैः सलामज्जैरगदस्तत्र कीर्त्तितः ॥
दंशश्च पाण्डुपिडको दाहक्लेदसमन्वितः।
रक्ताया रक्तपर्य्यन्तो विज्ञेयो रक्तसंयुतः ॥
कार्य्यस्तत्रागदस्तोयचन्दनोशीरपद्मकैः।
तथैवार्जुनशेलुभ्यां त्वग्भिराम्रातकस्य च ॥
पिच्छिलं कसनादंशाद्रुधिरं शीतलं स्रवेत्।
कासश्वासौ च तत्रोक्तं रक्तलूताचिकित्सितम् ॥
पुरीषगन्धिरल्पासृक् कृष्णाया दंशएव तु।
ज्वरमूर्च्छावमीदाहकासश्वाससमन्वितः ॥
तत्रैलावक्रसर्पाक्षीगन्धनाकुलिचन्दनैः।
महासुगन्धिसहितैः प्रत्याख्यायागदः स्मृतः ॥
दंशे दाहोऽग्निवर्णायाः स्रावोऽत्यर्थं ज्वरस्तथा।
चोषकण्डूरोमहर्षौ दाहश्च स्फोटजन्म च ॥
कृष्णाप्रशमनं चात्र प्रत्याख्याय प्रयोजयेत्।
सारिवोशीरयष्ट्याह्वचन्दनोत्पलपद्मकम् ॥
सर्व्वासामेव युञ्जीत विषे श्लेष्मातकत्वचम्।
भिषक् सर्व्वप्रकारेषु तथा च क्षीरपिप्पलम् ॥
कृच्छ्रसाध्यविषा ह्यष्टौ प्रोक्ता द्वे च यदृच्छया।
अवार्य्यविषवीर्य्याणां लक्षणानि निबोध मे ॥
ध्मातः सौवर्णिकादंशः सफेणो मत्स्यगन्धकः।
श्वासकासौ ज्वरस्तृष्णा मूर्च्छा चात्र सुदारुणा ॥
आदंशे लाजवर्णाया श्यामं पूति स्रवेदसृक्।
दाहोमूर्च्छातिसारश्च शिरोदुःखञ्च जायते।

घोरदंशस्तु जालिन्या राजिमानवदीर्य्यते ॥
स्तम्भःश्वासस्तमोवृद्धिस्तालुशोषश्च जायते ।
एणीपाद्यास्तथा दंशो भवेत् कृष्णतिलाकृतिः ॥
तृष्णामूर्च्छाज्वरच्छर्द्दिकासश्वाससमन्वितः ।
दंशः काकण्डकादृष्टे पाण्डुरक्तोऽतिवेदनः ।
रक्तो मालागुणादंशो धूमगन्धोऽतिवेदनः ।
विदीर्य्यते च बहुधा दाहमूर्च्छाज्वरान्वितः ॥
असाध्यानां भिषक्प्राज्ञः प्रयुञ्जीत चिकित्सितम् ।
दोषोच्छ्रायविशेषेणच्छेदकर्म्मविवर्ज्जितम् ।
साध्याभिराभिर्लूताभिर्दष्टमात्रस्य देहिनः ॥
वृद्धिपत्रेण मतिमान् सम्यगादंशमुद्धरेत् ।
जम्ब्वोष्ठेनाग्नितप्तेन दहेदाकरवारणात् ॥
अमर्म्मणि विधानज्ञो वर्ज्जितस्य ज्वरादिभिः ।
दंशस्योत्कर्त्तनं कुर्य्यादल्पश्वयथुकस्य च ॥
मधुसैन्धवसंयुक्तैरगदैर्लेपयेत्ततः ।
प्रियङ्गुरजनीकुष्ठसमङ्गामधुकैस्तथा ।
सारिवा मधुकं द्राक्षा पयस्यां क्षीरमोरटम् ॥
विदारीगोक्षुरक्षौद्रमधुकं पाययेत वा ।
क्षीरिणां त्वक्कषायेण सुशीतेन च सेचयेत् ॥
उपद्रवान् यथादोषं विषघ्नैश्च प्रसाधयेत् ॥
नस्याञ्जनाभ्यञ्जनपानधूमं तथावपीडं कवलग्रहञ्च ।
संशोधनञ्चोभयतः प्रयुञ्ज्यादृक्तं हरेच्चापि जलायुकाभिः ॥
कीटदुष्टव्रणान् सर्व्वानहिदष्टव्रणानि च ।

आदंशपाकं यत्नेन चिकित्सेत् सर्पदष्टवत् ॥
विनिवृत्ते ततः शोफे कर्णिकापातनं हितम् ॥
निम्बपत्रं त्रिवृद्दन्ती कुसुम्भं रजनी मधु ।
गुग्गुलुः सैन्धवं किण्वं वर्चः पारावतस्य च ॥
विषवृद्धिकरश्चान्नं हित्वा सम्भोजनं हितम् ॥
विषेभ्यः खलु सर्व्वेभ्यः कर्णिकामरुजां स्थिराम् ।
प्रच्छयित्वा मधुयुतैः शोधनीयैरुपाचरेत् ॥
सप्तषष्टस्य कीटानां शतस्यैतद्विभागशः ।
दष्टलक्षणमाख्यातं चिकित्साचाप्यनन्तरम् ॥
सविंशमध्यायशतमेतदुक्तं विभागशः ।
इतोऽदिष्टाननिर्द्दिष्टान् सर्व्वान् वक्ष्याम्यथोत्तरे ॥
सनातनत्वाद्वेदानामक्षरत्वात्तथैव च ॥
तथा दृष्टफलत्वाच्च हितत्वादपि देहिनाम् ।
वाक्समूहार्थविस्तारात् पूजितत्वाच्च देहिभिः ॥
चिकित्सितात्पुण्यतमं न किञ्चिदपि शुश्रुमः ।
ऋषेरिन्द्रप्रभावस्याम्तयोनेर्भिषग्गुरोः ॥
धारयित्वा तु विमलं मतं परमसम्मतम् ।
उक्ताहारसमाचार इह प्रेत्य च मोदते ॥
इति सौश्रुते आयुर्वेदशास्त्रे पञ्चमं कल्पस्थानं समाप्तम् ॥

———०———

# ॥ उत्तरतन्त्रम् ॥

---

नमोधन्वन्तरये ॥

अथात औपद्रविकमध्यायं व्याख्यास्यामः ॥
अध्यायानां शते विंशे यदुक्तमसकृन्मया ।
वक्ष्यामि बहुधा सम्यगुत्तरेऽर्थानिमानिति ॥
इदानीन्तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम् ।
निखिलेनोपदिश्यन्ते यत्र रोगाः पृथग्विधाः ॥
शालाक्यशास्त्राभिहिता विदेहाधिपकीर्त्तिताः ।
ये च विस्तरतो दृष्टाः कुमाराबाधहेतवः ॥
षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः ।
उपसर्गादयो रोगा ये चाप्यागन्तवः स्मृताः ॥
त्रिषष्टीरससंसर्गाः स्वस्थवृत्तन्तथैव च ।
युक्तार्था युक्तयश्चैव दोषभेदास्तथैव च ॥
यत्रोक्ता विविधा अर्था रोगसाधनहेतवः ।
महतस्तस्य तन्त्रस्य दुर्गाधस्याम्बुधेरिव ॥
आदावेवोत्तमाङ्गस्थान् रोगानभिदधाम्यहम् ।
सङ्ख्यया लक्षणैश्चापि साध्यासाध्यक्रमेण च ॥
विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम् ।
द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदम् ॥
सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम् ।
पलं भुवोऽग्नितो रक्तं वातात्कृष्णं सितं जलात् ॥

आकाशादब्भागाश्च जायन्ते नेत्रबुद्बुदे ।
दृष्टिश्चात्र तथाव्याख्ये यथा ब्रूयाद्विशारदः ॥
नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते ।
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥
मण्डलानि च सन्धींश्च पटलानि च लोचने ।
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥
पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु ।
अनुपूर्व्वन्तु ते मध्यास्चत्वारो ऽन्त्यायथोत्तरम् ॥
पक्ष्मवर्त्मगतः सन्धिर्व्वर्त्मशुक्लगतोऽपरः ।
शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः ॥
ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः ।
द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि ॥
जायन्ते तिमिरं येषु व्याधिः परमदारुणः ।
तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् ॥
मेदस्तृतीयं पटलमाश्रितन्त्वस्थि चापरम् ।
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥
शिराणां कण्डराणाञ्च मेदसः कालकस्य च ।
गुणाः कालात्परः श्लेष्मा बन्धनेऽक्ष्णोः शिरायुतः ॥
शिरानुसारिभिर्दोषैर्व्विगुणैरूर्द्ध्वमागतैः ।
जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥
तत्राविलं ससंरम्भमश्रुपूर्णोपदेहवत् ।
गुरूषाचोषरागाद्यैर्जुष्टञ्चाव्यक्तलक्षणैः ॥
सशूलं वर्त्मकोषेषु शूकपूर्णाभमेव च ।

विहन्यमानं रूपे वा क्रियास्वक्षि यथा पुरा॥
दृष्ट्वैव धीमान् बुध्येत दोषेणाधिष्ठितञ्च तत्।
ततः सम्भवमासाद्य यथादोषं भिषग्जितम्॥
विदध्यान्नेत्रजा रोगा बलवन्तः स्युरन्यथा।
सङ्क्षेपतः क्रियायोगो निदानपरिवर्ज्जनम्॥
वातादीनां प्रतीघातः प्रोक्तोविस्तरतः पुनः।
उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्य्ययाच्च॥
प्रसक्तसंरोदनशोककोपक्लेशाभिघातादतिमैथुनाच्च।
शुक्तारनालाम्लकुलत्थमाषनिषेवणाद्वेगविनिग्रहाच्च॥
स्वेदाद्रजोधूमनिषेवणाच्च छर्द्देर्व्विघाताद्वमनातियोगात्।
वाष्पग्रहात्सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः॥
वाताद्दश तथा पित्तात् कफाच्चैव त्रयोदश।
रक्तात् षोडश विज्ञेयाः सर्व्वजाः पञ्चविंशतिः॥
तथा वाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः।
हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या॥
यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः।
याप्यो ऽथ तन्मयः काचः साध्याः स्युः सान्यमारुताः॥
शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्य्ययाः।
असाध्यो ह्रस्वजात्यो यो जलस्रावश्च पैत्तिकः॥
परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः।
अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं शुक्तिकाह्वया॥
दृष्टिः पित्तविदग्धा च पोथक्यो लगणश्च यः।
असाध्यः कफजस्रावो याप्यः काचोऽथ तन्मयः॥

अभिष्यन्दोऽधिमन्थश्च बलासग्रथितञ्च यत्।
दृष्टिः श्लेष्मविदग्धा च पोथक्यौ लगणश्च यः॥
क्रिमिग्रन्थिपरिक्लिन्नवर्त्म शुक्लार्म्मपिष्टकाः।
श्लेष्मोपनाहः साध्यस्तु कथिताः श्लेष्मजेषु तु॥
रक्तस्रावोऽजकाजातं शोणितार्शोऽवलम्बितम्।
शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्त्तितः॥
मन्थस्यन्दौ क्लिष्टवर्त्महर्षोत्पातौ तथैव च।
सिराजालश्च नाख्याच सिराजालश्च यत् स्मृतम्॥
पर्व्वण्यथाव्रणं शुक्रं शोणितार्म्मार्ज्जुनश्च यः॥
एते साध्या विकारेषु रक्तजेषु भवन्तिहि॥
पूयस्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी।
असाध्याः सर्व्वजा याप्याः काचः कोपश्च पक्ष्मणः॥
वर्त्मावबन्धो यो व्याधिः सिरासु पिडका च या।
प्रस्तार्य्यर्माधिमांसार्मस्नाय्वर्मोत्सङ्गिनी च या॥
पूयालसश्चार्व्वुदञ्च श्यावकर्द्दमवर्त्मनी।
तथार्शो वर्त्म शुक्रार्शःशर्करावर्त्म यच्च वै॥
सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च।
अक्लिन्नवर्त्म कुम्भीका विसवर्त्म च सिध्यति॥
सनिमित्तोऽनिमित्तश्च द्वावसाध्यौतु वाह्यजौ।
षट्सप्ततिविकाराणामेषा संग्रहकीर्त्तना॥
नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः।
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः॥
सर्व्वाश्रयाः सप्तदश दृष्टिजा द्वादशैवतु।

वाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ॥
भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः॥

---

## ॥ द्वितीयोऽध्यायः ॥

अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः॥
पूयालसः सोपनाहः स्रावाः पर्व्वणिकालजी।
क्रमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव॥
पक्वः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूतिपूयालसः सः॥
ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकः कण्डूप्रायो नीरुजस्तूपनाहः॥
गत्वासन्धीनश्रुमार्गेण दोषाः कुर्य्युः स्रावान् रुग्विहीनान् स्वलिङ्गान्
तान्वै स्रावान् नेत्रनाडीमथैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा॥
पाकः सन्धौ संस्रवेद्यश्च पूयं पूयास्रावो नैकरूपः प्रदिष्टः।
श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च श्लेष्मास्रावो नीरुजः स प्रदिष्टः॥
रक्तास्रावः शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्।
पीताभासं नीलमुष्णं जलाभं पित्तस्रावं संस्रवेत् सन्धिमध्यात्।
ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्व्वणी वृत्तशोफा।
जातासन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेवाख्यापिता पूर्व्वलिङ्गैः॥
क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्य्युः कृमयः सन्धिजाताः।
नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति॥

---

## ॥ तृतीयोऽध्यायः॥

अथातोवर्त्मगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः।
पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः।

सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः ॥
विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान् ।
विकाराञ्जनयन्त्याशु नामतस्तान्निबोधत ॥
उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा ।
तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥
बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः ।
क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥
प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतन्तु यत् ।
अर्व्वुदं निमिषश्चापि शोणितार्शश्च यत्स्मृतम् ॥
लगणो विषनामा च पक्ष्मकोपस्तथैव च ।
एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः ॥
नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रचक्ष्महे ।
पिडकाभ्यन्तरमुखा वाह्याधोवर्त्मसंश्रया ।
विज्ञेयोत्सङ्गिनी नाम तद्रूपपिडकान्विता ।
कुम्भीकवीजप्रतिमाः पिडकाः पक्ष्मवर्त्मनोः ॥
आध्मायन्ते तु भिन्ना याः कुम्भीकपिडकास्तु ताः ॥
कण्डूस्रावान्विता गुर्व्वीरक्तसर्षपसन्निभाः ॥
पिडकाश्च रुजावत्यः पोथक्य इति संज्ञिताः ।
पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता ॥
पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ।
सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शो वर्त्म कीर्त्त्यते ॥
दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः ।
व्याधिरेष समाख्यातः शुष्कार्श इति संज्ञितः ॥

दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा ।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥
वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः ।
सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म तत् ॥
कण्डूमताल्पतोदेन वर्त्मशोफेन यो नरः ।
न समं छादयेदक्षि भवेद्बन्धः स वर्त्मनः ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ।
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म तदादिशेत् ॥
क्लिष्टं पुनः पित्तयुक्तं विदहेच्छोणितं यदा ।
तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम् ॥
यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् ।
दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम् ॥
अरुजं बाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि ।
कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते ॥
यस्य धौतानि धौतानि सम्बध्यन्ते पुनः पुनः ।
वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥
विमुक्तसन्धिनिश्चेष्टं वर्त्म यन्न निमील्यते ॥
एतद्वातहतं विद्यात् सरुजं यदि वाऽरुजम् ।
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ॥
विज्ञेयमर्बुदं पुंसां सरक्तमवलम्बितम् ।
निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः ।
चालयेदतिवर्त्मानि निमेषः स गदो मतः ॥
छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः ।

दाहकण्डूरुजोपेतास्तेऽर्शः शोणितसम्भवाः॥
अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः॥
सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु सः॥
शुनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम्।
बिसमन्तर्जल इव बिसवर्त्मेति तन्मतम्॥
पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च।
निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते॥
उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते।
वातातपानलद्वेषी पक्ष्मकोपः स उच्यते॥

---

## चतुर्थोऽध्यायः॥

अथातः शुक्लगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः॥
प्रस्तारिशुक्लक्षतजाधिमांसस्नाय्वर्मसंज्ञाः खलु पञ्चरोगाः।
स्युः शुक्तिकाचार्ज्जुनपिष्टकौ च जालंसिराणां पिडकाश्चयाःस्युः॥
रोगा बलासग्रथितेन सार्द्धमेकादशाक्ष्णोः खलु शुक्लभागे।
प्रस्तारि ग्रथितमिहार्म्मशुक्लभागे विस्तीर्णं तनु रुधिरप्रभं सनीलम्
शुक्लाख्यं मृदु कथयन्ति शुक्लभागे सश्वेतं सममिह वर्द्धते चिरेण॥
यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म्मः
विस्तीर्णं मृदु बहलं यकृत्प्रकाशं
श्यावं वा तदधिकमांसजार्म्म विद्यात्।
शुक्ले यत्पिशितमुपैति वृद्धिमेतत्
स्नाय्वर्मेत्यभिपठितं खरं प्रपाण्डु॥

श्यावाः स्युः पिशितनिभास्तु विन्दवो ये
शुक्तिर्वा सितनयने स शुक्तिसंज्ञः ।
एको यः शशरुधिरोपमः सुविन्दुः
शुक्लस्थो भवति तमर्ज्जुनं वदन्ति ॥
उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो
विन्दुर्यः सम्भवति पिष्टकःसुवृत्तः ।
जालाभः कठिनसिरो महान् स रक्तः
सन्तानःस्मृत इह जालसंज्ञितस्तु ॥
शुक्लस्थाः सितपिडकाः सिरावृता
यास्ता विद्यादसितसमीपजाः सिराजाः ।
कांस्याभो भवति सिरावृतः सिते यो
विन्दुर्वा स तु निरुजो बलासकाख्यः ॥

---

## पञ्चमोऽध्यायः ॥

अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥
यत्सव्रणं शुक्रमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव ।
चत्वार एतेऽभिहिताः विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात् ॥
निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै ।
स्रावं स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्रमुदाहरन्ति ॥
दृष्टेः समीपे न भवेत्तु यच्च नचावगाढं न च संस्रवेद्धि ।
अवेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव ॥
सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तम् ।

विहायसीवाम्बुदलानुकारि तदव्रणं साध्यतमं वदन्ति ॥
गम्भीरजातं बहलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ॥
विच्छिन्नमध्यं पिशिताश्वतं वा चलं सिरासक्तमदृष्टिकृच्च ।
द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम् ॥
उष्णाश्रुपातः पिडका च यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम् ।
तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम् ॥
संच्छाद्यते श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलन्तु ।
तमक्षिपाकात्ययमक्षिकोपसमुत्थितं तीव्ररुजं वदन्ति ॥
अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः।
विदार्य्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ॥

---

## षष्ठोऽध्यायः ॥

अथातः सर्व्वगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥
स्यन्दास्तु चत्वार इहोपदिष्टास्तावन्त एवेह तथाधिमन्थाः ।
शोफान्वितोऽशोफयुतश्च पाकावित्येवमेते दश सम्प्रदिष्टाः ॥
हताधिमन्थोऽनिलपर्य्ययश्च शुष्काक्षिपाकोऽन्यत एव वातः ।
दृष्टिस्तथाम्लाध्युषिता सिरायामुत्पातहर्षावपि सर्व्वभागाः ॥
प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः ।
तस्मादभिष्यन्दमुदीर्य्यमाणमुपाचरेदाशु हिताय धीमान् ॥
निस्तोदनं स्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोऽभितापाः ।
विशुष्कभावाः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥
दाहप्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥

उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूपदेहौ सिततातिशैत्यम्।
स्रावो मुहुः पिच्छिल एवचापि कफाभिपन्ने नयने भवन्ति॥
ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च।
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः॥
उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा।
शिरसोऽर्द्धन्तु तं विद्यादधिमन्थं स्वलक्षणैः॥
नेत्रमुत्पाट्यत इव मथ्यतेऽरणिवच्च यत्।
सङ्घर्षतोदनिर्भेदमांससंरब्धमाविलम्॥
कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम्।
शिरसोऽर्द्धञ्च येन स्यादधिमन्थः स मारुतात्॥
रक्तराजिचितं स्रावि वह्निनेवावदह्यते।
यकृत्पिण्डोपमं दाहि क्षारेणाक्तमिव क्षतम्॥
प्रपक्वोच्छूनवर्णान्तं सस्वेदं पीतदर्शनम्।
मूर्च्छाशिरोदाहयुतं पित्तेनाक्ष्यधिमन्थितम्॥
शोफवन्नातिसंरब्धं स्रावकण्डूसमन्वितम्।
शैत्यगौरवपैच्छिल्यदूषिकाहर्षणान्वितम्॥
रूपं पश्यति दुःखेन पांशुपूर्णमिवाविलम्।
नासाध्मानशिरोदुःखयुतं श्लेष्माधिमन्थितम्॥
बन्धुजीवप्रतीकाशं ताम्यति स्पर्शनाक्षमम्।
रक्तास्रावं सनिस्तोदं पश्यत्यग्निनिभा दिशः॥
रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते।

यद्दीप्तं रक्तपर्य्यन्तं तद्रक्तेनाधिमन्थितम्॥

इत्याहृष्टिं सप्तरात्रात्कफोत्थोऽधीमन्थोऽसृक्सम्भवः पञ्चरात्रात्।
षड्रात्राद्वा मारुतोत्थो निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव॥

कण्डूपदेहाश्रुयुतः पक्वोडुम्बरसन्निभः।
दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः॥
जुष्टो मुहुःस्रवेद्यास्रमुष्णशीताम्बु पिच्छिलम्।
संरम्भी पच्यते यश्च नेत्रपाकः सशोफजः॥
शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे।
अन्तःसिरायां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन्॥
हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः।

पक्ष्मद्वयाक्षिभ्रुवमाश्रितस्तु यत्रानिलः सञ्चरति प्रदुष्टः।
पर्य्यायशश्चापि रुजः करोति तं वातपर्य्यायमुदाहरन्ति॥
यत्कूणितं दारुणरूक्षवर्त्म विलोकने चाविलदर्शनं यत्।
सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि॥
यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा।
कुर्य्याद्रुजोऽतिभ्रुवि लोचने वा तमन्यतोवातमुदाहरन्ति॥
अम्लेन भुक्तेन विदाहिना वा सञ्छाद्यते सर्व्वत एव नेत्रम्।
शोफान्वितं लोहितकं सनीलैरेतादृगम्लाध्युषितं वदन्ति॥
अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः।
मुहुर्व्विरज्यन्ति च ताः समन्ताद्व्याधिः सिरोत्पात इति प्रदिष्टः॥
महान्सिरोत्पातउपेक्षितस्तु जायेत रोगस्तु सिराप्रहर्षः।
ताम्राच्छमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च॥

## सप्तमोऽध्यायः ॥

अथातो दृष्टिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥

मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम् ।
खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः ॥
आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् ।
शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥
रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे ।
पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम् ॥
सिराभिरभिसम्प्राप्य विगुणोऽभ्यन्तरे भृशम् ।
प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः ॥
अव्यक्तानि स रूपाणि सर्व्वाण्येव प्रपश्यति ।
दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥
मक्षिकान् मशकान् केशान् जालकानि च पश्यति ।
मण्डलानि पताकाश्च मरीचीः कुण्डलानि च ॥
परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा ।
दूरस्थान्यपि रूपाणि मन्यते च समीपतः ॥
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ।
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥
ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते ।
महान्त्यपि च रूपाणिच्छादितानीव वाससा ॥
कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते ।
यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि ॥

अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते ।
पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति ॥
समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति ।
दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥
द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते ।
तिमिराख्यः स वै दोषश्चतुर्थपटलङ्गतः ॥
रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशः स उच्यते ।
तस्मिन्नपि तमोभूते नातिरूढे महागदे ॥
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः ।
निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ॥
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ।
तत्र वातेन चारूपाणि भ्रमन्तीव स पश्यति ॥
आविलान्यरुणाभानि व्याविद्धानि च मानवः ।
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ॥
शिखिवर्हविचित्राणि नीलकृष्णानि पश्यति ।
गौरचामरगौराणि श्वेताभ्रप्रतिमानि च ॥
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम् ।
सलिलप्लावितानीव परिजाड्यानि मानवः ॥
तथा रक्तेन रक्तानि तमांसि विविधानि च ।
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ।
हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते ॥
सन्निपातेन चित्राणि विप्लुतानीव पश्यति ।
बहुधा वा द्विधा वापि सर्व्वाण्येव समन्ततः ॥

हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति ॥
पित्तं कुर्य्यात्परिम्लायि मूर्च्छितं रक्ततेजसा ।
पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति ॥
विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेवच ।
वक्ष्यामि षड्विधैरागैर्लिङ्गनाशमतः परम् ॥
रागोऽरुणो मारुतजः प्रदिष्टः पित्तात् परिम्लाय्यथवापि नीलः।
कफात् सितः शोणितजस्तु रक्तः समस्तदोषोऽथ विचित्ररूपः॥
रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम्।
परिम्लायिनि रोगे स्यान्म्लाय्यानीलञ्च मण्डलम् ॥
दोषक्षयात् कदाचित्स्यात्स्वयं तत्र च दर्शनम् ॥
अरुणं मण्डलं वाताच्चञ्चलं परुषन्तथा ।
पित्तान्मण्डलमानीलं कांस्याभं पीतमेव वा ॥
श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् ।
चलत्पद्मपलाशस्थः शुक्लविन्दुरिवाम्भसः ॥
मृद्यमाने च नयने मण्डलं तद्विसर्पति ।
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ।
यथास्वदोषलिङ्गानि सर्व्वेष्वेव भवन्ति हि ॥
षड् लिङ्गनाशाःषडिमे च रागा दृष्ट्याश्रयाः षड्च षडेव चस्युः।
तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी ॥
यो ह्रस्वजात्यो नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः ॥
पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः ।
पीतानि रूपाणि च मन्यते यः स मानवः पित्तविदग्धदृष्टिः ॥

प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येन्निशि वीक्षते च ।
तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु ॥
त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ।
दिवा स सूर्य्यानुगृहीतदृष्टिर्वीक्षेत रूपाणि कफाल्पभावात् ॥
शोकज्वरायासशिरोभितापैरभ्याहता यस्य नरस्य दृष्टिः ।
सधूमकान्पश्यति सर्व्वभावांस्तं धूमदर्शीति वदन्ति रोगम्॥
स ह्रस्वजात्यो दिवसेषु कृच्छ्राद्ध्रस्वानि रूपाणि च यो न पश्येत्।
रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥
विद्योतते येन नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् ।
चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः॥
दृष्टिर्व्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति ॥
रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ।
वाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च ॥
निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च ।
सुरर्षिगन्धर्व्वमहोरगाणां सन्दर्शनेनापि च भास्वराणाम्॥
हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ।
तत्राक्षि विस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः ।
विदीर्य्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः ।
इत्येते नयनगता महाविकाराः सञ्जाताः पृथगिह षट् च सप्ततिश्च
एतेषां पृथगिह विस्तरेण सर्व्वं वक्ष्येऽहं तदनुचिकित्सितञ्च तावत्

## अष्टमोऽध्यायः ॥

अथातश्चिकित्सितप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः ॥

षट्सप्ततिर्य्योऽभिहिता व्याधयो नामलक्षणैः ॥
चिकित्सितमिदं तेषां समासाद्व्यासतः शृणु ॥
छेद्यास्तेषु दशैकश्च नव लेख्याः प्रकीर्त्तिताः ।
भेद्याःपञ्च विकाराः स्युर्व्यध्याः पञ्चदशैवतु ॥
द्वादशाः शस्त्रकृत्याश्च याप्याः सप्त भवन्ति हि ।
रोगा वर्ज्जयितव्याश्च दश पञ्च च जानता ॥
असाध्यौ वा भवेतान्तु याप्यौ वागन्तुसंज्ञितौ ॥

अर्शोऽन्वितं भवति वर्त्म तु यत्तथार्शः
शुष्कं तथार्व्वुदमथो पिडकाः सिराजाः ।
जालं सिराजमपि पञ्चविधं तथार्म्म
छेद्या भवन्ति सहपर्व्वणिकामयेन ॥
उत्सङ्गिनी बहलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितन्त्विह बद्धवर्त्म ।
क्लिष्टञ्च पोथकियुतं खलु यच्च वर्त्म
कुम्भीकिनीच सहशर्करया च लेख्याः ॥
श्लेष्मोपनाहलगणौ च विसञ्च भेद्या
ग्रन्थिश्च यः कृमिकृतोऽञ्जननामिका च ॥
आदौ सिरा निगदिताश्च ययोः प्रयोगे
पाकौ च यौ नयनयोः पवनोऽन्यतश्च ।
पूयालसानिलविपर्य्ययमन्यसंज्ञाः

ष्यन्दास्तु यान्त्युपशमं हि सिराव्यधेन ॥
शुष्काक्षिपाककफपित्तविदग्धदृष्टि
ध्वम्लाख्यशुक्रसहितार्ज्जुनपिष्टकेषु ।
अक्लिन्नवर्त्म कृतभुग्ध्वजदर्शिशुक्ति
प्रक्लिन्नवर्त्म सु तथैव बलाससंज्ञे ।
आगन्तुनामययुगेन च दूषितायां
दृष्टौ न शस्त्रपतनं प्रवदन्ति तज्ज्ञाः ॥
सम्यक्षतः षडपि ये ऽभिहितास्तु काचा
स्ते पक्ष्मकोपसहितास्तु भवन्ति याप्याः ॥
चत्वार एव पवनप्रभवास्त्वसाध्या
द्वौ पित्तजौ कफनिमित्तज एकएव ।
अष्टार्द्धका रुधिरजाश्च गदास्त्रिदोषा
स्तावन्त एव गदितावपि वाह्यजौ द्वौ ॥

---

नवमोऽध्यायः ।

अथातो वाताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥
पुराणसर्पिषा स्निग्धौ स्यन्दाधीमन्थपीडितौ ।
स्वेदयित्वा यथान्यायं सिरामोक्षेण योजयेत् ॥
सम्पादयेद्वस्तिभिश्च सम्यक्स्नेहविरेचितौ ।
तर्पणैः पुटपाकैश्च धूमैराश्चोतनैस्तथा ॥
नस्यस्नेहपरीषेकैः शिरोवस्तिभिरेव च ।
वातघ्नानुपजलजमांसाम्लक्वाथसेचनैः ॥

स्नेहैश्चतुर्भिरुष्णैश्च तत्प्रीताम्बरधारणैः ।
पयोभिर्वेसवारैश्च साल्वणैः पायसैस्तथा ॥
भिषक् सम्पादयेदेतानुपनाहैश्च पूजितैः ।
तथा चोपरि भुक्तस्य सर्पिःपानं प्रशस्यते ॥
त्रिफलाक्काथसंसिद्धं केवलं जीर्णमेव वा ।
सिद्धं वातहरैः क्षीरं प्रथमेन गणेन वा ॥
स्नेहास्तैलादिना सिद्धा वातघ्नैस्तर्पणे हिताः ।
स्नैहिकः पुटपाकश्च धूमो नस्यञ्च तद्विधम्॥
नस्यादिषु स्थिराक्षीरमधुरैस्तैलमिष्यते ।
एरण्डपल्लवे मूले त्वचि वाजं पयः शृतम्॥
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम्।
सैन्धवोदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः ॥
हितमक्ष्णोर्दकं सेके तथाश्चोतनमेव च ।
ह्रीवेरचक्रमञ्जिष्ठोडुम्बरत्वक्षु साधितम्॥
साम्भश्छागं पयोवापि शूलाश्चोतनमुत्तमम्।
मधुकं रजनीं पथ्यां देवदारु च पेषयेत् ॥
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ।
गैरिकं सैन्धवं कृष्णां नागरञ्च यथोत्तरम् ॥
द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते ।
स्नेहाञ्जनं हितं चात्र वक्ष्यते तद्यथाविधि ॥
रोगो यश्चान्यतो वातो यश्च मारुतपर्य्ययः ।
अनेनैव विधानेन भिषक्तावपि साधयेत् ॥
पूर्व्वभक्तं हितं सर्प्पिःक्षीरं वाप्यथ भोजने ।

वृश्चादन्यां कपित्थे च पञ्चमूले महत्यपि ॥
सक्षीरं कर्कटरसे सिद्धं चात्र घृतं पिबेत् ।
सिद्धं वा हितमलाङ्कःपक्तूरात्तगलाग्निकैः ॥
सक्षीरं मेषशृङ्ग्या वा सर्पिर्वीरतरेणवा ।
सैन्धवं दारु शुण्ठी च मातुलुङ्गरसे घृतम् ॥
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ।
पूजितं सर्पिषश्चात्र पानमक्ष्णोश्च तर्पणम् ॥
घृतेन जीवनीयेन नस्यं तैलेन चाणुना ।
परिषेके हितश्चात्र पयः शीतं ससैन्धवम् ॥
रजनीदारुसिद्धं वा सैन्धवेन समायुतम् ।
सर्पिर्युतं स्तन्यघृष्टमञ्जनञ्च महौषधम् ॥
वसा वानूपजलजा सैन्धवेन समायुता ।
नागरोन्मिश्रिता किञ्चिच्छुष्कपाके तदञ्जनम् ॥
पवनप्रभवा रोगा ये केचिद्दृष्टिनाशनाः ।
बीजेनानेन मेधावी तेषु कर्म्म प्रयोजयेत् ॥

---

दशमोऽध्यायः ॥

अथातः पित्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥
पित्तस्यन्दे पैत्तिके चाधिमन्थे रक्तास्रावः स्रंसनञ्चापिकार्य्यम् ।
अक्ष्णोः सेकालेपनस्याञ्जनानि पैत्ते च स्याद्यद्विसर्प्पे विधानम् ॥
गुन्द्रां शालिं शैवलं शैलभेदं दार्वीमेलामुत्पलं रोध्रमभ्रम् ।
पद्मात्पलं शर्करा दर्भमिक्षुं तालं रोध्रं वेतसं पद्मकञ्च ॥

द्राक्षां क्षौद्रं चन्दनं यष्टिकाह्वं योषित्क्षीरं रात्र्यनन्ते च पिष्ट्वा ।
सर्प्पिःसिद्धं तर्प्पणे सेकनस्ये शस्ते क्षीरं सिद्धमेतेषु वाजम् ॥
योज्यो वर्गोऽयस्त एषोऽन्यथा वा सम्यङ्न्यस्तोऽष्टाङ्गसङ्ख्यऽपि नित्यम् ।
क्रियाः सर्व्वाः पित्तहर्य्यः प्रशस्तास्त्र्यहाच्चोर्द्ध्वं क्षीरसर्पिश्च नस्यम् ।
पालाशं स्याच्छोणितं चाञ्जनार्थे शल्लक्या वा शर्कराक्षौद्रयुक्तम् ।
रसक्रियां शर्कराक्षौद्रयुक्तां पालिन्द्यां वा मधुकेनापि कुर्य्यात् ॥
मुस्ता फेनः सागरस्योत्पलञ्च कृमिघ्नैलाधात्रिबीजाद्रसश्च ।
तालीशैलागैरिकोशीरशङ्खैरेवं युञ्ज्यादञ्जनं स्त्न्यपिष्टैः ॥
चूर्णं कुर्य्यादञ्जनार्थे रसो वा स्तन्योपेतो धातकीस्यन्दनाभ्याम् ।
योषित्स्तन्यं शातकुम्भं विघृष्टं क्षौद्रोपेतं कैंशुकञ्चापि पुष्पम् ॥
रोध्रं द्राक्षां शर्करामुत्पलञ्च नार्य्याः क्षीरे यष्टिकाह्वं वचाञ्च ।
पिष्ट्वा क्षीरे वर्णकस्य त्वचं वा तोयोन्मिश्रे चन्दनोडम्बरे च ॥
कार्य्यः फेनः सागरस्याञ्जनार्थे नारीस्तन्ये माक्षिके चापि घृष्टः ।
योषित्स्तन्ये स्थापितं यष्टिकाह्वं रोध्रं द्राक्षां शर्करामुत्पलञ्च ॥
क्षौमाबद्धं पथ्यमाश्च्योतने वा सर्पिर्दृष्टं यष्टिकाह्वं सरोध्रम् ।
तोयोन्मिश्राः काश्मरीधात्रिपथ्यास्तद्वच्चाक्षः कट्फलञ्चाम्बुनैव ॥
एषोऽम्लाख्येऽप्युक्रमश्चापि शुक्तौ कार्य्यः सर्व्वः स्याद्विरामोऽत्ववर्ज्यः
सर्पिःपेयं त्रैफलं तैल्वकं वा पेयं वा स्यात्केवलं यत् पुराणम् ॥
दोषेऽधस्ताच्छुक्तिकायामपास्ते शीतैर्द्रव्यैरञ्जनं कार्य्यमाशु ।
वैदूर्य्यं यत् स्फाटिकं वैद्रुमञ्च मौक्तं शाङ्खं राजतं शातकुम्भम् ॥
चूर्णं सूक्ष्मं शर्कराक्षौद्रयुक्तं शुक्तिं हन्यादञ्जनं चैतदाशु ।
युञ्ज्यात्सर्पिर्धूमदर्शी नरस्तु शेषं कुर्य्याद्रक्तपित्ते विधानम् ॥
यच्चैवान्यत् पित्तहृच्चापि सर्व्वं यद्वीसर्पे पैत्तिके वै विधानम् ॥

---

## एकादशोऽध्यायः ॥

अथातः श्लेष्माभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥

स्यन्दाधिमन्थौ कफजौ प्रवृद्धौ जयेत्सिराणामथ मोक्षणेन ।
स्वेदावपीडाञ्जनधूमसेकप्रलेपयोगैः कवडग्रहैश्च ।
रूक्षैस्तथाश्च्योतनसंविधानैस्तथैव रूक्षैः पुटपाकयोगैः ।
त्र्यहात्त्र्यहाच्चाप्यपतर्पणान्ते प्रातस्तयोस्तिक्तघृतं प्रशस्तम् ॥
तदन्नपानञ्च समाचरेद्धि यलश्लेष्मणो नैव करोति वृद्धिम् ।
कुटन्नटास्फोतफणिज्झकविल्वपत्तूरपिल्वर्ककपित्थभङ्गैः ॥
स्वेदं विदध्यादथवानुलेपं बर्हिष्ठशुण्ठीसुरकाष्ठकुष्ठैः ।
सिन्धूत्थहिङ्गुत्रिफलामधूकप्रपौण्डरीकाञ्जनतुत्थताम्रैः ॥
पिष्टैर्ज्जलेनाञ्जनवर्त्तयः स्युःपथ्याहरिद्रामधुकाञ्जनैर्वा ।
क्षीरवृक्षाणि त्रिफला हरिद्रा विडङ्गसारश्च समानि च स्युः ॥
वर्हिष्ठकुष्ठामरकाष्ठशङ्खपाठानलव्योषमनःशिलाश्च ।
पिष्ट्वाम्बुना वा कुसुमानि जातीकरञ्जशोभाञ्जनजानि युञ्ज्यात् ॥
फलस्य बीज्यादथ वापि शिग्रोः पुष्पञ्च तुल्यं बृहतीद्वयस्य ।
रसाञ्जनं चन्दनसैन्धवञ्च मनः शिलाले लशुनञ्च तुल्यम् ॥
पिष्ट्वाञ्जनार्थं कफजेषु धीमान्वर्त्तीर्विदध्यान्नयनामयेषु ।
रोगे बलासग्रथिते ऽञ्जनञ्च :कर्त्तव्यमेतत्सुविशुद्धकाये ॥
नीलान्यवान्गव्यपयोऽनुपीतान्शलाकिनः शुष्कतनून्विदह्य ।
तथार्ज्जकास्फोतकपित्थविल्वनिर्गुण्डिजातीकुसुमानि चैव ॥
तत्क्षारवत्सैन्धवतुल्यरोचनं पक्वं विदध्यादथ लोहनाड्या ।
एतद्बलासग्रथितेऽञ्जनं स्यादेषोऽनुकल्पस्तु फणिज्झकादौ ॥

महौषधं मागधिकाश्च मुस्तां ससैन्धवं यन्मरिचञ्च शुक्लम् ।
तन्मातुलुङ्गस्वरसेन पिष्टं नेत्राञ्जनं पिष्टकमाशु हन्यात् ॥
फलं हृत्वा मगधोद्भवानामादाय कल्कं फलपाककाले ।
स्रोतोजयुक्तं खलु सप्तरात्रात्तदुद्धृतं स्यात्तु तथैव पथ्यम् ॥
वार्ताकुशिग्र्विन्द्रसुरापटोलकिराततिक्तामलकीफलेषु ।
कासीससामुद्ररसाञ्जनानि जात्यास्तथा कोरकमेवचापि ॥
प्रक्लिन्नवर्त्म न्युपदिश्यते तु योगाञ्जनं तन्मधुनावघृष्टम् ।
नादेयमग्र्यं मरिचञ्च शुक्लं नेपालजाता च समप्रमाणा ॥
समातुलुङ्गद्रव एष योगः कण्डूं निहन्यात्सकृदञ्जनेन ।
सश्टङ्गवेरं सुरदारु मुस्तं सिन्धुप्रसूतं मुकुलानि जात्याः ॥
सुरासुपिष्टन्त्विदमञ्जनं हि कण्ड्वाञ्च शोफे च हितं वदन्ति ।
स्यन्दाधिमन्थक्रममाचरेच्च सर्व्वेषु चैतेषु सदाऽप्रमत्तः ॥

---

## द्वादशोऽध्यायः ॥

अथातोरक्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥
मन्थं स्यन्दं सिरोत्पातं सिराहर्षञ्च रक्तजम् ।
एकैकेन विधानेन चिकित्सेच्चतुरो गदान् ॥
व्याध्यार्त्तांश्चतुरोऽप्येतान् स्निग्धान्कौम्भेन सर्पिषा ।
रसैरुदारैरथवा सिरामोक्षेण योजयेत् ॥
विरिक्तानां प्रकामञ्च शिरांस्येषां विशोधयेत् ।
वैरेचनिकसिद्धेन सितायुक्तेन सर्पिषा ॥
ततः प्रदेहाः परिषेचनानि नस्यानि धूमाश्च यथास्वमेव ।

आश्चोतनाभ्यञ्जनतर्प्पणानि स्निग्धाश्च कार्य्याः पुटपाकयोगाः॥
नीलोत्पलोशीरकटङ्कटेरी कालीययष्टीमधुमुस्तरोध्रैः।
सपद्मकैर्धौतघृतप्रदिग्धैरक्ष्णोः प्रलेपं परितः प्रकुर्य्यात्॥
रुजायां चाप्यतिभृशं स्वेदाश्च मृदवो हिताः।
अक्ष्णोः समन्ततः कार्य्यं पातनञ्च जलौकसाम्॥
घृतस्य महती माला पीता चार्त्तिं नियच्छति।
पित्ताभिस्यन्दशमनो विधिश्चाप्युपपादितः॥
कसेरुमधुकाभ्यां वा चूर्णमम्बरसंहतम्।
न्यस्तमप्स्वान्तरिक्षासु हितमाश्चोतनम्भवेत्॥
पाटल्यर्जुनश्रीपर्णीधातकीधात्रिबिल्वतः।
पुष्पाण्यथ बृहत्योश्च बिम्बा लोटाश्च तुल्यशः॥
समञ्जिष्ठानि मधुना पिष्टानीक्षुरसेन वा।
रक्ताभिस्यन्दशान्त्यर्थमेतदञ्जनमिष्यते॥
चन्दनं कुमुदं पत्रं शिलाजतु सकुङ्कुमम्।
अयस्ताम्ररजस्तुत्थं निम्बनिर्यासमञ्जनम्॥
त्रपु कांस्यमलं चापि पिष्ट्वा पुष्परसेन तु।
विपुला याः कृता वर्त्तयः पूजितास्त्वाञ्जने सदा॥
स्यादञ्जनं घृतं क्षौद्रं सिरोत्पातस्य भेषजम्।
तद्वत्सैन्धवकासीसस्तन्यघृष्टञ्च पूजितम्॥
मधुना शङ्खनैपालीतुत्थदार्व्यः ससैन्धवाः
रसः शिरीषपुष्पाच्च सुरामरिचमाक्षिकैः॥
युक्तन्तु मधुना वापि गैरिकं हितमञ्जनम्।
सिराहर्षेऽञ्जनं कुर्य्यात्फाणितं मधुसंयुतम्॥

मधुना तार्क्ष्यजं वापि कासीसं वा ससैन्धवम् ।
वेत्राम्लस्तन्यसंयुक्तं फाणितन्तु ससैन्धवम् ॥
पैत्तं विधिमशेषेण कुर्य्यादर्ज्जुनशान्तये ।
इक्षुक्षौद्रसिताम्लन्यदार्व्वीमधुकसैन्धवैः ॥
सेकाञ्जनं चाल्पं हितमम्लैराश्चोतनं तथा ।
सितामधुककट्फलमस्तु क्षौद्राम्लसैन्धवैः॥
बीजपूरककोलाम्लदाडिमाम्लैश्च युक्तितः ।
एकशो वा द्विशो वापि योजितं वा त्रिभिस्त्रिभिः ॥
स्फटिकं विद्रुमं शङ्खो मधुकं मधुचैव हि ॥
शङ्खक्षौद्रसितायुक्तः सामुद्रः फेन एव च ॥
द्वाविमौ विहितौ योगावञ्जनेऽर्ज्जुननाशनौ ।
सैन्धवक्षौद्रकतकाः सक्षौद्रं वा रसाञ्जनम्।
कासीसं मधुना वापि योज्यमत्राञ्जने सदा ।
लोहचूर्णानि सर्व्वाणि धातवो लवणानि च ॥
रत्नानि दन्ताः शृङ्गाणि गणश्चाप्यवसादनः ।
कुक्कुटाण्डकपालानि लशुनं कटुकत्रयम् ॥
करञ्जबीजमेलाश्च लेख्याञ्जनमिदं स्मृतम् ।
पुटपाकावसानेन रक्तविस्रावणादिना ॥
सम्पादितस्य विधिना कृत्स्नेन स्यन्दघातिना ।
अनेनापहरेच्छुक्रमव्रणं कुशलो भिषक् ॥
उत्तानमवगाढं वा कर्कशं वापि सव्रणम् ।
शिरीषबीजमरिचपिप्पलीसैन्धवैरपि ॥
शुक्रस्य घर्षणं कार्य्यमथवा सैन्धवेन तु ।

कुर्य्यात्ताम्ररजःशङ्खशिलामरिचसैन्धवैः॥
अन्त्याद्‌द्विगुणितैरेभिरञ्जनं शुक्रनाशनम्।
कुर्य्यादञ्जनयोगौ वा सम्यक्श्लोकार्द्धकाविमौ॥
शङ्खकोलास्थिकतकद्राक्षामधुकमाक्षिकैः।
क्षौद्रदन्तार्णवमलशिरीषकुसुमैरपि॥
क्षाराञ्जनं वा वितरेद्बलाशशथितापहम्।
मुद्गान्वा निस्तुषान्भृष्टान् शङ्खक्षौद्रसितायुतान्॥
मधूकसारं मधुना योजयेच्चाञ्जने सदा।
विभीतकास्थिमज्जा वा सक्षौद्रः शुक्रनाशनः॥
शङ्खशुक्तिमधुद्राक्षामधूककतकानि च।
द्वित्वग्गते सशूले वा वातघ्नं तर्पणं हितम्॥
वंशजारुष्करौ तालं नारिकेलञ्च दाहयेत्।
विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम्॥
बहुशोऽञ्जनमेतत्स्याच्छुक्रवैवर्ण्यनाशनम्।
अजकां पार्श्वतो विद्धां सूच्या विस्राव्य चोदकम्॥
व्रणं गोमांसचूर्णेन पूरयेत्सर्पिषा सह।
बहुशोऽवलिखेच्चापि वर्त्मास्योपगतं यदि॥
सशोफश्चाप्यशोफश्च द्वौ पाकौ यौ प्रकीर्तितौ।
स्नेहस्वेदोपपन्नस्य तत्र विद्धा सिरां भिषक्॥
सेकाश्चोतननस्यानि पुटपाकांश्च कारयेत्।
सर्व्वतश्चापि शुद्धस्य कर्त्तव्यमिदमञ्जनम्॥
ताम्रपात्रस्थितं मांसं सर्पिः सैन्धवसंयुतम्।
मैरेयं वापि दध्येवं दध्युत्तरकमेव च॥

घृतं कांस्यमलोपेतं स्तन्यं वापि ससैन्धवम्।
मधूकसारम्मधुना तुल्यांशङ्गैरिकेण वा॥
सर्पिःसैन्धवताम्राणि योषित्स्तन्ययुतानि च।
दाडिमारेवताश्मन्तकोलाम्लैश्च ससैन्धवम्॥
रसक्रियां वा वितरेत्सम्यक्पाकजिघांसया।
मासं सैन्धवसंयुक्तं स्थितं सर्प्पिषि नागरम्॥
आश्चोतनाञ्जनं योज्यमबलाक्षीरसंयुतम्।
जात्याः पुष्पं सैन्धवं शृङ्गवेरं कृष्णावीजं कीटशलोश्च सारम्।
एतत्पिष्टं नेत्रपाकेऽञ्जनार्थं क्षौद्रोपेतं निर्व्विशङ्कं प्रयोज्यम्॥
पूयालसे शोणितमोक्षणञ्च हितं तथैवाप्युपनाहनञ्च।
कृत्स्नो विधिश्चेक्षणपाकघातो यथाविधानं भिषजा प्रयोज्यः॥
कासीससिन्धुप्रभवार्द्रकैस्तु हितं भवेदञ्जनमेव चात्र।
क्षौद्रान्वितैरेभिरथोपयुञ्ज्यादन्यत्तु ताम्रायसचूर्णयुक्तैः॥
स्नेहादिना सम्यगपास्य दोषांस्तृप्तं विधायाथ यथास्वमेव।
प्रक्लिन्नवर्त्मानमुपक्रमेत सेकाञ्जनाश्चोतननस्यधूमैः॥
मुस्ताहरिद्रामधुकं पियङ्गुसिद्धार्थरोध्रोत्पलसारिवाभिः।
क्षुण्णाभिराश्चोतनमेव कार्य्यमत्राञ्जनञ्चाञ्जनमाक्षिकं स्यात्॥
पत्रं फलञ्चामलकस्य पक्त्वा क्रियां विदध्यादथवाञ्जनार्थे।
वंशस्य मूलेन रसक्रियां वा वर्त्तीकृतां ताम्रकपालपक्वाम्॥
रसक्रियां वा त्रिफलाविपक्वां पलाशपुष्पैः खरमञ्जरेर्व्वा।
पिष्ट्वाच्छगल्याः पयसा मलं वा कांसस्य दग्ध्वा सह तान्तवेन॥
प्रत्यञ्जने तन्मरिचैरुपेतं चूर्णेन ताम्रस्य सहोपयोज्यम्।
समुद्रफेनं लवणोत्तमञ्च शङ्खोऽथ मुद्गो मरिचञ्च शुक्लाम्॥

चूर्णाञ्जनं योज्यमथापि कण्डूमक्लिन्नवर्त्मान्युपहन्ति शीघ्रम् ।
प्रक्लिन्नवर्त्मन्यपि चैत एव योगाः प्रयोज्याश्च समीक्ष्य दोषान् ।
सकज्जलं ताम्रघटे च घृष्टं सर्पिर्हुतं तुल्यकमञ्जनं च ॥

---

त्रयोदशोऽध्यायः ॥

अथातो लेख्यरोगप्रतिषेधं व्याख्यास्यामः ॥
नव येऽभिहिता लेख्याः सामान्यस्तेष्वयं विधिः ।
स्निग्धवान्तविरिक्तस्य निवातातपसद्मनि ॥
सुखोदकप्रतप्तेन वाससा सुसमाहितः ।
स्वेदयेद्वर्त्म निर्भुज्य वामाङ्गुष्ठाङ्गुलिस्थितम् ॥
अङ्गुल्यङ्गुष्ठकाभ्यान्तु निर्भुग्नं वर्त्म यत्नतः ।
प्लोतान्तरीकृतं नैव चलति स्रंसतेऽपि वा ॥
ततः प्रच्छ्य प्लोतेन वर्त्म शस्त्रपदाङ्कितम् ।
लिखेच्छस्त्रेण पत्रैर्वा ततो रक्ते स्थिते पुनः ॥
स्विन्नं मनोह्वाकासीसव्योषाञ्जनकसैन्धवैः ।
श्लक्ष्णपिष्टैः समाक्षीकैः प्रतिसार्य्योष्णवारिणा ॥
प्रक्षाल्य हविषा सिक्तं व्रणवत्समुपाचरेत् ।
स्वेदावपीडप्रभृतींस्त्र्यहादूर्द्धं प्रयोजयेत् ॥
व्यासतस्ते समुद्दिष्टं विधानं लेख्यकर्म्मणि ।
असृगास्रावरहितं कण्डूशोफविवर्ज्जितम् ॥
समं नखनिभं वर्त्म लिखितं सम्यगिष्यते ।
रक्तमधि स्रवेत् स्नाव्यं चताच्छस्त्रकृताद्ध्रुवम् ॥
रागशोफपरिस्रावास्तिमिरं व्याध्यनिर्ज्जयः ।

वर्त्म श्यावङ्गुरु स्तब्धं कण्डूहर्षोपदेहवत् ॥
नेत्रपाकमुदीर्णं वा कुर्व्वीताप्रतिकारिणः ।
एतद्दुर्लिखितं ज्ञेयं स्नेहयित्वा पुनर्लिखेत् ॥
व्यावर्त्तते यदा वर्त्म पक्ष्म चापि विमुञ्चति ।
स्यात्सरुक् श्यावभूयिष्ठं तदतिश्रावितं विदुः ॥
स्नेहस्वेदादिरिष्टः स्यात्क्रमस्तत्रानिलापहः ।
वर्त्मावबन्धं क्लिष्टञ्च बहुलं यच्च कीर्त्तितम् ॥
पोथकी चाप्यवलिखेत्प्रच्छयित्वाग्रतः शनैः
समं लिखेत्तु मेधावी श्यावकर्द्दमवर्त्मनी ॥
कुम्भीकिनीं शर्कराञ्च तथैवोत्सङ्गिनीमपि ।
कर्त्तयित्वा तु शस्त्रेण लिखेत्पश्चादतन्द्रितः ॥
भवेयुर्व्वर्त्मसु च याः पिडकाः कठिना भृशम् ।
सूक्ष्मास्ताम्राश्च ताः पक्वा भिन्द्याच्छिन्ना लिखेदपि ॥
तरुणीश्चाल्पसंरम्भाः पिडका वाह्यवर्त्मजाः ।
विदित्वैताः प्रशमयेत्स्वेदालेपनशोधनैः ॥

---

चतुर्दशोऽध्यायः ॥

अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥
स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयम् ।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥
कासीसमागधीपुष्पनेपाल्येलायुतेन तु ।
ततः क्षौद्रघृतं दत्त्वा सम्यग्बन्धमुपाचरेत् ॥
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ।

प्रतिसारणमेकैकं भिन्ने लगण इष्यते ॥
महत्यपिच युञ्जीत क्षाराग्निविधिकोविदः ।
स्विन्नां भिन्नां विनिष्पीड्य भिषगञ्जननामिकाम् ॥
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ।
रसाञ्जनमधुभ्यां वा भिन्नां वा शस्त्रकर्म्मवित् ॥
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ।
सम्यक्स्विन्ने कृमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम् ॥
त्रिफलातुत्थकासीससैन्धवैस्तु रसक्रियाम् ।
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ॥
लेखयेन्मण्डलाग्रेण समन्तात्प्रच्छयेदपि ।
संस्नेह्य पत्रभङ्गैश्च स्वेदयित्वा यथासुखम् ॥
अपाकाद्विधिमोक्षेन पञ्च भेद्यांलुपारेत् ।
सर्व्वेष्वेतेषु विहितं विधानं स्नेहपूर्व्वकम् ।
सम्यक्के प्रयतो भूत्वा कुर्व्वीत व्रणरोपणम् ॥

---

## पञ्चदशोऽध्यायः ॥

अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥
स्निग्धं भुक्तवतो ह्यन्नमुपविष्टस्य यत्नतः ।
संरोषयेत्तु नयनं भिषक्चूर्णैस्तु लावणैः ॥
ततः संरोषितं तूर्णं सुस्विन्नं परिघट्टितम् ।
अर्म्म यत्र वलीजातं तत्रैतल्लगयेद्भिषक् ॥
अपाङ्गं प्रेक्षमाणस्य वडिशेन समाहितः ।
मुचुण्ड्याग्रद्य मेधावी सूचीसूत्रेण वा पुनः ।

नचोत्थापयता क्षिप्रं कार्य्यमभ्युन्नतं तु तत् ।
शस्त्रपातभयाच्चास्य वर्त्मनी ग्राहयेद्दृढम् ॥
ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम् ।
उल्लिखन्मण्डलाग्रेण तीक्ष्णेन परिशोधयेत् ॥
विमुक्तं सर्व्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात् ॥
नीत्वा कनीनकोपान्तं छिन्द्यान्नातिकनीनकम् ।
चतुर्भागस्थिते मांसे नाक्षिव्यापत्तिमर्हति ॥
कनीनकवधादस्रं नाडी चाप्युपजायते ।
हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति ॥
अर्म्म यज्जालवच्चापि तदप्युन्मार्ज्य लम्बितम् ।
छिन्द्याद्वक्रेण शस्त्रेण वर्त्मशुक्लान्तमाश्रितम् ॥
प्रतिसारणमक्ष्णोस्तु ततः कार्य्यमनन्तरम् ।
यवनालस्य चूर्णेन त्रिकटोर्ल्लवणस्य च ॥
स्वेदयित्वा ततः पश्चाद्बध्नीयात्कुशलो भिषक् ।
देशन्तु बलकालज्ञः स्नेहं दत्वा यथाहितम् ॥
व्रणवत् संविधानन्तु तस्य कुर्य्यादतःपरम् ।
त्र्यहान्मुक्त्वा करस्वेदं दत्वा शोधनमाचरेत् ॥
करञ्जबीजामलकमधुकैः साधितं पयः ।
हितमाश्च्योतनं शूले द्विरक्तः क्षौद्रसंयुतम् ॥
मधुकोत्पलकिञ्जल्कदूर्व्वाकल्कैश्च मूर्द्धनि ।
प्रलेपः सघृतः शीतः क्षीरपिष्टः प्रशस्यते ॥
लेख्याञ्जनैरपहरेदर्म्मशेषं भवेद्यदि ।
अर्म्म चाल्पन्दधिनिभन्नीलं रक्तमथापि वा ॥

धूसरन्तनु यच्चापि शुक्रवत्तदुपाचरेत् ।
वर्म्माभ्यवहलं यत्तु स्नायुमांसघनाट्टतम् ॥
छेद्यमेव तदर्म्म स्यात्कृष्णमण्डलगञ्च यत् ।
विशुद्धवर्णमक्लिष्टं क्रियास्वक्षिगतक्लमम् ॥
छिन्नेऽर्म्मणि भवेत्सम्यग्यथास्वमनुपद्रवम् ।
सिराजाले सिरा यास्तु कठिनास्ताश्च बुद्धिमान् ॥
उल्लिखेन्मण्डलाग्रेण वडिशेनावलम्बिताः ।
सिरासु पिडका जाता या न सिध्यन्ति भेषजैः ॥
अर्म्मवन्मण्डलाग्रेण तासाञ्छेदनमिष्यते ।
रोगयोश्चैतयोः कार्य्यमर्म्मोक्तं प्रतिसारणम् ॥
विधिश्चापि यथादोषं लेखनद्रव्यसम्भृतः ।
सन्धौ संस्वेद्य शस्त्रेण पर्व्वणीकां विचक्षणः ॥
उत्तरे च त्रिभागे च वडिशेनावलम्बिताम् ।
छिन्द्यात्ततोऽर्द्धमग्रे स्यादश्रुनाडी ह्यतोऽन्यथा ॥
प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते ।
लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम् ॥
शङ्खं समुद्रफेनञ्च मण्डूकीञ्च समुद्रजाम् ।
स्फटिकं कुरुविन्दञ्च प्रवालाश्मन्तकन्तथा ॥
वैदूर्य्योपलकं मुक्तामयस्ताम्ररजांसि च ।
समभागानि सम्पिष्य सार्द्धं स्रोतोञ्जनेन तु ॥
चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे ।
संस्थाप्योभयतः कालमञ्जयेत्सततं बुधः ॥
अर्म्माणि पिडकां हन्यात्सिराजालानि तेन वै ।

अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्बुदमेव च ॥
अभ्यन्तरं वर्त्म यया विधानं तेषु वक्ष्यते ।
वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्क्षिप्य प्रयत्नतः ॥
मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषग्वरः ।
ततः सैन्धवकासीसकृष्णाभिः प्रतिसारयेत् ॥
स्थिते च रुधिरे वर्त्म दहेत्सम्यक्शलाकया ।
क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि ॥
तीक्ष्णैरुभयतो भागैस्ततो दोषमधिक्षिपेत् ।
वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम् ॥
शस्त्रकर्मण्युपरते मासञ्च स्यात्सुयन्त्रितः ॥

---

## षोडशोऽध्यायः ॥

अथातः पक्ष्मकोपप्रतिषेधं व्याख्यास्यामः ॥

याप्यस्तु यो वर्त्मभवो विकारः पक्ष्मप्रकोपोऽभिहितः पुरस्तात्।
तत्रोपविष्टस्य नरस्य चर्म्म वर्त्मोपरिष्टादनुतिर्य्यगेव ॥
भ्रुवोरधस्तात् परिमुच्य भागौ पक्ष्माश्रितं चैकमतोऽवकृन्तेत् ।
कनीनकापाङ्गसमं समन्ताद्यवाकृति स्निग्धतनोर्नरस्य ॥
उत्कृत्य शस्त्रेण यवप्रमाणं बालेन सीव्येद्भिषगप्रमत्तः ।
दत्त्वा च सर्पिर्मधुनावशेषं कुर्य्याद्विधानं विदितं व्रणे यत् ॥
ललाटदेशे च निबद्धपट्टं प्राक्स्यूतमन्नाप्यपरञ्च बद्धा ।
स्थैर्य्यं गते चाप्यथ शस्त्रमार्गे बालान्विमुञ्चेत् कुशलोऽभिवीक्ष्य॥
एवं नचेच्छाम्यति तस्य वर्त्म निर्भुज्य दोषोपहतां बलिञ्च ।

ततोऽग्निना वा प्रतिसारयेत्तां क्षारेण वा सम्यगवेक्ष्य धीरः॥
छित्त्वा समं वाप्युपपक्ष्ममालां सम्यग्गृहीत्वा बडिशैस्त्रिभिश्च।
पथ्याफलेन प्रतिसारयेत्तु पिष्टेन वा तौवरकेण सम्यक्॥
चत्वार एते विधयो विहन्तुं पक्ष्मोपरोधं पृथगेव शस्ताः।
विरेचनाश्च्योतनस्वधूमलेपाञ्जनस्नेहरसक्रियाश्च॥

---

## सप्तदशोऽध्यायः॥

अथातो दृष्टिगतरोगप्रतिषेधं व्याख्यास्यामः॥
त्रयः साध्यास्त्रयोऽसाध्या याप्याः षट् च भवन्ति हि।
तत्रैकस्य प्रतीकारः कीर्त्तितो धूमदर्शिनः॥
दृष्टौ पित्तविदग्धायां विदग्धायां कफेन च।
पित्तश्लेष्महरं कुर्य्याद्विधिं शस्त्रक्षतादृते॥
नस्यसेकाञ्जनालेपपुटपाकैः सतर्पणैः।
आद्ये तु त्रैफलं पेयं सर्प्पिस्त्रैवृतमुत्तरे॥
तैल्वकं चोभयोः पथ्यं केवलं जीर्णमेव वा।
गैरिकं सैन्धवं कृष्णां गोदन्तस्य मसीन्तथा॥
गोमांसं मरिचं वीजं शिरीषस्य मनःशिला।
दन्तं कपित्थान्मधुना स्वयङ्गुप्ताफलानि च॥
चत्वार एते योगाः स्युरुभयोरञ्जने हिताः।
कुञ्जकाशोकशालाम्रप्रियङ्गुनलिनोत्पलैः॥
पुष्पैर्हरेणुकृष्णाख्यापथ्यामलकसंयुतैः।
सर्प्पिर्मधुयुतैश्चूर्णैर्वेणुनाड्यामवस्थितैः॥
अञ्जयेद्द्वावपि भिषक् पित्तश्लेष्मविभावितौ।

आम्रजम्बूद्भवं पुष्पं तद्रसेन हरेणुकाम् ॥
पिष्ट्वा क्षौद्राज्यसंयुक्तां प्रयोज्यमथवाञ्जनम् ।
नलिनोत्पलकिञ्जल्कगैरिकै गोंशकृद्रसैः ॥
गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम् ।
रसाञ्जनरसक्षौद्रतालीशस्वर्णगैरिकम् ॥
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ।
शीतं सौवीरकं वापि पिष्ट्वाथ रसभावितम् ॥
कूर्म्मपित्तेन मतिमान्भावयेद्रौहितेन वा ।
चूर्णाञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये ॥
काश्मरीपुष्पमधुकदार्व्वीरोध्ररसाञ्जनैः ।
सक्षौद्रमञ्जनन्तद्वद्धितं नेत्रामये सदा ॥
स्रोतोजं सैन्धवं कृष्णां रेणुकाञ्चापि पेषयेत् ।
अजमूत्रेण ता वर्त्तयःक्षणदान्ध्याञ्जने हिताः ॥
कालानुसारिवां कृष्णां नागरं मधुकं तथा ।
तालीशपत्रं क्षणदे गाङ्गेयञ्च शकृद्रसे ॥
कृतास्ता वर्त्तयः पिष्टाश्छायाशुष्काः सुखावहाः ।
मनःशिलाभयाव्योषबलाकालानुसारिवाः ॥
सफेना वर्त्तयः पिष्टाश्छागक्षीरसमन्विताः ।
गोमूत्रपित्तमदिराशकृद्धात्रीरसे पचेत् ॥
क्षुद्राञ्जनं रसे चान्यद्यकृतस्तैः फलेऽपि वा ।
गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलम् ॥
सैन्धवोपहितं युञ्ज्यान्निहितं वेणुगह्वरे ।
मेदोयकृत्तथाजं पिप्पल्यः सैन्धवं मधु ॥

रसमामलकञ्चापि पक्वं सम्यङ्निधापयेत् ।
कोशे खदिरनिर्म्माणे तद्वत् क्षुद्राञ्जनं हितम् ॥
हरेणुमगधाजास्थिमज्जैलायकृदन्वितम् ।
शकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये ॥
विपाच्य गोधायकृदर्द्धपाटितं सुपूरितं मागधिकाभिरग्निना ।
निषेवितं तद्यकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु ॥
तथा यकृच्छागभवं हुताशने विपाच्य सम्यङ्मगधासमन्वितम् ।
प्रयोजितं पूर्व्ववदाश्वसंशयं जयेत् क्षपान्ध्यं सकृदञ्जनान्नृणाम् ॥
प्लीहा यकृच्चाप्युपभक्षिते उभे प्रकल्प्य शूल्ये घृततैलसंयुतम् ।
ते सार्षपस्नेहसमायुतेऽञ्जनं नक्तान्ध्यमाश्वेव हतः प्रयोजिते ॥
नदीजशङ्खौ त्रिकटुन्यथाञ्जनम्मनःशिला द्वे च निशे यकृद्रसे ।
सचन्दनेयं गुटिकाथवाञ्जनं प्रशस्यते वै दिवसेष्वपश्यताम् ॥
भवन्ति याप्याः खलु ये षडामयाः हरेदसृक्तेषु सिराविमोक्षणैः ।
विरेचयेच्चापि पुराणसर्पिषा विरेचनाङ्गोपहितेन सर्वदा ॥
पयो विमिश्रम्पवनोद्भवे हितं वदन्ति पश्चाङ्गुलतैलमेव तु ।
भवेद्धृतं त्रैफलमेव शोधनं विशेषतः शोणितपित्तरोगयोः ॥
विषद्विरेकः कफजे प्रशस्यते त्रिदोषजे तैलमुशन्ति तत्कृतम् ।
पुराणसर्पिस्तिमिरेषु सर्वतो हितं भवेदायसभाजनस्थितम् ॥
हितं च विद्यात्त्रिफलाघृतं सदा कृतञ्च यन्मेषविषाणनामभिः ।
सदावलिह्यात्त्रिफलां सुचूर्णितां घृतप्रगाढान्तिमिरेऽथ पित्तजे ॥
समीरजे तैलयुताङ्कफात्मके मधुप्रगाढां विदधीत युक्तितः ।
गवां शकृत्क्वाथविपक्वमुत्तमं हितन्तु तैलं तिमिरेषु लावनम् ॥
हितं घृतं केवलमेव पैत्तिके त्वजाविकं यन्मधुरैर्व्विपाचितम् ।

तैलं स्थिरादौ मधुरे च यद्गणे तथाणुतैलं पवनासृगुत्थयोः ॥
सहाश्वगन्धातिबलावरीशृतं हितञ्च नस्ये त्रिवृतं यदीरितम् ।
जलोद्भवानूपजमांससंस्कृताद्धृतं विधेयं पयसो यदुत्थितम् ॥
ससैन्धवः क्रव्यभुगेणमांसयोर्हितः ससर्पिः समधुः पुटाह्वयः ।
वसाथ गृध्रोरगताम्रचूडजा सदा प्रशस्ता मधुकान्विताञ्जने ॥
प्रत्यञ्जनं स्रोतसि यत्समुत्थितं क्रमाद्रसक्षीरघृतेषु भावितम् ।
स्थितं दशाहत्रयमेतदञ्जनं कृष्णोरगास्ये कुशसंप्रवेष्टिते ॥
तन्मालतीक्षारकसैन्धवायुतं सदाञ्जनं स्यात्तिमिरेऽथ रागिणि ।
सुभावितं वा पयसा दिनत्रयं काचापहं शास्त्रविदः प्रचक्षते ॥
हविर्हितं क्षीरभवन्तु पैत्तिके वदन्ति नस्ये मधुरौषधैः कृतम् ।
तत्तर्पणे चैव हितं प्रयोजितं सजाङ्गलस्तेषु च यः पुटाह्वयः ॥
रसाञ्जनक्षौद्रसितामनःशिलाक्षुद्राञ्जनं तन्मधुकेन संयुतम् ।
समाञ्जनं वा कनकाकरोद्भवं सुचूर्णितं श्रेष्ठमुशन्ति तद्विदः ॥
भिल्लोटगन्धोदकसेकसेवितं प्रत्यञ्जनञ्चात्र हितं तु तुत्थकम् ।
समेषशृङ्गाञ्जनभागसम्मितं जलोद्भवं काचमलं व्यपोहति ॥
पलाशरोहीतमधूकजा रसाः क्षौद्रेण युक्ता मदिरांशमिश्रिताः ।
उशीरलोध्रत्रिफलाप्रियङ्गुभिः पचेत्तु नस्यङ्कफरोगशान्तये ॥
विडङ्गपाठाकिणिहीङ्गुदीत्वचः प्रयोजयेद्धूममुशीरसंयुतम् ।
वनस्पतिक्वाथविपाचितं घृतं हितं हरिद्रानलदेऽवतर्पणे ॥
समागधो माक्षिकसैन्धवाढ्यः सजाङ्गलः स्यात्पुटपाक एव च ।
मनःशिलात्र्यूषणशङ्खमाक्षिकैः ससिन्धुकासीसरसाञ्जनैः क्रियाः ॥
हिते च कासीसरसाञ्जने तथा वदन्ति पथ्ये गुडनागरैर्युते ।
यदञ्जनं वा बहुशो निषेचितं समूत्रवर्गे त्रिफलोदके शृते ॥

निशाचरास्थिस्थितमेतदञ्जनं क्षिपेच्च मासं सलिले स्थिरे पुनः ।
मेषस्य पुष्पैर्म्मधुकेन संयुतं तदञ्जनं सर्व्वकृते प्रयोजयेत् ॥
क्रियास्वसर्व्वाः स्वतजोद्भवे हिताः क्रमः परिम्लायिनि चापिपित्तहृत्।
क्रमो हितः स्यन्दहरः प्रयोजितः समीक्ष्य दोषेषु यथास्वमेव च॥
दोषोदयेनैव च विश्रुतिङ्गते द्रव्याणि नस्यादिषु योजयेद्बुधः ।
पुनश्च कल्पेऽञ्जनविस्तरः शुभः प्रवक्ष्यतेऽन्यस्तमपीह योजयेत् ॥
घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकं यवानपि ।
निषेवमाणस्य नरस्य यतो भयं सुघोरात्तिमिरान्न विद्यते ॥
शतावरीपायसएवकेवलस्तथाकृतो वामलकेषु पायसः ।
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिरं व्यपोहति॥
जीवन्तिशाकं सुनिषसकञ्च सतण्डुलीयं वरवास्तुकञ्च ।
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलञ्च ॥
पटोलकर्कोटककारवेल्लवार्त्ताकुतर्क्कारिकरीरजानि ।
शाकानि शिग्र्वार्त्तगलानि चैव हितानि दृष्टेर्घृतसाधितानि ॥

विवर्ज्जयेत्सिरामोक्षं तिमिरे रागमागते ।
यन्त्रेणोत्पीडितो दोषो निहन्यादाशु दर्शनम् ॥
अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम् ।
कृच्छ्रं द्वितीये रागि स्यात्तृतीये याप्यमुच्यते ॥
रागप्राप्तेष्वपि हितास्तिमिरेषु तथा क्रियाः ।
यापनार्थं यथोद्दिष्टाः सेव्याश्चापि जलौकसः ॥
श्लैष्मिके लिङ्गनाशे तु कर्म्म वक्ष्यामि सिद्धये ।
नचेद्दृष्टेर्न्दुधर्म्मास्तु विन्दुमुक्ताकृतिः स्थिरः ॥
विषमो वा तनुर्मध्ये राजिमान्वा वक्रप्रभः ।

दृष्टिस्थो लक्ष्यते दोषः सरुजो वा सुलोहितः ॥
स्निग्धस्विन्नस्य तस्याथ कालेनात्युष्णशीतले ।
यन्त्रितस्योपविष्टस्य स्वान्नासाम्पश्यतः समम् ॥
मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वाक्ष्यपाङ्गतः ।
उन्मील्य नयने सम्यक् सिराजालविवर्ज्जिते ॥
नाधो नोर्द्ध्वं च पार्श्वाभ्यां छिद्रे दैवकृते ततः ।
शलाकया प्रयत्नेन विश्वस्तं यववक्त्रया ॥
मध्यप्रदेशिन्यङ्गुष्ठस्थिरहस्तगृहीतया ।
दक्षिणेन भिषक्सव्यं विध्येत्सव्येन चेतरत् ॥
वारिबिन्द्वागमः सम्यग्भवेच्छब्दस्तथा व्यधे ।
संसिच्य विद्धमात्रन्तु योषित्स्तन्येन कोविदः ।
स्थिरे दोषे चले वापि स्वेदयेदक्षि वाह्यतः ।
सम्यक् शलाकां संस्थाप्य भङ्गैरनिलनाशनैः ॥
शलाकाग्रेण तु ततो निर्लिखेद्दृष्टिमण्डलम् ।
विध्यतो योऽन्यपार्श्वेऽस्यास्तं रुद्ध्वा नासिकापुटम् ॥
उच्छिङ्घनेन हर्त्तव्यो दृष्टिमण्डलजः कफः ।
निरभ्रइव घर्म्मांशुर्य्यदा दृष्टिः प्रकाशते ॥
तदासौ लिखिता सम्यग्ज्ञेया याचापि निर्व्यथा ।
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥
घृतेनाभ्यज्य नयनं वस्त्रपट्टेन वेष्टयेत् ।
ततो गृहे निराबाधे शयीतोत्तानएव च ॥
उद्गारकासक्षवथुष्ठीवनोज्जृम्भणानि च ।
तत्कालं नाचरेदूर्द्ध्वं विधिस्य स्नेहपीतवत् ॥

त्र्यहात्त्र्यहाच्च धावेत कषायैरनिलापहैः ।
वयोर्भयात्त्र्यहादूर्द्ध्वं स्वेदयेदक्षि पूर्व्ववत् ॥
दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ।
पश्चात्कर्म्म च सेवेत लघ्वन्नञ्चापि मात्रया ॥
सिराव्यधविधौ पूर्व्वं नरा येच विवर्ज्जिताः ।
न तेषां नीलिकां विध्येदन्यत्राभिहिताद्भिषक् ॥
पूय्यते शोणितेनाक्षि सिरावेधाद्विसर्पता ।
तत्र स्त्रीस्तन्ययष्ट्याह्वपक्वं सेके हितं घृतम् ॥
अपाङ्गासन्नविद्धे तु शोफशूलास्रुरक्तताः ।
तत्रोपनाहं भ्रूमध्ये कुर्य्याच्चोष्णाज्यसेचनम् ॥
व्यधेनासन्नकृष्णेन भागः कृष्णस्य पीड्यते ।
तत्राधः शोधनं सेकः सर्पिषा रक्तमोक्षणम् ॥
अथाप्युपरि विद्धे तु कष्टा रुक् संप्रवर्त्तते ।
तत्र कोष्णेन हविषा परिषेकः प्रशस्यते ॥
शूलास्रुरागास्त्वत्यर्थमधोविद्धे भवन्ति हि ।
विदधीत भिषग्धीमान् तत्र पूर्व्वचिकित्सितम् ॥
रागास्रुवेदनास्तम्भहर्षाश्चातिविघट्टिते ।
स्नेहस्वेदौ हितौ तत्र हितं वाप्यनुवासनम् ॥
दोषस्त्वथोपकृष्टोऽपि तरुणः पुनरूर्द्ध्वगः ।
कुर्य्याच्छुक्रारुणां तत्तु तीव्ररुग्नष्टदर्शनम् ॥
मधुरैस्तत्रसिद्धेन घृतेनाक्ष्णः प्रसेचनम् ।
शिरोवस्तिश्च तेनैव दद्यान्मांसैश्च भोजनम् ॥
दोषस्तु सञ्जातबलो घनः सम्पूर्णमण्डलः ।

प्राप्य नश्येच्छलाकाग्रं तन्वभ्रमिव मारुतम् ।
मूर्द्धाभिघातव्यायामव्यवायवमिमूर्च्छनैः ।
दोषः प्रत्येति कोपाच्च विद्धोऽतितरुणश्च यः ॥
शलाका कर्कशा शूलं खरा दोषपरिस्रुतिम् ।
व्रणं विशालं स्थूलाग्रा तीक्ष्णा हिंस्यादनेकधा ॥
जलास्रावन्तु विषमा क्रियासङ्गमथास्थिरा ।
करोति वर्ज्जिता दोषैस्तस्मादेभिर्हिता भवेत् ॥
अष्टाङ्गुलायता मध्ये सूत्रेण परिवेष्टिता ।
अङ्गुष्ठपर्व्वसमिता वक्त्रयोर्म्मुकुलाकृतिः ॥
ताम्रायसी शातकौम्भी शलाका स्यादनिन्दिता ।
रागः शोफोऽर्व्वुदश्चोषोबुद्बुदं शूकराक्षिता ॥
अधिमन्थादयश्चान्ये रोगाः स्युर्व्यधदोषजाः ।
अहिताचारतोवापि यथास्वं तानुपाचरेत् ॥
रुजायामक्षिरागे वा योगान्भूयो निबोध मे
गैरिकं सारिवा दूर्व्वा यवपिष्टं घृतं पयः ॥
मुखालेपः प्रयोज्योऽयं वेदनारागशान्तये ।
स्वदुम्बष्टैस्तिलैर्व्वापि सिद्धार्थकसमायुतैः ॥
मातुलुङ्गरसोपेतैः मुखालेपस्तदर्थकृत् ।
पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ॥
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ।
दारुपद्मकशुण्ठीभिरेवमेव कृतोऽपि वा ॥
द्राक्षामधुककुष्ठैर्व्वा तद्वत्सैन्धवसंयुतैः ।
ससैन्धवैः शृतं क्षीरं रुजारागनिवर्हणम् ॥

शतावरी पृथक्पर्णीमुस्तामलकपद्मकैः।
साजक्षीरैः शृतं सर्पिर्दाहशूलनिवर्हणम्॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।
काकोल्यादिप्रतीवापं तद्युञ्ज्यात्सर्व्वकर्म्मसु॥
शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्।
ततः सिरां दहेद्वापि मतिमान् कीर्त्तितं तथा॥
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे।
मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि॥
सुमनायाश्च पुष्पाणि मुक्ता वैदूर्य्यमेव च।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत्॥
प्रविधाय च तद्वर्त्तीर्योजयेच्चाञ्जने भिषक्।
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिलाम्॥
मरिचानि च तद्वर्त्तीः कारयेच्चापि पूर्व्ववत्।
दृष्टिस्थैर्य्यार्थमेतत्तु विदध्यादञ्जने हितम्।
भूयो वक्ष्यामि मुख्यानि विस्तरेणाञ्जनानि च।
कल्पे नानाप्रकाराणि तान्यपीह प्रयोजयेत्॥

---

## अष्टादशोऽध्यायः॥

अथातः क्रियाकल्पं व्याख्यास्यामः॥
सर्व्वशास्त्रार्थतत्वज्ञस्तपोदृष्टिरुदारधीः।
वैश्वामित्रं शशासाथ शिष्यं कासिपतिर्म्मुनिः॥
तर्पणं पुटपाकश्च सेकश्चाश्चोतनाञ्जने।
तत्र तत्रोपदिष्टानि तेषां व्यासं निबोध मे॥

संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने।
पूर्व्वाह्ने चापराह्ने वा कार्य्यमक्ष्णोश्च तर्प्पणम्॥
वातातपरजोहीने वेश्मन्युत्तानशायिनः।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ॥
समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः।
पूरयेद्घृतमण्डस्य विलीनस्य सुखोदकैः॥
आपक्ष्माग्रात्ततः स्थाप्यं पञ्च तद्वाक्शतानि च।
स्वस्थे कफे षट्पित्तेऽष्टौ दश वाते तदुत्तमम्।
रोगस्थानविशेषेण केचित्कालं प्रचक्षते।
यथाक्रमोपदिष्टेषु त्रीण्येकं पञ्च सप्त च॥
दश दृष्ट्यामथाष्टौ च वाक्शतानि विभावयेत्।
ततश्चापाङ्गतः स्नेहं स्रावयित्वाक्षि शोधयेत्॥
स्विन्नेन यवपिष्टेन स्नेहवीर्य्यैरितन्ततः।
यथास्वं धूमपानेन कफमस्य विशोधयेत्॥
एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते परम्।
तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि लक्षयेत्॥
सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवम्।
निर्वृतिर्व्याधिविध्वंसः क्रियालाघवमेव च॥
गुर्व्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत्।
ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम्॥
रूक्षमाविलमस्राढ्यमसहं रूपदर्शने।
व्याधिवृद्धिश्च तज्ज्ञेयं हीनतर्प्पितमक्षि च॥
अनयोर्दोषबाहुल्यात्प्रयतेत चिकित्सिते।

धूमनस्याञ्जनैः सेकैः रूक्षैः स्निग्धैश्च योगवित् ॥
ताम्यत्यतिविशुष्कञ्च यद्रूक्षं चातिदारुणम् ।
शीर्णपक्ष्माविलं जिह्मं रोगक्लिष्टञ्च यद्भृशम् ॥
तदक्षि तर्पणादेव लभेतोर्ज्जमसंशयम् ।
दुर्दिनात्युष्णशीतेषु चिन्तायां सम्भ्रमेषु च ॥
अशान्तोपद्रवे चाक्ष्णि तर्पणं न प्रशस्यते ।
पुटपाकस्तथैतेषु नस्यं येषु च गर्हितम् ॥
तर्पणार्हा न ये प्रोक्ताः स्नेहपानाक्षमाश्च ये ।
ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ॥
पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ।
स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेखनः ।
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् ॥
स्नेहमांसवसामज्जमेदःस्वाद्वौषधैः कृतः ॥
स्नेहनः पुटपाकस्तु धार्य्यौ द्वे वाक्शते तु सः ॥
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसम्भृतैः ।
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥
समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः ।
लेखनो वाक्शतं तस्य परं धारणमुच्यते ॥
स्तन्यजाङ्गलमध्वाज्यतिक्तद्रव्यविपाचितः ।
लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः ॥
वितरेत्तर्पणोक्तन्तु धूमं हित्वा तु रोपणम् ।
स्नेहस्वेदौ द्वयोः कार्य्यौ कार्य्यौ नैव च रोपणे ॥

एकाहं वा द्व्यहं वापि त्र्यहं वाप्यवचारणम् ।
यन्त्रणां तु क्रियाकालाद्द्विगुणम् कालमिष्यते ॥
तेजांस्यनिलमाकाशमादर्शम्भास्वराणि च ।
नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा ॥
मिथ्योपचारादनयोर्यो व्याधिरुपजायते ।
अञ्जनाश्च्योतनस्वेदैर्यथास्वन्तमुपाचरेत् ॥
प्रसन्नवर्णं विशदं वातातपसहं लघु ।
सुखस्वप्नावबोध्यक्षि पुटपाकगुणान्वितम् ॥
अतियोगाद्रुजः शोफः पिडकास्तिमिरोद्गमः ।
पाकोऽश्रुहर्षणञ्चापि हीने दोषोद्गमस्तथा ॥
अत ऊर्द्धं प्रवक्ष्यामि पुटपाकप्रसाधनम् ।
द्वौ बिल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ ॥
द्रव्याणां बिल्वमात्रन्तु द्रवाणां कुडवो मतः ।
तदैकत्र समालोड्य पत्रैः सुपरिवेष्टितम् ॥
काश्मरीकुमुदैरण्डपद्मिनीकदलीभवैः ।
मृदावलिप्तमङ्गारैः खादिरैरवकूलयेत् ॥
कतकाश्मन्तकैरण्डपाटलाष्टवबादरैः ।
सक्षीरद्रुमकाष्ठैर्वा गोमयैर्वापि युक्तितः
स्विन्नमुद्धृत्य निःपीड्य रसमादाय तं नृणाम् ।
तर्पणोक्तेन विधिना यथावदवचारयेत् ॥
कनीनके निषेच्यः स्यान्नित्यमुत्तानशायिनः ।
रक्ते पित्ते च तौ शीतौ कोष्णौ वातकफापहौ ॥
अत्युष्णतीक्ष्णौ सततं दाहपाककरौ स्मृतौ ।

आप्लुतौ शीतलौ चास्रुस्तम्भकण्डूघर्षकारकौ ॥
अतिमात्रौ कषायत्वसङ्कोचस्फुरणावहौ ॥
हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम् ॥
युक्तौ कृतौ दाहशोफकण्डूघर्षस्रावनाशनौ ।
कण्डूपदेहदूषीकारक्तराजिविनाशनौ ॥
तस्मात्परिहरन्दोषान् विदध्यात्तौ सुखावहौ ।
व्यापदश्च यथादोषं नस्यधूमाञ्जनैर्जयेत् ॥
आद्यन्तयोश्चाप्यनयोः स्वेदमुष्णाम्बु चैलिकः ।
तथाहितोऽवसाने च धूमः श्लेष्मसमुच्छ्रितौ ॥
यथादोषोपयुक्तन्तु नातिप्रबलमोजसा ।
रागमाश्चोतनं हन्ति सेकस्तु बलवत्तरम् ॥
तौ विधैवोपयुज्येते रोगेषु पुटपाकवत् ।
लेखने सप्त चाष्टौ वा बिन्दवः स्नैहिके दश ॥
आश्चोतने प्रयोक्तव्या द्वादशैव तु रोपणे ।
सेकस्य द्विगुणः कालः पुटपाकात्परो मतः ॥
अथ वा कार्य्यनिर्वृत्तेरुपयोगो यथाक्रमम् ।
पूर्व्वापराह्णे मध्याह्ने रुजाकालेषु चोभयोः ॥
योगायोगान् स्नेहसेके तर्पणोक्तान् प्रचक्षते ।
रोगान् शिरसि सम्भूतान् हत्वातिप्रबलान् गुणान् ॥
करोति शिरसो वस्तिरुक्ता ये मूर्द्धतैलिकाः ।
शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु ॥
ऋज्वासीनस्य बध्नीयाद्वस्तिकोशं ततो दृढम् ।
यथाव्याधिशृतस्नेहपूर्णं संयम्य धारयेत् ॥

तर्पणोक्तं दशगुणं यथादोषं विधानवित्।
व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले॥
नेत्रएव स्थिते दोषे प्राप्तमञ्जनमाचरेत्।
लेखनं रोपणञ्चापि प्रसादनमथापि वा॥
तत्र पञ्च रसान्व्यस्तानाद्यैकरसवर्ज्जितान्।
पञ्चधा लेखनं युञ्ज्याद्यथादोषमतन्द्रितः॥
नेत्रवर्त्म शिराकोशस्रोतःशृङ्गाटकाश्रितम्।
मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत्॥
कषायतिक्तकञ्चापि सस्नेहं रोपणं मतम्।
तत्स्नेहशैत्याद्वर्ण्यं स्याद्दृष्टेश्च बलवर्द्धनम्॥
मधुरं स्नेहसम्पन्नमञ्जनन्तु प्रसादनम्।
दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितम्॥
यथादोषं प्रयोज्यानि तानि दोषविशारदैः।
अञ्जनानि यथोक्तानि प्राक्सायाह्नरात्रिषु॥
गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु।
यथापूर्व्वं बलं तेषां श्रेष्ठमाहुर्मनीषिणः॥
हरेणुमात्रा वर्त्तिः स्याल्लेखनस्य प्रमाणतः।
प्रसादनस्य चाध्यर्द्धा द्विगुणा रोपणस्य च॥
रसाञ्जनस्य मात्रा तु पिष्टवर्त्तिमिता मता।
द्वित्रिचतुःशलाकाश्च चूर्णस्याप्यनुपूर्व्वशः॥
तेषां तुल्यगुणान्येव विदध्याद्भाजनान्यपि।
सौवर्ण्यं राजतं शार्ङ्गन्ताम्रं वैदूर्य्यकांस्यजम्॥
आयसानि च योज्यानि शलाकाश्च यथाक्रमम्।

वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला ॥
अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा ।
औडुम्बर्य्यश्मजातापि शारीरी वा हिता भवेत् ॥
वामेनाक्षि विनिर्भुज्य हस्तेन सुसमाहितः ।
शलाकया दक्षिणेन क्षिपेत् कानीनमञ्जनम् ॥
आपाङ्गं वा यथायोग्यं कुर्य्याच्चापि गतागतम् ।
वर्त्मोपलेपि वा यत्तदङ्गुल्यैव प्रयोजयेत् ॥
अक्षि नात्यन्तयोरञ्ज्याद्बाधमानोऽपि वा भिषक् ।
नवा निर्व्वान्तदोषेऽक्ष्णि धावनं सम्प्रयोजयेत् ॥
दोषः प्रतिनिवृत्तः सन् हन्याद्दृष्टेर्ब्बलन्तथा ।
गतदोषमपेतास्रु पश्चद्धाल्यस्यगम्भसा ॥
प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनन्ततः ।
श्रमोदावर्त्तरुदितमद्यक्रोधभयज्वरैः ॥
वेगाघातशिरोदोषैश्चार्त्तानां नेष्यतेऽञ्जनम् ।
रागरुक्तिमिरास्रावशूलसंरम्भसम्भ्रमान् ॥
निद्राक्षये क्रियाशक्तिं प्रवाते दृग्बलक्षयम् ।
रजोधूमहते रागस्रावाधीमन्थसम्भवम् ॥
संरम्भशूलौ नस्यान्ते शिरोऽर्त्ति शिरोरुजम् ।
शिरःस्नातेऽतिशीते च रवावनुदितेऽपि च ॥
दोषस्थैर्य्यादपार्थं स्याद्दोषोत्क्लेशङ्करोति च ।
अजीर्ण्येवमेव स्यात् स्रोतोमार्गविरोधनात् ॥
दोषवेगोदये दत्तं कुर्य्यात्तांस्तानुपद्रवान् ।
तस्मात्परिहरन्दोषानञ्जनं साधु योजयेत् ॥

लेखनस्य विशेषेण काल एष प्रकीर्त्तितः ।
व्यापदश्च जयेदेताः सेकाश्चोतनलेपनैः ॥
यथास्वं धूमकवलैर्न्नस्यैश्चापि समुत्थिताः ।
विशदं लघु नास्रावि क्रियापटु सुनिर्म्मलम् ॥
संशान्तोपद्रवं नेत्रं विरिक्तं सम्यगादिशेत् ।
जिह्मं दारुणदुर्वर्णं स्रस्तं रूक्षमतीव च ॥
नेत्रं विरेकातियोगे स्यन्दते चातिमात्रशः ।
तत्र सन्तर्पणं कार्य्यं विधानं चानिलापहम् ॥
अक्षि मन्दविरिक्तं स्यादुदग्रतरदोषवत् ।
धूमनस्याञ्जनैस्तत्र हितं दोषावसेचनम् ॥
स्नेहवर्णबलोपेतं प्रसन्नं दोषवर्ज्जितम् ।
ज्ञेयं प्रसादने सम्यगुपयुक्तेऽक्षिनिर्वृतम् ॥
किञ्चिद्धीनविकारं स्यात्तर्पणाद्धितादति ।
तत्र दोषहरं रूक्षं भेषजं शस्यते मृदु ॥
साधारणमपि ज्ञेयमेवं रोपणलक्षणम् ।
प्रसादनवदाचष्टे तस्मिन्युक्तेऽतिभेषजम् ॥
स्नेहजं रोपणं वापि हीनयुक्तमपार्थकम् ।
कर्त्तव्यं मात्रया तस्मादञ्जनं सिद्धिमिच्छता ॥
पुटपाकक्रियाद्यासु क्रियास्वेकैव कल्पना ।
सहस्रशश्चाञ्जनेषु वीजेनोक्तेन पूजिताः ।
दृष्टेर्ब्बलविवृद्ध्यर्थं याप्यरोगक्षयाय च ॥
राजार्हाण्यञ्जनाग्राणि निबोधैतान्यतःपरम् ॥
अष्टौ भागानञ्जनस्य नीलोत्पलसमत्विषः ।

औडुम्बरं शातकुम्भं राजतञ्च समासतः ॥
एकादशैतान् भागांस्तु योजयेत्कुशलोभिषक् ।
मूषाक्षिप्तं तदाध्मातमाहृतं जातवेदसि ॥
खदिराश्मन्तकाङ्गारैर्गोशकृद्भिरथापि वा ।
गवां शकृद्रसे मूत्रे दध्नि सर्प्पिषि माक्षिके॥
तैलमद्यवसामज्जसर्व्वगन्धोदकेषु च ।
द्राक्षारसेक्षुत्रिफलारसेषु सुहिमेषु च ॥
सारिवादिकषाये च कषाये चोत्पलादिके ।
निषेचयेत्पृथक्चैनं ध्मातं ध्मातं पुनः पुनः ॥
ततोऽन्तरीक्षे सप्ताहं श्रोतबद्धं स्थितं जले ।
विशोष्य चूर्णयेन्मुक्तां स्फटिकं विद्रुमं तथा ॥
कालानुसारिवां चैव शुचिरावाप्य योगतः ।
एतच्चूर्णाञ्जनं श्रेष्ठं निहितं भाजने शुभे ॥
दन्तस्फटिकवैदूर्य्यशङ्खशैलासनोद्भवे ।
शातकुम्भेऽथ शार्ङ्गे वा राजते वा सुसंस्कृते ॥
सहस्रपाकवत्पूजां कृत्वा राज्ञः प्रयोजयेत् ।
तेनाञ्जितोक्षा नृपतिर्भवेत्सर्व्वजनप्रियः ॥
अधृष्यः सर्व्वभूतानां दृष्टिरोगविवर्ज्जितः ।
कुष्ठञ्चन्दनमेलाश्च पत्रं मधुकमञ्जनम् ॥
मेषशृङ्गस्य पुष्पाणि चक्रं रत्नानि सप्त च ।
उत्पलस्य हरिद्रयोश्च पद्मस्यापिच केशरम्॥
नागपुष्पमुशीराणि पिप्पलीतुत्थमुत्तमम् ।
कुक्कुटाण्डकपालानि दार्वीं पथ्यां सरोचनाम्॥

मरिचान्यक्षमज्जानं तुल्यांश्च गृहगोधिकाम् ।
कृत्वा सूक्ष्मं शुचिश्चूर्णं न्यसेदभ्यर्च्य पूर्व्ववत् ॥
एतद्भद्रोदयं नाम सदैवार्हति भूमिपः ॥
चक्रं समरिचश्चैव मांसीं शैलेयमेव च ।
तुल्यांशानि समानैस्तैः समग्रैश्च मनःशिला ।
पत्रस्य भागाश्चत्वारो द्विगुणं सर्व्वतोऽञ्जनम् ॥
तावच्च यष्टीमधुकं पूर्व्ववच्चैतदञ्जनम् ।
मनःशिला देवकाष्ठं रजन्यौ त्रिफलोषणम् ॥
लाक्षालसुनमञ्जिष्ठासैन्धवैलाः समाक्षिकाः ।
रोध्रं सावरकं चूर्णमायसं ताम्रमेव च ॥
कालानुसारिवाश्चैव कुक्कुटाण्डत्वचानि च ।
तुल्यानि पयसा पिष्ट्वा गुटिकां कारयेद्बुधः ॥
कण्डूतिमिरशुक्लार्मरक्तराज्युपशान्तये ।
कांस्यापमार्ज्जनमसीमधुकं सैन्धवं नतम् ॥
एरण्डमूलञ्च समं द्द्रत्यं शद्भयान्वितम् ।
आजेन पयसा पिष्ट्वा ताम्रपात्रं प्रलेपयेत् ॥
सप्तकृत्वस्तु ता वर्त्तिश्छायाशुष्का रुजापहाः ।
पथ्यातुल्यकयष्ट्याह्वै स्तुल्यैर्म्मरिचषोडश ॥
पथ्या सर्व्वविकारेषु वर्त्ती शीताम्बुपेषिता ।
रसक्रिया विधानेन यथोक्तविधिकोविदः ॥
पिण्डाञ्जनानि कुर्व्वीत यथायोगमतन्द्रितः ॥

---

## एकोनविंशोऽध्यायः ॥

अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः ॥

अभ्याहते तु नयने बहुधा नराणाम्।
संरम्भरागतुमुलासु रुजासु धीमान् ।
नस्यप्रलेपपरिषेचनतर्पणाद्य
मुक्तं पुनः क्षतजपित्तजशूलपथ्यम् ॥
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभिघातै
रभ्याहतामपि तथैव भिषक्चिकित्सेत ॥
सद्योहते नयन एष विधिस्तदूर्द्ध
मन्देरितो भवति दोषमवेक्ष्य कार्य्यः ।
अभ्याहतं नयनमीषदथास्य वास्य
संस्वेदितं भवति तन्निरुजं क्षणेन ॥
साध्यं क्षतं पटलमेकमुभे तु कृच्छ्रे
त्रीणि क्षतानि पटलानि विवर्ज्जयेत्तु ।
स्यात्पिच्चितञ्च नयनं त्वतिचावसन्नं
स्रस्तं च्युतञ्च हतदृक्च भवेत्तु याप्यम् ॥
विस्तीर्णदृष्टितनुरागमसत्प्रदर्शि
साध्यं यथास्थितमनाविलदर्शनञ्च ।
प्राणोपरोधवमनक्षवकण्ठरोधै
रुन्नस्यमाशु नयनं यदतिप्रविष्टम् ॥

नेत्रे विलम्बिनि विधिर्व्विहितः पुरस्ता
दुच्छिंहनं शिरसि वार्य्यवसेचनञ्च ।
षट्सप्ततिर्न्नयनजा य इमे प्रदिष्टा
रोगा भवन्त्यमहतां महतान्च तेभ्यः ॥
स्तन्यप्रकोपकफमारुतपित्तरक्तै
र्बालाक्षिवर्त्मभव एव कुकूणकोऽन्यः ।
स्द्गाति नेत्रमतिकण्डुमथाक्षिकूट
नासाललाटमपि तेन शिशुः स नित्यम् ॥
सूर्य्यप्रभां न सहते स्रवति प्रष्टञ्च
तस्याहरेद्रुधिरमाशुविनिर्लिखेच्च ।
क्षौद्रादियुतैश्च कटुभिः प्रतिसारयेत्तु
मातुः शिशोरभिहितञ्च विधिं विदध्यात् ॥
तं वामयेत्तु मधुसैन्धवसम्प्रयुक्तैः
पीतम्पयः खलु फलैः खरमञ्जरीणाम् ॥
स्यात्पिप्पलीलवणमाक्षिकसंयुतैर्व्वा
नैनं वमन्तमपि वामयितुं यतेत ।
दत्वा वचामशनदुग्धभुजे प्रयोज्य
मूर्द्धं ततः फलयुतं वमनं विधिज्ञैः ॥
जम्ब्वाम्रधात्रीदलैः परिधावनार्थं
कार्य्यं कषायमवसेचनमेव चापि ।
आश्चोतने च हितमत्र हृतं गुडूची
सिद्धं तथाङ्करपि च त्रिफलाविपक्वम् ॥
नेपालजामरिचशङ्खरसाञ्जनानि

सिन्धुप्रसूतगुडमाक्षिकसंयुतानि ।
स्यादञ्जनं मधुरसामधुताम्रकैर्वा
कृष्णायसं घृतपयोमधु वापि दग्धम् ॥
व्योषं पलाण्डु मधुकं लवणोत्तमञ्च
लाक्षाञ्च गैरिकयुतां गुटिकाञ्जनं वा ।
निम्बच्छदं मधुकदार्व्वि सताम्रलोध्र
मिच्छन्ति चात्र भिषजोऽञ्जनमर्घ्यतुल्यम् ॥
स्रोतोजशङ्खदधिसैन्धवमङ्घ्रिपत्त्रं
शुक्तं शिशोर्नुदति भावितमञ्जनेन ।
स्यन्दे कफादभिहितं क्रममाचरेच्च
बालस्य रोगकुशलोऽक्षिगदं जिघांसुः ॥
समुद्र इव गम्भीरं नैव शक्यं चिकित्सितम् ।
वक्तुं निरवशेषेण श्लोकानामयुतैरपि ॥
सहस्रैरपिच प्रोक्तमर्थमल्पमतिर्न्नरः ।
तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः ॥
तदिदं बहुगूढार्थं चिकित्सावीजमीरितम् ।
कुशलेनाभिपन्नं तद्बहुधाभिप्ररोहति ॥
तस्मान्मतिमता नित्यं नानाशास्त्रार्थदर्शिना ।
सर्व्वसूक्ष्ममगाधार्थं शास्त्रमागमबुद्धिना ॥

---

विंशतितमोऽध्यायः ॥

अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥
कर्णशूलं प्रणादञ्च वाधिर्य्यं क्ष्वेड एवच ।

कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च॥
कृमिकर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा।
कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्व्विधम्॥
तथार्बुदं सप्तविधं शोफश्चापि चतुर्व्विधः।
एते कर्णगतारोगा अष्टाविंशतिरीरिताः॥
समीरणः श्रोत्रगतोऽन्यथाचरः
समन्ततः शूलमतीव कर्णयोः।
करोति दोषैश्च यथास्वमावृतः
स कर्णशूलः कथितो दुराचरः॥
यदा तु नाडीषु विमार्गमागतः
स एव शब्दाभिवहासु तिष्ठति।
शृणोति शब्दान्विविधांस्तदा नरः
प्रणादमेनं कथयन्ति चामयम्॥
स एव शब्दाभिवहा यदा शिराः
कफानुयातो व्यनुसृत्य तिष्ठति।
तदा नरस्याप्रतिकारसेविनो
भवेत्तु वाधिर्य्यमसंशयं खलु॥
अमात्क्षयाद्रुक्षकषायभोजनात्
समीरणः शब्दपथे व्यवस्थितः।
विरिक्तशीर्षस्य च शीतसेविनः
करोति हि क्ष्वेडमतीव कर्णयोः॥
शिरोऽभिघातादथ वा निमज्जतो
जले प्रपाकादथवापि विद्रधेः।

स्रवेत्तु पूयं श्रवणोऽनिलाहतः
सकर्णसंस्राव इति प्रकीर्त्तितः॥
कफेन कण्डूः प्रचितेन कर्णयो
र्भृशं भवेत्स्रोतसि कर्णसंज्ञिते।
विशोषिते श्लेष्मणि पित्ततेजसा
नृणां भवत्स्रोतसि कर्णगूथकः॥
स कर्णगूथो द्रवतां यदागतो
विलायितो घ्राणमुखं प्रपद्यते।
तदा सकर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽभितापनः॥
यदा तु मूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तदञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यैः कृमिकर्णकस्तु सः॥
क्षताभिघातप्रभवस्तु विद्रधि
र्भवेत्तथा दोषकृतोऽपरः पुनः।
स रक्तपीतारुणमस्रमास्रवे
त्प्रतोदधूमायनदाहचोषवान्॥
भवेत्प्रपाकः खलु पित्तकोपतो
विकोथविक्लेदकरश्च कर्णयोः।
स्थिते कफे स्रोतसि पित्ततेजसा
विलाप्यमाने भृशसम्प्रतापनात्॥
अवेदनो वाप्यथवा सवेदनो

घनं स्रवेत्पूति स पूतिकर्णकः ।
प्रदिष्टलिङ्गान्यर्शांसि तत्वत
स्तथैव शोफार्ब्बुदलिङ्गमीरितम् ॥
मया पुरस्तात्प्रसमीक्ष्य योजये
दिहैव तानि प्रयतो भिषग्वरः ॥

---

## एकविंशतितमोऽध्यायः ॥

अथातः कर्णगतरोगप्रतिषेधं व्याख्यास्यामः ॥
सामान्यं कर्णरोगेषु घृतपानं रसायनम् ।
अव्यायामोऽशिरःस्नानं ब्रह्मचर्य्यमकत्थनम् ॥
कर्णशूले प्रणादे च वाधिर्य्ये क्ष्वेडयोरपि ।
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥
स्निग्धं वातहरैः स्वेदैर्न्नरं स्नेहविरेचितम् ।
नाडीस्वेदैरुपचरेत्पिण्डस्वेदैस्तथैव च ॥
विल्वैरण्डार्कवर्षाभूदधित्थोन्मत्तशिग्रुभिः ।
वस्तगन्धाश्वगन्धाभ्यां तर्कारीयववेणुभिः ॥
आरनालैः शृतैरेभिर्न्नाडीस्वेदः प्रयोजितः ।
कफवातसमुत्थानं कर्णशूलं निरस्यति ॥
मीनकुक्कुटलावानां मांसजैः पयसापि वा ।
पिण्डैः स्वेदञ्च कुर्व्वीत कर्णशूलनिवारणम् ॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ।
तैलाक्तमङ्गारपूर्णं निदध्याच्छ्रवणोपरि ॥

यत्तैलं च्यवते तस्मात् खण्डादङ्गारसाधितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥
क्षौमगुग्गुल्वगुरुभिः सघृतैर्धूपयेच्च तम् ।
भक्तोपरि हितं सर्पिर्वस्तिकर्म्म च पूजितम् ॥
निरन्नो निशि तत्सर्पिः पीत्वोपरि पयः पिवेत् ।
मूर्द्धवस्तिषु नस्ये च मस्तिष्के परिषेचने ॥
घृतपाकं बलातैलं प्रशस्तञ्चापि भोजने ।
कण्टकारीमजाक्षीरे पक्का क्षीरेण तेन च ॥
विपचेत्ककुटवसां कर्णयोस्तत्प्रपूरणम् ।
तण्डुलीयकमूलानि फलमङ्कोठजन्तथा ॥
अहिंस्राकेन्द्रकामूलं सरलं देवदारु च ।
लसुनं शृङ्गवेरञ्च तथा वंशावलेखनम् ॥
कल्कैरेषां तथाम्लैश्च पचेत्स्नेहं चतुर्व्विधम् ।
वेदनायाः प्रशान्त्यर्थं हितं तत्कर्णपूरणम् ॥
लसुनार्द्रकशिग्रूणां मुरङ्ग्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्द्देयमेतद्वा वेदनापहम् ॥
वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक् ।
सर्पिः पचेत्तेन कर्णं पूरयेत्कर्णशूलिनः ॥
महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम् ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥
यत्तैलं च्यवते तेभ्यो द्दतेभ्यो भाजनोपरि ।

ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥
कुर्य्यादेवं भद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान्दीपिकातैलं कर्णशूलनिवर्हणम् ॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ।
सन्निदध्यात्स्नुहीकाण्डे कोरिते तच्छदावृते ॥
पुटपाकक्रमस्विन्नान्पीडयेदारसागमात् ।
सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥
कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत्कर्णं तच्छूलविनिवृत्तये ॥
कर्णं कोष्णेन चुक्रेण पूरयेत्कर्णशूलिनः ।
समुद्रफेणचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥
अष्टानामिह मूत्राणां मूत्रेणान्यतमेनवा ।
कोष्णेन पूरयेत्कर्णं कर्णशूलोपशान्तये ॥
मूत्रेष्वम्लेषु वातघ्ने गणे च कथिते भिषक् ।
पचेच्चतुर्व्विधं स्नेहं पूरणं तच्च कर्णयोः ॥
एता एव क्रियाः कुर्य्यात् पित्तघ्नैः पित्तसंयुते ।
काकोल्यादौ दशक्षीरं तिक्तं चात्र हितं हविः ॥
क्षीरवृक्षप्रवालेषु मधुके चन्दने तथा ।
कल्कक्वाथे परं पक्वं शर्करामधुकैः सरैः ॥
इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ ।
तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः ॥
सुरसादौ कृतं तैलं पञ्चमूले महत्यपि ।
मातुलुङ्गरसः शुक्तं लशुनार्द्रकयोरसः ॥

एकैकः पूरणे पथ्यस्तैलं तेष्वथवा कृतम् ।
तीक्ष्णा मूर्द्धविरेकाश्च कवलाश्चात्र पूजिताः ॥
कर्णशूलविधिः कृत्स्नः पित्तघ्नः शोणितावृते ।
शूलप्रणादबाधिर्य्यक्ष्वेडानान्तु प्रकीर्त्तितम् ॥
सामान्यतो विशेषेण बाधिर्य्ये पूरणं शृणु ।
गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् ॥
सजलञ्च सदुग्धञ्च बाधिर्य्ये कर्णपूरणम् ।
सितामधुकबिल्वीभिः सिद्धं वाजे पयस्यथ ॥
सिद्धं वा बिल्वनिःक्वाथे शीतीभूतं तदुद्धृतम् ।
पुनः पचेद्दधिक्षीरं सितामधुकचन्दनैः ॥
बिल्वाम्बु गाढं तत्तैलं बाधिर्य्ये कर्णपूरणम् ।
वक्ष्यते यः प्रतिश्याये विधिः सोऽप्यत्र पूजितः ॥
वातव्याधिषु यश्चोक्तो विधिः स च हितोभवेत् ।
कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके ॥
समानं कर्म्म कुर्व्वीत योगान्वैशेषिकानपि ।
शिरोविरेचनञ्चैव धूपनं पूरणन्तथा ॥
प्रमार्जनं धावनञ्च वीक्ष्य वीक्ष्यावचारयेत् ।
राजवृक्षादितोयेन सुरसादिगणेन वा ॥
कर्णप्रक्षालनं कार्य्यं चूर्णैरेषाञ्च पूरणम् ।
चूर्णं पञ्चकषायोत्थं कपित्थरसयोजितं ॥
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ।
सर्ज्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ॥
योजितो मधुना वापि कर्णस्रावे प्रशस्यते ।

लाक्षासर्ज्जरसौ वापि चूर्णितौ कर्णपूरणम् ॥
सशैवलमहावृक्षजम्बाम्रप्रसवायुतम् ।
कुलीरक्षौद्रमण्डूकीसिद्धं तैलञ्च पूजितम् ॥
तिन्दुकान्यभयारोध्रं समङ्गामलकं मधु ।
पूरणञ्चात्र पथ्यं स्यात्कपित्थरसयोजितम् ॥
रत्नमाम्रकपित्थानां मधूकधवशालजम् ।
पूरणार्थं प्रशंसन्ति तैलं वा तैर्व्विपाचितम्॥
प्रियङ्गुमधुकाम्बष्ठाधातकीशीतपर्णिभिः ।
मञ्जिष्ठालोध्रलाक्षाभिःकपित्थस्य रसेनवा ॥
पचेत्तैलं तदास्रावमवगृह्णाति पूरणात् ।
घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्॥
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ।
निर्गुण्डीस्वरसे तैलं सिन्धुधूमरजोगुडः ॥
पूरणः पूतिकर्णस्य शमनो मधुसंयुतः ।
कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम्॥
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ।
कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥
गुग्गुलुः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यते ।
छर्दनं धूमपानञ्च कवडस्य च धारणम् ॥
कर्णक्ष्वेडेहितं तैलं सार्षपञ्चैव पूरणम् ।।
विद्रधौ वापि कुर्व्वीत विद्रध्युक्तं चिकित्सितम् ॥
प्रक्लेद्य धीमांस्तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत्कर्णविट्कान्तु भिषक् सम्यक्छलाकया ॥

नाडीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् ।
विधिश्च कफहृत्सर्व्वः कर्णकण्डूमपोहति ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भैषज्यं कुर्य्यात्पित्तविसर्प्पवत् ।
कर्णच्छिद्रे वर्त्तमानं कीटं क्लेदमलादि वा ॥
गृहेणापहरेद्धीमानथवापि शलाकया ।
शेषाणान्तु विकाराणां प्राक्चिकित्सितमीरितम्

---

## द्वाविंशतितमोऽध्यायः ॥

अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥

अपीनसः पूतिनस्यं नासापाकस्तथैव च ।
तथा शोणितपित्तञ्च पूयशोणितमेव च ॥
क्षवथुर्भ्रंशथुर्दीप्तो नासानाहःपरिस्रवः ।
नासाशोषेण सहिता दशैकाश्चेरिता गदाः ॥
चत्वार्य्यर्शांसि चत्वारः शोफाः सप्तार्व्वुदानि च ।
प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः ॥
एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्त्तिताः ।
आनह्यते यस्य विधूप्यते च पापच्यते क्लिद्यति चापि नासा ॥
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन ।
तञ्चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम् ॥
दोषैर्व्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु ।

निरेति पूतिर्मुखनासिकाभ्यान्तं पूतिनस्यं प्रवदन्ति रोगम् ॥
घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन्विकारे बलवांश्च पाकः ।
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावपि यत्र दृष्टौ ॥
चतुर्व्विधं द्विप्रभवं द्विमार्गं वक्ष्यामि भूयः खलु रक्तपित्तम् ।
दोषैर्व्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु ॥
नासा स्रवेत्पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ।
घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टे यस्यानिलो नासिकया निरेति ॥
कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ।
तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा ॥
सूत्रादिभिर्व्वा तरुणास्थिमर्म्मण्युद्घाटिते यः क्षवथुर्निरेति ।
प्रभ्रश्यते नासिकयैव यश्च सान्द्रो विदग्धो लवणः कफस्तु ॥
प्राक्सञ्चितो मूर्द्धनि पित्ततप्तं प्रभ्रंशथुं व्याधिमुदाहरन्ति ।
घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः ॥
नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिस्तु तं दीप्तमुदाहरन्ति ।
कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात् ॥
घ्राणं वृणोतीव तदा स रोगो नासाप्रतीनाह इति प्रदिष्टः ।
अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह नासा ॥
रात्रौ विशेषेण हि तं विकारं नासापरिस्रावमिति व्यवस्येत् ।
घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च ॥
समुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्राद्यस्तस्य नासापरिशोष उक्तः ।
दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान् ॥
शालाक्यसिद्धान्तमवेक्ष्य वापि सर्व्वात्मकं सप्तममर्व्वुदं तु ।
रोगः प्रतिश्याय इह प्रदिष्टः स वक्ष्यते पञ्चविधः पुरस्तात् ॥

शोफाश्च शोफविज्ञाने नासास्रोतोव्यवस्थिताः ।
निदानेऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत् ॥

---

त्रयोविंशोऽध्यायः ॥

अथातो नासागतरोगप्रतिषेधं व्याख्यास्यामः ॥
पूर्व्वोद्दिष्टे पूतनस्ये च जन्तोः स्नेहस्वेदौ छर्द्दनं स्रंसनञ्च ।
युक्तं भक्तं तीक्ष्णमल्पं लघुस्यादुष्णं तोयं धूमपानञ्च काले ॥
हिङ्गुव्योषं वत्सकाख्यं शिवाटी लाक्षा बीजं सौरभं कट्फलञ्च ।
उग्रा कुष्ठं तीक्ष्णगन्धाविडङ्गं श्रेष्ठं नित्यं चावपीडे करञ्जम् ॥
एतैर्द्रव्यैः सार्षपं मूत्रयुक्तं तैलं धीमान्नस्यहेतोः पचेच्च ।
नासापाके पित्तहृत्सं विधानं कार्य्यं सर्व्वं बाह्यमाभ्यन्तरञ्च ॥
हृत्वा रक्तं क्षीरवृक्षत्वचश्च साज्याःसेका योजनीयाश्च लेपाः ।
वध्यामूर्द्ध्वं रक्तपित्तोपशान्तिं नाडीवत्स्यात् पूयरक्ते चिकित्सा॥
वान्ते सम्यक् चावपीडं वदन्ति तीक्ष्णं धूमं शोधनं चात्र नस्यम्।
तेष्य नस्यं मूत्रवैरेचनीयैर्न्नाड्या चूर्णं त्वक्शौ भ्रंशथौ च ॥
कुर्य्यात्स्वेदान्मूर्द्ध्नि वातामयघ्नान् स्निग्धान्धूमान् यद्यदन्यद्धितं च।
दीप्ते रोगे पैत्तिकं संविधानं कुर्य्यात्सर्व्वं स्वादु यच्छीतलञ्च ॥
नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्द्ध्नि वस्तिश्च नित्यम्।
बलातैलं सर्व्वथैवोपयोज्यं वातव्याधावन्यदुक्तञ्च यद्यत् ॥
नासास्रावे घ्राणतस्तु चूर्णमुक्तं नाड्या देयं योऽवपीडश्च तीक्ष्णः ।
तीक्ष्णं धूमं देवदार्व्वग्निकाभ्यां मांसं वाजं युक्तमत्रादिशन्ति ॥
नासाशोषे क्षीरसर्पिः प्रधानं सिद्धन्तैलं चाणुकल्पे च नस्ये ।

सर्प्पिःपानं भोजनं जाङ्गलैश्च स्नेहः स्वेदः स्वैहिकश्चापि धूमः॥
शेषान् रोगान् घ्राणजान् सन्नियच्छेदुक्तं तेषां यद्यथासम्विधानम्।

---

## चतुर्विंशोऽध्यायः॥

अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः॥

नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः।
सन्धारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम्॥
चयङ्गता मूर्द्धनि मारुतादयः पृथक्समस्ताश्च तथैव शोणितम्।
प्रकोप्यमाना विविधैः प्रकोपणैर्नृणां प्रतिश्यायकरा भवन्ति हि॥
शिरोगुरुत्वं क्षवथोः प्रवर्त्तनं तथाङ्गमर्द्दः परिहृष्टरोमता।
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः॥

आनद्धा पिहिता नासा तनुस्रावप्रवर्त्तिनी।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा॥
स्वरोपघातश्च भवेत्प्रतिश्यायेऽनिलात्मके।
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके॥
कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णाभिपीडितः।
स धूमं सहसा वह्निं वमतीव च मानवः॥
कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः।
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरोमुखः॥
शिरोगलौष्ठतालूनां कण्डूयनमतीव च।
भूत्वा भूत्वा प्रतीश्यायो योऽकस्माद्विनिवर्त्तते॥
सम्पक्वो वाप्यपक्वो वा स सर्व्वप्रभवः स्मृतः।।

लिङ्गानि चैव सर्व्वेषां पीनसानां च सर्व्वजे ॥
रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्त्तते ।
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥
दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च ।
मूर्च्छन्ति चात्र क्रमयः श्वेताः स्निग्धास्तथाणवः ॥
क्रिमिमूर्द्धविकारेण समानं चास्य लक्षणम् ।
प्रक्लिद्यति पुनर्न्नासा पुनश्च परिशुष्यति ॥
मुहुरानह्यते चापि मुहुर्व्विव्रियते तथा ।
निश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धान्न वेत्ति च ॥
एवं दुष्टप्रतिश्यायं जानीयात्कृच्छ्रसाधनम् ।
सर्व्व एव प्रतिश्याया नरस्याप्रतिकारिणः ॥
कालेन रोगजनना जायन्ते दुष्टपीनसाः ।
बाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ॥
कासाग्निसादशोफांश्च वृद्धाः कुर्व्वन्ति पीनसाः ॥

नवं प्रतिश्यायमपास्य सर्व्वमुपाचरेत्सर्प्पिष एव पानैः ।
स्वेदैर्व्विचित्रैर्व्वमनैश्च युक्तैः कालोपपन्नैरवपीडनैश्च ॥
अपच्यमानस्य हि पाचनार्थं स्वेदो हितोऽम्लैरहिमश्च भोज्यः ।
निषेव्यमाणं पयसार्द्रकं वा सम्पाचयेदिक्षुविकारयोगैः ॥
पक्वं घनं चाप्यवलम्बमानं शिरोविरेकैरपकर्षयेत्तम् ।
विरेचनास्थापनधूमपानैरवेक्ष्य दोषान् कवलग्रहैश्च ॥
निवातशय्यासनचेष्टनानि मूर्द्ध्नो गुरूष्णश्च तथैव वासः ।
तीक्ष्णा विरेकाः शिरसः सधूमा रूक्षं यवान्नं विजया च सेव्या॥
शीताम्बुयोषिच्छिशिरावगाहचिन्तातिरूक्षाशनवेगरोधान् ।

शोकञ्च मद्यानि नवानि चैव विवर्ज्जयेत्पीनसरोगजुष्टः ॥
छर्द्यङ्गसादज्वरगौरवार्त्तमरोचकारत्यतिसारयुक्तम् ।
विलङ्घनैः पाचनदीपनीयैरुपाचरेत्पीनसिनं यथावत् ॥
बहुद्रवैर्व्वातकफोपसृष्टं प्रच्छर्दयेत्पीनसिनं वयःस्थम् ।
उपद्रवांश्चापि यथोपदेशं स्वैर्भेषजैर्भोजनसंविधानैः ।
जयेद्विदित्वा मृदुतां गतेषु प्राग्लक्षणोक्तमथादिशेच्च ।
वातिके तु प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम् ।
पञ्चभिर्ल्लवणैः सिद्धं प्रथमेन गणेन च ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।
पित्तरक्तोत्थयोः पेयं सर्पिर्म्मधुरकैः शृतम् ॥
परिषेकान्प्रदेहांश्च कुर्य्यादपिच शीतलान् ।
श्रीसर्ज्जरसपत्तङ्गप्रियङ्गुमधुशर्करा: ॥
द्राक्षामधूलिकागोजीश्रीपर्णीमधुकैस्तथा ।
युज्यन्ते कवलाश्चात्र विरेको मधुरैरपि ॥
धवत्वक्त्रिफलाश्यामातिल्वकैर्मधुकेन च ।
श्रीपर्णीरजनीमिश्रैः क्षीरे दशगुणे पचेत् ॥
तैलं कालोपपन्नं तन्नस्यं स्यादनयोर्हितम् ।
कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥
यवाग्वा वामयेद्वान्तः कफघ्नं क्रममाचरेत् ।
उभे बले बृहत्यौ च विडङ्गं सत्रिकण्टकम् ॥
श्वेतामूलं सहां भद्रां वर्षाभूञ्चात्र संहरेत् ।
तैलमेभिर्व्विपक्वन्तु नस्यमस्योपकल्पयेत् ॥
सरलाकिणिहीदारुनिकुम्भेङ्गुदिभिः कृताः ।

वर्त्तयश्चोपयोज्याःस्युर्धूमपाने यथाविधि ॥
सर्पीं षि कटुतिक्तानि तीक्ष्णधूमाः कटूनि च ।
भेषजान्युपयुक्तानि हन्युः सर्व्वप्रकोपजम् ॥
रसाञ्जने सातिविषे मुस्तायां भद्रदारुणि ।
तैलं विपक्वं नस्यार्थे विदध्याच्चात्र बुद्धिमान् ॥
मुस्तातेजोवतीपाठाकट्फलं कटुका वचा ।
सर्षपाः पिप्पलीमूलं पिप्पल्यः सैन्धवाग्निकौ ॥
तुल्यं करञ्जवीजञ्च लवणं भद्रदारु च ।
एतैः कृतं कषायन्तु कवले संप्रयोजयेत् ॥
हितं मूर्द्धविरेकेण तैलमेभिर्व्विपाचितम् ।
क्षीर मर्द्धजले क्वाथ्यं जाङ्गलैश्च पक्षिभिः ।
पुष्पैर्व्विमिश्रं जलजैर्वातघ्नै रौषधैरपि ॥
हिमे क्षीरावशिष्टेऽस्मिन् घृतमुत्पाद्य यत्नतः ॥
सर्व्वगन्धासितानन्ता मधुकं चन्दनं तथा ।
आवाप्य विपचेद्भूयो दशक्षीरन्तु तद्घृतम् ॥
नस्यप्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ।
यथास्वं दोषशमनैस्तैलं कुर्याच्च यत्नतः ॥
समूलपित्तास्तूद्दिष्टाः क्रियाः क्रमिषु योजयेत् ।
यापनार्थं क्रमिघ्नानि भेषजानि च बुद्धिमान् ॥

---

पञ्चविंशोऽध्यायः ॥

अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥

शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥
सूर्य्यावर्त्तान्तवाताख्यार्द्धावभेदकशङ्खकैः ।
एकादशप्रकारस्य लक्षणं संप्रवक्ष्यते ॥

यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रानिशिचातिमात्रम्।
बन्धोपतापैश्च भवेद्विशेषः शिरोऽभितापः ससमीरणेन ॥
यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमवती च नासा ।
शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात्॥
शिरोगलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च ।
शूनाक्षिकूटं वदनं च यस्य शिरोऽभितापः स कफप्रकोपात् ॥
शिरोऽभितापे त्रितयप्रवृत्ते सर्व्वाणि लिङ्गानि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥
वसाबलासक्षतसम्भवानां शिरोगतानामिह संक्षयेण ।
क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्॥
संस्वेदनच्छर्द्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥
निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः॥
घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोऽभितापः क्रिमिभिः स घोरः।
सूर्य्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम् ॥
विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च ।
शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च ॥
तं भास्करावर्त्तमुदाहरन्ति सर्व्वात्मकं कष्टतमं विकारम् ।
दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटां सुरुजां सुतीव्राम् ॥
कुर्व्वन्ति साक्षिभ्रुवशङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ।

गण्डस्य पार्श्वेषु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ॥
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ।
यस्योत्तमाङ्गार्द्धमतीव जन्तोः सम्भेदतोदभ्रमशूलजुष्टम् ॥
पक्षाद्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं त्रितयाद्व्यवस्येत् ।
शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तैः ॥
रुजः सुतीव्राः प्रतनोति मूर्द्ध्नि विशेषतश्चापि हि शङ्खयोस्तु ।
सुकष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविदः पुराणाः॥
व्याधिं वदन्त्युद्गतमृत्युकल्पं भिषक्सहस्रैरपि दुर्न्निवारम् ॥

---

## षड्विंशोऽध्यायः ॥

अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ॥
वातव्याधिविधिः कार्य्यः शिरोरोगेऽनिलात्मके ।
पयोऽनुपानं सेवेत घृतं तैलमथापि वा ॥
मुद्गान् कुलत्थान्माषांश्च खादेच्च निशि केवलान् ॥
कटूष्णांश्च ससर्प्पिष्कानुष्णं चानु पयः पिवेत् ।
पिवेद्वा पयसा तैलं तत्कल्कं वापि मानवः ॥
वातघ्नसिद्धैः क्षीरैश्च सुखोष्णैः सेकमादिशेत् ।
तत्सिद्धैः पायसैर्व्वापि सुखोष्णैर्लेपयेच्छिरः ॥
स्विन्नैर्व्वा मत्स्यपिशितैः कृशरैर्व्वा ससैन्धवैः ।
चन्दनोत्पलकुष्ठैर्व्वा सुश्लक्ष्णैर्म्मगधायुतैः ॥
स्निग्धस्य तैलं नस्यं स्यात्कुलीररससाधितम् ।
वरुणादौ गणे क्षुण्णे क्षीरमर्द्धोदकं पचेत् ॥

क्षीरशेषञ्च तन्मथ्य शीतं सारमुपाहरेत्।
ततो मधुरकैः सिद्धं नस्ये तत्पूजितं हविः॥
तस्मिन्विपक्के क्षीरे च पेयं सर्पिः सशर्करम्।
धूमञ्चास्य यथाकालं स्नैहिकं योजयेद्भिषक्॥
पानाभ्यञ्जननस्येषु वस्तिकर्म्मणि सेचने।
विदध्यात्तैह्ततं धीमान् बलातैलमथापि वा॥
भोजयेच्च रसैः स्निग्धैः पयोभिर्व्वा सुसंस्कृतैः।
पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेत्॥
शिरोलेपैः ससर्पिष्कैः परीषेकैश्च शीतलैः।
क्षीरेक्षुरसधान्याम्लमस्तुक्षौद्रसिताजलैः॥
नलवञ्जुलकल्हारचन्दनोत्पलपद्मकैः।
शङ्खशैवलयष्ट्याह्वमुस्ताम्भोरुहसंयुतैः॥
शिरःप्रलेपः सघृतैर्व्वैसर्प्यैश्च तथाविधैः।
मधुरैश्च सुखालेपैर्न्नस्यकर्म्मभिरेव च॥
आस्थापनैर्व्विरेकैश्च पथ्यैश्च स्नेहवस्तिभिः।
क्षीरसर्पिर्हितं नस्यं वसा वा जाङ्गला शुभा॥
उत्पलादिविपक्केन क्षीरेणास्थापनं हितम्।
भोजनं जाङ्गलरसैः सर्पिषा चानुवासनम्॥
मधुरैः क्षीरसर्पिस्तु स्नेहने च सशर्करम्।
पित्तरक्तप्रसुद्दिष्टं यच्चान्यदपि तद्धितम्॥
कफोत्थितं शिरोरोगं जयेत्कफनिवारणैः।
शिरोविरेकैर्व्वमनैस्तीक्ष्णैर्गण्डूषधारणैः॥
अच्छञ्च पाययेत्सर्पिः स्वेदयेच्चाप्यभीक्ष्णशः।

शिरोमधुकसारेण स्निग्धश्चापि विरेचयेत् ॥
इङ्गुदस्य त्वचा वापि मेषशृङ्ग्या च वा भिषक् ।
आभ्यामेव कृता वर्त्तीर्धूमपाने प्रयोजयेत् ॥
श्रेयं कट्फलचूर्णञ्च कवलाश्च कफापहाः ।
शरलाकुष्ठशार्ङ्गेष्टादेवकाष्ठैः सरोहिषैः ॥
क्षारपिष्टैः सलवणैः सुखोष्णैर्लेपयेच्छिरः ।
यवषष्टिकयोश्चान्नं व्योषक्षारसमायुतम् ॥
पटोलमुद्गकौलत्थैर्मात्रावद्भोजयेद्रसैः ।
शिरोरोगे त्रिदोषोत्थे त्रिदोषघ्नो विधिर्हितः ॥
सर्पिःपानं विशेषेण पुराणं वा दिशन्ति हि ।
क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः ॥
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम् ।
क्षयकासापहं चात्र सर्पिः पथ्यतमं विदुः ॥
क्रिमिभिर्भक्ष्यमाणस्य वक्ष्यन्ते शिरसः क्रियाः ।
नस्यं हि शोणितं दद्यात्तेन मूर्च्छन्ति जन्तवः ॥
मत्ताः शोणितगन्धेन समायान्ति यतस्ततः ।
तेषां निर्हरणं कार्य्यं ततो मूर्द्धविरेचनैः ॥
हृस्वशिग्रुकवीजैर्वा कांस्यनीलीसमायुतैः ।
क्रिमिघ्नैरवपीडैश्च मूत्रपिष्टैरुपाचरेत् ॥
पूतिमत्स्ययुतान् धूमान् क्रिमिघ्नांश्च प्रयोजयेत् ।
भोजनानि क्रिमिघ्नानि पानानि विविधानि च ॥
सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादिभेषजम् ।
भोजनं जाङ्गलप्रायं क्षीरान्नविकृतैर्घृतम् ॥

तयार्द्धभेदके व्याधौ प्राप्तमन्यच्च यद्भवेत् ।
शिरीषमूलकफलैरवपीडोऽनयोर्हितः ॥
वंशमूलककर्पूरैरवपीडं प्रयोजयेत् ।
अवपीडो हितश्चात्र वचामागधिकायुतः ॥
मधुकेनावपीडो वा मधुना सह संयुतः ।
मनःशीलावपीडो वा मधुना चन्दनेन वा ॥
तेषामन्ते हितं नस्यं सर्पिर्म्मधुरसान्वितम् ।
सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥
सर्पिस्तैलयुतो लेपो द्वयोरपि सुखावहः ।
एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तेरितो विधिः ।
सिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च विधातव्यो वातपित्तविनाशनः ।
मधुमस्तकसंयावघृतपूरैश्च भोजनैः ॥
क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके ।
जाङ्गलानां रसैः स्निग्धैराहारश्चात्र शस्यते ॥
शतावरीं तिलान् कृष्णान्मधुकं नीलमुत्पलम् ।
दूर्व्वां पुनर्न्नवाञ्चैव लेपे साध्ववचारयेत् ॥
महासुगन्धामथ वा पालिन्दीञ्चाम्लपेषिताम् ।
शीतांश्चात्र परीषेकान् प्रदेहानत्र योजयेत् ॥
अवपीडश्च देयोऽत्र सूर्य्यावर्त्तनिवारणः ।
कृमिक्षयकृतौ हित्वा शिरोरोगेषु बुद्धिमान् ॥
मधुतैलसमायुक्तैः शिरांस्यतिविरेचयेत् ।

पश्चात्सर्षपतैलेन ततो नस्यं प्रयोजयेत्॥
नचेच्छान्तिं व्रजत्येवं स्निग्धस्विन्नांस्ततो भिषक्।
पश्चादुपाचरेत्सम्यक् सिराणामथ मोक्षणैः॥
षट्सप्ततिर्नेत्ररोगा दशाष्टादश कर्णजाः।
एकत्रिंशद्घ्राणगताः शिरस्येकादशेह तु॥
इति विस्तरतो दृष्टाः सलक्षणचिकित्सिताः।
संहितायामभिहिताः सप्तषष्टिर्मुखामयाः॥
एतावन्तो यथास्थूलमुत्तमाङ्गगता गदाः।
अस्मिन् शास्त्रे निगदिताः सङ्ख्यारूपचिकित्सितैः॥
इति सुश्रुताचार्य्यविरचित आयुर्व्वेदशास्त्रे सुश्रुत उत्तरतन्त्रे शालाक्यतन्त्रं समाप्तम्॥

---

## सप्तविंशोऽध्यायः॥

अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः॥
बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम्।
उत्पत्तिं कारणञ्चैव सुश्रुतैकमनाः शृणु॥
स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एवच॥
शकुनी रेवती चैव पूतना चान्धपूतना॥
पूतना शीतनामा च तथैव मुखमण्डिका।
नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः॥
धात्रीमात्रोः प्राक्प्रदिष्टापचारा
च्छौचभ्रष्टान्मङ्गलाचारहीनान्।

त्रस्तान् हृष्टांस्तर्ज्जितान्क्रन्दितान्वा
पूजाहेतोर्हिंस्युरेते कुमारान्॥
ऐश्वर्य्यस्थास्ते न शक्या विशन्तो
देहं द्रष्टुं मानुषैर्विश्वरूपाः।
आप्तं वाक्यं तत्समीक्ष्याभिधास्ये
लिङ्गान्येषां यानि देहे भवन्ति॥
शूनाक्षः क्षतजसगन्धिकः स्तनद्विड्
वक्रास्यो हतचलितैकपक्ष्मनेत्रः।
उद्विग्नः सुलुलितचक्षुरल्परोदी
स्कन्दार्त्तो भवति च गाढमुष्टिवर्च्चाः॥
निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः
संरब्धः करचरणैश्च नृत्यतीव।
विण्मूत्रे सृजति विनद्य जृम्भमानः
फेणञ्च प्रसृजति तत्सखाभिपन्नः॥
स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
संस्राविव्रणपरिपीडितः समन्तात्।
स्फोटैश्च प्रततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या॥
रक्तास्यो हरितमलोऽतिपाण्डुदेहः
श्यावो वा ज्वरमुखपाकवेदनार्त्तः।
रेवत्या व्यथिततनुश्च कर्णनासं
मृद्नाति ध्रुवमभिपीडितः कुमारः॥
स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ

विच्छिन्नं सृजति च काकतुल्यगन्धिः ।
छर्द्यार्त्तो हृषिततनूरुहः कुमार
स्तृष्णालुर्भवति च पूतनागृहीतः ॥
यो द्वेष्टि स्तनमतिसारकासहिक्का
छर्दीभिर्ज्वरसहिताभिरर्द्यमानः ।
दुर्वर्णः सततमधःशयोऽम्लगन्धि
स्तं ब्रूयुर्भिषजोऽन्धपूतनार्त्तम् ॥
उद्विग्नो भृशमतिवेपते प्रहृष्टात्
संलीनः स्वपिति च यस्य चान्त्रकूजः ।
विस्राङ्गो भृशमतिसार्य्यते च यस्तं
जानीयाद्भिषगिह शीतपूतनार्त्तम् ॥
म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो
बह्वाशी कलुषसिरावृतोदरो यः ।
सोद्वेगो भवति च मूत्रतुल्यगन्धिः
स ज्ञेयः शिशुरथ मुखमण्डिकार्त्तः ॥
यः फेणं वमति विनम्यते च मध्ये
सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः ।
ज्वर्य्येत प्रततमथो वसासगन्धि
र्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥
प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविभ्रन्मुखः ।
तं बालं नचिराद्धन्ति ग्रहः सम्पूर्णलक्षणः ॥
विपरीतमतःसाध्यं चिकित्सेदचिरादितम् ।
गृहे पुराणहविषाभ्यज्य बालं शुचौ शुचिः ॥

सर्षपान् प्रकिरेत्तेषां तैलैर्दीपञ्च कारयेत्।
सदासन्निहितञ्चापि जुहुयाद्धव्यवाहनम्॥
सर्व्वगन्धौषधीवीजैर्ग्गन्धमाल्यैरलङ्कृतम्।
अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संस्मरन्॥
नमः स्कन्दाय देवाय ग्रहाधिपतये नमः।
शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम्॥
नीरुजो निर्व्विकारश्च शिशुर्म्मे जायतां ध्रुवम्॥

---

## अष्टाविंशोऽध्यायः॥

अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः॥
स्कन्दग्रहोपसृष्टानां कुमाराणाञ्च शस्यते।
वातघ्नद्रुमपत्राणां निःक्वाथः परिषेचने॥
तेषां मूलेषु सिद्धञ्च तैलमभ्यञ्जने हितम्।
सर्व्वगन्धसुरामण्डकैटर्य्यावापमिष्यते॥
देवदारुणि रास्नायां मधुरेषु द्रुमेषु च।
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत्॥
सर्षपाः सर्पनिर्म्मोको वचा काकादनी घृतम्।
उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः॥
सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्
मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत्॥
रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः।
घण्टा च देवाय बलिर्न्निवेद्यः सकुक्कुटः स्कन्दग्रहे हिताय॥

स्नानं त्रिरात्रं निशि चत्वरेषु कुर्य्यात्पुनः शालियवैर्न्नवैश्च ।
अद्भिश्च गायत्र्यभिमन्त्रिताभिः प्रज्वालनं चाहुतिभिश्च वह्नेः॥

रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ।
अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः ॥
तपसां तेजसां चैव यशसां वपुषां तथा ।
निधनं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥
ग्रहसेनापतिर्देवो देवसेनापतिर्व्विभुः ।
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥
देवदेवस्य महतः पावकस्य च यः सुतः ।
गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु ॥
रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ।
रक्तदिव्यवपुर्द्देवः पातु त्वां क्रौञ्चसूदनः ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ॥

अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ॥

बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ।
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥
सर्व्वगन्धविपक्वन्तु तैलमभ्यञ्जने हितम् ।
क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥
विपक्तव्यं घृते वापि पानीयं पयसान्वितं ।
उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥
गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ।

वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च॥
अनन्तां कुक्कुटीं बिम्बीं मर्कटीञ्चापि धारयेत्।
पक्वापक्वानि मांसानि प्रसन्नं रुधिरं पयः॥
भूतोदनो निवेद्यश्च स्कन्दापस्मारिणोऽग्रहे।
चतुःपथे च कर्त्तव्यं स्नानमस्य यतात्मना॥
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा।
विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः॥

---

त्रिंशत्तमोऽध्यायः॥

अथातः शकुनीप्रतिषेधं व्याख्यास्यामः॥
शकुन्यभिपरीतस्य कार्य्यो वैद्येन जानता।
वेतसाम्रकपित्थानां निःक्वाथः परिषेचने॥
कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशोः।
मधुकोशीरह्रीवेरसारिवोत्पलपद्मकैः॥
रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम्।
व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च॥
स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत्।
शतावरीसहगैर्व्वा(?)नागदन्तीनिदिग्धिकाः॥
लक्ष्मणां सहदेवाञ्च वृहतीञ्चापि धारयेत्।
तिलतण्डुलकं माल्यं हरितालं मनःशिला॥
बलिरेष करञ्जेषु निवेद्यो नियतात्मना।
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि॥

स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम्।
कुर्य्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः॥
अन्तरीक्षचरा देवी सर्व्वालङ्कारभूषिता।
अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु॥
दुर्द्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा।
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु॥

---

## एकत्रिंशत्तमोऽध्यायः॥

अथातो रेवतीप्रतिषेधं व्याख्यास्यामः॥
अश्वगन्धाजशृङ्गी च सारिवा सपुनर्न्नवा।
सहे विदरी च तथा कषायाः सेचने हिताः॥
तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्ज्जरसेऽपि वा॥
धवाश्वकर्णककुभधातकीतिन्दुकीषु च।
काकोल्यादिगणे चैव पानीयं सर्प्पिरिष्यते॥
कुलत्थाः शङ्खचूर्णाश्च प्रदेहाः सर्व्वगन्धिकाः।
गृध्रोलूकपुरीषाणि यवा यवफलो घृतम्॥
सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः।
वरुणारिष्टकमयं रुचकं सैन्धवं तथा॥
सततं धारयेच्चापि कृतं वा पौत्रजीविकम्।
शुक्लाः सुमनसो लाजाः पयःशाल्योदनं तथा॥
बलिर्न्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना।
सङ्गमे च भिषक्स्नानं कुर्य्याद्धात्रीकुमारयोः॥

नानावस्त्रधरा देवी चित्रमाल्यानुलेपना।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥
लम्बा कराला विनता तथैव बहुपुत्रिका।
रेवती सततं माता सा ते देवी प्रसीदतु ॥

---

## द्वात्रिंशत्तमोऽध्यायः ॥

अथातः पूतनाप्रतिषेधं व्याख्यास्यामः ॥
कपोतवङ्काऽरलुकौ वरुणः पारिभद्रकः।
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥
वचा वयस्था गोलोमी हरितालं मनःशिला।
कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग्ग इष्यते ॥
हितं घृतं तुगाक्षीर्य्यां सिद्धं मधुरकेषु च।
कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा ॥
देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः।
एलाहरेणवश्चापि योज्या उद्धूपने सदा ॥
गन्धनाकुलिकुम्भीकामज्जानो वदरस्य च।
कर्कटास्थि घृतञ्चैव धूपनं सर्षपैः सह ॥
काकादनीं चित्रफलां विम्बीं गुञ्जाञ्च धारयेत्।
मत्स्यौदनञ्च कुर्व्वीत कृशरां पललं तथा ॥
शरावसम्पुटे कृत्वा बलिं शून्यगृहे हरेत् ॥
उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते।
पूज्या च पूतना देवी बलिभिः सोपहारकैः।

मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा ॥
शून्यागाराश्रिता देवी दारकं पातु पूतना ।
दुर्द्दर्शना सुदुर्गन्धा कराला मेघकालिका ॥
भिन्नागाराश्रया देवी दारकं पातु पूतना ॥

---

## त्रयस्त्रिंशत्तमोऽध्यायः ॥

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः ॥
तिक्तकद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने ।
सुरासौवीरकं कुष्ठं हरितालं मनःशिला ॥
तथा सर्ज्जरसश्चैव तैलार्थमुपदिश्यते ॥
पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥
शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ।
सर्व्वगन्धैः प्रदेहश्च गात्रे ध्वत्त्णोश्च शीतलैः ॥
पुरीषं कौक्कुटं केशांश्चर्म्म सर्प्पत्वचन्तथा ।
जीर्णाञ्च भिक्षुसङ्घाटीं धूपनायोपकल्पयेत् ॥
कुक्कुटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत् ।
मांसमामं तथा पक्वं शोणितञ्च चतुःपथे ॥
निवेद्यमन्तश्च गृहे शिशोरक्षानिमित्ततः ।
शिशोश्च स्नपनं कुर्य्यात्सर्व्वगन्धादिकैः शुभैः ॥
कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ।
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ॥

अथातःशीतपूतनाप्रतिषेधं व्याख्यास्यामः ॥
कपित्थं सुवहां विम्बीन्तथा विल्वं प्रचीबलम् ।
नन्दीं भल्लातकीञ्चापि परिषेके प्रयोजयेत् ।
वस्तमूत्रं गवां मूत्रं मुस्तञ्च सुरदारु च ॥
कुष्ठञ्च सर्व्वगन्धाञ्च तैलार्थमवचारयेत् ।
रोहिणीसर्ज्जखदिरपलाशककुभत्वचः ॥
निःक्वाथ्य तस्मिन्निःक्वाथे सक्षीरं विपचेद्घृतम् ॥
गृध्रोलूकपुरीषाणि वस्तगन्धामहेस्त्वचः ॥
निम्बपत्राणि मधुकं धूपनार्थे प्रयोजयेत् ।
धारयेदपि लम्बाञ्च गुञ्जां काकादनीं तथा ॥
नद्यां मुद्गकृतैस्त्वन्नैस्तर्पयेच्छीतपूतनाम् ।
देव्यै देयश्चोपहारो वारुणीरुधिरं तथा ।
जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥
मुद्गौदनाशना देवी सुराशोणितपायिनी ।
जलाशयालया देवी पातु त्वां शीतपूतना ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ॥

अथातोमुखमण्डिकाप्रतिषेधं व्याख्यास्यामः ॥
कपित्थविल्वतर्क्कारीवांशीगन्धर्वहस्तकाः ।
कुवेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥
स्वरसैर्भृङ्गवृक्षाणां तथाजम्हरिगन्धयोः ।

तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने शिशोः ॥
मधुलिकायां पयसि लुगाक्षीव्याङ्गणे तथा ।
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥
वचासर्ज्जरसः कुष्ठं सर्पिश्चोद्धूपने हितम् ।
धारयेदपि जिह्वाश्च चाषचीरल्लिसर्प्पजाः ॥
वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ।
मनःशिलाञ्चोपहरेद्गोष्ठमध्ये बलिं तथा ॥
पायसं सपुरोडाशं बल्यर्थमुपहारयेत् ।
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥
अलङ्कृता रूपवती सुभगा कामरूपिणी ।
गोष्ठमध्यालयरता पातु त्वां सुखमण्डिका ॥

---

## षट्त्रिंशत्तमोऽध्यायः ॥

अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ॥
विल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने ।
सुरासौवीरधान्याम्लैः परिषेकश्च शस्यते ॥
प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ।
पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥
पञ्चमूलद्वयक्वाथे क्षीरे मधुरकेषु च ।
पचेद्घृतञ्च मेधावीखर्ज्जूरीमस्तकेऽपि च ॥
वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत् ।
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥

सिद्धार्थकवचाहिङ्गुकुष्ठश्चैवाक्षतैः सह ।
भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥
मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे ।
धूपः सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥
तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ।
कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥
अधस्ताद्वटवृक्षस्य स्नपनं चोपदिश्यते ।
बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः ॥
बालं पालयिता देवो नैगमेषोऽभिरक्षतु ॥

---

## सप्तत्रिंशोऽध्यायः ॥

अथातोग्रहोत्पत्तिमध्यायं व्याख्यास्यामः ॥
नव स्कन्दादयः प्रोक्ता बालानां य इमे ग्रहाः ।
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥
एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः ।
सृष्टाः शरवनस्थस्य रक्षितस्यात्मतेजसा ॥
स्त्रीविग्रहा ग्रहा ये तु नानारूपा मयेरिताः ।
गङ्गोमाकृत्तिकानाम्ना ते भागा राजसा मताः ॥
नैगमेषस्तु पार्वत्या सृष्टो मेषाननो ग्रहः ।
कुमारधारी देवस्य गुहस्यात्मसमः सखा ॥
स्कन्दापस्मारसंज्ञो यः सोऽग्निनाग्निसमद्युतिः ।
स च स्कन्दसखा नाम विशाख इति चोच्यते ॥

स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा।
बिभर्त्ति चापरां संज्ञां कुमार इति स ग्रहः॥
बाललीलाधरो योऽयं देवो रुद्राग्निसम्भवः।
मिथ्याचारेषु भगवान् स्वयं नैष प्रवर्त्तते॥
कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः।
गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः॥
ततो भगवति स्कन्दे सुरसेनापतौ कृते।
उपतस्थुर्ग्रहाः सर्व्वे दीप्तशक्तिधरं गुहम्॥
ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै।
तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत्॥
ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत्।
तिर्य्यग्योनिं मानुषञ्च दैवञ्च त्रितयं जगत्॥
परस्परोपकारेण वर्त्तते धार्य्यतेऽपि च।
देवा मनुष्यान् प्रीणन्ति तैर्य्यग्योनींस्तथैव च॥
वर्त्तमानैर्य्यथा कालं शीतवर्षोष्णमारुतैः।
इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः॥
नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान्।
भागधेयं विभक्तञ्च शेषं किञ्चिन्न विद्यते॥
तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति।
कुलेषु येषु नेज्यन्ते देवाः पितर एव च॥
ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा।
निवृत्ताचारशौचेषु परपाकोपभोजिषु॥
उत्सन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु।

गृहेषु तेषु ये बालास्तान्गृह्णीध्वमशङ्किताः ॥
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ।
एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चाप्यतः ॥
ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः ।
वैकल्यं मरणं चाशु ध्रुवं स्कन्दग्रहे मतम् ॥
स्कन्दग्रहोऽत्युग्रतमः सर्व्वेष्वेव यतःस्मृतः ।
अन्योवा सर्व्वरूपस्तु न साध्यो. ग्रह उच्यते ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ॥

अथातोयोनिव्यापत्प्रतिषेधं व्याख्यास्यामः ॥
अदृष्टलिङ्गं पुरुषं यात्यर्थमुपसेवते ।
रूक्षदुर्व्वलबालायास्तस्या वायुः प्रकुप्यति ॥
स दुष्टो योनिमासाद्य योनिरोगाय कल्पते ।
त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु
विंशतिर्व्यापदोयोनेर्न्निर्दिष्टा रोगसङ्ग्रहे ।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च ॥
जायन्ते वीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।
उदावर्त्ता तथा बन्ध्या विप्लुता च परिप्लुता ।
वातला चेति वातोत्था पित्तोत्था रुधिरक्षरा ।
वामिनी स्रंसिनी चापि पुत्रघ्नीपित्तला च या ॥
अत्यानन्दा च या योनिः कर्णिनी चरणाद्वयम् ।
श्लैष्मिका सकफा ज्ञेया षण्डी च फलिनी तथा ॥
महती सूचिवक्त्रा च सर्व्वजेतित्रिदोषजा ।

सफेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति ॥
बन्ध्यां नष्टार्त्तवां विद्याद्विप्लुतां नित्यवेदनाम् ।
परिप्लुतायां भवति ग्राम्यधर्म्मे रुजा भृशम् ॥
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ।
सदाहं प्रक्रिरत्यस्रं यस्याः सा लोहितक्षरा ।
सवातमुद्गिरेद्बीजं वामिनी रजसायुतम् ॥
प्रस्रंसिनी स्पन्दते तु क्षोभिता दुःप्रसूश्च या ।
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥
अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्र्यो भवेत् ॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्म्मेण गच्छति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यान्तु जायते ॥
मैथुनाचरणात्पूर्व्वं पुरुषादतिरिच्यते ।
बहुशश्चातिचरणादन्या बीजं न विन्दति ॥
श्लेष्मला पिच्छिला योनिः कण्डूयुक्तातिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत् ॥
अनार्त्तवस्तना षण्डी खरस्पर्शा च मैथुने ।
अतिकायगृहीतायास्तरुण्याः फलिनी भवेत् ॥
विवृतातिमहायोनिः सूचीवक्त्रातिसंवृता ।
सर्व्वलिङ्गसमुत्थाना सर्व्वदोषप्रकोपजा ॥
चतसृष्वपि चाद्यासु सर्व्वलिङ्गोच्छ्रितिर्भवेत् ।
पञ्चासाध्या भवन्तीमा योनयः सर्व्वदोषजाः ॥

प्रतिदोषन्तु साध्यासु स्नेहादिक्रम इष्यते ।
दद्यादुत्तरवस्तींश्च विशेषेण यथोदितान् ॥
कर्कशां शीतलां स्तब्धामपस्पर्शाञ्च मैथुने ।
कुम्भीस्वेदैरुपचरेत्सानूपौदकसंयुतैः ॥
मधुरौषधसंयुक्तान् वेशवारांश्च योनिषु ।
निक्षिपेद्धारयेच्चापि पिचुन्तैलमतन्द्रितः ॥
धावनानि च पथ्यानि कुर्वीतापूरणानि च ।
ओषचोषान्वितास्वुक्तं कुर्य्याच्छीतं विधिं भिषक् ।
दुर्गन्धां पिच्छिलां चापि चूर्णैः पञ्चकषायजैः ॥
पूरयेद्राजवृक्षादिकषायैश्चापि धावनम् ॥
योन्यान्तु पूयस्राविन्यां शोधनद्रव्यसंभृतैः ।
सगोमूत्रैः सलवणैः पिण्डैरापूरणं हितम् ॥
बृहतीफलकल्कस्य द्विहरिद्रायुतस्य च ।
कण्डूमतीमपस्पर्शां पूरयेद्भूपयेत्तथा ॥
वर्त्तिं प्रदद्यात्कर्णिन्यां शोधनद्रव्यसंभृताम् ।
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ॥
पिधाय वेशवारेण ततो बन्धं समाचरेत् ।
प्रतिदोषं विदध्याच्च सुरारिष्टासवान्भिषक् ॥
प्रातःप्रातर्निषेवेत रसोनादुद्धृतं रसम् ।
क्षीरमांसरसप्रायमाहारं विदधीत च ॥
शुक्रार्त्तवादयो दोषाः स्तनरोगाश्च कीर्त्तिताः ।
क्लैव्योत्थानानि मूढस्य गर्भस्य विधिरेव च ॥
गर्भिणीप्रतिरोगेषु चिकित्सा चाप्युदाहृता ।

तां सर्व्वथा प्रयुञ्जीत योनिव्यापत्सु बुद्धिमान् ॥
अपप्रजातारोगांश्च चिकित्से दुत्तराद्भिषक् ।

इति सुश्रुताचार्य्यविरचित आयुर्व्वेदशास्त्रे सुश्रुतउत्तर-तन्त्रे कौमारभृत्यं समाप्तम् ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ॥

अथातो ज्वरप्रतिषेधं व्याख्यास्यामः ॥
येनामृतमपां मध्यादुद्धृतं पूर्व्वजन्मनि ।
यतोऽमरत्वं सम्प्राप्तास्त्रिदशास्त्रिदिवेश्वरात् ॥
शिष्यास्तं देवमासीनं पप्रच्छुः सुश्रुतादयः ।
व्रणस्योपद्रवाः प्रोक्ताः व्रणिनामप्यतः परम् ॥
समासाद्व्यासतश्चैव ब्रूहि नो भिषजांवर ।
उपद्रवेण जुष्टस्तु व्रणः कृच्छ्रेण सिध्यति ॥
उपद्रवास्तु व्रणिनः कृच्छ्रसाध्याः प्रकीर्त्तिताः ।
प्रक्षीणबलमांसस्य दोषधातुपरिक्षयात् ॥
तस्मादुपद्रवान्कृत्स्नान् ब्रूहि नः सचिकित्सितान् ।
सर्व्वकायचिकित्सासु ये दृष्टाः परमर्षिभिः ॥
तेषां तद्वचनं श्रुत्वा प्राब्रवीद्भिषजांवरः ।
ज्वरमादौ प्रवक्ष्यामि सरोगानीकराट् स्मृतः ॥
रुद्रकोपाग्निसम्भूतः सर्वभूतप्रतापनः ।
तैस्तैर्नामभिरित्येषां सत्वानां परिकीर्त्त्यते ॥
जन्मादौ निधने चैव प्रायो विशति देहिनः ।
अतः सर्वविकाराणामयं राजा प्रकीर्त्तितः ॥

ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् ।
कर्म्मणा लभते यस्माद्देवत्वं मानुषादपि ॥
पुनश्चैव च्युतः स्वर्गान्मानुष्यमनुवर्त्तते ।
तस्मात्ते देवभागेन सहन्ते मानुषा ज्वरम् ॥
शेषाः सर्वे विपद्यन्ते तैर्य्यग्योना ज्वरार्दिताः ।
स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणं तथा ॥
विकारा युगपद्यस्मिन्ज्वरः स परिकीर्त्तितः ।
दोषैः पृथक समस्तैश्च द्वन्द्वैरागन्तुरेव च ॥
अनेककारणोत्पन्नः स्मृतस्त्वष्टविधो ज्वरः ।
दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपनैः ॥
व्याप्य देहमशेषेण ज्वरमापादयन्ति हि ।
दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमुष्मणा ॥
सहिता समागत्य रसस्वेदप्रवाहिणाम् ।
स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम् ॥
निरस्य बहिरुष्माणां पक्तिस्थानाच्च केवलम् ।
शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम् ॥
जनयन्त्यथ वृद्धिञ्च स्ववर्णञ्च त्वगादिषु ।
मिथ्यातियुक्तैरपि च स्नेहाद्यैः कर्म्मभिर्नृणाम् ॥
विविधादभिघाताच्च रोगोत्थानात्प्रपाकतः ।
श्रमात् क्षयादजीर्णाच्च विषात् सात्म्यर्त्तुपर्य्ययात् ॥
ओषधीपुष्पगन्धाच्च शोकान्नक्षत्रपीडनात् ।
अभिचाराभिशापाभ्यां मनोभूताभिशङ्कया ॥
स्त्रीणामपप्रजातानां प्रजातानां तथाहितैः ।

स्वन्यावतरणे चैव ज्वरो दोषैः प्रवर्त्तते ॥
तैर्व्वेगवद्भिर्व्बहुधा समुद्भ्रान्तैर्विमार्गगैः ।
विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः ॥
कणद्धि चाप्यपान्धातु यस्मात्तस्माज्ज्वरातुरः ।
भवत्यत्युष्णगात्रश्च नच स्विद्यति सर्व्वशः ॥
श्रमोऽरतिर्व्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥
जृम्भाङ्गमर्दौ गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे ॥
सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्द्दाहः कफान्नान्नाभिनन्दनम् ॥
सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे ।
द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः ॥
वेपथुर्व्विषमो वेगः कण्ठौष्ठमुखशोषणम् ।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता ।
जृम्भाध्मानं तथा शूलं भवत्यनिलजे ज्वरे ॥
वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ।
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥
प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥
गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता ।
स्रोतोरोधो रुगल्पत्वं प्रसेको मधुरास्यता ॥

नात्युष्णगात्रताच्छर्दिरङ्गसादोऽविपाकता ।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥
निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गतारुचिः ।
तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा ॥
पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता ।
रसना परुषा कृष्णा सन्धिमूर्द्धास्थिजा रुजः ।
निर्भुग्नकलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ।
प्रलापः स्रोतसाम्पाकः कूजनं चेतनाच्युतिः ॥
स्वेदमूत्रपुरीषाणामल्पशः सुचिरात्स्रुतिः ।
सर्व्वजे सर्व्वलिङ्गानि विशेषश्चात्र मे शृणु ॥
नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतस्वरः ।
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥
सास्रनिर्भुग्नहृदयो भक्तद्वेषी हतप्रभः ।
श्वसन् निपतितः शेते प्रलापोपद्रवायुतः ॥
तमभिन्यासमित्याहुर्हतौजसमथापरे ।
सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥
निद्रोपेतमभिन्यासं क्षीणमेनं हतौजसम् ।
संन्यस्तगात्रं संन्यासं विद्यात्सर्व्वात्मके ज्वरे ॥
ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात् ॥
स गात्रस्तम्भशीताभ्यां शयने स्यादचेतनः ।
अपि जाग्रत्स्वपन् जन्तुस्तन्द्रालुश्च प्रलापवान् ॥
संहृष्टरोमा स्रस्ताङ्गो मन्दसन्तापवेदनः ।
ओजोनिरोधजं तस्य जानीयात्कुशलो भिषक् ॥

सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥
द्विदोषोच्छ्रायलिङ्गास्तु द्वन्द्वजास्त्रिविधाः स्मृताः ।
जृम्भाध्मानमदोत्कम्पपर्व्वभेदपरिक्षयाः ॥
तृट्प्रलापाभितापाः स्युर्ज्वरे मारुतपैत्तिके ।
शूलकासकफोत्क्लेशशीतवेपथुपीनसाः ॥
गौरवारुचिविष्टम्भा वातश्लेष्मसमुद्भवे ।
शीतदाहारुचिस्तम्भस्वेदमोहमदभ्रमाः ॥
कासाङ्गसाद हृल्लासा भवन्ति कफपैत्तिके ।
क्षामाणां ज्वरमुक्तानां मिथ्याहारविहारिणाम् ॥
दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ।
सततान्येद्युष्कत्र्याख्यचातुर्थान्सप्रलेपकान् ॥
कफस्थानविभागेन यथासङ्ख्यं करोति हि ।
अहोरात्रादहोरात्रात्स्थानात् स्थानं प्रपद्यते ॥
ततश्चामाशयं प्राप्य घोरं कुर्य्याज्ज्वरं नृणाम् ।
तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः ॥
दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत् ।
कफस्थानेषु वा दोषस्तिष्ठन् द्वित्रिचतुर्षु वा ॥
विपर्य्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान् ।
परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः ॥
आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे ।
वाताधिकत्वात्प्रवदन्ति तज्ज्ञास्तृतीयकञ्चापि चतुर्थकञ्च ।
औपात्यके मद्यसमुद्भवे च हेतुं ज्वरे पित्तकृतं वदन्ति ॥

प्रलेपकं वातबलासकञ्च कफाधिकत्वेन वदन्ति तज्ज्ञाः ॥
मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ।
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ॥
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ।
द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ ॥
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमः स्मृतः ।
प्रसक्तश्चाभिघातोत्थश्चेतनाप्रभवस्तु यः ॥
रात्र्यह्नोः षट्सु कालेषु कीर्त्तितेषु यथा पुरा ।
प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः ॥
सचापि विषमो देहं न कदाचिद्विमुञ्चति ।
ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ॥
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ।
धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते ॥
अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः ।
दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः ॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ।
सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥
मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ।
कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ॥
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ।
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥

सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ।
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ॥
अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ।
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥
वातेनोद्धूयमानस्तु यथा पूर्य्येत सागरः ।
वातेनोदीरितास्तद्वद्दोषाः कुर्वन्ति वै ज्वरान् ॥
यथा वेगागमे वेलां छादयित्वा महोदधेः ।
वेगहानौ तदेवाम्भस्तत्रैवान्तर्निधीयते ॥
दोषवेगोदये तद्वदुदीर्य्येत ज्वरोऽस्य वा ।
वेगहानौ प्रशाम्येत यथाम्भः सागरे तथा ॥
विविधेनाभिघातेन ज्वरो यः सम्प्रवर्त्तते ।
यथादोषप्रकोपन्तु तथा मन्येत तं ज्वरम् ॥
श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः ।
अभक्तारुक् पिपासा च तोदो मूर्च्छा बलक्षयः ॥
ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा ।
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभक्तारुक् ॥
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ।
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णाभिजायते ।
भूताभिषङ्गादुद्वेगहास्यकम्पनरोदनम् ॥
श्रमक्षयाभिघातेभ्यो देहिनां कुपितोऽनिलः ।
पूरयित्वाखिलं देहं ज्वरमापादयेद्भृशम् ॥
रोगाणां तु समुत्थानाद्विदाहागन्तुतस्तथा ।

ज्वरोऽपरः सम्भवति तैस्तैरन्यैश्च हेतुभिः ॥
दोषाणां सतु लिङ्गानि कदाचिन्नातिवर्त्तते ।
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ।
हतप्रभेन्द्रियं चामं दुरात्मानमुपद्रुतम् ।
गम्भीर तीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत् ।
हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिकः ॥
ज्वरवेगो भवेत्तीव्रो यथापूर्वं सुखक्रियः ।
इति ज्वराः समाख्याताः कर्म्मेदानीं प्रवक्ष्यते ॥
ज्वरस्य पूर्वरूपेषु वर्त्तमानेषु बुद्धिमान् ।
पाययेत घृतं स्वच्छं ततः स लभते सुखम् ॥
विधिर्म्मारुतजेष्वेष पैत्तिकेषु विरेचनम् ।
मृदु प्रच्छर्दनं तद्वत्कफजेषु विधीयते ॥
सर्वं द्विदोषजेषूक्तं यथादोषं विकल्पयेत् ।
अस्नेहनीयोऽशोध्यश्च संयोज्यो लङ्घनादिना ॥
रूपप्राग्रूपयोर्विद्यान्नानात्वं वह्निधूमवत् ।
अव्यक्तरूपेषु हितमेकान्तेनापतर्प्पणम् ॥
आमाशयस्थे दोषे तु सोत्क्लेशे वमनं परम् ।
आनद्धस्तिमितैर्द्दोषैर्य्यावन्तं कालमातुरः ॥
कुर्य्यादनशनं तावत्ततः संसर्गमाचरेत् ।
न लङ्घयेन्मारुतजे क्षयजे मानसे तथा ॥
अलङ्घ्यास्वपि ये पूर्वं द्विव्रणीये प्रकीर्त्तिताः
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ॥

ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम्।
सृष्टमारुतविण्मूत्रं क्षुत्पिपासाऽसहं लघुम्॥
प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात्सुलङ्घितम्।
बलक्षयस्तृषा शोषस्तन्द्रानिद्राभ्रमक्लमाः॥
उपद्रवाश्च श्वासाद्याः सम्भवन्त्यतिलङ्घनात्।
दीपनं कफविच्छेदि पित्तवातानुलोमनम्॥
कफवातज्वरार्त्तेभ्यो हितमुष्णाम्बु तृट्छिदम्।
तद्धि मार्द्दवकृद्दोषस्रोतसां शीतमन्यथा॥
सेव्यमानेन तोयेन ज्वरः शीतेन वर्द्धते।
पित्तमद्यविषोत्थेषु शीतलं तिक्तकैः शृतम्॥
गाङ्गेयनागरोशीरपर्पटोदीच्यचन्दनैः।
दीपनी पाचनी लघ्वी ज्वरार्त्तानां ज्वरापहा॥
अन्नकाले हिता पेया यथास्वम्पाचनैः कृता।
बहुदोषस्य मन्दाग्नेः सप्तरात्रात्परं ज्वरे॥
लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते।
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः॥
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्।
पञ्चमूलीकषायन्तु पाचनं पवनज्वरे॥
सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम्।
पिप्पल्यादिकषायन्तु कफजे परिपाचनम्॥
द्वन्द्वजेषु तु संसृष्टं दद्यादथ विवर्ज्जयेत्।
पीताम्बुर्लङ्घितो भुक्तो जीर्णो क्षीणः पिपासितः॥
मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।

पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥
दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम् ।
हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः ॥
दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता ।
गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः ॥
स्वापः स्तम्भो गुरुत्वञ्च गात्राणां वह्निमार्द्दवम् ।
मुखस्याशुद्धिरग्लानिः प्रसङ्गी बलवान् ज्वरः ॥
लिङ्गैरेभिर्व्विजानीयाज्ज्वरमामं विचक्षणः ।
सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम् ॥
दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ।
पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ॥
अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः ।
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥
शोधनं शमनीयन्तु करोति विषमज्वरम् ।
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ॥
अतिप्रवर्त्तमानञ्च साधयेदतिसारवत् ।
यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः ॥
अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् ।
पक्वोऽप्यनिर्हृतोदोषो देहे तिष्ठन् महात्ययम् ॥
विषमम् वा ज्वरं कुर्य्याद्बलव्यापदमेव च ।
तस्मान्निर्हरणं कार्य्यं दोषाणां वमनादिभिः ॥
प्राक्कर्म्म वमनं चास्य कार्य्यमास्थापनं तथा ।
विरेचनं तथा कुर्य्याच्छिरसश्च विरेचनम् ॥

क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे ।
पित्तप्राये विरेकस्तु कार्य्यः प्रश्रथितााशये ॥
सरुजेऽनिलजे कार्य्यं सोदावर्त्ते निरूहणम् ।
कटीपृष्ठग्रहार्त्तस्य दीप्ताग्नेरनुवासनम् ॥
शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ।
कफाभिपन्ने शिरसि कार्य्यं मूर्द्धविरेचनम् ॥
दुर्ब्बलस्य समाध्मातमुदरं सरुजं दिहेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥
अम्लपिष्टैः सुखोष्णैश्च पवनेनूर्द्ध्वमागते ।
बद्धमूत्रपुरीषाय गुदे वर्त्तिं निधापयेत् ॥
पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ।
पाययेत यवागूं वा मारुतायानुलोमनीम् ॥
शुद्धस्योभयतो यस्य ज्वरः शान्तिं न गच्छति ।
सशेषदोषरूक्षस्य तस्य तं सर्पिषा जयेत् ॥
कृशञ्चैवाल्पदोषञ्च शमनीयैरुपाचरेत् ।
उपवासैर्ब्बलस्यन्तु ज्वरे सन्तर्पणोत्थिते ॥
क्लिन्नां यवागूं मन्दाग्निंतृष्णार्त्तं पाययेन्नरम् ।
तृट्छर्द्दिदाहघर्म्मार्त्तं मद्यपं लाजतर्पणम् ॥
सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् ।
उपवासश्रमकृते क्षीणे वाताधिके ज्वरे ॥
दीप्ताग्निं भोजयेत्प्राज्ञो नरं मांसरसौदनम् ।
मुद्गयूषौदनञ्चापि हितं कफसमुत्थिते ॥
स एव सितया युक्तः शीतः पित्तज्वरे हितः ।

दाडिमामलमुद्गानां यूषश्चानिलपैत्तिके ।
ह्रस्वमूलकयूषेण भोजयेत्कफवातिके ॥
पटोलनिम्बयूषस्तु पथ्यः पित्तकफात्मके ।
दाहच्छर्दियुतं क्षामं निरन्नं तृष्णयार्दितम् ॥
सिताक्षौद्रयुतं लाजतर्पणं पाययेत च ।
कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा ॥
मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत्
यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः ॥
मद्यं पुराणं मन्दाग्नेर्यवान्नोपहितं हितम् ।
सव्योषं वितरेत्तक्रङ्कफारोचकपीडिते ॥
क्षीणोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्दितः ।
विबद्धः स्पृष्टदोषश्च रूक्षः पित्तानिलज्वरी ॥
पिपासार्त्तः सदाहो वा पयसा स सुखी भवेत् ।
तदेव तु पयः पीतं तरुणे हन्ति मानवम् ॥
सर्वज्वरेषु सप्ताहं मात्रावद्भोजनं हितम् ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा ॥
गुर्व्यभिष्यन्द्यकाले च ज्वरी नाद्यात्कथञ्चन ।
नतु तस्याहितं भुक्तमायुषे वा सुखाय वा ॥
सततं विषमं वापि क्षीणस्य सुचिरोत्थितम् ।
ज्वरं संभोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥
मुद्गान्मसूरांश्चणकान्कुलत्थान्समकुष्ठकान् ।

आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥
लावान्कपिञ्जलानेणान् पृषतान् शरभान् शशान् ।
कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकान् ॥
मांसार्थे मांससात्म्यानां ज्वरितानांप्रदापयेत् ।
सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरींस्तथा ॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ।
ज्वरितानां प्रकोपन्तु यदा याति समीरणः ॥
तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः ।
परिषेकावगाहांश्च स्नेहान् संशोधनानि च ॥
स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः
न भजेत ज्वरोत्सृष्टो यावन्नो बलवान् भवेत् ॥
त्यक्तस्यापि ज्वरेणाशु दुर्बलस्याहितैर्ज्वरः ।
प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः ॥
तस्मात्कार्य्यः परीहारो ज्वरमुक्तेन जन्तुना ।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥
ज्वरे प्रमोहो भवति स्वल्पैरप्यवचेष्टितैः ।
निषसं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत् ॥
अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ।
शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः॥
न जातु तर्पयेत्प्राज्ञः सहसा ज्वरकर्शितम् ।
तेन सन्दूषितो ह्यस्य पुनरेव भवेज्ज्वरः ॥
चिकित्सेच्च ज्वरान् सर्व्वान्निमित्तानां विपर्य्ययैः ।
श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् ॥

स्त्रीणामपप्रजातानां स्तन्यावतरणे च यः ।
तत्र संशमनं कुर्य्याद्यथादोषं विधानवित् ॥
अतःसंशमनीयानि कषायाणि निबोध मे ।
सर्व्वज्वरेषु देयानि यानि वैद्येन जानता ॥
पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ।
कृतः कषायः सगुडो हन्याच्छ्वसनजं ज्वरम् ॥
स्तशीतकषायं वा गुडूच्याः पेयमेव तु ।
बलादर्भश्वदंष्ट्राणां कषायं पादशेषितम् ॥
शर्कराघृतसंयुक्तं पिवेद्वातज्वरापहम् ।
शतपुष्पावचाकुष्ठं देवदारुहरेणुकाः ॥
कुस्तुम्बुरूणि नलदं मुस्तं चैवाम्बु साधयेत् ।
चौद्रेण सितया चापि युक्तः क्वाथोऽनिलात्मके ॥
द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः ससारिवाः ॥
निःक्वाथ्य सगुडं क्वाथं पिवेद्वातकृते ज्वरे ।
गुडूच्याः स्वरसो ग्राह्यः शतावर्य्याश्च तत्समः ।
निहन्यात्सगुडः पीतः सद्योऽनिलकृतं ज्वरम् ॥
घृताभ्यङ्गस्वेदलेपानवस्थासु च योजयेत् ।
श्रीपर्णीचन्दनोशीरपरूषकमधूकजः ॥
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम् ।
पीतं पित्तज्वरं हन्यात्सारिवाद्यं सशर्करम् ॥
सयष्टीमधुकं हन्यात्तथैवोत्पलपूर्व्वकम् ।
स्तशीतकषायं वा सोत्पलं शर्करायुतम् ॥
गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा ।

शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः ॥
द्राक्षारग्वधयोश्चापि काश्मर्य्यस्याथ वा पुनः ।
स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः ॥
सुशीतैः शमयेत्तृष्णां प्रवृद्धां दाहमेव च ।
शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितम् ॥
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ।
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः ॥
अन्तर्दाहे विधातव्यमेतैश्चान्यैश्च शीतलैः ।
निदध्यादप्सु चालोड्य निशापर्य्युषितं ततः ॥
क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः ।
पद्मकं मधुकं द्राक्षा पुण्डरीकमथोत्पलम् ॥
यवान्भृष्टानुशीराणि समङ्गां काश्मरीफलम् ।
जिह्वातालुगलक्लोमशोषे मूर्द्ध्नि च दापयेत् ॥
केशरं मातुलङ्गस्य मधुसैन्धवसंयुतम् ।
शर्करादाडिमाभ्यां वा द्राक्षाखर्ज्जूरयोस्तथा ॥
वैरस्ये धारयेत्कल्कं गण्डूषञ्च यथा हितम् ।
सप्तच्छदं गुडूचीञ्च निम्बस्फूर्ज्जकमेव च ॥
क्वाथयित्वा पिबेत्क्वाथं सक्षौद्रं कफजे ज्वरे ।
कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ॥
कौटजञ्च फलं हन्यात्समेव्यमानं कफज्वरम् ।
हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम् ॥
कुष्ठमिन्द्रयवान्मूर्व्वां पटोलं चापि साधितम् ।
पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥

सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः।
मुस्तेन च कृतः क्वाथः पीतो हन्यात्कफज्वरम्॥
मुस्तं वृत्तकबीजानि त्रिफलाकटुरोहिणी।
परूषकाणि च क्वाथः कफज्वरविनाशनः॥
राजवृक्षादिवर्गस्य कषायं मधुसंयुतम्।
कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितम्॥
नागरं धान्यकं भार्गीमभया सुरदारु च।
वचां पर्प्पटकं मुस्तम्भूतीकमथ कट्फलम्॥
निःक्वाथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितम्।
पातव्यं श्वासकासघ्नं श्लेष्मोत्थे के गलग्रहे॥
हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे।
एलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च॥
क्वाथो मधुयुतः पीतो हन्ति पित्तकफज्वरम्।
कटुकाविजयाद्राक्षामुस्तपर्प्पटकैः कृतः॥
कषायो नाशयेत्पीतःश्लेष्मपित्तभवं ज्वरम्।
भार्गीवचापर्प्पटकधान्यहिंग्वभयाघनैः॥
काश्मर्य्यनागरैः क्वाथः सक्षौद्रः श्लेष्मपित्तजे।
सशर्करामक्षमात्रां तु कटुकामुष्णवारिणा॥
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम्।
किराततिक्तममृतं द्राक्षामामलकं शटीम्॥
निःक्वाथ्य वातपित्तोत्थे तं क्वाथं सगुडं पिबेत्।
रास्ना वृषोत्थत्रिफलाराजवृक्षफलैः सह॥
कषायः साधितः पीतो वातपित्तज्वरं जयेत्।

सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ॥
यथा दोषोच्छ्रयं चापि ज्वरान् सर्व्वानुपाचरेत् ।
हृश्चीकविल्ववर्षाभूःपयश्चोदकमेव च ॥
पचेत्क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ।
उदकांशास्त्रयः क्षीरं शिंशपासारसंयुतम् ॥
तत्क्षीरशेषं क्वथितं पेयं सर्वज्वरापहम् ।
नलवेतसयोर्म्मूले मूर्व्वायां देवदारुणि ॥
कषायं विधिवत्कृत्वा पेयमेतज्ज्वरापहम् ।
त्रैफले वा ससर्प्पिष्कः क्वाथःपेयस्त्रिदोषजे ॥
अनन्तां बालकं मुस्तां नागरं कटुरोहिणीम् ।
सुखाम्बुना प्रागुदयात्पाययेताक्षसम्मितम् ॥
एवसर्वज्वरान् हन्ति दीपयत्याशुचानलम् ।
द्रव्याणि दीपनीयानि तथा वैरेचनानि च ॥
एकशो वा द्विशो वापि ज्वरघ्नानि प्रयोजयेत् ।
सर्पिर्म्मध्वभयातैललेहोऽयं सर्वजं ज्वरम् ॥
शान्तिं नयेत्तृवृच्चापि मत्स्योद्भा प्रबलं ज्वरम् ।
ज्वरे तु विषमे कार्य्यमूर्द्धं चाधश्च शोधनम् ॥
घृतं शीतोदरोक्तं वा निहन्याद्विषमज्वरम् ॥
गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्द्दितः ॥
गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ॥
प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत् ।
त्रिचतुर्भिः पचेत्क्वाथं पञ्चभिर्व्वा समन्वितैः ॥
मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ॥

हरीतक्याश्च सर्व्वोऽयं त्रिविधो योग इष्यते ।
सर्पिः:क्षीरसिताक्षौद्रमागधीर्व्वा यथाबलम् ॥
दशमूलीकषायेण मागधीर्व्वा प्रयोजयेत् ।
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः ॥
ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ।
कोलाग्निमन्थत्रिफलाक्काथे दध्ना घृतं पचेत् ॥
तिल्वकावापमेतद्धि विषमज्वरनाशनम् ।
पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ॥
कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ।
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ॥
पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ।
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकम् ॥
क्षयकासं ससन्तापं पार्श्वशूलानपास्यति ।
गुडूचीत्रिफलावासात्रायमाणायवासकैः ॥
क्वथितैर्व्विधिवत्पक्वमेतैः कल्कीकृतैः समैः ।
द्राक्षामागधिकाम्भोदनागरोत्पलचन्दनैः ॥
पीतं सर्पिः क्षयश्वासकासाजीर्णज्वरान् जयेत् ।
कलशीबृहतीद्राक्षात्रायन्तीनिम्बगोक्षुरैः ॥
बलापर्प्पटकाम्भोदशालपर्णीयवासकैः ।
पक्वमुत्क्वथितैः सर्पिः कल्कैरेभिः समन्वितैः ॥
शटीतामलकीभार्गीमेदाकतकपौष्करैः ।
क्षीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ॥
शिरः पार्श्वरुजाकासक्षयप्रशमनं परम् ।

पटोलीपर्प्पटारिष्टगुडूचीत्रिफलावृषैः ॥
कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनैः ।
दार्व्वीशक्रयवोशीरत्रायमाणाकणोत्पलैः ॥
धात्रीभृङ्गरजोभीरुकाकमाचीरसैर्घृतम् ।
सिद्धमाखुपर्णीकुष्ठज्वरशुक्राज्जुनव्रणान् ॥
हन्यान्नयनवदनकर्णजान् घ्राणजान् गदान् ।
विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ।
प्रियंग्वेलैलवालूकचन्दनामरदारुभिः ॥
बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ।
हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः ॥
द्विक्षीरं विपचेत्सर्पिर्म्मालतीकुसुमैः सह ।
विषमज्वरकश्वासगुल्मोन्मादगरापहम् ॥
एतत्कल्याणकं नाम सर्पिर्मङ्गल्यमुत्तमम् ।
अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारपापनुत् ॥
शस्यते नष्टशुक्राणां वन्ध्यानां गर्भदं परम् ।
मेध्यञ्चक्षुष्यमायुष्यं रेतोमार्गरुजापहम् ॥
एतैरेव यथाद्रव्यैः सर्वगन्धैश्च साधितम् ।
कपिलाया घृतमस्थ्यं सुवर्णमणिसंयुतम् ॥
तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः ।
सुमनश्चम्पकाशोकशिरीषकुसुमैर्घृतम् ॥
तथानलदपद्मानां केशरैर्दाडिमस्य च ।
तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च ॥
स्नातं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम् ।

दत्तं सर्व्वज्वरान् हन्ति महाकल्याणकं घृतम् ॥
दर्शनस्पर्शनाभ्यान्तु सर्व्वरोगहरं शिवम् ।
अधृष्यः सर्व्वभूतानां बलीपलितवर्ज्जितः ॥
अस्याभ्यासाद्घृतस्येह जीवेद्वर्षशतत्रयम् ।
गव्यं दधि च मूत्रञ्च क्षीरं सर्पिः शकृद्रसः ॥
समभागानि पाच्यानि कल्कांश्चैतान्समावपेत् ।
त्रिफलां चित्रकं मुस्तं हरिद्रे द्वे विषां वचाम् ॥
विडङ्गं त्र्यूषणञ्चव्यं सुरदारु तथैव च ।
पञ्चगव्यमिदं पानाद्विषमज्वरनाशनम् ॥
पञ्चगव्यघृतेगर्भात्पाच्यमन्यद्वृषेण च ।
बलयाथ परं पाच्यं गुडूच्या तद्वदेवतु ॥
जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितम् ।
एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत् ॥
पञ्चाजमप्यश्वमहिषं चतुरुष्ट्रमथापि वा ।
त्रिफलोशीरसम्पाककटुकातिविषान्वितैः ॥
शतावरीसप्तपर्णगुडूचीरजनीद्वयैः ।
चित्रकत्रिवृतामूर्व्वापटोलारिष्टबालकैः ॥
किराततिक्तकवचाविशालापद्मकोत्पलैः ।
सारिवाद्वययष्ट्याह्वचविकारक्तचन्दनैः ॥
दुरालभापर्पटकत्रायमाणाटरूषकैः ।
रास्नाकुङ्कुममञ्जिष्ठामागधीनागरैस्तथा ॥
धात्रीफलरसैः सम्यग्द्विगुणैः साधितं हविः ।
परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणम् ॥

पाण्डुप्लीहाग्निमान्द्येभ्य एतदेवं परं हितम् ।
पटोलकटुकादार्व्वीनिम्बवासफलत्रिकम् ॥
दुरालभापर्पटकत्रायमाणाः फलोन्मिताः ।
प्रस्थमामलकानाञ्च क्राथयेत्सलिलार्म्मणे ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
रक्तपित्तकफस्वेदक्लेदपूयाङ्गशोषणम् ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम् ।
घृतम्पयः शर्करा च पिप्पल्यो मधुसर्पिषी ॥
पञ्चसारमिदं पेयं मथितं विषमज्वरे ।
क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते ॥
लाक्षाविश्वनिशामूर्वामञ्जिष्ठास्वर्जिकामयैः ।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥
क्षीरिवृक्षासनारिष्टं जम्बूसप्तच्छदार्जुनैः ।
शिरीषखदिरास्फोताघृतवल्लाटरूषकैः ॥
कटुकापर्पटोशीरवचातेजोवतीघनैः ।
साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहम् ॥
निर्विषैर्भुजगैर्नागैर्विनीतैः कृतसत्कारैः ।
त्रासयेदागमे चैनं तदहर्भोजयेन्न च ॥
अत्यभिष्यन्दिगुरुभिर्व्वामयेद्वा पुनःपुनः ।
मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनम् ॥
पुराणं वा घृतं काममुदारं वा विरेचनम् ।
निरूहयेद्वा मतिमान्सुस्विन्नं तदहर्न्नरम् ॥
अजाव्योश्चर्मरोमाणि वचाकुष्ठं पलङ्कषा ।

निम्बपत्त्रमधुयुतं धूपनन्तस्य दापयेत् ॥
वैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ।
पिप्पलीसैन्धवं तैलं नैपालीचेक्षणाञ्जनम् ॥
उपरोक्तानि सर्प्पींषि यान्युक्तानि पुरा मया ।
कल्पोक्तं चाजितं सर्प्पिः सेव्यमानं ज्वरं जयेत् ॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद्भूताभिषङ्गोत्थं विज्ञानाद्यैश्च मानसम् ॥
अमद्ययेच भूञ्जीत घृताभ्यक्तो रसौदनम् ।
अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ॥
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ।
अभिघातज्वरे कुर्य्यात् क्रियामुष्णविवर्ज्जिताम् ॥
कषायमधुरां स्निग्धां यथा दोषमथापि वा ।
ओषधीगन्धविषजौ विषपित्तप्रसाधनैः ।
जयेत् कषायं च हितं सर्वगन्धकृतं तथा ॥
निम्बदारुकषायं वा हितं सौमनसं तथा ।
यवान्नविकृतिः सर्पिर्मद्यञ्च विषमे हितम् ॥
सम्पूजयेद्द्विजान् गाश्च देवमीशानमम्बिकाम् ॥
कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम् ॥
दिह्यादुष्णेन वर्गेण परश्चोष्णो विधिर्हितः ॥
सिञ्चेत्कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः ॥
दिह्यात्पलाशैरथ वा सुरसार्जकशिग्रुजैः ।
क्षारतैलेन चाभ्यङ्गः सयुक्तेन विधीयते ॥
शानमारग्वधादेश्च क्वथितस्य विशेषतः ॥

अवगाहः सुखोष्णश्च वातघ्नक्काथसंयुतः ॥
जित्वा शीतं क्रमैरेभिः सुखोष्णजलसेचितम् ।
प्रवेश्यौर्णिककार्पासकौशेयाम्बरसंवृतम् ॥
शाययेदृग्लानदेहञ्च कालागुरुविभूषितम् ।
स्तनाढ्या रूपसम्पन्नाः कुशला नवयौवनाः ॥
भजेयुः प्रमदा गात्रैः शीतदैन्यापहारिभिः ।
शरच्छशाङ्कवदना नीलोत्पलदलेक्षणाः ।
स्फुरितभ्रूलताभङ्गललाटतटकम्पनाः ।
प्रलम्बिविलसत्काञ्च्यो बिम्बीफलनिभाधराः ॥
कृशोदर्य्योऽतिविस्तीर्णजघनोद्वहनालसाः ।
कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधराः ॥
सुगन्धिधूपितश्लक्ष्णवस्त्रांशुकविभूषणाः ।
गाढमालिङ्गयेयुस्तं नरं वनलता इव ॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत्पुनः ।
तासामङ्गवरश्लेषनिवारितहिमज्वरम् ॥
भोजयेद्धितमन्नञ्च तथासुखमवाप्नुयात् ।
दाहाभिभूते तु विधिं कुर्य्याद्दाहविनाशनम् ॥
मधुफाणितयुक्तेन निम्बपत्राम्भसापि वा ।
दाहज्वरार्त्तं मतिमान् वामयेत् क्षिप्रमेव च ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः ।
कोलामलकसंयुक्तैः शूकधान्याम्लसंप्लुतैः ॥
अम्लपिष्टैः सुशीतैश्च फेणिलापल्लवैस्तथा ।
अम्लपिष्टैस्तु शीतैर्व्वा पलाशतरुजैर्द्दिहेत् ॥

बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च।
लिप्तेऽङ्गे दाहतृष्णामूर्च्छा सर्वथैव प्रशाम्यति ॥
यवार्द्धकुडवं पिष्ट्वा मञ्जिष्ठार्द्धपलं तथा।
अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥
एतत्प्रह्लादनं तैलं ज्वरदाहविनाशनम्।
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गणः ॥
उत्पलादिर्गणो यस्तु पिष्टैर्वा तैः प्रलेपयेत्।
तत्कषायाम्बुसंसिद्धाः स्नेहाश्चाभ्यञ्जने हिताः ॥
तेषां शीतकषाये वा दाहार्त्तमवगाहयेत्।
दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवम् ॥
परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः।
सानन्दा दीनमनसमाश्लिषेयुर्वराङ्गनाः ॥
पेलवक्षौमसंवीताश्चन्दनार्द्रपयोधराः।
बिभ्रत्योऽब्जस्रजश्चित्रा मणिहारविभूषिताः।
भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुरुहैः सुखैः।
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत्पुनः ॥
हितंच भोजयेदन्नं तथाप्नोति सुखं महत्।
पित्तज्वरोक्तं शमनं विरेकोऽन्यद्धितंच यत् ॥
निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु।
दुर्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः ॥
छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य तु।
उपद्रवान् जयेच्चापि प्रत्यनीकेन हेतुना ॥
विशेषमपरं चात्र स्तृणूपद्रवनाशनम्।

मधुकं रजनीमुस्तं दाडिमञ्चाम्लवेतसम् ॥
अञ्जनं तिन्तिडीकञ्च नलदं पलमुत्पलम् ।
त्वचं व्याघ्रनखं चैव मातुलुङ्गरसो मधु ॥
दिह्यादेभिर्ज्वरार्त्तस्य मधुशुक्तयुतैः शिरः ।
शिरोऽभितापसंमोहवमिहिक्काप्रवेपथून् ॥
प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान् ।
मधूकमथ ह्रीवेरमुत्पलानि मधूलिकाम् ॥
लीढ्वा चूर्णानि मधुना सर्पिषा च जयेद्वमिम् ।
कफप्रसेकासृक्पित्तहिक्काश्वासांश्च दारुणान् ॥
लिहन् ज्वरार्त्तस्त्रिफलां पिप्पलीञ्च समाक्षिकाम् ।
कासे श्वासे च मधुना सर्पिषा स सुखी भवेत् ।
विदारीदाडिमं लोध्रं दाधित्थं वीजपूरकम् ॥
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः ।
दाडिमस्य सितायाश्च द्राक्षामलकयोस्तथा ॥
वैरस्ये धारयेत्कल्कं गण्डूषञ्च यथाहितम् ।
क्षीरेक्षुरसमाध्वीकसर्पिस्तैलोष्णवारिभिः ॥
शुष्के मूर्ध्नि हितं नस्यं जीवनीयसृतं घृतम् ।
चूर्णितत्रिफलाश्यामात्रिवृत्पिप्पलिसंयुतः ॥
सक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते ।
पक्वे पित्तज्वरे रक्ते चोर्द्ध्वगे वेपथौ तथा ॥
कफवातोत्थयोरेवं स्नेहाभ्यङ्गैर्विशोधयेत् ।
कृतदोषो भ्रमार्त्तस्तु: लिह्यात् क्षौद्रसिताभया ॥
वातघ्नमधुरैर्योज्या निरूहा वातजे ज्वरे ।

विभज्य दोषं प्राणञ्च यथास्वं वानुवासनम् ॥
उत्पलादिकषायाश्चन्दनोशीरसंयुताः ।
शर्करामधुराः शीताः पित्तज्वरहरा मताः ॥
आम्रादीनां त्वचं शङ्खं चन्दनामलकोत्पलैः ।
गैरिकाञ्जनमञ्जिष्ठाम्टणालान्यथ पद्मकम् ॥
श्लक्ष्णपिष्टन्तु पयसा शर्करामधुसंयुतम् ।
सुपूतं शीतलं वस्तिं दूयमानाय दापयेत् ॥
ज्वरदाहापहं तेषु सिद्धञ्चैवानुवासनम् ।
आरग्वधगणक्वाथाः पिप्पल्यादिसमायुताः ॥
सक्षौद्रा एव देयाः स्युः कफज्वरविनाशनाः ।
कफघ्नैरेव संसिद्धा द्रव्यैश्चाप्यनुवासनाः ॥
संसर्गे सन्निपाते च संसृष्टा वस्तयो हिताः ।
संसृष्टैरेव संसृष्टा द्रव्यैश्चाप्यनुवासनाः ॥
वातरोगापहाः सर्व्वे स्नेहा ये सम्यगीरिताः ।
विना तैलं त एव स्युर्योज्या मारुतजे ज्वरे ॥
निखिलेनोपयोज्याश्च त एवाभ्यञ्जनादिषु ।
पैत्तिके मधुरैस्तिक्तैः सिद्धं सर्प्पिः प्रयुज्यते ॥
श्लैष्मिके कटुतिक्तैश्च संसृष्टानीतरेषु च ।
हृतावशेषं पित्तन्तु त्वक्स्थं जनयति ज्वरम् ॥
पिबेदिक्षुरसं तत्र शीतंवा शर्करोदकम् ।
शालिषष्ठिकयोरन्नमश्नीयात्क्षीरसंयुतम् ॥
कफवातोत्थयोरेव स्वेदाभ्यङ्गौ प्रयोजयेत् ।
घृतं द्वादशरात्रात्तु देयं सर्वज्वरेषु च ॥

तेनान्तरेणाशयं स्वङ्गता दोषा भवन्ति हि।
धावन् प्रक्षोभयन् दोषो मोक्षकालेऽवलीयते॥
तेन व्याकुलचित्तस्तु म्रियमाण इवेहते।
लघुत्वं शिरसः स्वेदो मुखमापाण्डुपाकि च॥
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम्।
शम्भुक्रोधोद्भवो घोरो बलवर्णाग्निसादकः॥
रोगराट् रोगसंघातो ज्वर इत्युपदिश्यते।
व्यापित्वात् सर्वसंस्पर्शात् कृच्छ्रत्वादन्तसम्भवात्॥
अन्तको ह्येष भूतानां ज्वर इत्युपदिश्यते।

---

## चत्वारिंशत्तमोऽध्यायः॥

अथातोऽतीसारप्रतिषेधं व्याख्यास्यामः॥
गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात्।
शोकाद्दुष्टाम्बुमद्यातिपानात्सात्म्यर्त्तुपर्य्ययात्॥
जलाभिरमणैर्वेगविघातैः कृमिदोषतः।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते॥
संशम्यापां धातुरन्तः कृशानुं वर्चोमिश्रो मारुतेन प्रनुन्नः।
वृद्धोऽतीवाधःसरत्येव यस्माद्व्याधिं घोरं तं त्वतीसारमाहुः॥
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः।
केचित्प्राहुर्नैकरूपप्रकारं नैवेत्येवं काशिराजवोचत्तु॥

दोषावस्थास्तस्य नैकप्रकाराः काले काले व्याधितस्योद्भवन्ति ।
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः ॥
विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥
शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी स्रस्तापानः सन्नकच्छ्रूरुजङ्घः ।
वर्च्चोमुञ्चत्यल्पमल्पं सफेनं रूक्षं श्यावं सानिलं मारुतेन ॥
दुर्गन्ध्युष्णं वेगवन्मांसतोयप्रख्यं भिन्नं स्विन्नदेहोऽतितीक्ष्णम् ।
पित्तात्पीतं नीलमालोहितं वा तृष्णामूर्च्छादाहपाकज्वरार्त्तः ॥
तन्द्रा निद्रा गौरवं त्वक्प्रसादी वेगाशङ्की सृष्टविट्कोऽपि भूयः ।
शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं भक्तद्वेषी निस्वनं हृष्टरोमा ॥
तन्द्रायुक्तो मोहसादास्यशोषी वर्च्चः कुर्य्यान्नैकवर्णं तृषार्त्तः ।
सर्व्वोद्भूतः सर्वलिङ्गोपपत्तिः कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः ॥
तैस्तैर्भावैः शोचतोऽल्पाशनस्य वाष्पो वेगः पक्तिमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयन् यस्य रक्तं तच्चाधस्तात्काकलन्तीप्रकाशम्॥
वर्च्चोमिश्रं निःपुरीषं सगन्धं निर्गन्धं वा सार्य्यते तेन कोष्ठात् ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एष प्रदिष्टः ।
आमाजीर्णैः प्रद्रुताः क्षोभयन्तः कोष्ठं दोषाः सम्प्रदुष्टाः सभक्तम् ॥
नानावर्णं नैकशः सारयन्ति कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धं विच्छिन्नं चामसंज्ञितम् ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य तु ।
लाघवञ्च मनुष्यस्य तस्य पक्वं विनिर्द्दिशेत् ॥

सर्प्पिर्मेदोवेसवाराम्बुतैलमज्जं क्षीरं क्षौद्ररूपं स्रवेद्यत ।
मञ्जिष्ठाभं मस्तुलुङ्गोपमं वा विस्रं शीतं प्रेतगन्ध्यञ्जनाभम् ॥

राजीमद्वा चन्द्रकैः सन्ततं वा पूयप्रख्यं कर्द्दमाभं तथोष्णम्।
इत्यादेतद्यत्प्रतीपं भवेच्च चीणं इन्युश्चोपसर्गाः प्रभूताः॥

असम्वृतगुदं चीणं दुराध्मातमुपद्रुतम्।
गुदे पक्के गतोष्माणमतीसारकिणं त्यजेत्॥
शरीरिणामतीसारः संभूतो येन केनचित्।
दोषाणामेव लिङ्गानि कदाचिन्नाति वर्त्तते॥
स्नेहाजीर्णनिमित्तस्तु बहुशूलप्रवाहिकः।
विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः॥
विषार्शःकृमिसम्भूतो यथास्वन्दोषलक्षणः।
आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः॥
अतः सर्व्वातिसारास्तु ज्ञेयाः पक्वामलक्षणैः।
तत्र लङ्घनमेवादौ पूर्वरूपेषु देहिनाम्॥
ततः पाचनसंयुक्तं यवाग्वादिक्रमो हितः।
अथ वा वामयित्वा तु शूलाध्माननिपीडितम्॥
~~पिप्पलीसैन्धवाम्भोभिर्लङ्घनाद्यैरुपाचरेत्।~~
~~कार्य्यं च वमनस्यान्ते प्रायशो लघुभोजनम्॥~~
खडयूषयवागूषु पिप्पल्याद्येव योजयेत्।
अनेन विधिना चामं यस्य वै नोपशाम्यति॥
हरिद्रादिं वचादिं वा पिबेत्प्रातः स मानवः।
आमातिसारिणां कार्य्यं नादौ सङ्ग्रहणं नृणाम्॥
तेषां दोषा विवद्धाः प्राग्जनयन्त्यामयानिमान्।
शोथपाण्डामयानाहमेहकुष्ठोदरज्वरान्॥
शोफगुल्मग्रहण्यर्शःशूलालसकहृद्ग्रहान्।

सशूलं बद्धशः कृच्छ्राद्विबन्धं योऽतिसार्य्यते ॥
दोषान्सन्निचितान् वाथ पथ्याभिः संप्रवर्त्तयेत् ।
योऽतिद्रवं प्रभूतञ्च पुरीषमतिसार्य्यते ॥
तस्यादौ वमनं कुर्य्यात्पश्चाल्लङ्घनपाचनम् ।
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते॥
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ।
आमे च लङ्घनं शस्तमादौ पाचनमेव वा ॥
योगाश्चात्र प्रवक्ष्यन्ते त्वामातीसारनाशनाः ।
देवदारुवचामुस्तानागरातिविषाभयाः ॥
कलिङ्गातिविषाहिङ्गुसौवर्च्चलवचाभयाः ।
अभयाधान्यकं मुस्तं बालकं बिल्वमेव च ॥
मुस्तं पर्प्पटकं शुण्ठीवचासातिविषाभयाः ।
अभयातिविषाहिङ्गुवचासौवर्च्चलं तथा ॥
चित्रकं पिप्पलीमूलं वचाकटुकरोहिणी ।
पाठावत्सकबीजानि हरीतक्यो महौषधम् ॥
मूर्व्वा निर्द्दहनी पाठा त्र्युषणं गजपिप्पली ।
सिद्धार्थका भद्रदारु शताह्वा कटुरोहिणी ॥
एला सावरकं कुष्ठं हरिद्रे कौटजा यवाः ।
मेषशृङ्गीत्वगेले च क्रमिघ्नं वृक्षकाणि च ॥
वृश्चादनी वीरतरुर्द्दन्त्यौ द्वे सहे तथा ।
एरण्डत्वक्च तैन्दुकी दाडिमी कौटजी शमी ॥
पाठा तेजोवती मुस्तं पिप्पलीकौटजं फलम् ।
पटोल दीप्यको बिल्वं हरिद्रे देवदारु च ॥

विडङ्गमभया पाठा शृङ्गवेरं घनं वचा।
वचा वत्सकबीजानि सैन्धवं कटुरोहिणी॥
हिङ्गुवत्सकबीजानि वचाबिल्वशलाटु च।
नागरातिविषा मुस्तं पिप्पल्यो वात्सकं फलम्॥
महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः।
प्रयोज्या विंशतिर्योगाः श्लोकार्द्धविहितास्त्विमे॥
धान्याम्लोष्णाम्बुमद्यानां पिवेदन्यतमेन वा।
निःक्वाथान्वा पिवेदेषां सुखोष्णान् साम्बुसाधितान्॥
निखिलेनोपदिष्टोऽयं विधिरामोपशान्तये।
हरीतकीमतिविषां हिङ्गु सौवर्च्चलं वचाम्॥
पिवेत्सुखाम्बुना जन्तुरामातीसारपीडितः।
पटोलं दीप्यकं बिल्वं वचापिप्पलिनागरम्॥
मुस्तं कुष्ठं विडङ्गञ्च पिवेद्वापि सुखाम्बुना।
शृङ्गवेरं गुडूचीञ्च पिवेदुष्णेन वारिणा॥
लवणान्यथ पिप्पल्यो विडङ्गानि हरीतकी।
चित्रकं शिंशपा पाठा शार्ङ्गेष्टा लवणानि च॥
हिङ्गुत्वक्कबीजानि लवणानि च भागशः।
हस्तिदन्त्यथ पिप्पल्यः कल्कावत्समौ स्मृतौ॥
वचागुडूचीकाण्डानि योगोऽयं परमो मतः।
एते सुखाम्बुना योगा देयाः पञ्च सतां मताः।
पयस्युत्क्वाथ्य मुस्तानां विंशतिन्त्रिगुणाम्भसि॥
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च।
निरन्नोऽस्वामशूलेषु यस्य न प्रगुणोऽनिलः॥

स्तोकं स्तोकं रुजामच्च सशूलं योऽतिसार्य्यते।
सक्षारलवणैर्युक्तं मन्दाग्निः प्रपिवेद्घृतम्।
क्षीरनागरचाङ्गेरीकोलदध्यम्लसाधितम्।
सर्पिरच्छं पिवेद्वापि शूलातीसारशान्तये।
दध्ना तैलघृतं पक्वं सव्योषजातिचित्रकैः॥
सविल्वपिप्पलीमूलदाडिमैर्व्वा रुगन्वितैः।
निखिलो विधिरुक्तोऽयं वातश्लेष्मोपशान्तये॥
तीक्ष्णोष्णवर्ज्यमेनन्तु विदध्यात्पित्तजे भिषक्।
यथोक्तमुपवासान्ते यवागूश्च प्रशस्यते॥
बलयोरंशुमत्याश्च स्वदंष्ट्राहृतीषु च।
शतावर्य्यांच संसिद्धाः सुशीता मधुसंयुताः॥
मुद्गादिषु च यूषाः स्युर्दीपनैः सुसंस्कृताः।
मृदुभिर्द्दीपनैस्तिक्तैर्द्रव्यैः स्यादामपाचनम्॥
हरिद्रातिविषापाठावत्सवीजरसाञ्जनम्।
रसाञ्जनं हरिद्रे द्वे वीजानि कुटजस्य च।
पाठा गुडूची भूनिम्बस्तथैव कटुरोहिणी॥
एतैः श्लोकार्द्धनिर्द्दिष्टैः क्वाथाः स्युः पित्तपाचनाः॥
मुस्तं कुटजवीजानि भूनिम्बं सरसाञ्जनम्॥
दार्व्वीदुरालभा विल्वं वालकं रक्तचन्दनम्।
चन्दनं वालकं मुस्तं भूनिम्बं सदुरालभम्॥
मृणालं चन्दनं रोध्रं नागरं नीलमुत्पलम्।
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलम्॥
फलत्वचं वत्सकस्य शृङ्गवेरघृते वचा।

षडेतेऽभिहिता योगाः पित्तातीसारनाशनाः ॥
बिल्वशक्रयवाम्भोदवालकातिविषाकृतः ।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥
मधुकोत्पलबिल्वाम्रह्रीवेरोशीरनागरैः ।
कृतः क्वाथो मधुयुतः पित्तातीसारनाशनः ॥
यदा पक्वोऽप्यतीसारः सरत्येव मुहुर्मुहुः ।
ग्रहण्या मार्दवाज्जन्तोस्तत्र संस्तम्भनं हितम् ॥
समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमुस्तकम् ।
शाल्मलीवेष्टकं रोध्रं वृक्षदाडिमयोस्त्वचौ ॥
आम्रास्थिमध्यं लोध्रञ्च बिल्वमध्यं प्रियङ्गवः
मधुकं शृङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥
चत्वार एते योगाः स्युः पक्वातीसारनाशनाः ।
श्लक्ष्णा श्च उपयोज्यास्ते सक्षौद्रास्तण्डुलाम्बुना ॥
कौम्भं कषायमेकं वा पेयं मधुसमायुतम् ।
लोध्राम्बष्ठाप्रियंग्वादीन् गणांस्तव प्रयोजयेत् ॥
पद्मां समङ्गां मधुकं बिल्वजम्बूशलाटु वा ।
पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करम् ॥
कच्छुरामूलकल्कं वा उदुम्बरफलोपमम् ।
पयस्याचन्दनं पद्मा सितामुस्ताजकेशरम् ।
पक्वातिसारं योगोऽयं जयेत्पीतः सशोणितम् ॥
निरामरूपं शूलार्त्तं लङ्घनाद्यैश्च कर्षितम् ।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेद्घृतम् ॥
बलाहत्यंशुमती कच्छुरामूलसाधितम् ।

मधूच्छितं समधुकं पिबेच्छूलैरभिद्रुतः ॥
दार्व्वीविल्वकणा द्राक्षाकटुकेन्द्रयवैर्घृतम् ।
साधितं हन्त्यतीसारं वातपित्तकफात्मकम्
पयोघृतञ्च मधु च पिबेच्छूलैरभिद्रुतः ।
सिताजमोदकट्वङ्गमधुकैरवचूर्णितम् ॥
अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥
त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेसरसंयुतम् ।
काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम् ॥
मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ।
स्विन्नमुद्धृत्य निःपीड्य रसमादाय तं ततः ॥
शीतं मधुयुतं कृत्वा पाययेतोदरामये ।
जीवन्तीमेषशृङ्ग्यादिष्वेवं द्रव्येषु साधयेत् ।
तित्तिरिं लुञ्चितं सम्यक् निःकृष्टान्त्रन्तु पूरयेत् ॥
न्यग्रोधादित्वचां कल्कैः पूर्व्ववच्चावकूलयेत् ।
रसमादाय तस्याथ सुस्विन्नस्य समाक्षिकम् ॥
शर्करोपहितं शीतं पाययेच्चोदरामये ॥
लोध्रचन्दनयष्ट्याह्वदार्व्वीपाठासितोत्पलान् ।
तण्डुलोदकसम्पिष्टान् दीर्घवृन्तत्वगन्वितान् ॥
पूर्व्ववत्कूलितात्तस्माद्रसमादाय शीतलम् ।
मध्वाक्तम्पाययेच्चैतत्कफपित्तोदरामये ॥
एवं प्ररोहैः कुर्व्वीत वटादीनां विधानवित् ।
पुटपाकान् यथायोगं जाङ्गलोपहितान् शुभान् ॥

बद्धस्त्वेष्मसरक्तश्च मन्दवातं विरोत्थितम् ।
कौटजं फाणितञ्चापि हन्त्यतीसारमोजसा ॥
अम्बष्ठादि मधुयुतं पिप्पल्यादिसमन्वितम् ।
पृश्निपर्णीबलाविल्ववालकोत्पलधान्यकैः ॥
सनागरैः पिवेत्पेयां साधितामुदरामयी ।
अरलुत्वक्प्रियङ्गुञ्च मधुकं दाडिमाङ्कुरान् ॥
आवाप्य पिष्ट्वा दधनि यवागूं साधयेद्‌द्रवाम् ।
एषा सर्व्वानतीसारान् हन्ति पक्वानसंशयम् ॥
रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा ।
धातकी नागरञ्चैव पाययेत्तण्डुलाम्बुना ॥
सशूलरक्तजं घ्नन्ति योगा मधुसमन्विताः ।
मधुकं विल्वपेश्यश्च शर्करा मधुसंयुताः ॥
अतीसारं निहन्त्युश्च शालिषष्टिकयोः कणाः ।
तद्वल्लीढं मधुयुतं वदरीमूलमेव तु ॥
वदर्य्यर्ज्जुनजम्बाम्रशल्लकीवेतसत्वचः ।
शर्कराः क्षौद्रसंयुक्ताः पीता घ्नन्त्युदरामयम् ॥
एतैरेव यवागूश्च मण्डान् यूषांश्च कारयेत् ।
पानीयानि च तृष्णासु द्रव्येष्वेतेषु बुद्धिमान् ॥
कृतं शाल्मलिवृन्तेषु कषायं हिमसंज्ञकम् ।
निशापर्य्युषितं पेयं सक्षौद्रं मधुकान्वितम् ॥
विबद्धवातविट्शूलपरीतः सप्रवाहिकः ।
सरक्तपित्तश्च पयः पिवेत्तृष्णासमन्वितः ॥
यथाम्लतं तथाक्षीरमतीसारेषु पूजितम् ।

चिरोत्थितेषु तत्पेयमपाम्भागैस्त्रिभिः शृतम् ॥
दोषशेषं हरेत्तद्धि तस्मात्पथ्यतमं स्मृतम् ।
हितः स्नेहविरेको वा वस्तयः पिच्छिलाश्च ये ॥
पिच्छिलास्वरसे सिद्धं हितं च घृतमुच्यते ।
शकृता यस्तु संसृष्टमतिसार्य्येत शोणितम् ॥
प्राक्पश्चाद्वा पुरीषस्य सरक्तपरिकर्त्तिकः ।
क्षीरिशुङ्गाशृतं सर्पिः पिबेत्सक्षौद्रशर्करम् ॥
दार्व्वीत्वक्पिप्पलीशुण्ठीलाक्षाशक्रयवैर्घृतम् ।
संयुक्तं भद्ररोहिण्या पक्वं पेयादिमिश्रितम् ॥
त्रिदोषमप्यतीसारं पीतं हन्ति सुदारुणम् ।
गौरवे वमनं पथ्यं यस्य स्यात्प्रबलः कफः ॥
ज्वरे दाहे सविष्टम्भे मारुताद्रक्तपित्तवत् ।
सम्पक्वे बहुदोषे च विबन्धे मूत्रशोधनैः ।
कार्य्यमास्थापनं क्षिप्रं तथाचैवानुवासनम् ॥
प्रवाहेण गुदभ्रंशे मूत्राघाते कटिग्रहे ।
मधुराम्लशृतं तैलं सर्पिर्व्वाप्यनुवासनम् ॥
गुदपाकस्तु पित्तेन यस्य स्याद्दहिताग्निनः ।
तत्र पित्तहराः सेकास्तत्सिद्धाश्चानुवासनाः ॥
दधिमण्डसुराबिल्वसिद्धं तैलं समारुते ।
भोजने च हितं क्षीरं कच्छूरामूलसाधितम् ॥
अल्पाल्पं बहुशोरक्तं सरुग्य उपवेश्यते ।
यदा वायुर्विबद्धश्च पिच्छावस्तिस्तदा हितः ॥
प्रायेण गुददौर्बल्यं दीर्घकालातिसारिणाम् ।

भवेत्तस्माद्धितं तेषां गुदे तैलावचारणम् ॥
कपित्थशाल्मलीफञ्जीवनकार्पासिदाडिमाः ।
पूथिकाकच्छुराशेलुः शणाश्वुच्चूःसदाधिका ॥
शालपर्णी पृश्निपर्णी वृहती कण्टकारिका ।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥
एष आहारसंयोगो हितः सर्व्वातिसारिणाम् ।
तिलकल्को हितश्चात्र मौद्गोमुद्गरसस्तथा ॥
पित्तातिसारी यो मर्त्त्यः पित्तलानि निषेवते ।
पित्तं प्रदुष्टं तस्याशु रक्तातीसारमावहेत् ॥
ज्वरं शूलं तृषं दाहं गुदपाकञ्च दारुणम् ।
स्रौ रक्तं शकृतः पूर्व्वं पश्चाद्वा प्रतिसार्य्यते ॥
स पल्लवैर्वटादीनां ससर्पिः साधितं पयः ।
पिबेत्स शर्कराक्षौद्रमथ वाप्यभिमथ्य तत् ॥
नवनीतमथो लिह्यात्तक्रं चानुपिबेत्ततः ।
पियालशाल्मलीप्लक्षशल्लकीतिनिशत्वचः ॥
क्षीरे विमर्दिताः पीताः सक्षौद्रा रक्तनाशनाः ।
मधुकं शर्करां लोध्रं पयस्यामथ सारिवाम् ॥
पिबेच्छागेन पयसा सक्षौद्रां रक्तनाशनीम् ।
मञ्जिष्ठां सारिवां लोध्रं पद्मकं कुमुदोत्पलम् ॥
पिबेत्पद्माञ्च दुग्धेन छागेनासृक्प्रशान्तये ।
शर्करोत्पललोध्राणि समङ्गा मधुकन्तिलाः ॥
तिलामोचरसो लोध्रं तथैव मधुकोत्पलम् ।
कच्छुरा तिलकल्कश्च योगाश्चत्वार एव तु ॥

आजेन पयसा पेयाः सरक्ते मधुसंयुताः।
द्रवे सरक्ते स्रवति बालबिल्वं सफाणितम्॥
सक्षौद्रतैलं प्रागेव लिह्यादाशु हितं हि तत्।
कोशकारं घृते भृष्टं लाजचूर्णं सिता मधु॥
समूलं रक्तपित्तोत्थं लीढं हन्त्युदरामयम्।
बिल्वमध्यं समधुकं शर्कराक्षौद्रसंयुतम्॥
तण्डुलाम्बुयुतो योगः पित्तरक्तोत्थितं जयेत्।
गुदपाके च ये उक्तास्तेऽत्रापि विधयः स्मृताः॥
रुजायां वाप्यशाम्यन्त्यां पिच्छावस्तिर्हितो भवेत्।
रक्तविड्दोषबहुलं दीप्ताग्निर्योऽतिसार्यते।
विडङ्गत्रिफलाकृष्णाकषायैस्तं विरेचयेत्।
अथवैरण्डसिद्धेन पयसा केवलेन वा॥
यवागूर्व्विरिक्तस्य वातघ्नैर्दीपनैः कृताः।
दीप्ताग्निर्न्निःपुरीषो यः सार्य्यते फेणिलं शकृत्॥
स पिबेत्फाणितं शुण्ठीदधितैलपयोघृतम्।
स्विन्नानि गुडतैलाभ्यां भक्षयेद्बदराणि च॥
सुस्विन्नान् पिष्टवद्वापि समं बिल्वशलाटुभिः।
दध्नोपयुज्य कुल्माषान् स्वेतामनुपिबेत्सुराम्॥
शशमांसं सरुधिरं समङ्गां सघृतं दधि।
खादेद्विपाच्य सेवेत स्वद्वन्नं शकृतः क्षये॥
संस्कृतो यमके माषयवकोलरसः शुभः।
भोजनार्थञ्च दातव्यो दधिदाडिमसाधितः॥
विडं बिल्वशलाटूनि नागरं चाम्लपेषितम्।

दध्नः सरश्च यमके भृष्टो वर्च्चःक्षये हितः ॥
सशूलं क्षीणवर्च्चा यो दीप्ताग्निरतिमार्य्यते ।
स पिवेद्दीपनैर्युक्तं सर्पिस्तद्ग्राहकैःसह ॥
वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य।
प्रवाहमाणस्य मुहुर्मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः॥
प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाच्च।
सशोणिता शोणितसम्भवास्तुताः स्नेहरूक्षप्रभवा मतास्तु॥
तासामतीसारवदादिशेच्च लिङ्गं क्रमंचामविपक्वताञ्च।
न शान्तिमायाति विलङ्घनैर्या योगैरुदीर्णा यदि पाचनैर्वा॥
ताःक्षीरमेवाशु शृतं निहन्ति तैलं तिलाः पिच्छिलवस्तयश्च।
आर्द्रैःकुशैःसंपरिवेष्टितानि वृन्तान्यथार्द्राणि हि शाल्मलीनाम्
पक्वानि सम्यक्पुटपाकयोगेनापीड्य तेभ्यो रसमाददीत॥
क्षीरं शृतं तैलहविर्विमिश्रं कल्केन यष्टीमधुकस्य वापि।
वस्तिं विदध्याद्भिषगप्रमत्तः प्रवाहिकामूत्रपुरीषसङ्गे॥
द्विपञ्चमूलीक्वथितेन शूले प्रवाहमाणस्य समाक्षिकेण।
क्षीरेणचास्थापनमग्र्यमुक्तं तैलेन यच्चाप्यनुवासनञ्च॥
वातघ्नवर्गे लवणेषु चैव तैलञ्च सिद्धं हितमन्नपाने।
लोध्रं विडं विल्वशलाटु चैव लिह्याच्च तैलेन कटुत्रिकालम्॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडितस्तु।
सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन॥
शूलार्दितो व्योषविदारिगन्धासिद्धेन दुग्धेन हिताय भोज्यः।
वातघ्नसंग्राहकदीपनीयैः कृतान्रसांश्चाप्युपभोजयेच्च॥
खादेच्च मत्स्यान् रसमाशु याच्च वातघ्नसिद्धं सघृतं सतैलम्।

एणाव्यजानान्तु वटप्रवालैः सिद्धानि साईं पिशितानि खादेत् ॥
मेध्यस्य सिद्धन्त्वथ वापि रक्तं वस्तस्य दध्ना घृततैलरुक्तम् ।
खादेत्प्रयुक्तैः शिखिलावकैश्च भुञ्जीत यूषैर्दधिभिश्च मुख्यैः ॥
माषान् सुसिद्धान् घृतमण्डयुक्तान् खादेच्च दध्नामरिचोपदंशान्॥

मद्दारुजे मूत्रकृच्छ्रे भिषग्वस्तिं प्रदापयेत् ।
पयोमधुघृतोन्मिश्रं मधुकोत्पलसाधितम् ॥
स वस्तिः शमयेत्तस्य रक्तं दाहमथो ज्वरम् ।
मधुरौषधसिद्धञ्च हितं तस्यानुवासनम् ॥
रात्रावहनि वा नित्यं रुजार्त्तो यो भवेन्नरः ।
यथायथाः स तैल स्याद्वातशान्तिस्तथा तथा ।
प्रशान्ते मारुते वापि शान्तिं याति प्रवाहिका ।
तस्मात्प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥

पाठाजमोदा कुटजस्य वीजं शुण्ठीसमा मागधिकाश्च पिष्टाः।
सुखाम्बु पीताः शमयन्ति रोगं मेध्याण्डसिद्धं सघृतं पयो वा ॥
शुण्ठी घृतं सत्त्वकं सतैलं विपाच्य लीढ्वामयमाशु हन्यात् ।
गजाशनाकुम्भिकदाडिमानां रसैः कृते तैलघृते सदध्नि ॥
बिल्वान्विता पथ्यतमा यवागूर्धारोष्णदुग्धस्य तथा च पानम्।
लघूनि पथ्यान्यथ दीपनानि स्निग्धानि भोज्यान्युदरामयेषु ॥
हिताय नित्यं वितरेद्धि भोज्यं योगांश्च तांस्तान् भिषगप्रमत्तः।

तृष्णापनयनी लघ्वी दीपनी वस्तिशोधनी ।
ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥
रौक्ष्याज्जाते क्रिया स्निग्धा रूक्षा स्नेहनिमित्तजे ।
भयजे सान्त्वनापूर्वा शोकजे शोकनाशिनी ॥

विशार्थ्यः कृमिसम्भूते हिता चोभयशर्मदा ।
छर्दिमूर्च्छातृडाद्यांश्च साधयेदविरोधतः ॥
समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत् ।
ज्वरे चैवातिसारे च सर्वत्रान्यत्र मारुतम् ॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥
कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे ।
कर्म्मदोषोद्भवाश्चान्ये कर्म्मजास्तेष्वहेतुकाः ॥
नश्यन्ति त्वक्रियाभिस्ते क्रियाभिः कर्म्मसङ्क्षये ।
शाम्यन्ति दोषसम्भूता दोषसंक्षयहेतुभिः ॥
तेषामल्पनिदाना ये प्रतिकष्टा भवन्ति च ।
मृदवो बहुदोषा वा कर्म्मदोषोद्भवास्तु ते ॥
कर्मदोषक्षयकृतातेषां सिद्धिर्विधीयते ।
दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ॥
अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥
तस्मात्कार्य्यः परीहारस्त्वतीसारे विरिक्तवत् ।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥
षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता ।
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः ।
तस्मात्संदूषिते वह्नौ ग्रहणी सम्प्रदुष्यति ॥
एकशः सर्वशश्चैव दोषैरत्यर्थमूर्च्छितैः ।

सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥
तस्योत्पत्तौ विदाहान्नेसदनालस्यतृट्क्लमाः ।
बलक्षयोऽरुचिः कासः कर्णक्ष्वेडान्त्रकूजनम् ॥
अथ जाते भवेज्जन्तुः शूनपादकरः कृशः ।
पर्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान् ॥
उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम् ।
प्रसेकमुखवैरस्यतमकारुचिपीडितः ॥
वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः ॥
पित्तात्सदाहैर्गुरुभिः कफात्त्रिभ्यस्त्रिलक्षणैः ।
दोषवर्णनखैस्तद्वद्विण्मूत्रनयनाननैः ॥
हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः ।
यथादोषोल्बणन्तस्य विशुद्धस्य यथाक्रमम् ॥
पेयादिं वितरेत्सम्यग्दीपनीयोपसम्भृतम् ।
ततः पाचनसङ्ग्राहिदीपनीयगणत्रयम् ॥
पिबेत्प्रातःसुरारिष्टस्नेहमूत्रसुखाम्बुभिः ।
तक्रेण वाथ तक्रं वा केवलं हितमुच्यते ॥
क्रिमिगुल्मोदरार्शोघ्नीः क्रियाश्चात्रावचारयेत् ॥
चूर्णं हिंग्वादिकं चात्र घृतं वा प्लीहनाशनम् ।
कल्केन मगधाद्यस्य चाङ्गेरीस्वरसेन वा ॥
चतुर्गुणेन दध्ना च घृतं सिद्धं हितं भवेत् ।

सर्वथा दीपनं सर्वं ग्रहणीरोगिणां हितम् ॥
ज्वरादीनविरोधाच्च साधयेत्स्वैश्चिकित्सितैः ।

---

## एकचत्वारिंशत्तमोऽध्यायः ॥

अथातः शोषप्रतिषेधं व्याख्यास्यामः ॥
अनेकरोगानुगतो बहुरोगपुरोगमः ।
दुर्विज्ञेयो दुर्निवारः शोषो व्याधिर्म्महाबलः ॥
संशोषणाद्रसादीनां शोष इत्यभिधीयते ।
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥
राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ।
तस्मात्तं राजयक्ष्मेति केचिदाहुर्म्मनीषिणः ॥
सव्यस्तैर्ज्जायते दोषैरिति केचिद्वदन्ति हि ।
एकादशानामेकस्मिन् सान्निध्यात्तन्वयुक्तितः ॥
क्रियाणां चाविभागेन प्रागेवोत्पादनेन च ।
एक एवमतः शोषः सन्निपातात्मको ह्यतः ॥
उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि ।
क्षयाद्वेगप्रतीघाताद्व्यायामाद्विषमाशनात् ॥
जायते कुपितैर्द्दोषैर्व्याप्तदेहस्य देहिनः ।
कफप्रधानैर्दोषैर्हि रुद्धेषु रसवर्त्मसु ॥
अतिव्यवायिनोवापि क्षीणे रेतस्यनन्तरा ।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ।

स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥
स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोध्वंसो विज्ञेयः कफकोपतः ॥
एकादशभिरेतैर्वा षड्भिर्वापि समन्वितम् ।
कासातीसारपार्श्वार्त्तिस्वरभेदारुचिज्वरैः ॥
त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्दितं जन्तुमिच्छन् सुविपुलं यशः ॥
व्यवायशोकस्थाविर्य्यव्यायामाध्वोपवासतः ।
व्रणोरःक्षतपीडाभ्यां शोषानन्ये वदन्ति हि ॥
व्यवायशोषः शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथा पूर्वं क्षीयन्ते चास्य धातवः ॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः ॥
जराशोषी कृशो मन्दस्वल्पबुद्धिबलेन्द्रियः ।
श्वसनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥
ष्ठीवति श्लेष्मणा हीनं तथैवारतिपीडितः ।
सम्प्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥
अध्वशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥
व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
उरःक्षतकृतैर्लिङ्गैः संयुतश्च क्षताद्विना ॥

रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषः सचासाध्यतमस्ततः ॥
व्यायामभाराध्ययनैरभिघातातिमैथुनैः ।
कर्म्मणा चाप्युरस्येन वक्षो यस्य विदारितम् ॥
तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति ।
कासमानश्छर्द्दयेच्च पीतरक्तासितारुणम् ॥
सन्तप्तवक्षाः सोऽत्यर्थं दूयनात्परिताम्यति ।
दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः ॥
केषाञ्चिदेव शोषो हि कारणैर्भेदमागतः ।
न तत्र दोषलिङ्गानां समस्तानां निपातनम् ॥
क्षयाएव हि ते ज्ञेयाः प्रत्येकं धातुसंक्षयात् ।
चिकित्सितं तु तेषां हि प्रागुक्तं धातुसंक्षये ॥
श्वासाङ्गसादकफसंस्रवतालुशोष
च्छर्द्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्ये
च्छुष्कांस्तरून्पवनधूमदवार्दितांश्च ॥
महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्ज्जयेत् ॥
उपाचरेदात्मवन्तं दीप्ताग्निमकृशं नवम् ।

स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च॥
स्निग्धस्य मृदुकर्त्तव्यमूर्द्ध्वञ्चाधश्च शोधनम्।
आस्थापनं तथाकार्यं शिरसश्च विरेचनम्॥
यवगोधूमशालीश्च रसैर्भुञ्जीत शोधितः।
दृढेऽग्नौ हृ हृष्टश्चापि निवृत्तोपद्रवं नरम्॥
व्यवायशोषिणं प्रायो भजन्ते वातजा गदाः॥
बृंहणीयो विधिस्तस्मै हितः स्निग्धोऽनिलापहः॥
काकानुलूकान्नकुलान् विडालान् गण्डूपदान् व्यालबिलेशयाखून्।
गृध्रांश्च दद्याद्विविधैः प्रकारैः ससैन्धवान्सर्षपतैलभृष्टान्॥
देयानि मांसानि च जाङ्गलानि मुद्गाढकीसूपरसाश्च हृद्याः॥
खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसानि सुकल्पितानि।
मांसोपदंशांश्च पिबेदरिष्टान्माध्वीकयुक्ता मदिराश्च सेव्याः॥
अर्कोत्थताक्षारजलोषितेभ्यः कृत्वा यवेभ्यो विविधांश्च भक्ष्यान्।
खादेत् पिबेत्सर्पिरजाविकं वा कृशो यवाग्वा सह भक्तकाले॥
सर्पिर्मधुभ्यां त्रिकटु प्रलिह्याच्चव्याविडङ्गोपहितं क्षयार्त्तः।
मांसादमांसेषु घृतञ्च सिद्धं शोषापहं क्षौद्रकणासमेतम्॥
द्राक्षासितामागधिकावलेहः सक्षौद्रतैलः क्षयरोगघाती।
घृतेन चाजेन समाक्षिकेन तुरङ्गगन्धातिलमाषचूर्णम्॥
सिताश्वगन्धामगधोद्भवानां चूर्णं घृतं क्षौद्रयुतं प्रलिह्यात्।
क्षीरं पिबेद्वाप्यथ वाजिगन्धाविपक्वमेवं लभते च पुष्टिम्॥
तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः पिबेद्वाथ पयोऽनुपानम्।
उत्सादने चापि तुरङ्गगन्धा योज्या यवाश्चैव पुनर्नवे च॥
क्षतस्य रूपे तत्कुसुमैश्च सिद्धं सर्पिःपिबेत्क्षौद्रयुतं हिताशी।

यच्माणमेतत्प्रबलञ्च कासं श्वासञ्च हन्यादपि पाण्डुताञ्च॥
शकृद्रसा गोऽश्वगजाव्यजानां क्वाथामिताश्चापि तथैव भागैः।
मूर्व्वाहरिद्राखदिरद्रुमाणां चीरस्य भागस्त्वपरो घृतस्य॥
भागान् दशैतान् विपचेद्विधिज्ञो दत्वा त्रिवर्गं मधुरञ्च कृत्स्नम्।
कटुत्रिकञ्चैव सभद्रदारु घृतोत्तमं यच्मनिवारणाय॥
द्वे पञ्चमूल्यौ वरणां करञ्जं भल्लातकं विल्वपुनर्न्नवे च।
यवान्कुलत्थान्वदराणि भार्गीं पाठां कृताशं समहीकदम्बम्॥
कृत्वा कषायं विपचेद्धि तस्य षड्भिर्हि पात्रैर्घृतपात्रमेकम्।
व्योषं महाद्रु मपयोऽभयाञ्च चव्यं सुराह्वं लवणोत्तमञ्च।
एतद्धि शोषं जठराणि चैव हन्यात्प्रमेहांश्च सहानिलेन॥
गोश्वाव्यजेमैणखरोष्ट्रजातैः शकृद्रसचीररसच्चतोत्थैः।
द्राचाश्वगन्धामगधासिताभिः सिद्धं घृतं यच्मविकारहारि॥
एलाजमोदामलकाभयाच्चगायत्र्यरिष्टासनशालसारान्॥
विडङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराह्वजांश्च।
पक्त्वा जले तेन पचेद्धिसर्प्पिस्तस्मिन् सुसिद्धे त्ववतारिते च॥
त्रिंशत्पलान्यत्र सितोपलाया दत्वा तुगाचीरिपलानि षट्च।
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्चौद्रं ततो मन्थहतं विदध्यात्॥
पलं पलं प्रातरतः प्रलिह्यात्पश्चात्पिबेत्चीरमतन्द्रितश्च।
एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यमथो यशस्यम्॥
यच्माणमाशु व्यपहन्ति चैतत्पाण्ड्वामयञ्चैव भगन्दरञ्च।
श्वासञ्च हन्ति स्वरभेदकासहृत्प्लीहगुल्मग्रहणीगदांश्च॥
न चात्र किञ्चित्परिवर्ज्जनीयं रसायनञ्चैतदुपास्यमानम्।
प्लीहोदरोक्तं विहितं च सर्पिस्तीण्येव चान्यानि हितानि चात्र॥

उपद्रवांश्च स्वरवैकृतादीन् जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम्।
अजाशकृन्मूत्रपयोघृताद्यम्मांसालयानि प्रतिसेवमानः॥
स्नानादिनानाविधिना जहाति मासादशेषं नियमेन शोषम्।
रसोनयोगं विधिवत्क्षयार्त्तः क्षीरेण वा नागबलाप्रयोगम्॥
सेवेत वा मागधिकाविधानं तथोपयोगं जतुनोऽश्मजस्य।
शोकं स्त्रियं क्रोधमसूयनञ्च त्यजेदुदारान्विषयान्भजेत॥
वैद्यान् द्विजातीं स्त्रिदशान् गुरूंश्च वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः।

---

## द्विचत्वारिंशत्तमोऽध्यायः॥

अथातो गुल्मप्रतिषेधं व्याख्यास्यामः॥
यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः।
जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते॥
हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः।
चयापचयवान्वृत्तः स गुल्म इति कीर्त्तितः॥
पञ्च गुल्माश्रया नृणां पार्श्वे हृन्नाभिवस्तयः।
कुपितानिलमूलत्वाद्गूढमूलोदयादपि॥
गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते।
स यस्मादात्मनि चयं गच्छत्यप्स्विव वुद्बुदः॥
अन्तःसरति यस्माच्च न पाकमुपयात्यतः।
स व्यस्तैर्जायते दोषैः समस्तैरपि वोच्छ्रितैः॥
पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः।
अरुचिः कृच्छ्रविण्मूत्रवातताऽन्त्रविकूजनम्॥

विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ।
द्वेषोऽन्ने वायुरूर्द्धञ्च पूर्व्वरूपेषु गुल्मिनाम् ॥
हृत्कुक्षिशूलं मुखकण्ठशोषो वायोर्निरोधो विषमाग्निता च ।
ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसम्भवे तु ॥
स्वेदज्वराहारविदाहदाहास्तृष्णाङ्गरागः कटुवक्त्रता च ।
पित्तस्य लिङ्गान्यखिलानि यानि पित्तात्मके तानि भवन्ति गुल्मे ।
स्तैमित्यमन्नेऽरुचिरङ्गसादश्छर्दिःप्रसेको मधुरास्यता च ।
कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफसम्भवे तु ॥
सर्व्वात्मकः सर्व्वविकारयुक्तः सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये ।
नवप्रसूताऽहितभोजना या याचामगर्भं विसृजेदृतौ वा ॥
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ।
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ॥
न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनाम् ।
तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥
वातगुल्मार्दितं स्निग्धं युक्तं स्नेहविरेचनैः ।
उपाचरेद्यथाकालं निरूहैः सानुवासनैः ॥
पित्तगुल्मार्दितं स्निग्धं काकोल्यादिघृतेन तु ।
विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् ॥
श्लेष्मगुल्मार्दितं स्निग्धं पिप्पल्यादिघृतेन तु ।
तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ।
पित्तवद्रक्तगुल्मिन्या नार्य्याः कार्य्यः क्रियाविधिः ॥
विशेषमपरं चास्याः शृणु रक्तविभेदनम् ।

पलाशभस्मतोयेन सिद्धं सर्पिः प्रयोजयेत् ॥
दद्यादुत्तरबस्तिञ्च पिप्पल्यादिघृतेन तु ।
उषणैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥
आनूपौदकमज्जानो वसा तैलं घृतं दधि ।
विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥
जाङ्गलैकशफानान्तु वसा सर्पिश्च पैत्तिके ।
तैलं जाङ्गलमज्जान एवं गुल्मे कफोत्थिते ॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ।
शर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ।
चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः ।
दीप्यकग्रन्थिकाजाजीहवुषाधान्यकैः समैः ॥
दध्यारनालबदरमूलकस्वरसैर्घृतम् ।
तत्सिद्धेद्वातगुल्माग्निदौर्बल्याटोपशूलनुत् ॥
हिङ्गुसौवर्च्चलाजाजीविडदाडिमदीप्यकैः ।
पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम् ।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥
विडदाडिमसिन्धूत्थकृतभुग्व्योषजीरकैः ।
हिङ्गुसौवर्च्चलक्षारकणाचव्याम्लवेतसैः ॥
वीजपूररसोपेतं सर्पिर्दधिचतुर्गुणम् ।
साधितं दाधिकं नाम गुल्महृत्प्लीहशूलजित् ॥
रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ।
सुरारनालदध्यम्लमूलकस्वरसैः सह ॥

व्योषदाडिमवृक्षाम्लयवानीचव्यसैन्धवैः ॥
हिंग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ।
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ॥
कासापस्मारमन्दाग्निप्लीहशूलानिलाञ्जयेत् ।
दधिसौवीरकं सर्पिः क्वाथौ मुद्गकुलत्थजौ ॥
पञ्चाढकानि विपचेदावाप्य द्विपलान्यथ ।
सौवर्चलं स्वर्जिकाञ्च देवदार्व्वथ सैन्धवम् ॥
वातगुल्मापहं सर्पिरेतद्दीपनमेव च ।
तृणमूलकषाये तु जीवनीयैः पचेद्घृतम् ॥
न्यग्रोधादिगणे वापि गणे वाप्युत्पलादिके ।
रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयम् ॥
आरग्वधादौ विपचेद्दीपनीययुतं घृतम् ।
क्षारवर्गे पचेच्चान्यत्पचेन्मूत्रगणेऽपरम् ॥
घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयम् ।
यथादोषोच्छ्रयञ्चापि चिकित्सेत्सान्निपातिकम् ॥
चूर्णं हिंग्वादिकं वापि घृतं वा प्लीहनाशनम् ।
पिबेद्गुल्मापहं काले सर्पिः षट्पलकमेव वा ॥
तिलेक्षुरकपालाशसार्षपं यवनालजम् ।
भस्म मूलकजञ्चापि गोजाविखरहस्तिनाम् ॥
मूत्रेण महिषीणाञ्च पालिकैश्चावचूर्णितैः ।
कुष्ठसैन्धवयष्ट्याह्वनागरक्रिमिघातिभिः ॥
साजमोदैश्च दशभिः सामुद्राच्च पलैर्युतम् ।
अयः पात्रेऽग्निनाल्पेन पक्वा लेह्यमथोद्धरेत् ॥

तस्य मात्रां पिबेद्दध्ना सुरया सर्पिषापि वा ।
धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा ॥
गुल्मं वातविकारांश्च क्षारोऽयं हन्त्यसंशयम् ।
स्वर्जिकाकुष्ठसहितः क्षारः केतकजोऽपि वा ॥
तैलेन शमयेत्पीतो गुल्मं पवनसम्भवम् ।
पीतं सुखाम्बुना वापि स्वर्जिकाकुष्ठसैन्धवम् ॥
द्विक्षीरसुरुवूकञ्च वर्षाभूद्दहतीद्वयम् ।
चित्रकञ्च जलद्रोणे पक्वापादावशेषितम् ॥
मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥
तुषोषितं दशाहन्तु जीर्णभक्तः पिबेन्नरः ।
अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकम् ॥
पाठानिकुम्भरजनीत्रिकटुत्रिफलाग्निकम् ।
लवणं द्वृत्तवीजञ्च तुल्यं स्यादनवं गुडम् ॥
पथ्याभिः सहितं चूर्णं गवां मूत्रयुतं पचेत्।
गुटिकास्तद्घनीभूतं कृत्वा खादेदभुक्तवान् ॥
गुल्मप्लीहाग्निसादांस्ता नाशयेयुरशेषतः ।
हृद्रोगं ग्रहणीदोषं पाण्डुरोगञ्च दारुणम् ॥
सशूले सोन्नतस्पन्दे दाहपाकरुगन्विते ।
गुल्मे रक्तं जलौकोभिः सिरामोक्षेण वा हरेत्॥
सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः ।
कटुत्रिकसमायुक्ता हिताः पाने च गुल्मिनाम् ॥
पेया वातहरैः सिद्धाः कौलत्थाः संस्कृता रसाः ।

खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥
बद्धवर्च्चोऽनिलानान्तु सार्द्रकं क्षीरमिष्यते।
कुम्भीपिण्डेष्टकास्वेदान्कारयेत्कुशलो भिषक्॥
गुल्मिनः सर्वएवोक्ता दुर्विरेच्यतमा भृशम्।
अतश्चैतांस्तु सुस्विन्नान्स्रंसनेनोपपादयेत्॥
विलेपनाभ्यञ्जनानि तथा संदहनानि च।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः॥
उदरोक्तानि सर्प्पींषि चूर्णवर्त्तिक्रियास्तथा।
लवणानि च योज्यानि यान्युक्तान्युदरामये॥
वातवर्च्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः।
कृत्वा पायौ विधातव्या वर्त्तयो मरिचोत्तराः॥
दन्तीचित्रकमूलेषु तथा वातहरेषु च।
कुर्य्यादरिष्टान् सर्व्वांश्च सूत्रस्थाने यथेरितान्॥
खादेद्वाप्यङ्कुरान् भृष्टान् पूतीकत्वपटच्चजान्।
ऊर्द्धवातमनुष्यञ्च गुल्मिनं न निरूहयेत्॥
पिवेत्तृटन्नागरं वा सगुडां वा हरीतकीम्।
गुग्गुलं त्वटतां दन्तीं द्रवन्तीं सैन्धवं वचाम्॥
मूत्रमद्य पयोद्राक्षारसैर्व्वीक्ष्य बलाबलम्॥
एवं पीलूनि पिष्टानि पिवेत्सलवणानि तु।
पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः॥
युक्ता हन्ति सुरा गुल्मं शीघ्रं काले प्रयोजिता।
बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान्॥
कुल्माषान्वा बहुस्नेहान् भक्षयेल्लवणोत्तरान्।

अथास्योपद्रवः शूलः कथञ्चिदुपजायते ॥

शूलं निखातमिव सुखं येन तु वेत्त्यसौ ।
तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता ॥
तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिहृत्तता ।
रोमहर्षोऽरुचिश्छर्दिर्भुक्तहृद्विर्ज्जडाङ्गता ॥
वाय्वादिभिर्यथासङ्ख्यं मिश्रैर्व्वा वीक्ष्य योजयेत् ।
पथ्यानिलवणं क्षारं हिङ्गुतुम्बुरुपौष्करम् ॥
यवान्यथ हरिद्रा च विडङ्गान्यम्लवेतसम् ।
विदारी त्रिफला भीरु श्शृङ्गाटी गुडशर्करा ॥
काश्मरीफलयष्ट्याह्वपरूषकहिमानि च ।
षड्ग्रन्थातिविषादारुपथ्यामरिचहृत्त्वकान् ॥
कृष्णामूलकचव्यञ्च नागरक्षारचित्रकान् ।
उष्णाम्लकाञ्जिकक्षीरतोयैः श्लोकसमापनात् ॥
यथाक्रमं विमिश्रांश्च द्वन्द्वे सर्व्वांश्च सर्व्वजे ।
तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनम् ॥
शिशिरोदकपूर्णानां भाजनानाञ्च धारणम् ।
वमनोन्मर्द्दनस्वेदलङ्घनस्नपनक्रियाः ॥
स्नेहादिश्च क्रमः सर्व्वो विशेषेणोपदिश्यते ।
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम् ।
न खादेदालुकञ्चापि मधुराणि फलानि च ॥
विना गुल्मेन यच्छूलं गुल्मस्थानेषु जायते ।
निदानं तस्य वक्ष्यामि रूपञ्च सचिकित्सितम् ॥
वातमूत्रपुरीषाणां विग्रहादतिभोजनात् ।

अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥
पानीयपानात्क्षुत्काले विरूढानाञ्च सेवनात् ।
पिष्टान्नशुष्कमांसानामुपयोगात्तथैव च ॥
एवं विधानां द्रव्याणामन्येषां चोपसेवनात् ।
वायुः प्रकुपितः कोष्ठे शूलं सञ्जनयेद्भृशम् ॥
निरुच्छ्वासो भवेत्तेन वेदनापीडितो नरः ।
शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ॥
शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ।
निराहारस्य यस्यैव तीव्रं शूलमुदीर्य्यते ॥
प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च ।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
एतैर्लिङ्गैर्विजानीयाच्छूलं वातसमुद्भवम् ।
तृष्णा दाहो मदो मूर्च्छा तीव्रं शूलं तथैव च ॥
शीताभिकामो भवति शीतेनैव प्रशाम्यति ।
एतैर्लिङ्गैर्विजानीयाच्छूलम्पित्तसमुद्भवम् ॥
शूलेनोत्पीड्यमानस्य हृल्लास उपजायते ।
अतीव पूर्णकोष्ठत्वं तथैव गुरुगात्रता ॥
एतत्श्लेष्मसमुत्थस्य शूलस्योक्तं निदर्शनम् ।
सर्व्वाणि दृष्ट्वा रूपाणि निर्द्दिशेत्सान्निपातिकम् ॥
सन्निपातसमुत्थानमसाध्यं तं विनिर्द्दिशेत् ।
शूलानां लक्षणं प्रोक्तं चिकित्सां च निबोध मे ॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥

पायसैः कृशरापिण्डैः स्निग्धैर्व्वापिपिशितैर्हितः ।
त्वक्छाकेन वा स्निग्धमुष्णं भुञ्जीत भोजनम् ॥
चिरविल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् ।
वैहङ्गांश्च रसान् स्निग्धान् जाङ्गलान् शूलपीडितः ॥
यथालाभं निषेवेत मांसानि विलशायिनाम् ।
सुरासौवीरकं शुक्तं मस्तूदश्चित्तथा दधि ॥
सकालवणं पेयं शूले वातसमुद्भवे ।
कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥
ससैन्धवः समरिचो वातशूलविनाशनः ।
विडङ्गं शिग्रु कम्पिल्लपथ्याश्वामाम्लवेतसान् ।
सुरसामश्वकर्णञ्च सौवर्च्चलयुतान् पिबेत् ॥
मद्येन वातजं शूलं क्षिप्रमेव प्रशाम्यति ।
हपुषीकाजाजिचविकायवानीव्योषचित्रकाः
पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ।
तानि चूर्णानि पयसा पिबेत्काञ्जिकेन वा ॥
मध्वासवेन चुक्रेण सुरासौवीरकेण वा ।
अथ वै तानि चूर्णानि मातुलुङ्गरसेन वा ॥
तथा वदरयूषेण भावितानि पुनः पुनः ।
तानि हिंगुप्रगाढानि सह शर्करया पिबेत् ॥
सह दाडिमसारेण वर्त्तिः कार्य्या भिषग्जिता ।
सा वर्त्तिर्व्वातिकं शूलं क्षिप्रमेव व्यपोहति ॥
गुडतैलेन वा लीढा पीता मद्येन वा पुनः ।
बुभुक्षाप्रभवे शूले लघु सन्तर्पणं हितम् ॥

उष्णैः चीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ।
वातशूले समुत्पन्ने रूक्षं स्निग्धेन योजयेत् ॥
सुसंस्कृताः प्रदेयाः सुभृतपूरा विशेषतः ।
वारुणीञ्च पिवेज्जन्तुस्तथा सम्पद्यते सुखी ॥
एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितम् ।
अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतः परम् ।
स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥
शीतलानि च सेवेत सर्व्वाण्युष्णानि वर्ज्जयेत् ।
मणिराजतताम्राणि भाजनानि च सर्व्वशः ॥
वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ।
गुडशालियवाः चीरं सर्पिः पानं विरेचनम् ॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ।
रसान्सेवेत पित्तघ्नान् पित्तलानि विवर्ज्जयेत् ॥
पालाशं धान्वनं वापि पिवेद्यूषं सशर्करम् ।
परूषकाणि मृद्वीकाखर्ज्जूरोदकजान्यपि ॥
तत्पिवेच्छर्करायुक्तं पित्तशूलनिवारणम् ॥
अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥
वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् ।
रूक्षः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः ॥
पिप्पलीम्शृङ्गवेरञ्च श्लेष्मशूले भिषग्जितम् ।
पाठां वचां त्रिकटुकं तथाच कटुकरोहिणीम् ॥
चित्रकस्य च निर्यूहं पिवेद्यूषं समार्ज्जकम् ।
एरण्डफलमूलानि मूलं गोक्षुरकस्य च ॥

शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ।
दद्याच्छृगालविन्नाञ्च सहदेवां तथैव च ॥
महासहां क्षुद्रसहां मूलञ्चेक्षुरकस्य च ।
एतत्सम्भृत्य सम्भारं जलद्रोणे विपाचयेत् ॥
चतुर्भागावशेषन्तु यवक्षारयुतं पिबेत् ॥
वातिकं पैत्तिकं वापि श्लैष्मिकं सान्निपातिकम् ।
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः ॥
पिप्पल्यः स्वर्जिकाक्षारो यवाग्विलक एव च ।
सैव्यश्चैव समानीय भस्म कुर्य्याद्विचक्षणः ॥
तदुष्णवारिणा पातं श्लेष्मशूले भिषग्जितम् ।
रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः ॥
स संरुद्धः करोत्याशु ध्मानं गुडुगुडायनम् ।
सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासो तदा नरः ॥
नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीडितः ।
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥
तत्र पुष्करमूलानि हिंगुसौवर्च्चलं विडम् ।
सैन्धवं तुम्बुरूपथ्याचूर्णं कृत्वा तु पाययेत् ॥
पार्श्वहृद्वस्तिशूलेषु यवक्वाथेन संयुतम् ।
सर्पिः सौहोदरोक्तं वा घृतं वा हिंगुसंयुतम् ॥
वीजपूरकसारं वा पयसा सह साधितम् ।
एरण्डतैलमथ वा मद्यमस्तुपयोरसैः ॥
भोजयेच्चापि पयसा जाङ्गलेन रसेन वा ।
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः ॥

तदास्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ।
उच्छ्वसित्यामशक्तता शूलेनाहन्यते मुहुः ॥
नैवासने न शयने तिष्ठन्न लभते सुखम् ।
कुक्षिशूल इतिख्यातो वातादामसमुद्भवः ॥
वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलम् ।
संसर्गं पाचनं कुर्य्यादम्लैर्द्दीपनसंयुतैः ॥
नागरं दीप्यकं चव्यं हिङ्गु सौवर्च्चलं विडम् ।
मातुलुङ्गास्य वीजानि तथा श्यामोरुवूकयोः ॥
वृहत्याः कण्टकार्य्याश्च क्वाथं शूलहरं पिवेत् ।
वचा सौवर्चलं हिङ्गु कुष्ठं सातिविषाभया ॥
कुटजस्यच वीजानि सद्यःशूलहराणि तु ।
विरेचनं प्रयुञ्जीत ज्ञात्वा दोषबलाबलम् ॥
स्नेहवस्तीन्निरूहांश्च कुर्य्याद्दीपनिवर्हणाम् ।
उपनाहाः स्नेहसेका धान्याम्लपरिसेचनम् ।
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥
हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं परम् ।
स हृच्छूल इतिख्यातो रसमारुतसम्भवः ॥
तत्रापि कर्म्माभिहितं यदुक्तं हृद्विकारिणाम् ।
संरोधात्कुपितो वायुर्व्वस्तिमावृत्य तिष्ठति ॥
वस्तिवंक्षणनाभीषु ततः शूलोऽस्य जायते ।
विण्मूत्रवातसंरोधी वस्तिशूलः स मारुतात् ॥
नाभ्यां वंक्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्दकः ।
मूत्रमावृत्य गृह्लाति मूत्रशूलः समारुतात् ॥

वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ।
मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकम् ॥
शूलं सञ्जनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि ।
दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥
सर्व्वत्र वर्द्धिते क्षिप्रं शूलं तत्र सर्षपवत् ।
पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते ॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ।
विट्शूलमेतज्जानीयाद्भिषक्परमदारुणम् ॥
क्षिप्रं दोषहरं कार्य्यं भिषजा साधु जानता ।
स्वेदनं वमनञ्चैव निरूहाः स्नेहवस्तयः ॥
पूर्व्वोद्दिष्टान् पाययेत योगान् कोष्ठविशोधनान् ।
उदावर्त्तहराश्चास्य क्रियाः सर्व्वाः सुखावहाः ॥
अतिमात्रं यदा भुक्तं पावके मृदुतां गते ।
स्थिरीभूतं तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥
अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति ।
मूर्च्छाध्मानं विदाहञ्च हृदुत्क्लेशो विलम्बिकाम् ॥
विरिच्यते छर्द्दयति कम्पतेऽथ विमुह्यति ।
क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः ॥
गुल्मावस्थाः क्रियाः कार्य्या यथावत्सर्व्वशूलिनाम् ।

---

## त्रिचत्वारिंशत्तमोऽध्यायः ॥

अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ॥

वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः ।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
कुर्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते ॥
चतुर्विधः स दोषैश्च पञ्चमः क्रिमिभिस्तथा ।
पृथग्लिङ्गं प्रवक्ष्यामि चिकित्सितमनन्तरम् ॥
आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ॥
तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥
गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम् ।
माधुर्य्यमपि चास्यस्य बलासावतते हृदि ॥
उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः ।
अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत् ॥
भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः ।
क्रिमिजे क्रिमिजातीनां श्लैष्मिकीणाञ्च ये मताः ॥

वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम् ।
द्विपञ्चमूलक्वाथेन सस्नेहलवणेन तु ॥
पिप्पल्येलावचाहिङ्गुयवभस्मानि सैन्धवम् ॥
सौवर्च्चलमथो शुण्ठीमजमोदाञ्च चूर्णितम् ।

फलधान्याम्लकौलत्थदधिमद्यासवादिभिः॥
पाययेत विशुद्धञ्च स्नेहेनान्यतमेन वा।
भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतैरसैः॥
वातघ्नसिद्धं तैलञ्च दद्याद्वस्तिं प्रमाणतः।
श्रीपर्णीमधुकक्षौद्रसितोत्पलजलैर्वमेत्।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम्॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्।
तृप्तस्य च रसैर्मुख्यैर्जाङ्गलैः सघृतैर्भिषक्॥
सक्षौद्रं वितरेद्वस्तिं तैलं मधुकसाधितम्।
वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके।
चूर्णन्तु पाययेतोक्तं वातजे भोजयेच्च तम्।
फलादिमथमुस्तादिं त्रिफलां वा पिबेन्नरः॥
श्यामात्रिवृत्कल्कयुतं घृतं वापि विरेचनम्।
बलातैलैर्विदध्याच्च वस्तिं वस्तिविशारदः।
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनम्॥
दध्ना वा पललोपेतं त्र्यहं पश्चाद्विरेचयेत्।
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः॥
विडङ्गगाढैर्धान्याम्लं पाययेताप्यनन्तरम्।
हृदयस्थाः पतन्त्येवमधस्तात्क्रिमयो नृणाम्॥
यवान्नं वितरेच्चास्य सविडङ्गमतः परम्।

———

## चतुश्चत्वारिंशत्तमोऽध्यायः॥

### अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम्।
निषेवमाणस्य विदूष्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुभावम्॥
पाण्ड्वामयोऽष्टार्द्ध विधः प्रदिष्टः पृथक् समस्तैर्युगपच्च दोषैः।
सर्वेषु चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलुपाण्डुरोगः॥
त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथाः।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि॥
सकामलापानकिपाण्डुरोगः कुम्भाह्वयो लाघरकोऽलसाख्यः।
विभाष्यते लक्षणमस्य कृत्स्नं निबोध वक्ष्याम्यनुपूर्वशस्तत्॥
कृष्णेक्षणं कृष्णसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च॥
वातेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च॥
पीतेक्षणं पीतसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च।
पित्तेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च॥
शुक्लेक्षणं शुक्लसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च।
कफेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च॥
सर्वात्मके सर्वमिदं व्यवस्येद्वक्ष्यामिलिङ्गान्यथ कामलायाः।
यो ह्यामयान्ते सहसान्नमम्लमद्यादपथ्यानि च तस्य पित्तम्॥
करोति पाण्डुं वदनं विशेषात्तन्द्राबलत्वं प्रथमोदितांश्च॥
भेदस्तु तस्याः खलु कुम्भसाह्वं शोफो महांस्तत्र च पर्वभेदः।
ज्वराङ्गमर्दभ्रमसादतन्द्राक्षयान्वितो लाघरकोऽलसाख्यः॥
तं वातपित्ताभिपरीतलिङ्गं हलीमकं नाम वदन्ति तज्ज्ञाः।

उपद्रवास्तेष्वरुचिः पिपासा छर्दिर्ज्वरो मूर्द्ध रुजाग्निसादः ॥
शोफस्तथा कण्ठगतोऽबलत्वं मूर्च्छा क्लमो हृदयपीडनञ्च ।
साध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध मधश्च शुद्धम् ॥
सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैः प्रयोगैः ।
पिवेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव वापि ॥
विरेचनद्रव्यकृतं पिवेद्वि योगांश्च वैरेचनिकान् घृतेन ।
मूत्रे निकुम्भार्द्धपलं विपाच्य पिवेदभीक्ष्णं कुडवार्द्धमात्रम् ।
खादेद्गुडं वाप्यभयाविमिश्रमारग्वधादिक्वथितं पिवेद्वा ॥
अयोरजोव्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा ।
सर्पिर्मधुभ्यां विदधीत वापि शास्त्रप्रदर्शीभिहितांश्चयोगान् ॥
हरेच्च दोषान् बहुशोऽल्पमात्रान् क्षयेद्धि दोषेष्वतिनिर्हृतेषु ।
धात्रीफलानां रसमिक्षुजञ्च मध्यं पिवेत् क्षौद्रयुतं हिताशी ॥
उभे बृहत्यौ रजनीं शुकाख्यां शुकादनीं चापि सकाकमाचीम् ।
आदारिबिम्बीं सकदम्बपुष्पीं विपाच्य सर्पिर्विपचेत्कषाये ॥
तत्पाण्डुतां हन्त्युपयुज्यमानं क्षीरेण वा मागधिकां यथाग्नि ।
हितञ्च यष्टीमधुकं कषाय चूर्णं समं वा मधुनावलिह्यात् ॥
गोमूत्रयुक्तं त्रिफलादलानां दत्त्वायसञ्चूर्णमनल्पकालम् ।
प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा काञ्चनगैरिकोत्थम् ॥
आजं शकृद्वा कुडवप्रमाणं विडं हरिद्रालवणोत्तमञ्च ।
पृथक्पलांशानि समग्रमेतच्चूर्णं हिताशी मधुनावलिह्यात् ॥
मण्डूरलोहाग्निविडङ्गपथ्याव्योषांशकः सर्वसमानताप्यः ।
मूत्रासुतोऽयं मधुनावलेहः पाण्डामयं हन्त्यचिरेण घोरम् ।
विभीतकायोमलनागराणां चूर्णं तिलानाञ्च गुडश्च मुख्यः ।

तक्रानुपानो वटकः प्रयुक्तः क्षिणोति घोरानपि पाण्डुरोगान् ॥
सौवर्च्चलं हिङ्गुकिराततिक्तक्वाथमात्राणि सुखाम्बुना वा ।
मूर्व्वाहरिद्रामलकञ्च लिह्यात् स्थितं गवां सप्त दिनानि मूत्रे ।
मूलं बलाचित्रकयोः पिवेद्वा पाण्ड्वामयार्त्तोऽन्नसमं हिताशी ॥
सुखाम्बुना वा लवणेन तुल्यं शिग्रोःफलं क्षीरभुजोपयोज्यम् ।
न्यग्रोधवर्गस्य पिवेत् कषायं शीतं सिताक्षौद्रयुतं हिताशी ॥
शालादिकं चाप्यथसारचूर्णं धात्रीफलं वा मधुनावलिह्यात् ॥
विडङ्गमुस्तत्रिफलाजमोदपरूषकव्योषविनिर्द्दहन्यः ।
चूर्णीकृता वा गुडशर्करे च तथैव सर्पिर्मधुनी शुभे च ॥
सम्भारमेतद्विपचेन्निधाय सारोदके सारवतो गणस्य ।
ज्ञानञ्च लेह्यं मतिमान्विदित्वा निधापयेन्मोक्षकजे समुद्गे ॥
हन्त्येष लेहः खलु पाण्डुरोगं सशोथमुग्रामपि कामलाञ्च ।
सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी।
कालेयकेचापि घृतं विपक्वं हितं च तस्माद्रजनीविमिश्रम् ।
धातुं नदीजं जतुशैलजं वा कुम्भाह्वये मूत्रयुतं पिवेद्वा ॥
मुत्रस्थितं सैन्धवसम्प्रयुक्तं मासं पिवेद्वापि हि लोहकिट्टम् ।
दग्ध्वाक्षकाष्ठैर्मलमायसंवा गोमूत्रनिर्व्वापितमष्टवारान् ॥
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात् ।
सिन्धूद्भवं वाग्निसमं च कृत्वा सिक्ता च मूत्रे सकृदेव तप्तम् ॥
लौहञ्च किट्टं बहुशश्च तप्ता निर्व्वाप्य मूत्रे बहुशस्तथैव ।
एकीकृतं गोजलपिष्टमेतदेकध्यमावाप्य पचेदुखायाम् ॥
यथा न दह्येत तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत् ।
तक्रौदनाशी विजयेत रोगं पाण्डुं तथा दीपयतेऽनलञ्च ॥

द्राक्षागुडूच्यामलकीरसैश्च सिद्धं घृतं लाघरके हितञ्च ।
गौडानरिष्टान्मधुशर्कराश्च मूत्रासवान् क्षारकृतांस्तथैव ।
स्निग्धान् रसानामलकैरुपेतान् कोलान्वितान् वापिहि जाङ्गलानाम्
सेवेत शेफाभिहितांश्च योगान् पाण्डामयी शालियवांश्च नित्यम्॥
श्वासातिसाराग्रुचिकासमूर्च्छातृट्छर्द्दिशूलज्वरशोफदाहान्।
तथा विपाकस्वरभेदसादान् जयेद्यथास्वम्प्रसमीक्ष्य शास्त्रम् ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनम् ।
गुदेऽथ शेफस्यथ मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥
विवर्ज्जयेत्पाण्डुकिनं यशोर्थी तथातीसारज्वरपीडितञ्च ।



## पञ्चचत्वारिंशत्तमोऽध्यायः ॥

अथातो रक्तपित्तप्रषेधं व्याख्यास्यामः ॥
क्रोधशोकभयायासविरुद्धान्नातपानलान् ।
कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः ॥
नित्यमभ्यसतो दुष्टो रसः पित्तञ्च कोपयेत् ।
विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितम् ।
ततः प्रवर्त्तते रक्तमूर्द्धं चाधो द्विधापिवा ।
आमाशयाद्व्रजेदूर्द्धमधः पक्वाशयाद्व्रजेत् ।
विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्त्तते ।
केचित्त्यकृतः प्रीहः प्रवदन्त्यसृजोगतिम् ॥
ऊर्द्धं साध्यमधोयाप्यमसाध्यं युगपद्गतम् ।
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥

लोहगन्धिश्च निश्वासो भवत्यस्मिन्भविष्यति ।
वाच्यान्यन्यानि रूपाणि तस्य सद्भावदोषोच्छ्रितीर्विदुः ॥
दौर्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा
भुक्ते चान्ने विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च
द्वेषो भक्तेऽविपाको विरतिरपि रते रक्तपित्तोपसर्गाः ॥
मांसप्रक्षालनाभं क्वथितमिव च यत्कर्द्दमाम्भोनिभं वा
मेदःपूयास्त्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकाराः
तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥
नादौ संग्राह्यमुद्रिक्तं यदसृग्बलिनो यतः ।
तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥
अधः प्रवृत्तं वमनैरूर्द्ध्वमार्गं विरेचनैः ।
जयेदन्यतरञ्चापि क्षीणस्य शमनैरसृक् ॥
अतिप्रवृत्तदोषस्य पूर्व्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥
लङ्घितस्य ततः पेयां विदध्यात्स्वल्पतण्डुलाम् ।
तर्प्पणं पाचनं लेहान् सर्प्पींषि विविधानि च ॥
द्राक्षामधुककाश्मर्य्यसितायुक्तं विरेचनम् ।
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितम् ॥
पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः।
पटोलशेलूसुनिषण्णयुथिकावटातिमुक्ताङ्कुरसिन्दुवारजम् ॥
हितञ्च शाकं घृतसंस्कृतं सदा तथैव धात्रीफलदाडिमान्वितम् ।

रसाश्च पारावतशल्लकूर्मजास्तथा यवाग्वोऽभिहिता घृतोत्तराः॥
सन्तानिकाश्चोत्पलवर्गसाधिते क्षीरे प्रशस्ता मधुशर्करोत्तमाः ।
हिताः प्रदेहा मधुशर्करास्तथैव घृतानि पथ्यानि च रक्तपित्तिनाम्॥
मधूकशोभाञ्जनकोविदारजैः प्रियङ्गुकायाः कुसुमैश्च चूर्णितैः ।
भिषग्विदध्याच्चतुरः समाक्षिकान् हिताय लेहानसृजः प्रशान्तये॥
लिह्याच्च दूर्व्वावटजांश्च पल्लवान्मधुद्वितीयान् सितकर्णिकस्य च।
हितश्च खर्ज्जूरफलं समाक्षिकं फलानि चान्यान्यपि तद्गुणान्यथ॥
रक्तातिसारप्रोक्तांश्च योगानत्रापि योजयेत् ।
शुक्लेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥
योजयित्वा क्षिपेद्रात्रावाकाशे सोत्पलन्तु तत् ।
प्रातः स्रुतं क्षौद्रयुतं पिबेच्छोणितपित्तवान् ॥
पिबेच्छीतकषायं वा जम्ब्वाम्रार्ज्जुनसम्भवम् ।
उडुम्बरफलं पिष्ट्वा पिबेत्तद्रसमेव वा ॥
त्रपुसीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ।
पिबेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥
चन्दनं मधुकं रोध्रमेवमेवं समं पिबेत्।
कारञ्जवीजमेवं वा सिताक्षौद्रयुतं पिबेत् ॥
मज्जानमिङ्गुदस्यैवं पिबेन्मधुकसंयुतम् ।
सुखोष्णं लवणं वीजं कारञ्जन्दधिमस्तुना ॥
पिबेद्वापि त्र्यहं मर्त्त्यो रक्तपित्ताभिपीड़ितः ।
रक्तपित्तहराः शस्ताः षडेते योगसत्तमाः ॥
पथ्यास्वेवावपीडेषु प्राणतः प्रस्रुतेऽसृजि ।
अतिनिस्रुतरक्तोवा क्षौद्रयुक्तं पिबेदसृक्॥

यष्ट्या भक्षयेद्राजमाषं पित्तसमायुतम्।
पलाशवृक्षस्वरसे विपक्वं सर्पिः पिबेत्क्षौद्रयुतं सुशीतम्॥
वनस्पतीनां स्वरसैः कृतं वा सशर्करं क्षीरघृतं पिबेद्वा।
द्राक्षामधुशीराख्यथ पद्मकं सिता पृथक्पलांशान्युदकेसमावपेत्।
स्थितं निशान्तद्रुधिरामयं जयेत्पीतं पयो वाम्बुसमं हिताशिनः॥
तुरङ्गवर्च्चःस्वर सं समाक्षिकंपिबेत्सिताक्षौद्रयुतं वृषस्य वा।
लिह्यात्तथा वास्तुकवीजचूर्णं क्षौद्रान्वितं तण्डुलसाह्वयं वा॥
लिह्याच्च लाजाञ्जनचूर्णमेकमेवं सिताक्षौद्रयुतां तुगाख्याम्।
द्राक्षां सितां तिक्तकरोहिणीञ्च हिमाम्बुना वा मधुकेन युक्ताम्।
पथ्यामहिंस्रां रजनीं घृतञ्च लिह्यात्तथा शोणितपित्तरोगी॥
वासाकषायोत्पलमृत्प्रियङ्गुनेलाञ्जनाम्भोरुहकेशराणि।
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु॥
गार्यात्रिजम्ब्वर्ज्जुनकोविदारशिरीषरोध्राशनशाल्मलीनाम्।
पुष्पाणि शिग्रोश्च विचूर्ण्य लेह्यो मध्वन्वितः शोणितपित्तरोगे॥
सक्षौद्रमिन्दीवरभस्म वारि करञ्जवीजं मधुसर्पिषीच।
जम्ब्वर्ज्जुनाम्रक्वथितञ्च तोयं घ्नन्ति त्रयः पित्तमसृक्च योगाः।
मूलानि पुष्पाणिच मातुलुङ्ग्याः पिष्ट्वा पिबेत्तण्डुलधावनेन॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयोवा।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हिमंवा॥
शीतोपचारं मधुरञ्च कुर्य्याद्विशेषतः शोणितपित्तरोगे।
द्राक्षाघृतक्षौद्रसितायुतेन विदारिगन्धादिविपाचितेन॥
क्षीरेणचास्थापनमग्रमुक्तं हितं घृतञ्चाप्यनुवासनार्थम्॥
प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः सुवर्णकालीयकशङ्खचन्दनैः।

सिताम्बुगन्धाम्बुदयष्टिकाह्वयैर्मृणालसौगन्धिकतुल्यपेषितैः ॥
निरूह्य चैनं पयसा समाक्षिकैर्घृतैः शीतजलाम्बुसेचितम् ।
क्षीरौदनं भुक्तमथानुवासयेद्घृतेन यष्टीमधुसाधितेनच ॥
अधोवहं शोणितमाशु नाशयेत्तथातिसारं रुधिरस्य दुस्तरम् ।
विरेकयोगेत्वतिचैव शस्यते वाम्यश्च रक्ते विजिते बलान्वितः ॥
एवं विधा उत्तरवस्तयश्च मूत्राशयस्थे रुधिरे विधेयाः ।
प्रदृत्तरक्तेषु च पायुजेषु कुर्य्याद्विधानं खलु रक्तपैत्तम् ॥
विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्य्यो विजानता ।
शस्त्रकर्म्मणि रक्तं वा यस्यातीव प्रवर्त्तते ॥
त्रयाणामपि दोषाणां शोणितस्य च सर्व्वशः ।
लिङ्गान्यालोक्य कर्त्तव्यं चिकित्सितमनन्तरम् ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः ॥

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः ।
क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ॥
विघातादभिघाताद्वा हीनसत्वस्य वा पुनः ।
करणायतनेषूग्रा वाह्येष्वाभ्यन्तरेषु च ॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ।
हृत्पीडाजृम्भनं ग्लानिः संज्ञानाशो बलस्य च ॥
सर्व्वासां पूर्व्वरूपाणि यथास्वमुपलक्षयेत् ।
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥

सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्च्छेति तां प्राहुःषड्विधा सा प्रकीर्त्तिता ॥
वातादिभिः शोणितेन मद्येनच विषेणच ।
षट्स्वपि तासु पित्तं हि प्रभुत्वेनावतिष्ठते ॥
पृथिव्यम्बुस्तमोरूपं रक्तगन्धश्च तन्मयः ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ।
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ॥
तएव तस्माज्जायन्ते ताभ्याम्मोहा यथेरिताः ।
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः ।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥
वेपथुस्वप्नतृष्णाः स्युः स्तम्भश्च विषमूर्च्छिते ।
वेदितव्यन्तीव्रतरं यथास्वं विषलक्षणैः ॥
सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च ।
शीतानि पानानिच गन्धवन्ति सर्व्वासु मूर्च्छास्वनिवारितानि ॥
सिताप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि ।
खर्जूरकाश्मर्य्यरसैः शृतानि पानानि सर्पींषि सजीवनानि ॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याश्च सदा सतीनाः ॥
भुजङ्गपुष्पं मरिचान्युशीरं कोलस्य मध्यञ्च पिबेत्समानि ।
सतीनतोयेन विसं मृणालं क्षौद्रेण कृष्णां सितया च पथ्याम् ॥
कुर्य्याच्च नासावदनावरोधं क्षीरं पिबेद्वाप्यथमानुषीणाम् ।

मूर्च्छाप्रसक्तां तु शिरोविरेकैर्जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः॥
हरीतकीक्वाथशृतं पिबेद्वा धात्रीफलानां स्वरसैः कृतं वा।
द्राक्षासितादाडिमलाजवन्ति शीतानि नीलोत्पलपद्मवन्ति॥
पिबेत्कषायांश्च गन्धवन्ति पित्तज्वरं यानि शमं नयन्ति।
प्रभूतदोषस्तमसोऽतिरेकात्संमूर्च्छितो नैव विबुध्यते यः॥
संन्यस्तसंज्ञो भृशदुश्चिकित्स्यो ज्ञेयस्तदा बुद्धिमता मनुष्यः।
यथामलोष्टं सलिले निसिक्तं समुद्धरेदाश्वविलीनमेव॥
तद्वच्चिकित्सेत्त्वरयाऽभिषक्तमवेदनं मृत्युवशप्रयातम्।
तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगैस्तथा नखाभ्यन्तरतोदपातैः॥
वादित्रगीतानुनयैरपूर्वैर्विघट्टनैर्गुप्तफलावघर्षैः॥
आभिः क्रियाभिश्च न लब्धसंज्ञः सानाहलालाश्वसनश्च वर्ज्यः।
प्रभूतसंज्ञं वमनानुलोम्यैस्तीक्ष्णैर्विशुद्धं लघुपथ्यभुक्तम्॥
फलत्रिकैश्चित्रकनागराद्यैस्तथाश्मजाताज्जतुनः प्रयोगैः।
सशर्करैर्मासमुपक्रमेत विशेषतो जीर्णघृतं स पाय्यः॥
यथास्वञ्च ज्वरघ्नानि कषायाण्युपयोजयेत्।
सर्वमूर्च्छापरीतानां विषजानां विषापहम्॥

---

## सप्तचत्वारिंशत्तमोऽध्यायः॥

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः॥
मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च।
रूक्षमाशुकरञ्चैव व्यवायि च विकाशि च॥
औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिम्।

विशत्यवयवान् सौक्ष्म्याद्वै शद्यात्कफशुक्रनुत् ॥
मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकर्म्मकृत् ।
हर्षदञ्च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥
तदम्लं रसतः प्रोक्तं लघुरोचनदीपनम् ।
केचिल्लवणवर्ज्ज्यांस्तु रसानत्रादिशन्ति हि ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुः प्रकर्षाय बलायोपचयाय च ।
काम्यता मनसस्तुष्टिर्द्धैर्य्यं तेजोऽतिविक्रमः ॥
विधिवत्सेव्यमानेतु मद्ये सन्निहिता गुणाः ।
तदेवानन्नभक्षेन सेव्यमानममात्रया ॥
कायाग्निनाह्यग्निसमं समेत्य कुरुते मदम् ।
मदेन करणानान्तु भावान्यत्वे कृते सति ॥
निगूढमपि भावं स्वम्प्रकाशीकुरुतेऽवशः ।
त्यवस्थश्च मदो ज्ञेयः पूर्व्वो मध्योऽथ पश्चिमः ॥
पूर्व्वे वीर्य्यरतिप्रीतिहर्षभाष्यादिवर्द्धनम् ।
प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा ॥
विसंज्ञः पश्चिमे शेते नष्टकर्मक्रियागुणः
श्लैष्मिकानल्पपित्तांश्च स्निग्धान्मालोपसेविनः ॥
पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते ।
निर्भक्तमेकान्ततएव मद्यं निषेव्यमाणं मनुजेन नित्यम् ।
उत्पादयेत्कष्टतमान्विकारानापादयेच्चापि शरीरभेदम् ॥
क्रुद्धेन भीतेन पिपासितेनशोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥

अत्यम्लभच्यावततोदरेण साजीर्णभुक्तेन तथाबलेन।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान्॥
पानात्ययं परमदम्पानाजीर्णमथापि वा।
पानविभ्रममुग्रञ्च तेषां वच्यामि लक्षणम्॥
स्तम्भाङ्गमर्दहृदयग्रहतोदकम्पाः
पानात्ययेऽनिलकृते शिरसो रुजश्च।
स्वेदप्रलापमुखशोषणदाहमूर्च्छाः
पित्तात्मके वदनलोचनपीतता च॥
श्लेष्मात्मके वमथुशीतकफप्रसेकाः
सर्व्वात्मके भवतिसर्वविकारसम्पत्।
उष्णा शरीरगुरुता विरसाननत्वं
श्लेष्माधिकत्वमरुचिर्मलमूत्रसङ्गः॥
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा
स्तृष्णारुजा शिरसि सन्धिषु चापि भेदः।
आध्मानमुद्गिरणमम्लरसो विदाहोऽ
जीर्णस्य पानजनितस्य वदन्ति लिङ्गम्॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि।
हृद्गात्रतोदवमथुज्वरकण्ठधूम
मूर्च्छाकफस्रवणमूर्द्धरुज विदाहः॥
द्वेषः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः।
हीनोत्तरौष्ठमतिशीतममन्ददाहं

तैलप्रभास्यमतिपानहतं विजह्यात् ॥
जिह्वौष्ठदन्तमसितं त्वथवापि नीलं
पीते च यस्य नयने रुधिरप्रभे च ।
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥
तेषां निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध ।
मद्यन्तु चुक्रमरिचार्द्रकदीप्यकुष्ठ
सौवर्च्चलायुतमलं पवनस्य शान्त्यै ॥
पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्व्वा
सौवर्च्चलेन च युतं वितरेत्सुखाय ।
आम्रातकाम्रफलदाडिममातुलुङ्गैः ॥
कुर्य्याच्छुभान्यपि च षाडवपानकानि ॥
सेवेत वा फलरसोपहितान्नसादी
नानूपवर्गपिशितान्यपि गन्धवन्ति ।
पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं समधुशर्करमिष्टगन्धम् ॥
पीत्वा च मद्यमपि चेक्षुरसप्रगाढम्
निःशेषतः क्षणमवस्थितमुल्लिखेच्च ।
लावैणतित्तिरिरसांश्च पिबेदनम्ला
न्मौद्गान्सुखाय सघृतान्ससितांश्च यूषान् ॥
पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन बिल्वविदुलोदकसंयुतेन ।

सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान् हिताय ॥
पथ्यं यवान्न त्रिकृतान्यपि जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात् ।
कुर्य्याच्च सर्व्वमथ सर्व्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथा प्रधानम् ॥
सामान्यमन्यदपि कृत्स्नसमग्रमग्र्यं
वक्ष्यामि यच्च मनसो मदकृन्मृदुत्वञ्च ।
त्वङ्नागपुष्पमगधैलमधूकधान्यैः
श्लक्ष्णै रजाजिमरिचैश्च कृतं समांशैः ॥
पानं कपित्थ रसवारिपरूषकाढ्यं
पानात्ययेषु विधिवत् स्नुतमम्बरान्ते ।
ह्रीवेरपद्मपरिपेलवसंप्रयुक्तैः
पुष्पैः प्रलिप्य करवीरजलोद्भवैश्च ॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च वितरेदमलैः सुशीतैः ।
त्वक् पत्रचोचमरिचैलभुजङ्गपुष्प
श्लेष्मातकप्रसवकल्कगुडैरुपेतम् ॥
द्राक्षायुतं हृतमलं मदिरामयार्त्तैः
स्तत्पानकं शुचि सुगन्धिनरैर्निपेव्यम्
पिष्ट्वा पिवेच्च मधुकं कटुरोहिणीञ्च
द्राक्षाञ्च मूलमसकृत् त्रपुसीभवं यत् ॥
कार्प्पासमूलमथ नागबलाञ्च तुल्यां

पीत्वा सुखी भवति साधु सुवर्च्चलाञ्च ।
काश्मर्य्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासुकृतमम्बुनि पानकं यत् ॥
तद्वीजपूरकरसायुतमाशु पीतं
शान्तिं परां मदगदेष्वचिरात्करोति ।
द्राक्षासितामधुकजीरकधान्यकृष्णा
स्त्वेवं कृतं त्वहृतया च पिवेत्तथापि ॥
सौवर्च्चलायुतमुदाररसं फलाम्लं
भार्गीश्टतेन च जलेन ह्रितावसेकः ।
इक्षाकुधामार्ग्गवहत्वकानि काकाह्वयोडुम्बरिकाश्च दुग्धे ।
विपाच्य तस्याञ्जलिना वमेद्धि मद्यं पिवेदह्नि गते त्वजीर्णे ॥
त्वक्पिप्पलीभुजगपुष्पविडैरुपेतं
सेवेत हिङ्गुमरिचैलयुतं फलाम्लम् ।
उष्णाम्बु सैन्धवयुतास्त्वथ वा विडत्वक्
चव्यैलहिङ्गुमगधाफलमूलशुण्ठीः ॥
हृद्यैः खडैरपि च भोजनमत्र शस्तं
द्राक्षाकपित्थफलदाडिमपानकं यत् ।
तत्पानविभ्रमहरं मधुशर्कराढ्य
माम्रातकोलरसपानकमेव वापि ॥
खर्ज्जूरवेत्रककरीरपरूषकेषु
द्राक्षात्वहृत्सु च कृतं ससितं ह्रितं वा ।
श्रीपर्णियुक्तमथ वा तु पिवेद्दिमानि
यष्ट्याह्वयोत्पलहिमाम्बु विमिश्रितानि ॥

क्षीरिप्रबालबिसजीरकनागपुष्प
पत्रैलवालुघितशारिवपद्मकानि।
आम्रातभव्यकरमर्द्दकपित्थकोल
वृक्षाम्लवेत्रफलजीरकदाडिमानि॥
सेवेत वा मरिचजीरकनागपुष्प
त्वक्पत्रविश्वचविकैलयुतान्रसांश्च।
सूक्ष्माम्बरश्रुतहिमांश्च सुगन्धिगन्धान्।
पानोद्भवान्नुदति सप्तगदानशेषान्॥
पञ्चेन्द्रियार्थविषया मृदुपानयोगा
हृद्याः सुखाश्च मनसः सततन्नियोज्याः।
पानात्ययेषु विकटोरुनितम्बवत्यः
पीनोन्नतस्तनभरा नतमध्यदेशाः॥
प्रौढाःस्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च पञ्चविषयातिशयस्वभावाः।

पिवेद्रसं पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तम्।
संचूर्ण्य संयोज्य च नागपुष्पैरजाजिकृष्णामरिचैश्च तुल्यैः॥
वर्षाभुयष्ट्याह्वमधूकलाक्षात्वक्कर्वुदाराङ्कुरजीरकाणि।
द्राक्षाश्च कृष्णामथ केशरञ्च क्षीरे समालोड्य पिवेत्सुखोष्णम्॥
भवेच्च मद्येन तु येन पातितः प्रकामपीतेन सुरासवादिना।
तदेव तस्मै विधिवत्प्रदापयेद्विपर्य्यये भ्रंशमसौ च गच्छति॥
यथानरेन्द्रोपहतस्य कस्यचिद्भवेत्प्रसादस्ततएव नान्यतः।

विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते।
तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि॥

मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि च ।
स्रोतांसि शोषयेयातां तेन तृष्णा प्रजायते ॥
पाटलोत्पलकन्देषु मुद्गपर्ण्यां च साधितम् ॥
पिबेत्सागन्धिकामिश्रं तत्राम्भोहिमशीतलम् ।
सर्पिस्तैलवसामज्जदधि भृङ्गरसैर्युतम् ॥
क्वाथेन बिल्वयवयोः सर्वगन्धैश्च पेषितैः ॥
पक्वमभ्यञ्जने श्रेष्ठं सेके क्वाथः सुशीतलः ॥
रसवन्ति च भोज्यानि यथास्वमवचारयेत् ।
पानकानि सुशीतानि हृद्यानि सुरभीनि च ॥
त्वचं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥
शीतं विधानमत ऊर्द्ध्वमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणाम् ।
तत्रादितो मलयजेन हितः प्रदेह
श्चन्द्रांशुहारतुहिनोदकशीतलेन ।
शीताम्बुशीतलतरैश्च शयानमेवं
हारैर्मृणालवलयैरबलां स्पृशेयुः ॥
भिन्नोत्पलोज्ज्वलहिमे शयने शयीत
पत्रेषु वा सजलबिन्दुषु पद्मिनीनाम् ।
आसादयन्पवनमाहृतमिष्टगन्ध
कह्लारपद्मदलशैवलसञ्चयेभ्यः ॥
शीतैर्वनान्तपवनैः परिरभ्यमानः
प्रीतश्चरेद्वनकाननदीर्घिकासु ।

दाहाभिभूतमथ वा परिषेचयेत्तु
शीतैरुशीरजलचन्दनवारिभिस्तम् ॥
विस्राविता हृतमलां नववारिपूर्णां
पद्मोत्पलोज्ज्वलजलामधिवासिताम्बु ।
वापीम्भजेत हरिचन्दनभूषिताङ्गः
कान्ताकरस्पर्शकर्कशरोमकूपः ॥
तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्यः
शीतैःकरोरुवदनैः कठिनैः स्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबला मधुरैः प्रलापैः ॥
धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत सलिलानिलशीतकुक्षौ ।
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये ॥
मांसीतमालघनकुङ्कुमपद्मपत्र
जात्युत्पलप्रियककेशरपुण्डरीके ।
पुन्नागनागकरवीरकृतोपकारे
तस्मिन्गृहे कमलरेणवरुणे शयीत ॥
यत्राहतानिलविकम्पितपुष्पदाम्नि
हेमन्तविन्ध्यहिमवन्मलयाचलानाम् ।
शीताम्भसां सकदलीहरितद्रुमाणां
उद्भिन्ननीलनलिनाम्बुरुहाकराणाम् ॥
चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञा

ग्लानं सुदीनमनसं मनसोऽनुकूलाः ।
पीनस्तनोरुजघना घनसारदिग्धाः
ता एवमार्द्रवसनाः सह संविशेयुः ॥
श्लिष्टाबलाः शिथिलमेखलहारयष्ट्यः ॥
हर्षयेयुःपुनर्नार्य्यः स्वगुणैरहसि स्थिताः ।
ताः शैत्याच्छमयेयुश्च पित्तपानात्ययं स्त्रियः ।
रक्तपित्तप्रदाहेष्वयमेव विधिः स्मृतः ॥
सामान्यतो विशेषन्तु शृणु दाहेष्वशेषतः ।
कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ह्यति ॥
संचूष्यते दह्यते च ताम्राभस्ताम्रलोचनः
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते ॥
तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत् ।
अप्रशाम्यति दाहे च रसैस्तृप्तस्य जाङ्गलैः ॥
शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत्सिराः ।
पित्तज्वरसमः पित्तात्स चाप्यस्य विधिर्हितः ॥
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुत्थितम् ।
स वाह्याभ्यन्तरं देहं दहेद्वै मन्दचेतसः ॥
संशुष्कगलताल्वोष्ठोजिह्वां निःकृष्य वेपते ।
तत्रोपशमयेत्तेजस्त्वब्धातुञ्च विवर्द्धयेत् ॥
पाययेत्काममम्भश्च शर्कराढ्यं पयोऽपिवा ।
शीतमिक्षुरसं मन्थं वितरेच्चेरितं विधिम् ॥
असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ।
विधिःसद्योव्रणीयोक्तस्तस्य लक्षणमेव च ॥

धातुक्षयोक्तो यो दाहस्तेन मूर्च्छा तृषान्वितः ।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥
रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः ।
क्षतजेनास्नतश्चान्यः शोचतोवाप्यनेकधा ॥
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ।
तमिष्टविषयोपेतं सुहृद्भिरपि संवृतम् ॥
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत् ।
मर्म्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ॥
सर्वएव च वर्ज्याःस्युः शीतगात्रेषु देहिषु ।
एवं विधो भवेद्यस्तु मदिरामयपीडितः ॥
प्रशान्तोपद्रवस्यापि शोधनं प्राप्तमाचरेत् ।
सजीरकाण्याद्रकशृङ्गवेरसौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यान्यथ गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम् ॥
जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ।
पिबेत्सुरां नैव लभेत रोगान् मनोमतिघ्नञ्च मदं न याति ॥

---

## अष्टचत्वारिंशत्तमोऽध्यायः ॥

अथातस्तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः ॥

सततं यःपिबेद्वारि न तृप्तिमधिगच्छति ।
पुनःकाङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत् ॥
सङ्क्षोभशोकश्रममद्यपानाद्रुक्षाम्लशुष्कोष्णकटूपयोगात् ।
धातुक्षयाल्लङ्घनसूर्य्यतापात् पित्तञ्च वातश्च भृशं प्रदुष्टौ ।

स्रोतांसि संदूषयतः समेतौ यान्यम्बुवाहीनि शरीरिणां हि ।
स्रोतःस्वपांवाहिषु दूषितेषु जायेत तृष्णा प्रबला ततस्तु ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च ।
स्यात्सप्तमी भक्तनिमित्तजा तु लिङ्गानि तासां शृणु चौषधानि॥
ताल्वोष्ठकण्ठास्यविशोषदाहाः सन्तापमोहभ्रमविप्रलापाः ।
पूर्व्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु विशेषतोहि ।
शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरोगलेषु ।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ।
मूर्च्छाप्रलापारुचिवक्त्रशोषाः पीतेक्षणत्वं प्रततश्च दाहः ॥
शीताभिकाङ्क्षा मुखतिक्तता च पित्तात्मिकायां परिधूमनञ्च ।
वास्यावरोधात्कफसंवृतेऽग्नौ तृष्णाबलासेन भवेत्तु तत्र ॥
निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् ।
शीतज्वरच्छर्दिररोचकश्च कफात्मिकायां त्वचि पाकएव ॥
एतानि रूपाणि भवन्ति यस्यास्तयार्दितः काङ्क्षति नाति चाम्भः।
क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु॥
तयाभिभूतस्य निशादिनानि गच्छन्ति दुःखं पिबतोऽपितोयम् ।
रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु ॥
पेपीयतेऽम्भः ससुखन्न याति तां सन्निपातादिति केचिदाहुः।
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत्॥
त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता ।
स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति ॥
क्षीणं विचित्तं वधिरं तृषार्त्तं विवर्जयेन्निर्गतजिह्वमाशु ।
तृष्णाभिवृद्धावुदरे च पूर्णे तं वामयेन्मागधिकोदकेन ॥

विलेपनं चात्र हितं वदन्ति स्याद्दाडिमाम्रातकमातुलुङ्गैः।
तृष्णा प्रयोगैरिह सा निवार्य्या शीतैश्च सम्यग्रसवीर्य्यजातैः॥
गण्डूषमम्लैर्विरसे च वक्त्रे कुर्य्याच्छुभैरामलकस्य चूर्णैः।
सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्ट्रैः कृतं वा सिकतोपलैर्व्वा॥
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं चौद्रयुतं हिमं वा।
पञ्चाङ्गिकाः पञ्चगणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा॥
पिबेत्सुखोष्णं मनुजोऽल्पशस्तु तृषो विमुच्येत हि वातजायाः।
पित्तघ्नवर्गेण कृतः कषायः सशर्करः चौद्रयुतः सुशीतः॥
पीतस्तृषां पित्तकृतान्निहन्ति चीरं सृतं वाप्यथ जीवनीयैः।
बिल्वाढकीकण्टकपञ्चमूलीदर्भेषु सिद्धं कफजान्निहन्ति॥
हितं भवेच्छर्दनमेवचात्र तप्तेन निम्बप्रसवोदकेन।
सर्व्वासु तृष्णास्वथवापि पैत्तं कुर्य्याद्विधिस्तेन विना न शान्तिः॥
पर्य्यागतोडुम्बरजो रसस्तु सशर्करस्तत्क्वथितोदकं वा।
वर्गस्य सिद्धस्य च सारिवादेः पातव्यमम्भः शिशिरं तृषार्त्तैः।
कशेरुशृङ्गाटकपद्ममोचविशेषु सिद्धं चतजान्निहन्ति॥
नीलोत्पलोशीरकुचन्दनानि दत्वा प्रवाते निशि वासयेत्तु।
तदुत्तमं तोयमुदारगन्धि सितायुतं चौद्रयुतन्तथैव।
द्राचाप्रगाढञ्च हिताय वैद्यः तृषार्दितेभ्यो वितरेन्नरेभ्यः॥
ससारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे च।
कुर्य्यात्कषायञ्च यथैव युक्तं मधूकपुष्पादिषु वापरेषु॥
राजादनचीरिकपीतनेषु षट्पानकान्यत्र हितानि च स्युः।
सतुण्डिकेरीण्यथवा पिबेत्तु पिष्टानि कार्पाससमुद्भवानि॥
चतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः।

क्षयोत्थितां क्षीरघृतं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥
आमोद्भवां विल्ववचायुतानां जयेत्कषायैरथ दीपनानाम् ।
आम्रातभल्लातबलायुतानि पिवेत्कषायाण्यथ दीपनानि ॥
गुर्वन्नजातां वमनैर्जयेच्च क्षयादृते सर्वकृताश्च तृष्णाः ।
श्रमोद्भवां मांसरसो निहन्ति गुडोदकं वाप्यथवापि मन्थः ॥
भक्तोपरोधात्तृषितो यवागूमुष्णां पिवेन्मन्थमथो हिमं च ।
या स्नेहपीतस्य भवेच्च तृष्णा तत्रोष्णमम्भः प्रपिवेन्मनुष्यः ॥
मद्योद्भवामर्द्धजलं निहन्ति मद्यं तृषां यापिहि मद्यपस्य ।
उष्णोद्भवां हन्ति जलं सुशीतं सशर्करञ्चेक्षुरसं तथाम्भः ।
स्वैः स्वैः कषायैर्वमनानि तासां तथा ज्वरोक्तानिच पाचनानि ।
लेपावगाहौ परिषेचनानि कुर्य्यात्तथा शीतगृहाणि चापि ॥
संशोधनं क्षीररसौ घृतानि सर्व्वासु लेहान्मधुरान् हिमांश्च ॥

---

## एकोनपञ्चाशत्तमोऽध्यायः ॥

अथातश्छर्द्दिप्रतिषेधमध्यायं व्याख्यास्यामः ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः ॥
श्रमात् क्षयात्तथोद्वेगादजीर्णात्कृमिदोषतः ।
नार्य्याश्चापन्नसत्वायास्तथातिद्रुतमश्नतः ॥
वीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ।

दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः ॥
ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनाम् ।
हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ॥
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ।
प्रच्छर्द्दयेत्फेनिलमल्पमल्पं शूलार्द्दितोऽभ्यर्द्दितपार्श्वपृष्ठः ॥
श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं सानिलजा वमिस्तु ।
योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा ॥
सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा ।
यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धम् ॥
अभक्तरुग्गौरवसादयुक्तो वमेद्वमी सा कफकोपजा स्यात् ।
सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्वदोषप्रभवा मता तु ॥
वीभत्सजा दौहृदजामजा च यासात्म्यतो वा क्रिमिजा च या हि ।
सा पञ्चमी तां च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥
आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्माद्धितं लङ्घनमेव तासु ।
शूलहृल्लासबहुला क्रिमिजा च विशेषतः ॥
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ।
क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम् ॥
छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम् ।
वमीषु बहुदोषासु च्छर्दनं हितमुच्यते ॥
विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ।
संसर्गांश्चानुपूर्व्वेण यथास्वभेषजाय तान्
लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाचरेत् ।
यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥

हन्यात्क्षीरघृतं पीतं छर्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ।
पिबेद्वाव्यक्तसिन्धूत्थफलाम्लं वैष्किरं रसम् ॥
सुखोष्णलवणं वात्र हितं स्नेहविरेचनम् ।
पित्तोपशमनीयानि पानानि शिशिराणि च ॥
कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीम् ।
शोधनं मधुरैश्चात्र द्राक्षारससमायुतैः ॥
बलवत्यां प्रशंसन्ति सर्पिस्तैल्वकमेवच ।
आरग्वधादिभिर्यूषं दद्याद्योगमेवच ॥
पाययेताथ सक्षौद्रं कफजायां चिकित्सकः ।
कृतङ्कूच्या विधिवत्कषायं हिमसंज्ञितम् ॥
तिसृष्वपि भवेत्पथ्यं माक्षिकेण समन्वितम् ।
वीभत्सजां हृद्यतमैर्हृद्यां काङ्क्षितैः फलैः ॥
लङ्घनैर्वमनैश्चामां सात्म्यैश्चासात्म्यकोपजाम् ।
कृमिहृद्रोगवच्चापि कृमिजां साधयेद्वमीम् ॥
वितरेच्च यथादोषं शस्तं विधिमनन्तरम् ।
दधित्थरससंयुक्तां पिप्पलीमाक्षिकान्विताम् ॥
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ।
समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥
तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ।
स्वयङ्गुप्तां सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवाम् ॥
पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः ।

युक्ताम्ललवणाः पिष्टाः कुस्तुम्बुर्य्योऽथवा हिताः॥
तण्डुलाम्बुयुतं खादेत् कपित्थं त्र्यूषणेन वा।
सिताचन्दनमध्वाक्तां लिह्याद्वा मक्षिकाशकृत्॥
पिबेत् पयोऽग्नितप्तञ्च निर्व्वाप्य गृहगोपिकाम्।
सर्पिः क्षौद्रयुतान् वापि लाजशक्तून् पिबेत्तथा॥
सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा।
धात्रीरसे चन्दनं वा मृतं मुद्गदलाम्बु वा॥
कोलामलकमज्जानं लिह्याद्वा त्रिसुगन्धिकम्।
सक्षौद्रां शालिलाजानां यवागूं वा पिबेन्नरः॥
प्रेयाण्युपहरेच्चापि मनोज्ञाणसुखानि च॥
जाङ्गलानिच मांसानि स्वादुवत्पानकानि च।
भोजनानि विचित्राणि कुर्य्यात् सर्व्वास्वतन्द्रितः॥

---

पञ्चाशत्तमोऽध्यायः॥

अथातो हिक्काप्रतिषेधं व्याख्यास्यामः।
विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः॥
शीतपानाशनस्थानरजोधूमानिलानलैः।
व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः॥
आमदोषाभिघातस्त्रीक्षयरोगप्रपीडनैः।
विषमाशनाध्यशनैस्तथा संशमनैरपि॥
हिक्का श्वासश्च कासश्च नृणां समुपजायते।
मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन्।

सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केति भिषग्भिरुच्यते॥

अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ।
कफेनानुगतो वायुः पञ्च हिक्काः करोति हि ॥
मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः ।
पूर्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः ।
हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक् ॥
चिरेण यमलैर्व्वेगैर्या हिक्का संप्रवर्त्तते ।
कम्पयन्ती शिरोग्रीवं यमलान्तां विनिर्द्दिशेत् ॥
विकृष्टकालैर्या वेगैर्म्मन्दैः समभिवर्त्तते ।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता ॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ।
शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ।
मर्म्माण्यापीडयन्तीव सततं या प्रवर्त्तते ॥
देहमायाम्य वेगेन घोषयत्यतितृष्यतः ।
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥

आयम्यते हिक्कतोऽङ्गानि यस्य दृष्टिश्चोर्द्धं ताम्यते यस्य गाढम्।
क्षीणोऽन्नद्विट्कासते यश्च हिक्की तौ द्वावन्त्यौ वर्ज्जयेद्धिक्कमानौ॥
प्राणायामोद्वेजनत्रासनानि सूचीतोदैः संभ्रमश्चात्र शस्तः ।
यष्ट्याह्वं वा माक्षिकेणात्रपीडःपिप्पल्यो वा शर्कराचूर्णयुक्ताः ॥
सर्पिः कोष्णं क्षीरमिक्षोरसो वा नातिक्षीणे स्रंसनं छर्दनञ्च ।
नारीपयःपिष्टमधुकचन्दनं घृतं सुखोष्णं च ससैन्धवं तथा ॥

चूर्णीकृतं सैन्धवमम्भसा तथा निहन्ति हिक्काञ्च हितञ्च नस्यतः।
युञ्जाद्धूपं शालनिर्य्यासजातं नैपालं वा गोविषाणोद्भवं वा ॥
सर्पिःस्निग्धैः चर्म्मबालैः कृतं वा हिक्कास्थाने स्वेदनं वापि कार्य्यम्।
क्षौद्रोपेतं गैरिकं काञ्चनाह्वं लिह्याद्भस्म ग्राम्यसत्वास्थिजं वा ॥
तद्वच्छाविन्मेषगोशल्यकानां रोमाण्यन्तर्धूमदग्धानि चात्र ।
मध्वाज्याक्तं बर्हिपत्रप्रसूतमेवं भस्मौडुम्बरं तैलकं वा ॥
स्वर्जिक्षारं वीजपुराद्रसेन क्षौद्रोपेतं हन्ति लीढ़ाशु हिक्काम्।
सर्पिःस्निग्धाघ्नन्ति हिक्कां यवाग्वः कोष्णग्रासाःपायसो वा सुखोष्णः॥
शुण्ठीतोये साधितं क्षीरमाजन्तद्वत्पीतं शर्करासंयुतं वा ।
आत्मसेवी सेव्यमानं निहन्याद्घ्रात्वा हिक्कामाशु मूत्रं त्वजाव्योः॥
सपूतिकीटं लशुनोग्रगन्धाहिङ्ग्वजमाचूर्ण्यसुभावितन्तत् ॥
क्षौद्रं सितां वारणकेशरञ्च पिबेद्रसेनेक्षुमधूकजेन ।
पिबेत्पलं वा लवणोत्तमस्य द्वाभ्यां पलाभ्यां हविषः समग्रम्॥
हरीतकीं कोष्णजलानुपानां पिबेद्धृतं क्षारमधुप्रपन्नम् ।
रसञ्च पित्वान्मधुपिप्पलीभ्यां पिचुप्रमाणं प्रपिबेत्सुखाय ॥
कृष्णां सितां चामलकञ्च लीढं सम्शृङ्गवेरं मधुनाथवापि ।
कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुनाच लीढम् ॥

पाटलायाः फलं पुष्पं गैरिकं कटुरोहिणी ।
खर्जूरमध्यं मागध्यः काशीशं दधिनामच ॥
चत्वारोयूषयोगाः स्युः प्रतिपादप्रदर्शिताः ।
मधुद्वितीयाः कर्त्तव्यास्ते हिक्कासु विजानता ॥

कपोतपारावतलावशल्यकश्वदंष्ट्रगोधाष्टपदंशजान् रसान् ।
पिबेत् फलाम्लानहिमान् ससैन्धवान् ।

स्निग्धांस्तथैवर्ष्य मृगद्विजोद्भवान्॥
विरेचनं पथ्यतमंससैन्धवं घृतं सुखोष्णञ्च शितोपलायुतम्।
सदागतावूर्द्ध्वगतेऽनुवासनं वदन्ति केचिच्च हिताय हिक्किनाम्॥

---

## एकपञ्चाशत्तमोऽध्यायः॥

अथातः श्वासप्रतिषेधं व्याख्यास्यामः॥
यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते।
तैरेव कारणैः श्वासो घोरो भवति देहिनाम्॥
विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः।
श्वासयत्यूर्द्ध्वगो भूत्वा तं श्वासं परिचक्षते॥
क्षुद्रकस्तमकच्छिन्नो महानूर्द्ध्वश्च पञ्चधा।
भिद्यते स महाव्याधिः श्वासएकोविशेषतः॥
प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा।
आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च॥
किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते।
निषसस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः॥
तृट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः।
विशेषाद्दुर्द्दिने तास्य च्छ्रासः स्यात्तमको मतः॥
घोषेण महताविष्टः सकासः सकफो नरः।
यः श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडितः॥
स शाम्यति कफे हीने स्वपतश्च विवर्द्धते।
मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः॥
आध्मातो दह्यमानेन वस्तिना सरुजं नरः।

सर्व्वं प्राणेन विच्छिन्नं श्वस्याच्छिन्नन्तमादिशेत् ॥
निःसंज्ञः पार्श्वशूलार्त्तः शुष्ककण्ठोऽतिघोषवान् ।
संरब्धनेत्रस्त्वायम्य यः श्वस्यात्स महान्स्मृतः ॥
मर्म्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ।
ऊर्द्ध्वप्रेक्षी हृतरवस्तमूर्द्ध्वश्वासमादिशेत् ॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति तमको दुर्ब्बलस्य च ॥
स्नेहवस्तिं विना केचिदूर्द्ध्वञ्चाधश्च शोधनम् ।
स्वदुप्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥
कासे श्वासे च हिक्कायां हृद्रोगे चापि पूजितम् ।
घृतं पुराणं संसिद्धमभयाविडरामठैः ॥
सौवर्च्चलाभयाविल्वैः संस्कृतं वा नवं घृतम् ।
पिप्पल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥
सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ।
हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥
द्विक्षीरं साधितं सर्पिश्चतुर्गुणजलान्वितम् ।
कोलमात्रैः पिबेत्तद्धि श्वासकासौ व्यपोहति ॥
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ।
कृतस्ने दृषकषाये वा पचेत्सर्पिश्चतुर्गुणे ॥
तन्मूलकुसुमावापं शीतं क्षौद्रेण योजयेत् ।
भृङ्गीमधुरिकाभार्गीशुण्ठीतार्क्ष्यसिताम्बुदैः ॥
सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः ।
घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥

श्वासङ्कासन्तथा हिक्कां सर्पिरेतन्नियच्छति।
सुवहाकालिकाभार्गीश्रुकाख्यानैचुलम्फलम्॥
काकादनीं शृङ्गवेरं वर्षाभूं इत्युतीदयम्।
कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलाढ्कम्॥
कटूष्णं पीतमेतद्धि श्वासामयविनाशनम्।
सौवर्चलयवक्षारकटुकाव्योषचित्रकैः॥
वचाभयाविडङ्गैश्च साधितं श्वासशान्तये।
गोपवल्ल्युदके सिद्धं स्यादन्यद्द्विगुणे घृतम्॥
तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः।
विल्वपुष्करपूतीकसौवर्चलकणाग्निभिः॥
पथ्यातेजोवतीयुक्तैः सर्पिर्जलचतुर्गुणम्।
हिङ्गुपादयुतं सिद्धं सर्वश्वासहरम्परम्॥
पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः।
वासाघृतं षट्पलञ्च घृतं चात्र हितं भवेत्॥
तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे।
सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति॥
फलाम्ला विष्किररसाः स्निग्धाः प्रव्यक्तसैन्धवाः।
एणादीनां शिरोभिर्वा कौलत्था वा सुसंस्कृताः॥
हन्युः श्वासञ्च कासञ्च संस्कृतानि पयांसि च।
तिनिशस्य च वीजानि कर्कटाख्या सुवर्चिका॥
दुरालभाथ पिप्पल्यः कटुकाख्या हरीतकी।
श्वाविन्मयूररोमाणि कोला मागधिका कणाः॥
भार्गीत्वक्शृङ्गवेरञ्च शर्कराशल्लकाङ्गजम्।

त्रिकण्टकस्य वीजानि चूर्णितानि तु केवलम् ॥
पञ्चश्लोकार्द्धिकाख्लेते लेहा ये सम्यगीरिताः ।
सर्प्पिर्मधुभ्यां ते लेह्याः काशश्वासार्द्दितैर्नरैः ॥
सप्तच्छदस्य पुष्पाणि पिप्पलीश्चापि मस्तुना ।
पिवेत्सचूर्ण्य मधुना धानाश्चाप्यथ भक्षयेत् ॥
अर्काङ्कुरैर्भावितानां यवानां साप्यनेकशः ।
तर्पणं वा पिवेदेषां सक्षौद्रं श्वासपीडितः ॥
शिरीषकदलीकुन्दपुष्पमागधिकायुतम् ।
तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥
कोलमज्जातालमूलव्याघ्रचर्ममसीमपि ।
लिह्यात्क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुताम् ॥
निम्बैः कदम्बवीजं वा सक्षौद्रं तण्डुलाम्बुना ।
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम् ॥
सर्प्पिर्मधुभ्यां विलिहन्हन्ति श्वासान् सुदारुणान् ।
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम् ॥
लिह्यात्तैलेन तुल्यानि श्वासार्त्तो हितभोजनः ।
गवां पुरीषस्वरसं मधुमागधिकायुतम् ॥
लेहः श्वासेषु कासेषु वाजिनां वा शकृद्रसः ।
पाण्डुरोगेषु शोथेषु ये योगाः सम्प्रकीर्त्तिताः ॥
श्वासकासापहास्तेऽपि कासघ्ना येच कीर्त्तिताः ।
भार्गीत्वक्तूषणं तैलं हरिद्रां कटुरोहिणीम् ॥
पिप्पलीं मरिचं चण्डाङ्गोशकृद्रसमेव च ।
तलकोटस्य वीजेषु पचेदुत्कारिकां शुभाम् ॥

सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान् ।
पुराणसर्प्पिः पिप्पल्यः कौलत्था जाङ्गला रसाः ॥
सुरासौवीरकं हिङ्गु मातुलुङ्गरसो मधु ।
द्राक्षामलकबिल्वानि शस्तानि श्वासहिक्किनाम् ॥
श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत् ।
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितः कफः ॥
खस्थो विलयनं याति मारुतश्चास्य शाम्यति ।
स्निग्धं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनम् ॥
वातश्लेष्मविबन्धो वा भिषग्धूमं प्रयोजयेत् ।
मनःशिलादेवदारुहरिद्राच्छदनामिषैः ॥
लाक्षोरुबूकमूलैश्च कृत्वा वर्त्तीर्विधानतः ।
सर्पिर्नवमधूच्छिष्टशालनिर्यासजं तथा ॥
शृङ्गवालखुरस्नायुत्वक्समस्तं गवामपि ।
तुरुष्कशल्लकीनाञ्च गुग्गुलोः पद्मकस्य च ॥
एते सर्वे ससर्पिष्का धूमाः कार्य्या विजानता ।
बलीयसि कफग्रस्ते वमनं सविरेचनम् ॥
दुर्बले चैव रूक्षे च तर्पणं हितमुच्यते ।
जाङ्गलैरब्जैर्म्मांसैरानूपैर्व्वा सुसंस्कृतैः ॥
निदिग्धिकाश्चामलकप्रमाणां हिंस्रर्द्धयुक्तां मधुना सुयुक्ताम् ।
लिहन्नरः श्वासनिपीडितो हि श्वासं जयत्येव बलात्प्रकृष्टम् ॥
यथाग्निरिद्धः खलु काष्ठसङ्घैर्वज्रं यथा वा सुरराजमुक्तम् ।
रोगास्तथैते खलु दुर्न्निवाराः श्वासश्च कासश्च विलम्बिका च ॥

---

द्विपञ्चाशत्तमोऽध्यायः ॥

अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः ॥

उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ।
कासस्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः ॥

धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥

प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात्सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु ॥

स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च ॥
पञ्चप्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारकृत्स्यात् ॥

भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः ।
स्वशब्दवैषम्यमरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि ॥

हृच्छङ्खमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तवेगश्च समीरणेन कासेत्तु शुष्कं स्वरभेदयुक्तः ।

उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः ॥
पित्तेन पीतानि वमेत्कटूनि कासेत्स पाण्डुः परिदह्यमानः ॥

विलिप्यमानेन मुखेन सीदन्शिरोरुगार्त्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवसादयुक्तः कासेद्धृशं सान्द्रकफः कफेन ॥

वक्षोऽतिमात्रं विहतञ्च यस्य व्यायामभाराध्ययनाभिघातैः ।
विश्लिष्टवक्षाः स नरः सरक्तं ष्ठीवत्यभीक्ष्णं क्षतजः स उक्तः ॥

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ॥
रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत् ॥

सपूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।

कण्ठेन रुजतात्यर्थं विभिन्नेनेवचोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः ।
पारावतइवाकूजन् कासवेगात् क्षतोद्भवात् ॥
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताःक्षयजं कासं कुर्य्युर्देहक्षयप्रदम् ॥

स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी ।
शुष्यन् विनिष्ठीवति दुर्ब्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्॥
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ।
वृद्धत्वमासाद्य भवत्यथोवै याप्यन्तमाहुर्भिषजस्तु कासम् ॥
शृङ्गीवचाकट्फलकत्तृणाब्दधान्याभयाभार्ग्यमराह्वविश्वम् ।
उष्णाम्बुना हिङ्गुयुतं तु पीत्वा बद्धास्थमप्याशु जहाति कासम्॥
फलत्रिकव्योषविडङ्गशृङ्गीरास्नावचापद्मकदेवकाष्ठैः ।
लेहः समैः क्षौद्रसिताघृताक्तः कासं निहन्यादचिरादुदीर्णम् ॥
पथ्यां सितामामलकानि लाजां समागधीं चापि विचूर्ण्य शुण्ठीं ।
सर्पिर्मधुभ्यां विलिहीत कासी ससैन्धवां वोष्णजलेन कृष्णाम् ॥
खादेद्गुडं नागरपिप्पलीभ्यां द्राक्षाञ्च सर्पिर्मधुनावलिह्यात् ।
द्राक्षां सितां मागधिकाञ्च तुल्यां सशृङ्गवेरं मधुकत्तृणाञ्च ॥
लिह्याद्घृतक्षौद्रयुतां समांशां शितोपलां वा मरिचांशयुक्ताम् ।
धात्रीकणाविश्वसितोपलांश्च संचूर्ण्य मण्डेन पिबेच्च दध्नः ।
हरेणुकां मागधिकाञ्च तुल्यां दध्ना पिबेत् कासगदाभिभूतः ॥

उभे हरिद्रे सुरदारुशुण्ठीं शायतिसारञ्च पिबेत्समांशम्।
वस्तस्य मूत्रेण सुखाम्बुना वा दन्तीं द्रवन्तीञ्च सतिल्वकांशाम्॥
भृष्टानि सर्पिष्यथ वादराणि खादेत्पलाशानि ससैन्धवानि।
कोलप्रमाणं प्रपिबेद्धि हिङ्गु सौवीरकेणाम्लरसेन वापि॥
क्षौद्रेण लिह्यान्मरिचानि वापि भार्गीवचाहिङ्गुकृताञ्च वर्त्तिं।
धूमे प्रशस्ता घृतसंप्रयुक्ता वेणुत्वगेलालवणैः कृता च॥
मुस्तेङ्गुदीत्वङ्मधुकाह्वमांसीमनःशिलालैन्धगलाम्बुपिष्टैः।
विधाय वर्त्तीः सपयोनुपानं धूमं पिबेद्वातबलासकासी॥
पिबेच्च सीधुं मरिचान्वितं वा तेनाशु कासं शममभ्युपैति।
द्राक्षाम्बुमञ्जिष्ठपुराह्वयाभिः क्षीरं शृतं माक्षिकसंप्रयुक्तम्॥
निदिग्धिकानागरपिप्पलीभिःखादेच्च सुक्ष्मान्मधुना सुसिद्धान्।
उत्कारिकां सर्पिषि नागराढ्यां पक्वा समूलैस्त्रुटिकोलपत्रैः॥
एभिर्निषेवेत कृताञ्च पेयां तन्वीं सुशीतां मधुना विमिश्राम्।
यत्शीघ्रि सर्पिर्व्विहितं षडङ्गं तद्वातकासं जयति प्रसह्य॥
विदारिगन्धादिकृतं घृतं वा रसेन वा वासकजेन पक्वम्।
विरेचनं स्नैहिकमत्र चोक्तमास्थापनं चाप्यनुवासनञ्च॥
धूमं पिबेत्स्नैहिकमप्रमत्तः पिबेत्सुखोष्णं घृतमेवचात्र।
हिता यवाग्वश्च रसेषु सिद्धाः पयांसि लेहाः सघृतास्तथैव॥
प्रच्छर्दनं कायशिरोविरेकास्तथैव धूमाः कवलग्रहाश्च।
उष्णाश्च लेहाः कटुकानि हन्युः कफं विशेषेण विशोषणं वा॥
कटुत्रिकञ्चापि वदन्ति पथ्यं घृतं कृमिघ्नस्वरसे विपक्वम्॥
निर्गुण्डिपत्रस्वरसेच पक्वं सर्पिःकफोत्थं विनिहन्ति कासम्।
पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टराम्नाकृतभुग्बलाभिः॥

शृङ्गीत्वचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशठीभिः ।
सस्थग्विपक्वं द्विगुणेन सर्पिर्निदिग्धिकायाः स्वरसेन चैतत् ॥
श्वासाग्निमादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि पञ्च कासान् ।
विदारिगन्धोत्पलसारिवादीन्निःक्वाथ्य वर्गान् मधुकञ्च क्षतघ्नं ॥
घृतम्पचेदिक्षुरसाम्बुदुग्धैः काकोलिवर्गे च सशर्करं तत् ।
प्रातः पिबेत्पित्तकृते च कासे रतिप्रसूते क्षयजे च कासे ॥
खर्जूरभार्ङ्गीमगधापियालमधूलिकैलामलकैस्समांशैः ।
चूर्णं सिताक्षौद्रघृतप्रगाढन्त्वीन्हन्ति कासानुपयुज्यमानम् ॥
रक्तां हरिद्राञ्जनवह्निपाठामूर्व्वोपकुल्या विलिहेत्समांशाः ।
क्षौद्रेण कासे क्षतजे क्षयोत्थे पिबेद्घृतं चेक्षुरसे विपक्वम् ॥
चूर्णं पिबेच्चामलकस्य वापि क्षीरेण पक्वं सघृतं हिताशी ।
चूर्णानि गोधूमयवोद्भवानि काकोलिवर्गस्य क्षतः सुसूक्ष्मः ।
कासेषु पेयस्त्रिषु कासवद्भिः क्षीरेण सक्षौद्रघृतेन वापि ॥
गुडोदकं वा क्वथितं पिबेद्धि क्षौद्रेण शीतं मरिचोपदंशम् ।
प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्वार्द्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहपुषाजमोदैः ।
विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पिचुप्रमाणैः ॥
दत्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ।
तम्भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ॥
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोषाः ।
शाम्यन्तिचायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणाञ्च बन्ध्यामयनाशनः स्यात्कल्याणको नाम गुडः प्रतीतः ।
द्विपञ्चमूलेभकणालशुम्नाभार्गीशटीपुष्करमूलविश्वान् ॥

पाठामृताग्रन्थिकशङ्खपुष्पीरास्नाग्न्यपामार्गबलायवासान्।
द्विपालिकान्नस्य यवाढकञ्च हरीतकीनाञ्च शतं गुरूणाम्॥
द्रोणे जलस्याढकसंयुतेच क्वाथे कृते पूतचतुर्थभागे।
पचेत्तुलां शुद्धगुडस्य दत्वा पृथक्च तैलात् कुडवं घृताच्च॥
चूर्णं च तावन्मगधोद्भवाया देयञ्च तस्मिन्मधुसिद्धशीते।
रसायनात् कल्कमतोविलिह्याद्द्वे चाभये नित्यमथाशु हन्यात्॥
तद्राजयक्ष्मग्रहणी प्रदोषशोफाग्निमान्द्यस्वरभेदकासान्।
पाण्ड्वामयश्वासशिरोविकारान् हृद्रोगहिक्काविषमज्वरांश्च॥
मेधाबलोत्साहमतिप्रदञ्च चकार चैतद्भगवानगस्त्यः।
कुलीरशृङ्गीचटकैणलावान्निक्वाथ्य वर्गैर्मधुरैस्तथान्यैः॥
पचेद्घृतं तत्तु निषेव्यमानं हन्यात् क्षतोत्थं क्षयजञ्च कासम्।
शतावरीनागबलाबलाभिर्घृतं विधेयञ्च हिताय कासिनाम्॥

---

## त्रिपञ्चाशत्तमो ऽध्यायः॥

अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः॥

अत्युच्चभाषणविषाध्ययनाभिघात
शीतादिभिः प्रकुपिताः पवनादयस्तु।
ते शब्दवाहिधमनीषु गताः प्रतिष्ठां
हन्युः स्वरं भवतिचापि हि षड्विधः सः॥

वातेन कृष्णनयनाननमूत्रवर्च्चा भिन्नं शनैर्वदति गर्दभवत् स्वरञ्च।
पित्तेन पीतवदनाक्षिपुरीषमूत्रो ब्रूयाद्गलेन च विदाहसमन्वितेन
श्लेष्मात्कफेन सततं कफरुद्धकण्ठो

मन्दं शनैर्व्वदतिवापि दिवाविशेषात् ।

सर्व्वात्मके भवति सर्व्वविकारसंपद्व्यक्तताचवचसस्तमसाध्यमाहुः॥

धूप्येत वाक्क्षयकृते क्षयमाप्नुयाच्च

वागेष चापि हतवाक् परिवर्ज्जनीयः ।

अन्तर्गतस्वरमलव्यपदं चिरेणमेदोऽन्वयाद्वदतिदिग्धगलौष्ठतालु

क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः ।

मेदस्विनः सर्व्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥

स्निग्धान्स्वरातुरनरानपकृष्टदोषान्संयोजयेद्वमनरेचनवस्तिभिश्च

नस्यावपीडमुखधावनधूमलेहैः सम्पादयेच्च विविधैः कवलग्रहैश्च॥

यः श्वासकासविधिरादित एव चोक्त

स्तञ्चाप्यशेषमवतारयितुं यतेत ।

वैशेषिकञ्च विधिमूर्द्धमतो वदामि

तद्वै स्वरातुरहितं निखिलं निबोध ॥

स्वरोपघातेऽनिलजे भुक्तोपरिघृतं पिबेत् ।

कासमर्द्दकवार्त्ताकमार्कवस्वरसैर्युतम् ॥

पीतं घृतं हन्त्यनिलं सिद्धमार्त्तगले रसे ।

यवक्षाराजमोदाभ्यां चित्रकामलकेषु वा ॥

देवदार्व्वग्निकाभ्यां वा सिद्धमाज्यं समाक्षिकम् ।

सुखोदकानुपानो वा ससर्प्पिस्को गुडौदनः ॥

क्षीरानुपानं पित्ते तु पिबेत्सर्प्पिरतन्द्रितः ।

अश्नीयाच्च ससर्प्पिष्कं यष्टीमधुकपायसम् ॥

लिह्यान्मधुरकाणां वा चूर्णं मधुघृताप्लुतम् ।

शतावरीचूर्णयोगं बलाचूर्णमथापि वा ॥

पिबेत्कटूनि मूत्रेण कफजे स्वरसङ्क्षये ।
लिह्याद्वा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि च
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।
सर्व्वजे क्षयजे चापि प्रत्याख्यायाचरेत क्रियाम् ॥
शर्कंरामधुमिश्राणि शृतानि मधुरैःसह ।
पिबेत्पयांसि यस्योच्चैर्व्वदतोऽभिहतः स्वरः ॥

---

## चतुःपञ्चाशत्तमोऽध्यायः ॥

अथातः कृमिरोगमध्यायं व्याख्यास्यामः ।
अजीर्णाध्यशनासात्म्यैर्व्विरुद्धमलिनाशनैः ॥
अव्यायामदिवास्वप्नगुर्व्वतिस्निग्धशीतलैः ।
माषपिष्टान्नविदलविसशालूकसेरुकैः ॥
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ।
पलालानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति ।
कृमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः ।
विंशतेः कृमिजातीनां त्रिविधः सम्भवः स्मृतः ।
पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम् ॥
अयवाविपवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः ॥
श्वेताः सूक्ष्मास्तुदन्त्यते गुदं प्रतिसरन्तिच ।

तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसङ्क्षयाः ।
प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥
रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ।
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥
रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः ।
रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ।
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ।
कुष्ठजाश्च परीसर्पा ज्ञेयाः शोणितसम्भवाः ॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ।
रक्ताधिष्ठानजान् प्रायोविकारान् जनयन्ति ते ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ।
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम् ।
दृश्यास्त्रयोदशाद्यास्तु क्रिमीणां परिकीर्त्तिताः ॥
केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ।
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम् ॥

सुरसादिविपक्केन सर्पिषा वान्तमादितः ।
विरेचयेत्तीच्णतरैर्योगैरास्थापयेच्च तम् ॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ।
विडङ्गस्नेहयुक्तेन क्वाथेन लवणेन च ॥
प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ।
युञ्ज्यात् क्रमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥
स्नेहेनोक्तेन चैनन्तु योजयेत्स्नेहबस्तिना ।
ततः शिरीषकिणिहीरसं चौद्रयुतं पिबेत् ।
केबूकस्वरसं वापि पूर्ब्ववत्तीच्णभोजनः ॥
पलाशवीजस्वरसं कल्कं वा तण्डुलाम्बुना ।
पारिभद्रकपत्राणां चौद्रेण स्वरसं पिबेत् ॥
पत्तूरस्वरसं वापि पिबेद्वा सुरसादिजम् ।
लिह्यादश्वशकृच्चूर्णं विडङ्गं वा समाच्चिकम् ॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ।
खादेत्पूपलिकान् पक्वान् धान्याम्लञ्च पिबेदनु ॥
सुरसादिगणे तैलं पक्वं वा पानमिष्यते ।
विडङ्गचूर्णपिष्टाभ्यां तस्मिन् भक्ष्यन्तु कारयेत् ॥
तत्कषायप्रपीतानां तिलानां स्नेहमेव वा ॥
श्वाविधः शल्लतच्चूर्णं सप्तकृत्वः सुभावितम् ।
विडङ्गानां कषायेण तैफलेन तथैव च ॥
चौद्रेण लिह्यात्तुपिबेद्रसमामलकोद्भवम् ।
अश्वाभयारसञ्चापि विधिरेषोऽयसामपि ॥
पूतीकस्वरसं वापि पिबेद्वा मधुना सह ।

पिबेद्वा पिप्पलीमूलमजामूत्रे वा संयुतम् ॥
सप्तरात्रं पिबेद्दुष्टन्त्वपु वा दधिमस्तुना ।
पुरीषजान् कफोत्थांश्च हन्यादेवं कृमीन् भिषक् ॥
शिरोहृद्घ्राणवक्त्राक्षिसंस्थतांश्च पृथग्विधान् ।
विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥
शकृद्रसन्तु रङ्गस्य सुशुष्कं भावयेद्दति ।
निःक्वाथेन विडङ्गानां चूर्णं प्रधमनन्तु तत् ॥
अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक् ।
सकांस्यनीलं तैलं च नस्यं स्यात्सुरसादिके ॥
इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु ।
दन्तादानां समुद्दिष्टं विधानं मुखरोगिकम् ॥
रक्तजानां समुद्दिष्टं कुर्य्यात्कुष्ठचिकित्सिते ।
सुरसादिन्तु सर्वेषु सर्वथैवोपयोजयेत् ॥
श्यक्तातिक्तकटुकं भोजनञ्च हितं भवेत् ।
कुलत्थक्वाथसंसृष्टं क्षीरपानञ्च पूजितम् ॥
क्षीराणि मांसानि घृतानिचैव दधीनि शाकानि च पर्णवन्ति ।
समासतोऽम्लान्मधुरान् हिमांश्च कृमीन् जिघांसुः परिवर्जयेत्तु ॥

---

## पञ्चपञ्चाशत्तमोऽध्यायः ॥

अथात उदावर्त्तप्रतिषेधमध्यायं व्याख्यास्यामः ॥
अधश्चोर्द्धञ्च भावानां प्रवृत्तानां स्वभावतः ।
न वेगान् धारयेत्प्राज्ञो वातादीनां जिजीविषुः ॥

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ।
व्याहन्यमानैरुदितैरुदावर्त्तो निरुच्यते ॥
क्षुत्तृष्णाश्वासनिद्राणामुदावर्त्तो विधारणात् ।
तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितम् ॥
त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः ।
अपथ्यभोजनाच्चापि वक्ष्येत च यथापरः ॥
आध्मानशूलौ हृदयोपरोधं शिरोरुजं श्वासमतीव हिक्काम् ।
कासप्रतिश्यायगलग्रहांश्च बलासपित्तप्रसरञ्च घोरम् ॥
कुर्य्यादपानोऽभिहतः स्वमार्गे हन्यात्पुरीषं मुखतः क्षिपेद्वा ।
आटोपशूलौ परिकर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्ध्ववातः ॥
पुरीषमास्यादपि वा निरेति पुरीषवेगेऽभिहते नरस्य ।
मूत्रस्य वेगेऽभिहते नरस्तु कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् ॥
मेढ्रे गुदे वङ्क्षणमुष्कयोश्च नाभिप्रदेशेष्वथ वापि मूर्द्ध्नि ।
आनद्धवस्तिश्च भवन्ति तीव्राः शूलाश्च शूलैरिव भिन्नमूर्त्तेः ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ।
श्रोत्राननघ्राणविलोचनोत्था भवन्ति तीव्राश्च तथा विकाराः ॥
आनन्दजं शोकसमुद्भवं वा नेत्रोदकं प्राप्तममुञ्चतो हि ।
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥
भवन्ति गाढं क्षवथोर्विघाताच्छिरोऽक्षिनासाश्रवणेषु रोगाः ।
कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वा प्रवृत्तिः ॥
उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ।
छर्देर्विघातेन भवेच्च कुष्ठं येनैव दोषेण विदग्धमन्नम् ॥
मूत्राशये वा गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च ।

शुक्राश्मरी तत्स्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे ॥
तन्द्राङ्गमर्दावरुचिः श्रमस्य क्षुधोऽभिघातात्कृशताच दृष्टेः ।
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद्धृदये व्यथा च ॥
श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ।
जृम्भाङ्गमर्दोऽङ्गशिरोऽक्षिजाड्यं निद्राभिघातादथवापि तन्द्रा ॥

तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम् ।
शकृद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥
सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः ।
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥
सामान्यतः पृथक्त्वेन क्रियां भूयो निबोध मे ।
आस्थापनं मारुतजे स्निग्धे स्विन्ने विशिष्यते ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत् ।
सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ॥
एलामप्यथ मद्येन क्षीरं वापि पिबेन्नरः ।
धात्रीफलानां स्वरसं सजलं वा पिबेत्त्र्यहम् ॥
रसमश्वपुरीषस्य गर्दभस्याथ वा पिबेत् ।
मांसोपदंशं मधु वा पिबेद्वा सीधु गौडिकम् ॥
भद्रदारु घनं मूर्व्वां हरिद्रां मधुकं तथा ।
कोलप्रमाणानि पिबेदान्तरिक्षेण वारिणा ॥
दुष्पर्शास्वरसं वापि कषायं कुङ्कुमस्य च ।
एर्व्वारुबीजं तोयेन पिबेद्वा लवणीकृतम् ॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा
योगांश्च वितरेत्तत्र पूर्व्वोक्तानश्मरीभिदः ॥

मूत्रकृच्छ्रक्रमं वापि कुर्य्यान्निरवशेषतः ।
भूयो वक्ष्यामि योगांश्च मूत्राघातोपशान्तये ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भाजं समुपाचरेत् ।
अश्रुमोक्षोऽश्रुजे कार्य्यः स्निग्धस्विन्नस्य देहिनः ॥
तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपसिंहनैः ।
वर्त्तिप्रयोगैरथ वा क्षवशक्तिं प्रवर्त्तयेत् ॥
तीक्ष्णौषधप्रधमनैरथवादित्यरश्मिभिः ।
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥
सुरां सौवर्च्चलवतीं वीजपूर्णरसान्विताम् ।
छर्द्याघातं यथादोषं सम्यक् स्नेहादिभिर्जयेत् ॥
सक्षारलवणोपेतमभ्यङ्गं वात्र दापयेत् ।
वस्तिशुद्धिकरावापश्चतुर्गुणजलम्पयः ॥
आवारिनाशात्क्वथितं पीतवन्तं प्रकामतः ।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ।
तृष्णाघाते पिवेन्मन्थं यवागूं वापि शीतलाम् ॥
भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः ।
निद्राघाते पिवेत् क्षीरं स्वप्याच्चेष्टकथारतः ॥
आध्मानोत्थेषु रोगेषु यथास्वं प्रयतेत हि ।
यच्च यस्मिन्भवेत्प्राप्तं तच्च तस्मिन् प्रयोजयेत् ॥
वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्त्तं करोति हि ॥
वातमूत्रपुरीषासृक्कफमेदोवहानि वै ।

स्रोतांस्युदावर्त्तयति पुरीषं चातिवर्त्तयेत् ॥
ततोहृद्वस्तिशूलार्त्तो गौरवारुचिपीडितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
श्वासकासप्रतिश्यायदाहमोहवमिज्वरान् ।
तृष्णाहिक्काशिरोरोगमनः श्रवणविभ्रमान् ॥
लभते च बहूनन्यान्विकारान्वातकोपजान् ।
तत्तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् ॥
दोषतो भिन्नवर्च्चस्कं भुक्तं चाप्यनुवासयेत् ।
न चेच्छान्तिं प्रयात्येवमुदावर्त्तः सुदारुणः ॥
अथैनं बहुशः स्विन्नं युञ्ज्यात्स्नेहविरेचनैः ।
पाययेत त्वष्टत्रीनुयवानीरम्लपानकैः ॥
हिङ्गुकुष्ठवचास्वर्ज्जिविडङ्गं वा द्विरुत्तरम् ।
योगावेतावुदावर्त्तं शूलञ्चापि नियच्छतः ॥
देवदार्वग्निकं कुष्ठं वचामभ्यां पलङ्कषाम् ।
पौष्कराणि च मूलानि तोयस्यार्द्धाढकं पचेत् ।
पादावशिष्टं तत्पीतमुदावर्त्तं व्यपोहति ।
मूलकं शुष्कमार्द्रञ्च वर्षाभूः पञ्चमूलकम् ॥
आरेवतफलं चाप्सु पक्वा तेन घृतं पचेत् ।
तत्पीयमानं शमयेदुदावर्त्तमशेषतः ॥
वचामतिविषां कुष्ठं यवक्षारं हरीतकीम् ।
कृष्णां निदिग्धिकाञ्चापि पिबेदुष्णेन वारिणा ।
इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचाम् ।
कुष्ठं किण्वाग्निकौ चापि पिबेत्तुल्यानि पूर्व्ववत् ॥

मूत्रेण देवदार्वग्नित्रिफलाष्टहतीः पिबेत् ।
यवप्रस्थं फलैः सार्द्धं कुष्टकाथ्यं जलाढके ॥
पक्वार्द्धं प्रस्थशेषन्तु पिबेद्धिङ्गुसमन्वितम् ।
मदनालाबुबीजानि पिप्पलीं सनिदिग्धिकाम् ॥
सञ्चूर्ण्य प्रथमेनाक्ता विशत्येतद्यथा गुदम् ।
चूर्णं निकुम्भकम्पिल्लश्यामेक्ष्वाकग्निकोद्भवम् ॥
क्षतवेधनमागध्यो लवणानाञ्च साधयेत् ।
गवां मूत्रेण ता वर्त्तीः कारयेत्तु गुदानुगाः ॥
सद्यः शर्म्मकरावेतौ योगावश्वतसम्भवौ ।

---

## षट्पञ्चाशत्तमोऽध्यायः ॥

अथातोविसूचिकाप्रतिषेधमध्यायं व्याख्यास्यामः ।
अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम् ।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥
सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ॥
यस्याजीर्णेन सा वैद्यैरुच्यते तु विसूचिका ॥
न ता परिमिताहारा लभन्ते विदितागमाः ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥
मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥
कुक्षिरानह्यतेऽत्यर्थन्ताम्यत्यथ च कूजति ।
निरुद्धो मारुतश्चापि कुक्षावुपरिधावति ॥

वातवर्च्चोनिरोधश्च कुक्षौ यस्य भृशम्भवेत् ।
तस्यालसकमाचष्टे हिक्कोद्गारौ तु यस्य तु ॥
दुष्टन्तु भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्ध्वमधश्च यस्य ।
विलम्बिकां तस्य विवर्ज्जनीयामाचक्षते शास्त्रविदः पुराणाः ॥
यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावततं स्वलिङ्गैस्तं लक्षयेदामसमुद्भवैश्च ॥
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञश्छर्द्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्व्वविमुक्तसन्धिर्य्यायान्नरोऽसौ पुनरागमाय ॥
साध्यासु पार्ष्णोर्दहनं प्रशस्तमग्निप्रतापो वमनञ्च तीक्ष्णम् ।
पक्वे ततोऽन्ने तु विलङ्घनं स्यात्सम्पाचनं चापि विरेचनं वा ॥
विशुद्धदेहस्य हि सद्य एव मूर्च्छातिसारादिरुपैति शान्तिम् ।
अस्थापनं चापि वदन्ति पथ्यं सर्व्वासु योगानपरान्निबोध ॥
पथ्यावचाहिङ्गुकलिङ्गगन्धसौवर्च्चलैः सातिविषैश्च चूर्णम् ।
सुखाम्बुपीतं विनिहन्त्यजीर्णं शूलं विसूचीमरुचिञ्च सद्यः ॥
क्षारागदं वा लवणं विडं वा गुडप्रगाढानथ सर्षपान्वा ।
अम्लेन वा सैन्धवहिङ्गुयुक्तौ सवीजपूर्णौ सहतौ त्रिवर्ग्गौ ॥
कटुत्रिकं वा लवणैरुपेतं पिबेत्स्नुहीक्षीरविमिश्रितं तु ।
कल्याणकं वा लवणं पिबेत्तु यदुक्तमादावनिलामयेषु ॥
कृष्णाजमोदक्षवकाणि वापि तुल्यौ पिबेद्वा मगधानिकुम्भौ ।
दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत्कोषवतीरसेन ॥
उष्णाभिरद्भिर्मगधोद्भवानां कल्कं पिबेन्नागरकल्कयुक्तम् ।
व्योषं करञ्जस्य फलं हरिद्रे मूलं समं वाप्यथ मातुलुङ्ग्याः ॥
छायाविशुष्का गुटिकाकृतास्ता हन्युर्व्विसूचीं नयनाञ्जनेन ।

सुवामितं साधुविरेचितं वा सुलङ्घितं वा मनुजं विदित्वा॥
पेयादिभिर्दीपनपाचनीयैः सम्यक्क्षुधार्त्तं समुपक्रमेत।
आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन॥
प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति।
तस्मिन्भवत्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः॥
आमाशये शूलमथो गुरुत्वं हृल्लासउद्गारविघातनञ्च।
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा च शकृद्वमिश्च॥
श्वासश्च पक्वाशयजे भवन्ति लिङ्गानि चात्रालसकोद्भवानि।
आमोद्भवे वातमुपक्रमेत संसर्गभक्तक्रमदीपनीयैः॥
अथेतरं यो न शकृद्वमेत्तमामं जयेत्स्वेदनपाचनैश्च।
विसूचिकायां परिकीर्त्तितानि द्रव्याणि वैरेचनिकानि यानि।
तान्येव वर्त्तीर्वितरेद्धि चूर्णं मङ्गिष्ठजावीभगवां तु मूत्रैः।
स्विन्नस्य पायौ विनिवेश्य ताश्च चूर्णानि चैषां प्रधमेत्तु नाड्या॥
मूत्रेण संसाध्य यथाविधानं द्रव्याणि यान्यूर्द्ध्वमधश्च यान्ति।
क्वाथेन तेनाशु निरूहयेच्च सुतार्द्धयुक्तेन समाक्षिकेण॥
त्रिभण्डियुक्तं लवणप्रकुञ्चं दत्वा विरिक्तक्रममाचरेच्च।
एभ्येव तैलेन च साधितेन प्राप्तं यदि स्यादनुवासयेच्च॥

———

## सप्तपञ्चाशत्तमोऽध्यायः॥

अथातोऽरोचकप्रतिषेधमध्यायं व्याख्यास्यामः॥

दोषैः पृथक् सह च चित्तविपर्य्ययाच्च
भक्तायनेषु हृदि चावतते प्रगाढम्।

नान्ने रुचिर्भवति तं भिषजो विकारं
भक्तोपघातमिह पञ्चविधं वदन्ति ॥
हृच्छूलपीडनयुतं विरसाननत्वं
वातात्मके भवति लिङ्गमरोचके तु ।
तृड्दाहचोषबहुता मुखतिक्तता च ।
मूर्च्छासलड्भवति पित्तकृते तथैव ॥
कण्डूगुरुत्वकफसंस्रवसादतन्द्राः
श्लेष्मात्मके मधुरमास्यमरोचके तु ।
सर्व्वात्मके पवनपित्तकफा बहूनि
रूपाण्यथास्य हृदये समुदीरयन्ति ॥
संरागशोकभयविप्लुतचेतसस्तु
चिन्ताकृतो भवति सोऽशुचिदर्शनाच्च ।
वाते वचाम्बुवमनं कृतवान् पिवेच्च
स्नेहैः सुराभिरथ वोष्णजलेन चूर्णम् ॥
कृष्णाविडङ्गयवभस्महरेणुभार्गी
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ।
पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं
स्नेहः ससैन्धवसितामधुसर्पिरिष्टः ॥
निम्बाम्बुवामितवतः कफजेऽनुपानं
राजद्रुमाम्बुमधुना तु सदीप्यकं स्यात् ।
चूर्णं यदुक्तमथवानिलजे तदेव
सर्वैश्च सर्वकृतमेवमुपक्रमेत ॥
द्राक्षापटोलविडवेत्रकरीरनिम्ब

मूर्व्वाभयात्वदरामलकेन्द्रहत्वैः।
बीजैः करञ्जनृपद्रुमभवैश्च पिष्टै
र्लेहं पचेत्सुरभिमूत्रयुतं यथावत्॥
मुस्तां वचां त्रिकटुकं रजनीद्वयञ्च
भार्गीञ्च कुष्ठमथ निर्दहनीञ्च पिष्ट्वा।
मूत्रेऽविजे द्विरदमूत्रयुते पचेद्वा
पाठान्तुगामतिविषां रजनीञ्च मुख्याम्॥
मण्डूकिमर्कमभ्रताञ्च सलाङ्गलाख्यां
मूत्रे पचेत्तु महिषस्य विधानविद्वा।
एतान्न सन्ति चतुरो लिहतस्तु लेहान्
गुल्मारुचिश्वसनकण्ठहृदामयाश्च॥
सात्म्यान् स्वदेशरचितान् विविधांच भक्ष्यान्
पानानि मूलफलषाडवरागयोगान्।
अद्यादूसांश्च विविधान् विविधैः प्रकारै
र्भुञ्जीत वापि लघुरुच्यमनःसुखानि॥
आस्थापनं विधिवदत्र विरेचनञ्च
कुर्य्यान्मृदूनि शिरसश्च विरेचनानि।
तीक्ष्णप्रधानि रजनीत्रिफलायुतानि
चूर्णीकृतानि यवशूकविमिश्रितानि॥
क्षौद्रायुतानि वितरेन्मुखधावनार्थं
मन्यानि तिक्तकटुकानि च भेषजानि।
मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः
क्वाथैर्जयेन्मधुयुतैर्व्विविधैश्च लेहैः॥

मूत्रासवैर्गुडकृतैश्च तथात्वरिष्टैः
चारासवैश्च मधुमाधवतुल्यगन्धैः ।
स्यादेष एव कफवातहते विधिश्च
शान्तिं गते हुतभुजि प्रशमाय तस्य ॥
इच्छाभिघातभयशोकहतेऽन्तरग्नौ
भावान्भवाय वितरेत्खलु शक्यरूपान् ।
अर्थेषु चाप्यपचितेषु पुनर्भवाय
पौराणिकैः श्रुतिपथैरनुमानयेत्तम् ॥
दैन्यं गते मनसि बोधनमत्र शस्तं
यद्यत्प्रियं तदुपसेव्यमरोचके तु ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ॥

अथातोमूत्राघातप्रतिषेधमध्यायं व्याख्यास्यामः ॥

वातकुण्डलिकाष्ठीला वातवस्तिस्तथैव च ।
मूत्रातीतः सजठरो मूत्रोत्सङ्गः क्षयस्तथा ॥
मूत्रग्रन्थिर्मूत्रशुक्रमुष्णवातस्तथैवच ।
मूत्रौकसादौ द्वौ चापि रोगा द्वादश कीर्त्तिताः ॥
रौच्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनम् ॥
मूत्रं सङ्गृह्य चरति विगुणः कुण्डलीकृतः ।
सृजेदल्पाल्पमथवा सरुजस्कं शनैः शनैः ॥
वातकुण्डलिकां तान्तु व्याधिं विद्यात्सुदारुणाम् ।
शकृन्मार्गस्य वस्तेश्च वायुरन्तरमाश्रितः ॥

अष्ठीलावद्घनं ग्रन्थिं करोत्यचलमुन्नमम्।
विण्मूत्रानिलसङ्गश्च तत्राध्मानञ्च जायते॥
वेदना जायते वस्तौ वाताष्ठीलेति तां विदुः।
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः॥
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः।
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः॥
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः।
सन्धार्य्य वेगं मूत्रस्य यो भूयः स्रष्टुमिच्छति॥
तस्य नाभ्येति यदि वा कथञ्चित्सम्प्रवर्त्तते।
प्रवाहतो मन्दरुजमल्पमल्पं पुनः पुनः॥
मूत्रातीतन्तु तं विद्यान्मूत्रवेगविघातजम्।
मूत्रस्य विहते वेगे तदुदावर्त्तहेतुना॥
अपानः कुपितो वायुरुदरं पूरयेद्भृशम्।
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम्॥
तं मूत्रजठरं विद्यादधोवस्तिनिरोधजम्।
वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः॥
मूत्रं प्रवृत्तं सज्येत सरक्तं वा प्रवाहतः।
स्रवेच्छनैरल्पमल्पं सरुजं वाथ नीरुजम्॥
विगुणानिलजो व्याधिर्मूत्रसङ्गः स संज्ञितः।
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ॥
सदाहवेदनं कृच्छ्रं कुर्य्यातां मूत्रसंक्षयम्॥
अभ्यन्तरे वस्तिमुखे वृत्तोऽल्पः स्थिर एवच।
वेदनावानभिस्यन्दी मूत्रमार्गनिरोधनः॥

जायते सहसा यस्य ग्रन्थिरश्मरिलक्षणः ।
स मूत्रग्रन्थिरित्येवमुच्यते वेदनादिभिः ॥
प्रत्युपस्थितमूत्रस्तु मैथुनं योऽभिनन्दति ।
तस्य मूत्रयुतं रेतः सहसा सम्प्रवर्त्तते ॥
पुरस्ताद्वापि मूत्रस्य पश्चाद्वापि कदाचन ।
भस्मोदकप्रतीकाशं मूत्रशुक्रन्तदुच्यते ॥
व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलाहतम् ।
वस्तिमेढ्रगुदञ्चैव प्रदहन् स्रावयेदधः ॥
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ।
कृच्छ्रात्प्रवर्त्तते जन्तोरुष्णवातं वदन्ति तम् ॥
विशदं पीतकं मूत्रं सदाहं बहलन्तथा ।
शुष्कं भवति यच्चापि रोचनाचूर्णसन्निभम् ॥
मूत्रौकसादं तं विद्याद्रोगं पित्तकृतं बुधः ।
शुष्कं भवति यच्चापि शङ्खचूर्णप्रपाण्डुरम् ॥
पिच्छिलं संहतं श्वेतं तथा कृच्छ्रं प्रवर्त्तते ।
मूत्रौकसादं तं विद्यादामयं चापरं कफात् ॥
कषायकल्कसर्पींषि भक्ष्यान् लेहान् पयांसि च ।
क्षारमद्यासवस्वेदान् वस्तींश्चोत्तरसंज्ञितान् ॥
विदध्यान्मतिमांस्तत्र विधिञ्चाश्मरिनाशनम् ।
मूत्रोदावर्त्तयोगांश्च कात्स्न्येनात्र प्रयोजयेत् ॥
कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्रकृच्छ्रात्प्रमुच्यते ॥
सुरां सौवर्च्चलवतीं मूत्रकृच्छ्री पिबेन्नरः ।

मधुमांसोपदंशं वा पिबेद्वाप्यथ गौडिकम् ॥
पिबेत्कुङ्कुमकर्षं वा मधूदकसमायुतम् ।
रात्रिपर्युषितं प्रातस्तथा सुखमवाप्नुयात् ॥
दाडिमाम्लयुतां मुख्यामेलाजीरकनागरैः ।
पीत्वा सुरां सुलवणां मूत्रकृच्छ्रात्प्रमुच्यते ॥
पृथक्पर्ण्यादिवर्गस्य मूलं गोक्षुरकस्य च ।
अर्द्धप्रस्थेन तोयस्य पचेत् क्षीरं चतुर्गुणम् ॥
क्षीरावशिष्टं तच्छीतं सिताक्षौद्रयुतं पिबेत् ।
नरो मारुतपित्तोत्थं मूत्राघातनिवारणम् ॥
निष्पीड्य वाससा सम्यग्वर्चौ रासभवाजिनाम् ।
रसस्य कुडवन्तस्य पिबेन्मूत्ररुजापहम् ॥
मुस्ताभयादेवदारुमूर्वाणां मधुकस्य च ।
पिबेदक्षसमं कल्कं द्राक्षाया जलसंयुतम् ॥
पिबेत्पर्युषितं वारि शीतं मूत्ररुजापहम् ।
निदिग्धिकायाः स्वरसं पिबेत् कुडवसंमितम् ॥
मूत्रदोषहरं कल्कमथवा क्षौद्रसंयुतम् ।
प्रपीड्यामलकानान्तु रसं कुडवसम्मितम् ।
पीत्वागदी भवेज्जन्तुर्मूत्रदोषरुजातुरः ॥
धात्रीफलरसेनैवं सूक्ष्मैलां वा पिबेन्नरः ।
पिष्ट्वाथ वा सुशीतेन शालितण्डुलवारिणा ॥
तालस्य तरुणं मूलन्त्रपुसस्वरसन्तथा ।
श्वेतं कर्कटकञ्चैव प्रातस्तं पयसा पिबेत् ॥
शृतं वा मधुरैः क्षीरं सर्पिर्मिश्रं पिबेन्नरः ।

मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरं परम् ॥
बलाश्वदंष्ट्राक्रौञ्चास्थिकोकिलाक्षकतण्डुलान् ।
शतपर्व्वकमूलञ्च देवदारुमचित्रकम् ॥
अक्षबीजञ्च सुरया कल्कीकृत्य पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिशोधनम् ॥
पाटलाक्षारमाहृत्य सप्तकृत्वः परिस्रुतम् ।
पिबेन्मूत्रविकारघ्नं संसृष्टं तैलमात्रया ॥
नलेक्षुदर्भाश्मभेदत्रपुसैर्व्वारुबीजकम् ।
क्षीरे परिस्रुतं तत्र पिबेत्सर्प्पिः समायुतम् ॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मतिमान् त्वगेलोषणचूर्णकम् ॥
पिबेद्गुडेन मिश्रं वा लिह्यात्क्षौद्रान् पृथक् पृथक् ।
अतऊर्द्धं प्रवक्ष्यामि मूत्रदोषे क्रमं हितम् ॥
स्नेहस्वेदोपपन्नानां हितन्तेषु विरेचनम् ।
ततः संशुद्धदेहानां हिताश्चोत्तरवस्तयः ॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ।
मैथुनोपरमस्तस्य बृंहणश्च विधिः स्मृतः ॥
ताम्रचूडवसातैलं हितञ्चोत्तरवस्तिषु ।
विधानं तस्य पूर्व्वं हि व्यासतः परिकीर्त्तितम् ॥
क्षौद्रार्द्धपात्रं दत्वा तु पात्रन्तु क्षीरसर्पिषोः ।
स्वयङ्गुप्ताफलञ्चैव तथैव क्षुरकस्य च ।
पिप्पलीचूर्णसंयुक्तमर्द्धभागं प्रदापयेत् ॥
एतदैकध्यमानीय खजेनाभिप्रमन्थयेत् ।

तस्य पाणितलं चूर्णं लीढ्वा क्षीरं ततः पिबेत् ॥
एतत्सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा ।
मूत्रदोषान् जयेत्सर्वानन्ययोगैः सुदुर्ज्जयान् ॥
जयेच्छोणितदोषांश्च बन्ध्या गर्भं लभेत च ।
नारी चैतत्प्रयुञ्जाना योनिदोषात्प्रमुच्यते ॥
बलाकोलास्थिमधुकं श्वदंष्ट्राथ शतावरी ।
मृणालञ्च कशेरुश्च बीजानि त्रपुसस्य च ॥
सहस्रवीर्य्यांशुमती पयस्या सह कालया ।
शृगालविन्नातिबला बृंहणीयो गणस्तथा ॥
एतानि समभागानि मतिमान् सह साधयेत् ।
चतुर्गुणेन पयसा गुडस्य तुलया सह ॥
द्रोणावशिष्टं तत्पूतं पचेत्तेन घृताढकम् ।
तत्सिद्धं कलसे स्थाप्यं क्षौद्रप्रस्थेन संयुतम् ॥
सर्पिरेतत्प्रयुञ्जानो मूत्रदोषात्प्रमुच्यते ॥

---

## ऊनषष्टितमोऽध्यायः ॥

अथातो मूत्रदोषप्रतिषेधमध्यायं व्याख्यास्यामः ॥
वातेन पित्तेन कफेन सर्व्वैस्तथाभिघातैः शकृदश्मरीभ्याम् ।
तथापरः शर्करया सुकष्टो मूत्रोपघातः कथितोऽष्टमस्तु ॥
अल्पमल्पं समुत्पीड्य मुष्कमेहनवस्तिभिः ।
फलद्भिरिव कृच्छ्रेण वाताघातेन मेहति ॥
हरिद्रमुष्णं रक्तं वा मुष्कमेहनवस्तिभिः ।

अग्निना दह्यमानाभेः पित्ताघातेन मेहति ॥
स्निग्धं शुक्लमनुष्णञ्च मुष्कमेहनवस्तिभिः ।
संहृष्टरोमा गुरुभिः श्लेष्माघातेन मेहति ॥
दाहशीतरुजाविष्टो नानावर्णं मुहुर्मुहुः ॥
ताम्यमानः सुकृच्छ्रेण सन्निपातेन मेहति ।
मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ॥
स्रोतःसु मूत्राघातस्तु जायते भृशवेदनः ।
वातवस्तेस्तु तुल्यानि तस्य लिङ्गानि लक्षयेत् ॥
शकृतस्तु प्रतीघाताद्वायुर्विगुणताङ्गतः ।
आध्मानञ्च सशूलञ्च मूत्रसङ्गं करोति हि ॥
अश्मरीहेतुकः पूर्वं मूत्राघात उदाहृतः ।
अश्मरी शर्कराचैव तुल्ये सम्भवलक्षणे ॥
शर्करायां विशेषन्तु शृणु कीर्त्तयतो मम ।
पच्यमानस्य पित्तेन भिद्यमानस्य वायुना ॥
श्लेष्मणोऽवयवा भिन्नाः शर्करा इतिसंज्ञिताः ।
हृत्पीडा वेपथुः शूलं कुक्षौ वह्निः सुदुर्बलः ॥
ताभिर्भवति मूर्च्छा च मूत्राघातश्च दारुणः ।
मूत्रवेगनिरस्तासु तासु शाम्यति वेदना ॥
यावदन्या पुनर्नैति गुडिका स्रोतसोमुखम् ।
शर्करासम्भवस्यैतन्मूत्राघातस्य लक्षणम् ॥
चिकित्सितमतस्तूर्द्ध्वमष्टानामपि वक्ष्यते ।
अश्मरीञ्च समाश्रित्य यदुक्तं प्रसमीक्ष्य तत् ॥
यथादोषं प्रयुञ्जीत स्नेहादिकमपि क्रमम् ।

श्वदंष्ट्राश्मभिदौ कुम्भीं वृषभां कण्टकारिकाम्।
बलां शतावरीं रास्नां वरुणां गिरिकर्णिकाम्।
तथाविदारिगन्धादिं संहृत्य तैर्घृतं पचेत्॥
तैलं घृतं वा तत्पेयं तेन वाप्यनुवासनम्।
दद्यादुत्तरवस्तिञ्च वातकृच्छ्रोपशान्तये॥
श्वदंष्ट्रास्वरसे तैलं सगुडक्षीरनागरम्।
पक्वा तत्पूर्ब्बवद्योज्यं तत्रानिलरुजापहम्॥
तृणोत्पलादिकाकोलीन्यग्रोधादिगणे कृतम्।
पीतं घृतं पित्तकृच्छ्रं नाशयेत् क्षिप्रमेवच॥
दद्यादुत्तरवस्तिञ्च पित्तकृच्छ्रोपशान्तये।
एभिरेव कृतः स्नेहस्त्रिविधेष्वेव वस्तिषु॥
हितं विरेचनं चेक्षुक्षीरद्राक्षारसैर्युतम्।
सुरसोषकमुस्तादिवरुणादौच संस्कृतम्॥
तैलं तथा यवाग्वश्च कफकृच्छ्रे प्रशस्यते।
यथादोषोच्छ्रयं कुर्य्यादेतानेवच सर्व्वजे॥
फल्गुवृश्चीकदर्भाश्मसारचूर्णञ्च वारिणा।
सुरेक्षुरसदर्भाम्बुपीतं कृच्छ्ररुजापहम्॥
तथाभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम्।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया॥
स्वेदावगाहावभ्यङ्गा वस्तिचूर्णक्रियास्तथा।
सकृच्छ्रौ द्वौ तथान्यौ यौ तयोः प्रोक्तः क्रियाविधिः॥

इति सौश्रुत आयुर्वेदशास्त्रे उत्तरतन्त्रे कायचिकित्सा समाप्ता॥

---

## षष्टितमोऽध्यायः ॥

अथातो ऽमानुषप्रतिषेधमध्यायं व्याख्यास्यामः ॥

निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ।
इति यत्प्रागभिहितं विस्तरस्तस्य वक्ष्यते ॥
गुह्यानागतविज्ञानमनवस्था सहिष्णुता ।
क्रिया वा ऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते ॥
अशुचिं भिन्नमर्य्यादं क्षतं वा यदिवाऽक्षतम् ।
हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापिच ॥
असङ्ख्येया ग्रहगणा ग्रहाधिपतयस्तु ये ।
व्यज्यन्ते विविधाकारा भिद्यन्ते ते तथाष्टधा ॥
देवास्तथा शत्रुगणाश्च तेषां गन्धर्व्वयक्षाः पितरो भुजङ्गाः ।
रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणग्रहाख्यः ॥
संतुष्टः शुचिरपि चेष्टगन्धमाल्यो
निस्तन्द्री ह्यवितथसंस्कृतप्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवतिच यः स देवजुष्टः ॥
संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
संतुष्टो भवति नचान्नपानजातै
र्दुष्टात्मा भवतिच देवशत्रुजुष्टः ॥
हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।

हृष्यन् वा प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥
ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतमतिरल्पवाक्सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥
प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ।
मांसेप्सुस्तिलगुडपायसाभिकाम
स्तद्भक्तो भवति पितृग्रहाभिभूतः ॥
भूमौ यः प्रसरति सर्पवत्कदाचित्
सृक्कण्यौ विलिहति जिह्वया प्रसक्तम् ।
निद्रालुर्गुडमधुदुग्धपायसेप्सु
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥
मांसासृग्विविधसुराविकारलिप्सु
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड्भवतिच रक्षसा गृहीतः ॥
उद्ध्वस्तः कृशपरुषश्चिरप्रलापी
दुर्गन्धो भृशमशुचिस्तथातिलोलः ।
बह्वाशी विजनहिमाम्बुरात्रिसेवी
व्याचेष्टं भ्रमति रुदन् पिशाचजुष्टः ॥
स्थूलाक्षस्त्वरितगतिः स्वफेनलेही

निद्रालुः पततिच कम्पतेच योऽति ।
यश्चाद्रिद्विरदनगादिविच्युतःसन्
संस्पृष्टो न भवति वाङ्कितेन जुष्टः ॥
देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि ।
गन्धर्वः प्रायशोऽष्टम्यां यक्षांश्च प्रतिपद्यथ ॥
कृष्णपक्षे च पितरः पञ्चम्यामपि चोरगाः ।
रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति च ॥
दर्पणादीन् यथाच्छाया शीतोष्णं प्राणिनो यथा ।
स्वमणिं भास्करार्चिश्च यथा देहञ्च देहभृत् ॥
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम् ।
तपांसि तीव्राणि तथैव दानं व्रतानि धर्म्मो नियमश्च सत्यम् ।
गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम् ॥
न ते मनुष्यैः सह संविशन्ति नवा मनुष्यान् क्वचिदाविशन्ति ।
ये वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः ॥
तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसङ्ख्याः ।
असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति ॥
निशाचराणां तेषां हि ये देवगणसंस्तुताः ।
ते तु तत्सत्वसंसर्गाद्विज्ञेयास्तु तदञ्जनाः ॥
देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये ।
देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते चदेववत् ॥
स्वामिशीलक्रियाचाराः क्रमएव सुरादिषु ।
नैर्ऋतेया दुहितरस्तासां स प्रसवः स्मृतः ॥
सत्यत्वादपदृक्तेषु वृत्तिस्तेषां गणैः कृता ।

हिंसाविहारा ये केचिद्दिव्यं भावमुपाश्रिताः।
भूतानीति कृता संज्ञा तेषां संज्ञा प्रवक्तृभिः।
ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक्॥
विद्यया भूतविद्यात्वमतएव निरुच्यते।
तेषां शान्त्यर्थमन्विच्छन्वैद्यस्तु सुसमाहितः॥
जप्यैः सनियमैर्होमैरारभेत चिकित्सितुम्।
रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषाम्॥
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते।
वस्त्राणि मद्यमांसानि क्षीराणि रुधिराणि च॥
यानि येषां यथेष्टानि तानि तेभ्यः प्रदापयेत्।
हिनस्ति मनुजान् येषु प्रायशो दिवसेषु तु॥
दिनेषु तेषु देयानि तद्भूतविनिवृत्तये।
देवग्रहे देवगृहे कृत्वाग्निं शापयेद्बलिम्॥
कुशस्वस्तिकपूपाज्यच्छत्रपायससम्भृतम्।
असुराय यथाकालं विदध्याच्चत्वरादिषु॥
चतुःपथे राक्षसस्य भीमेषु गहनेषु वा।
शून्यागारे पिशाचस्य तीव्रं बलिमुपाहरेत्॥
पूर्वमाचरितैर्मन्त्रैर्भूतविद्यादिदर्शितैः।
न शक्या बलिभिर्जेतुं योगैस्तान् समुपाचरेत्।
अजर्क्षचर्म्मरोमाणि शल्यकोलूकयोस्तथा॥
हिङ्गुमूत्रञ्च वस्तस्य धूममस्य प्रयोजयेत्।
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः॥
गजाह्वपिप्पलीमूलव्योषामलकसर्षपान्।

गोधानकुलमार्जारऋक्षपित्तप्रभावितान् ॥
नस्याभ्यञ्जनसेकेषु विदध्याद्योगतत्त्ववित् ।
खराश्वाश्वतरोलूककरभश्वशृगालजाः ।
पुरीषं गृध्रकाकानां वराहस्य च पेषयेत् ।
वस्तमूत्रेण तत्सिद्धं तैलं स्यात् पूर्ववद्धितम् ॥
शिरीषबीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ।
मञ्जिष्ठां रजनीं कृष्णां वस्तमूत्रेण पेषयेत् ॥
वर्त्तीश्छायाविशुष्कास्ताः सपित्ता नयनाञ्जनम् ।
नक्तमालफलं व्योषं मूलं श्योनाकबिल्वयोः ॥
हरिद्रे च कृता वर्त्तिः पूर्ववन्नयनाञ्जनम् ।
ये ये ग्रहा न सिध्यन्ति सर्वेषां नयनाञ्जनम् ॥
सैन्धवं कटुकं हिङ्गुवयस्थाश्च वचामपि ।
वस्तमूत्रेण तत्सिद्धं मत्स्यपित्तेन पूर्ववत् ॥
पुराणसर्पिर्लशुनं हिङ्गु सिद्धार्थकं वचाम् ।
गोलोमीचाजलोमीच भूतकेशी जटा तथा ॥
कुक्कुटीसर्पगन्धाश्च तथाकाणविषाणिके ।
वृश्चिप्रोक्ता वयस्थाच शृङ्गी मोहनवल्लिका ॥
अर्कमूलं त्रिकटुकं स्रोतोञ्जनाञ्जनम् ।
नैपाली हरितालश्च रक्षोघ्ना ये च कीर्त्तिताः ॥
सिंहव्याघ्रर्क्षमार्जारद्वीपिवाजिगवान्तथा ।
श्वाविच्छल्यकगोधानामुष्ट्रस्य नकुलस्य च ॥
विट्त्वग्रोमवसामूत्ररक्तपित्तनखादयः ।
अग्निस्त्वगौ भिषक् धीस्त्वैलानिच घृतानि च ॥

पानाभ्याञ्जननस्येषु तानि योज्यानि जानता ।
अवपीडेऽञ्जने चैव विदध्याद्गुटिकीकृताम् ॥
विदधीत परीषेके क्वथितं चूर्णितं तथा ।
उद्धूलने श्लक्ष्णपिष्टं प्रदेहे चावचारयेत् ॥
एष सर्व्वविकारांस्तु मानसानपराजितः ।
हन्यादल्पेन कालेन स्नेहादिरपिच क्रमात् ॥
नचायुक्तं प्रयुञ्जीत प्रयोगन्देवताग्रहे ।
ऋते पिशाचादन्येषु प्रतिकूलं नचाचरेत् ॥
वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्धा महौजसः ।
हिताहितविधानञ्च नित्यमेव समाचरेत् ॥
ततः प्राप्स्यति सिद्धिञ्च यशश्च विपुलं भिषक् ।

---

## एकषष्टितमोऽध्यायः ॥

अथातोऽपस्मारप्रतिषेधमध्यायं व्याख्यास्यामः ॥

स्मृतिर्भूतार्थविज्ञानमपस्च परिवर्जने ।
अपस्मार इतिप्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥
मिथ्यादियोगेन्द्रियार्थकर्मणामभिसेवनात् ।
विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥
वेगनिग्रहशीलानामहिताशुचिभोजिनाम् ।
रजस्तमोऽभिभूतानां गच्छताञ्च रजस्वलाम् ॥
तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् ।
चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥

संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः ।
रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥
विक्षिपन् हस्तपादौच विजिह्मभ्रूर्विलोचनः ।
दन्तान् खादन्वमन् फेनं विवृताक्षः पतेत्क्षितौ ॥
अल्पकालान्तराच्चापि पुनः संज्ञां लभेत सः ।
सोऽपस्मार इति प्रोक्तः सच दृष्टश्चतुर्विधः ॥
वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः ।
हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥
निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ ।
वेपमानो दशेद्दन्तान् श्वसन् फेनं वमन्नपि ॥
यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति ।
ततोमे चित्तनाशः स्यात्सोऽपस्मारोऽनिलात्मकः ॥
तृट्तापस्वेदमूर्च्छार्त्तो धुन्वन्नङ्गानि विह्वलः ।
यो ब्रूयाद्विकृतं सत्त्वं पीतं मामनुधावति ॥
ततो मे चित्तनाशः स्यात्सपित्तभव उच्यते ।
शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम् ॥
योब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति ।
ततो मे चित्तनाशः स्यात्सोऽपस्मारः कफात्मकः ॥
हृदि तोदस्तृड्उत्क्लेदस्त्रिष्वप्येतेषु सञ्ज्ञया ।
प्रलापः कूजनं क्लेशः प्रत्येकन्तु भवेदिह ॥
सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे ।
अनिमित्तागमाद्व्याधेर्गमनाद्सतेऽपिच ॥
आगमाच्चाप्यपस्मारं वदन्त्यन्ये न दोषजम् ।

क्रमोपयोगाद्दोषाणां क्षणिकत्वात्तथैवच॥
आगमाद्वै स्वरूपाच्च सतु निर्वर्ण्यते बुधैः।
वर्षत्यपि यथा देवे भूमौ वीजानि कानिचित्॥
शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः।
स्थायिनः केचिदल्पेन कालेनाभिप्रवर्द्धिताः॥
दर्शयन्ति विकारांस्तु विस्वरूपान्निसर्गतः।
अपस्मारो महाव्याधिस्तस्माद्दोषजएवतु॥
तस्य कार्य्यो विधिः सर्व्वो यउन्मादेषु वक्ष्यते।
पुराणसर्पिषः पानमभ्यङ्गश्चैव पूजितः॥
उपयोगो ग्रहोक्तानां योगानान्तु विशेषतः।
शिग्रुकट्वङ्गकिण्वं हि निम्बत्वग्रससाधितम्॥
चतुर्गुणे गवां मूत्रे तैलमभ्यञ्जने हितम्।
गोधानकुलनागानां पृषतर्क्षगवामपि॥
पित्तेषु सिद्धन्तैलञ्च पानाभ्यङ्गेषु पूजितम्।
तीक्ष्णैरुभयतोभागैः शिरश्चापि विशोधयेत्॥
पूजां रुद्रस्य कुर्व्वीत तद्गणानाञ्च नित्यशः।
कुलत्थयवकोलानि शणवीजं पलङ्कषाम्॥
जटिलां पञ्चमूल्यौ द्वे पथ्याञ्चोक्ताथ्य यत्नतः।
वस्तमूत्रयुतं सर्पिः पिबेत्तद्वातिके हितम्।
काकोल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे॥
पयोमधुसितायुक्तं घृतं यत्पैत्तिके हितम्।
कृष्णावचामुस्तकाद्यैर्युक्तमारग्वधादिके॥
पक्वान्तन्मूत्रवर्गेषु श्लेष्मापस्मारिणे हितम्।

सुरद्रुमवचाकुष्ठसिद्धार्थव्योषहिङ्गुभिः ॥
मञ्जिष्ठारजनीयुग्मसमङ्गात्रिफलाब्दैः ।
करञ्जवीजशैरीषगिरिकर्णाङ्कताग्नैः ॥
सिद्धं सिद्धार्थकं नाम सर्पिर्मूत्रचतुर्गुणम् ।
कृमिकुष्ठगरश्वासबलासविषमज्वरान् ॥
सर्व्वभूतग्रहोन्मादानपस्मारांश्च नाशयेत् ।
दशमूलेन्द्रवृक्षत्वङ्मूर्व्वाभार्गीफलत्रयैः ॥
सम्पाकश्रेयसीसप्तपर्ण्यापामार्गपीलुभिः ।
एतैः कल्कैश्च भूनिम्बपूतीकव्योषचित्रकैः ॥
त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ।
कटुकामदयन्त्युग्रानीलिनीकृमिशत्रुभिः ॥
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ।
साधितं पञ्चगव्याख्यं सर्व्वापस्मारभूतनुत् ॥
चातुर्थकक्षयश्वासानुन्मादांश्च नियच्छति ।
वातिकं वस्तिभिश्चापि पैत्तिकन्तु विरेचनैः ॥
कफजं वमनैर्धीमानपस्मारमपाचरेत्।
भार्गीशृते पचेत्क्षीरे शालितण्डुलपायसम् ॥
त्र्यहं शुद्धाय तद्भोज्यं वराहायोपकल्पयेत् ।
ज्ञात्वा च मधुरीभूतं तं विशस्य तदुद्धरेत् ।
त्रीन्भागांस्तस्य चूर्णस्य किण्वभागेन संसृजेत् ॥
मण्डोदकार्थे देयश्च भार्गीक्वाथः सुशीतलः ।
शुद्धे कुम्भे निदध्याच्च सम्भारं तं सुरां ततः ॥

जातगन्धां जातरसां पाययेदातुरं भिषक्
सिरां विध्येदथाप्तां मङ्गल्यानि च धारयेत् ॥

---

द्विषष्टितमोऽध्यायः ।

अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः ॥

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः ।
एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः ॥
मानसेन च दुःखेन स पञ्चविध उच्यते ॥
विषाद्भवति षष्ठश्च यथास्वन्तत्र भेषजम् ।
सचाप्रवृद्धस्तरुणो मदसंज्ञां विभर्त्ति च ॥
मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम् ।
अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम् ॥
वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा ।
यस्य स्यादचिरेणैवमुन्मादं सोऽधिगच्छति ॥
रूक्षच्छविः परुषवाक् धमनीततोवा
श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः ।
आस्फोटयन्पठति गायति नृत्यशीलो
विक्रोशति भ्रमति चाप्यनिलप्रकोपात् ॥
तृट् स्वेददाहबहुलो बहुभुग्विनिद्र
श्छायाहिमानिलजलान्तविहारसेवी ।
तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की

पित्ताद्दिवा नभसि पश्यति तारकाश्च ॥
छर्द्यग्निसादसदनारुचिकासयुक्तो
योपिद्विविक्तरतिरल्पमतिप्रचारः ।
निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी
रात्रौ भृशं भवति चापि कफप्रकोपात् ॥
सर्व्वात्मके त्रिभिरपि व्यतिमिश्रितानि
रूपाणि वातकफपित्तकृतानि विद्यात् ।
सम्पूर्णलक्षणमसाध्यमुदाहरन्ति
सर्व्वात्मकं क्वचिदपि प्रवदन्ति साध्यम् ॥
चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै
र्वित्रासितस्य धनवान्धवसंक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो
र्जायेतचोत्कटतरो मनसो विकारः ॥
चित्रं स जल्पति मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ।
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेन भवेद्विसंज्ञः ॥
स्निग्धं स्विन्नन्तु मनुजमुन्मादार्त्तं विशोधयेत् ।
तीक्ष्णैरुभयतोभागैः शिरसश्च विरेचनैः ।
विविधैरवपीडैश्च सर्षपस्नेहसंयुतैः ॥
योजयित्वा च तच्चूर्णं प्राणे नस्यन्तु योजयेत् ।
सततं धूपयेच्चैनं श्वगोमांसैः सुपूतिभिः ॥
सर्षपानाञ्च तैलेन नस्याभ्यङ्गौ हितौ सदा ।

दर्शयेदद्भुतान्यस्य वदेन्नाशं प्रियस्य च ॥
भीमाकारैर्नरैर्नागैर्दान्तैर्व्यालैश्च निर्विषैः ।
भीषयेत्सततं पाशैः कशाभिर्वाथ ताडयेत् ॥
यन्त्रयित्वा सुसुप्तं वा त्रासयेत्तं तृणाग्निना ।
प्रतुदैर्दारयेच्चैनं मर्म्माघातं विवर्ज्जयेत् ॥
सापिधाने जरत्कूपे सततं वा निवारुयेत् ।
त्यक्त्वाऽऽहाराद्यवागूञ्च दद्यात्सक्तून् जलेनवा ॥
केवलानम्बुयुक्तान् वा कुल्माषान् वा बहुस्रुतः ।
हृद्यं यद्दीपनीयञ्च तत्पथ्यं तस्य योजयेत् ॥
विडङ्गत्रिफलामुस्तमञ्जिष्ठा दाडिमोत्पलैः ।
श्यामैलावालुकैलाभिश्चन्दनामरदारुभिः ॥
बर्हिष्ठरजनीकुष्ठपर्णिनीशारिवाह्वयैः ।
हरेणुकात्रुटद्दन्तीवचातालीशकेशरैः ।
द्विक्षीरं साधितं सर्पिर्मालतीकुसुमैः सह ।
गुल्मकासज्वरश्वासक्षयोन्मादनिवारणम् ॥
एतदेवहि सम्पक्वं जीवनीयोपसम्भृतम् ।
चतुर्गुणेन दुग्धेन महाकल्याणमुच्यते ॥
अपस्मारं ग्रहं शोषं क्लैव्यं कार्श्यमवीजताम् ।
घृतमेतन्निहन्त्याशु येचाद्दौ गदिता गदाः ॥
बर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाह्वयैः ।
तेनेदं त्रिफलाहिङ्गुवाजिगन्धामरद्रुमैः ॥
वचाजमोदाकाकोलीमेदामधुकपद्मकैः ।
सशर्करं हितं सर्पिः पक्वं क्षीरचतुर्गुणम् ॥

बालानां ग्रहजुष्टानां पुंसां दुष्टाल्पमेधसाम्।
ख्यातं फलघृतं स्त्रीणां वन्ध्यानाञ्चाशुगर्भदम्॥
ब्रह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गु मुरां जटाम्॥
विषघ्नीं लशुनं रास्नां विशल्यां सुरसां वचाम्।
ज्योतिष्मतीं नागविन्नामनन्तामभयान्तथा॥
सौराष्ट्रीञ्च समांशानि गजमूत्रेण पेषयेत्।
छायाविशुष्कास्तद्वर्त्तीर्योजयेद्दधिकोविदः॥
अवपीडेऽञ्जनेऽभ्यङ्गे नस्ये धूमे प्रलेपने॥
उरोऽपाङ्गललाटेषु सिराश्चास्य विमोक्षयेत्॥
अपस्मारक्रियाञ्चापि ग्रहोद्दिष्टाञ्च कारयेत्।
शान्त दोषं विशुद्धञ्च स्नेहवस्तिभिराचरेत्॥
शोकशल्यं व्यपनयेदुन्मादे पञ्चमे भिषक्।
उन्मादेषु च सर्व्वेषु कुर्य्याच्चित्तप्रसादनम्॥
मृदुपूर्व्वं मदेष्वेवं क्रियां विद्वान् प्रयोजयेत्।
विषजे मृदुपूर्व्वाञ्च विषघ्नीं कारयेत्क्रियाम्॥

---

## त्रिषष्टितमोऽध्यायः॥

अथातोरसभेदविकल्पमध्यायं व्याख्यास्यामः॥

दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः।
त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते॥
अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा।
रसभेदत्रिषष्टिन्तु वीक्ष्य वीक्ष्यावचारयेत्॥

एकैकेनानुगमनं भागशो यदुदीरितम्।
दोषाणां तत्र मतिमान् त्रिषष्टिन्तु प्रयोजयेत्॥
यथाक्रमं प्रवृत्तानां द्विकेषु मधुरो रसः।
पञ्चानुक्रमते योगानम्लश्चतुर एव च॥
त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम्।
तिक्तः कषायमन्वेति ते द्विका दश पञ्च च॥

तद्यथा। मधुराम्लः। मधुरलवणः। मधुरतिक्तः। मधुरकटुकः। मधुरकषायः। एते पञ्चानुक्रान्ता मधुरेण॥

अम्ललवणः। अम्लकटुकः। अम्लतिक्तः। अम्लकषायः।
एते चत्वारोऽनुक्रान्ता अम्लेन।

लवणकटुकः। लवणतिक्तः। लवणकषायः। एते त्रयोऽनुक्रान्ता लवणेन।

कटुतिक्तः। कटुकषायः। द्वावेतावनुक्रान्तौ कटुकेन॥
तिक्तकषाय एकएवानुक्रान्तस्तिक्तेन।
एते पञ्चदशद्विकसंयोगाः व्याख्यातास्त्रिक वक्ष्यामः॥
आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति।
षडम्लो लवणस्तस्मादूर्द्ध्वन्त्वेकं रसः कटुः॥

मधुराम्ललवणः। मधुराम्लकटुकः। मधुराम्लतिक्तः। मधुराम्लकषायः।
मधुरलवणकटुकः। मधुरलवणतिक्तः। मधुरलवणकषायः।
मधुरकटुकतिक्तः। मधुरकटुकषायः। मधुरतिक्तकषायः।
एवमेषां त्रिकसंयोगानां दशानामादौ मधुरः प्रयुज्यते॥
अम्ललवणकटुकः। अम्ललवणतिक्तः। अम्ललवणकषायः। अम्

कटुकषायः। अम्लकटुतिक्तः। अम्लतिक्तकषायः। एवमेषां षण्णां मादावम्लः प्रयुज्यते॥ लवणकटुतिक्तः। लवणकटुकषायः। लवण तिक्तकषायः। एवमेषां त्रयाणामादौ लवणः प्रयुज्यते। कटुतिक्तः कषायः। एवमेकस्यादौ कटुकः प्रयुज्यते॥ एवमेते त्रिकसंयोग विंशतिर्व्याख्याताः।

चतुष्कान्वक्ष्यामः॥ चतुष्करससंयोगान्मधुरो दश गच्छति।

चतुरोऽम्लस्तु गच्छेत्तु लवणस्त्वेकमेव तु॥

मधुराम्ललवणकटुकः मधुराम्ललवणतिक्तः।

मधुराम्ललवणकषायः। मधुराम्लकटुकतिक्तः।

मधुराम्लकटुकषायः मधुरलवणतिक्तकटुकः।

मधुराम्लतिक्तकषायः। मधुरलवणकटुतिक्तः।

मधुरलवणकटुकषायः। मधुरलवणतिक्तकषायः।

एवमेषां दशानामादौ मधुरः प्रयुज्यते॥

अम्ललवणकटुकतिक्तः। अम्ललवणकटुकषायः॥

अम्ललवणतिक्तकषायः। अम्लकटुतिक्तकषायः।

एवमेषां चतुर्णामम्लः॥

लवणकटुतिक्तकषायः। एवमेकस्यादौ लवणः॥

एवमेते चतुष्करससंयोगाः पञ्चदशकीर्त्तिताः

पञ्चकान्वक्ष्यामः॥

पञ्चकान्पञ्च मधुरएकमम्लस्तु गच्छति।

मधुराम्ललवणकटुतिक्तः मधुराम्ललवणकटुकषायः। मधुराम्ललवणतिक्तकषायः। मधुराम्लकटुतिक्तकषायः मधुरलवणकटु तिक्तकषायः।

एवमेषां पञ्चानां पञ्चकरससंयोगानामादौ मधुरः प्रयुज्यते ॥
अम्ललवणकटुतिक्तकषायः। एवमेकस्यादावम्लः प्रयुज्यते।
एवमेते षट् पञ्चकसंयोगा व्याख्याताः। षट्कमेकं वक्ष्यामः ॥
एकस्तु षट्कसंयोगः मधुराम्ललवणकटुकतिक्तकषायः एवमयमेक षट्संयोगः ॥
एककैश्च षड्रसाभवन्ति ॥ मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति ॥
भवतिचात्र ॥ एषा त्रिषष्टिर्व्याख्याता रसानां रसचिन्तकैः।
दोषभेदे त्रिषष्टिस्तु प्रयोक्तव्या विचक्षणैः ॥

---

## चतुःषष्टितमोऽध्यायः ॥

अथातः स्वस्थवृत्तमध्यायं व्याख्यास्यामः ॥

समदोषःसमाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः सुस्थइत्यभिधीयते ॥
सूत्रस्थाने समुद्दिष्टः सुस्थो भवति यादृशः।
तस्य यद्रक्षणं तद्धि चिकित्सायाः प्रयोजनम् ॥
तस्य यद्वृत्तमुक्तं हि रक्षणं हि समासतः।
तस्मिन्नर्थाः समासोक्ता विस्तरस्तस्य वक्ष्यते ॥
यस्मिन्यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्।
तेषु तेषु प्रदातव्याः रसास्ते ते विजानता ॥
प्रक्लिन्नत्वाच्छरीराणां वर्षासु खलु देहिनाम्।
मन्देऽग्नौ कोपमायान्ति संहर्षान्मारुतादयः ॥

तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च ।
कषायतिक्तकटुकैरसैर्युक्तमथोद्रवम् ॥
नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च ।
देयमन्नं नृपतये यच्चान्यं चोक्तमादितः ॥
तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् ।
अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले ॥
तरुणत्वाद्विदाहश्च गच्छन्त्योषधयस्तदा ।
मतिमांस्तन्निमित्तञ्च नैव व्यायाममाचरेत् ॥
अत्यम्बुपानावश्यायग्राम्यधर्मातपांस्तथा ।
भूवाष्पपरिहारार्थं शयीत च विहायसि ॥
शीते साग्नौ निवाते च गुरुप्रावरणे गृहे ।
यायान्नामवधूभिश्च प्रशस्तागुरुभूषितः ॥
दिवास्वप्नमजीर्णञ्च वर्ज्जयेत्तत्र यत्नतः ।
सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः ॥
क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः ।
सलिलञ्च प्रसन्नत्वात् सर्व्वमेव तदा हितम् ॥
सरःस्नानवनञ्चैव कमलोत्पलशालिषु ।
प्रदोषे शशिनः पादाश्चन्दनञ्चानुवासनम् ॥
तिक्तस्य सर्पिषः पानैरक्तस्रावैश्च युक्तितः ।
वर्षास्वुपचितम् पित्तं हरेच्चापि विरेचनैः ॥
नोपेयाच्छीतमम्भोष्णं क्षारं स्वप्नं दिवातपम् ।
रात्रिजागरणञ्चैव मैथुनञ्चापि वर्जयेत् ॥
स्वादुशीतजलं मद्यं शुचिस्फटिकनिर्म्मलम् ।

शरच्चन्द्रांशुनिर्द्धौतमगस्त्योदयनिर्व्विषम् ॥
प्रसन्नत्वाच्च सलिलं सर्व्वमेव तदा हितम् ।
सचन्दनं वा कर्पूरं वासश्चामलिनं लघु ॥
भजेच्च शारदं माल्यं सीधोः पानञ्च युक्तितः ।
पित्तप्रशमनं यच्च तच्च सर्व्वं समाचरेत् ॥
हेमन्तः शीतलो रूक्षो मन्दसूर्य्योऽनिलाकुलः ।
ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ॥
कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः ।
रसमुच्छोषयत्याशु तस्मात् स्निग्धं तदा हितम् ।
हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् ।
ससर्पिस्तैलमहिमसशनं हितमुच्यते ॥
तीक्ष्णान्यपि च पानानि पिबेदगुरुभूषितः ।
तैलाभ्यक्तः सुखोष्णे च वारिकोष्ठेऽवगाहयेत् ॥
साङ्गारयाने महति कौशेयास्तरणास्तृते ।
शयीत शयने वापि हृतो गर्भगृहोदरे ।
स्त्रीःस्निग्धागुरुधूपाढ्याः पीनोरुजघनस्तनीः ॥
प्रकामञ्च निषेवेत मैथुनं तर्पितो नृपः ।
मधुरं तिक्तकटुकमम्लं लवणमेवच ॥
अन्नपानं तिलान् माषान् शाकानि च दधीनि च ।
तथेक्षुविकृतीः शालीन्सुगन्धांश्च नवानपि ॥
प्रसह्यानूपमांसानि क्रव्यादविलशायिनाम् ।
औदकानां प्लवानाञ्च पादिनाञ्चोपजायते ॥
मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम् ।

कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे ॥
एष एव विधिः कार्य्यः शिशिरे समुदाहृतः ।
हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम् ॥
ग्रीष्माग्रादवसन्ते कुपितः कुरुते च गदान् बहून् ।
ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च ॥
वर्जयेद्वमनादीनि कर्म्माण्यपि च कारयेत् ।
षष्टिकान्नं यवान् शीतान् मुद्गान् नीवारकोद्रवान् ।
लावादिरिष्किवरसैर्दद्यात् यूषैश्च युक्तितः ।
पटोलनिम्बवार्त्ताकुतिक्तकैश्च हिमात्यये ॥
सेवेन्मध्वासवारिष्टान् सीधुमाध्वीकमासवान् ।
व्यायाममञ्जनं धूमं तीक्ष्णञ्च कवलग्रहम् ॥
सुखाम्बुना च सर्व्वार्थान् सेवेत कुसुमागमे ।
तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् ॥
यवमुद्गमधुप्रायं वसन्ते भोजनं हितम् ।
व्यायामोऽत्र नियुद्धाध्वशिलानिर्व्वातजो हितः ।
उत्सादनं तथास्नानं वनिताः काननानि च ॥
सेवेत निर्झरेञ्चापि हेमन्तोपचितम् कफम् ।
शिरोविरेकवमननिरूहकवलादिभिः ॥
वर्ज्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान् ।
व्यायामसुष्णमायासं मैथुनञ्चातिशोषि च ॥
रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् ।
सरांसि सरितोवापि वनानि रुचिराणि च ॥
चन्दनानि पराद्ध्यानि स्रजः सकमलोत्पलाः ॥

तालवृन्तानिलाहारांस्तथा शीतगृहाणि च ।
घर्मकाले निषेवेत वासांसि सुलघूनि च ॥
शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च ।
पानकानि च सेवेत मन्थांश्चापि सशर्करान् ॥
भोजनं च हितं शीतं सघृतं मधुरद्रवम् ।
शृतेन पयसा रात्रौ शर्करामधुरेण च ॥
प्रत्यग्रकुसुमाकीर्णशयने हर्म्यसंस्थिते ।
शयीत चन्दनार्द्राङ्गःस्पृश्यमानोऽनिलैः सुखैः ॥
तापात्यये हिता नित्यं रसा ये गुरवस्त्रयः ।
पयोमांसरसाः कोष्णास्तैलानि च घृतानि च ॥
बृंहणश्चापि यत्किञ्चिदभिष्यन्दि तथैव च ।
निदाघोपचितञ्चैव प्रकुप्यन्तं समीरणम् ॥
निहन्यादनिलघ्नेन विधिना विधिकोविदः ।
नदीजलं रूक्षमुष्णमुदमन्थं तथातपम् ॥
व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्ज्जयेत् ।
यवषष्टिकगोधूमान्शालींश्चाप्यनवांस्तथा ॥
हर्म्यमध्ये निवाते च भजेच्छय्यां सदूत्तराम् ।
सविषप्राणि विन्मूत्रलालानिष्ठीवनादिभिः ॥
समाप्लुतं तदातोयमान्तरीक्षं विषोपमम् ।
वायुनाविषदुष्टेन प्रावृष्येणचदूषितम् ।
तद्धि सर्वोपयोगेषु तस्मिन्काले विवर्जयेत् ॥
निरूहैर्वस्तिभिश्चान्यैस्तथान्यैर्मारुतापहैः ।
कुपितं शमयेद्वायुं वार्षिकं वा चरेद्विधिम् ॥

ऋतावृतौ य एतेन विधिना वर्त्तते नरः ।
घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन ॥
अत ऊर्द्ध्वं द्वादशाशनप्रविभागान्वक्ष्यामः ।
तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विका
लिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्थाः ।
तृष्णोष्णमददाहार्त्तान् रक्तपित्तविषातुरान् ॥
मूर्च्छार्त्तान् स्त्रीषु च क्षीणान् शीतैरन्नैरुपाचरेत् ।
कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ॥
अक्लिन्नदेहांश्च नरानुष्णैरन्नैरुपाचरेत् ।
वातिकान् रूक्षदेहांश्च व्यायामोपहतांस्तथा ॥
व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ।
मेदसाभिपरीतांस्तु स्थूलान्मेहातुरानपि ॥
कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ।
शुष्कदेहान् पिपासार्त्तान् दुर्बलानपि च द्रवैः ॥
प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहितमेव च ।
एककालं भवेद्देयो दुर्बलाग्निविवृद्धये ॥
समाग्नेय तथाहारो देयः कालमथोभयम् ।
औषधद्वेषिणे देयस्तथौषधसमायुतः ॥
मन्दाग्नये रोगिणेच मात्राहीनः प्रशस्यते ।
यथार्थरक्तश्चाहारो दोषप्रशमनः स्मृतः ॥
अतःपरन्तु स्वस्थानां हृत्त्यर्थं सर्वमेवच ।
द्वादशान्नप्रविचारानेतानेव प्रचक्षते ॥
अतऊर्द्ध्वं दशौषधकालान्वक्ष्यामः ॥

तत्र निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति दशौषधकालाः ॥

तत्र निर्भक्तं केवलमेवौषधमुपयुज्यते ।

वीर्य्याधिकं भवति भेषजमन्नहीनं
हन्यात्तथामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा
ग्लानिं परां समुपयान्ति बलक्षयञ्च ॥

प्राग्भक्तं नाम यत्तु प्राग्भक्तस्योपयुज्यते ।

शीघ्रं विपाकमुपयाति बलं न हिंस्या
दन्नावृतं नच मुहुर्वदनान्निरेति ।
प्राग्भक्तसेवितमथो बलमादधाति
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥

अधोभक्तं नाम यद्भुक्तान्ते पीयते ॥

पीतं यदन्नमुपयुज्य तदूर्द्ध्वकाये
हन्याद्गदान् बहुविधांश्च बलं दधाति ।

मध्येभक्तं नाम यन्मध्ये भक्तस्य पीयते ॥

मध्ये तु पीतमुपहन्त्यविसारिभावा
द्ये मध्यदेहमभिभूय भवन्ति रोगाः ।

अन्तराभक्तं नाम यदन्तरापीयते पूर्व्वापरयोर्भक्तयोः ॥

हृद्यं मनोबलकरन्त्वतिदीपनीयं
पथ्यञ्च सम्भवति चान्तरभक्तमेतत् ॥

सभक्तं नामौषधेषु यत्साध्यते भक्तम् ॥

पथ्यं सभक्तमबलाबलयोर्हि नित्यं

तद्वेपिणामपि तथा शिशुहृद्वयोश्च ।
सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते ॥
दोषे द्विधा प्रतिसृतेतु समुद्गसंज्ञ
माद्यन्तयोर्यदशनस्य निषेव्यते तु ॥
मुहुर्मुहुर्नाम सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते ॥
श्वासे मुहुर्मुहुरतिप्रसृते च कामे
हिक्कावमीषु च वदन्त्युपयोज्यमेतत् ।
ग्रासान्तरं नाम यत्पिण्डव्यामिश्रम् ॥
ग्रासान्तरेषु वितरेद्वमनीयधूमान्
श्वासादिषु प्रथितदृष्टगुणांश्च लेहान् ॥
एवमेते दशौषधकालाः ॥
विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ।
तथान्नश्रद्धायां क्षुदुपगमने कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजा कालः सतु मतः ॥

---

## पञ्चषष्टितमोऽध्यायः ॥

अथातस्तन्त्रयुक्तिनामाध्यायं व्याख्यास्यामः ॥

द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति । तद्यथा ॥ अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशो ऽपवर्गो वाक्यशेषोऽर्थापत्तिर्विपर्ययः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणमतिक्रान्ता-

वेक्षणं संशयो व्याख्यानं स्वसंज्ञानिर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति ॥

अत्रासां तन्त्रयुक्तीनां किं प्रयोजनमित्युच्यते ।
वाक्ययोजनमर्थयोजनञ्च ॥ भवन्तिचात्रश्लोकाः ॥
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ।
स्ववाक्यसिद्धिरपिच क्रियते तन्त्रयुक्तितः ॥
व्यक्तानोक्ताश्च ये ह्यर्था लीना येचाप्यनिर्म्मलाः ।
लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम् ॥
यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥
प्रबोध्यस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः ।

यमर्थमधिकृत्योच्यते तदधिकरणं यथा रसं दोषं वा ॥

येन वाक्यं युज्यते स योगः । यथा ।

तैलं पिवेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यङ्गलगण्डरोगी ॥

सिद्धं पिवेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेवं दूर स्थानामपि पदानामेकीकरणं योगः ॥

योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः। अपरिमिताश्च पदार्थाः॥ यथा स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते तत्र योऽर्थः पूर्व्वापरयोगसिद्धोभवति स ग्रहीतव्यो यथा। वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः ।

कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति। ऋग्वेदादयस्तु वेदास्तत्र पूर्वापरयोगमुपलभ्य विद विचारणे विद विन्दत्येत योश्च धात्वोरनेकार्थयोः प्रयोगः पश्चात्प्रतिपत्तिर्भवति। आयु-

स्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः॥

यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः॥

यथा मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति॥

समासकथनमुद्देशः। यथा। शल्यमिति॥

विस्तरवचनं निर्देशः। तथा। शारीरमागन्तुचेति॥

एवमित्युपदेशः। यथा तथा न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्जयेत् अनेन कारणेनेत्यपदेशः यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति।

प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः॥

यथा देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति।

प्रकृतस्यानागतेन साधनमतिदेशः॥

यथानेनास्य वायुरूर्द्ध्वमुपतिष्ठते तेनोदावर्त्तः स्यादिति॥

अभिव्याप्यापकर्षणमपवर्गः॥

यथाऽस्वेद्या विषोपसृष्टा अन्यत्र कीटविषादिति।

येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः॥

यथा शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि गम्यते पुरुष एवोक्त इति।

यदकीर्त्तितमर्थादापद्यते सार्थापत्तिः।

यथौदनं भक्ष्यइत्युक्तेऽर्थापन्नं भवति नायं पिपासुर्यवागूमिति॥

यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्य्ययः॥

यथा कृशाल्पप्राणभीरवो दुश्चिकित्स्याइत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्याइति ।

प्रकरणान्तरेण समापनं प्रसङ्गः ॥

यथाप्रकारान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः । यथा । महाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्यायां पुनरुक्तं यतोऽभिहितं पञ्च महाभूतशरीरिसमवायः पुरुष इति स खल्वेवं कर्म्मपुरुषश्चिकित्सायामधिकृतः ॥

सर्वत्र यदवधारणेोच्यते स एकान्तः ॥

यथा त्रिवृद्विरेचयति मदनफलं वामयतीति ॥

क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः ॥

यथा केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्य्यं केचिद्विपाकमिति ॥

आक्षेपपूर्व्वकः प्रश्नः पूर्व्वपक्षः यथा कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥

तस्योत्तरं निर्णयः । यथा शरीरं प्रपीड्य पश्चादधोगत्वा वसामेदोमज्जानुविद्धं मूत्रं प्रसृजति वात एवमसाध्या वातजाइति । यथाचोक्तम् ॥ कृत्स्नं शरीरं निःपीड्य मेदोमज्जवसायुतः ।

अधःप्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः ॥

परमतमप्रतिषिद्धमनुमतं यथान्यो ब्रूयात्सप्तरसाइति ।

प्रकरणानुपूर्व्व्याभिहितं विधानम् ॥

यथा सक्थिमर्म्माण्येकादश प्रकरणानुपूर्व्व्याभिहितानि ।

एवं वक्ष्यतीत्यनागतावेक्षणम् ॥

यथाश्लोकस्थाने ब्रूयाच्चिकित्सितेषु वक्ष्यामीति ॥

यत्पूर्व्वमुक्तं तदतिक्रान्तावेक्षणम् ॥

यथाचिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति ।

उभयहेतुदर्शनं संशयः । यथा तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनमप्राणहरमिति ।

तद्वातिशयोपवर्णनं व्याख्यानम्॥ यथेह पञ्चविंशतिकः पुरुषोऽतो व्याख्यायते । अन्येष्वायुर्व्वेदतन्त्रेषु भूतादिप्रसृत्यारभ्य चिन्ता ।

अन्यशास्त्रासामान्या स्वसंज्ञा। यथा मिथुनमिति मधुसर्पिषोर्ग्रहणम्॥

लोके प्रथितमुदाहरणम् । यथोष्णभयाच्छीतमनुधावति ॥

निश्चितं वचनं निर्व्वचनम् । यथायुर्व्विद्यतेऽस्मिन्ननेनवायुर्व्विन्दतीत्यायुर्व्वेदः ॥

दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम् ॥ यथाग्निर्व्वायुना सहितः कोष्ठे वृद्धिङ्गच्छति तथा वातपित्तकफदुष्टो व्रणइति ॥

इदमेव कर्त्तव्यमिति नियोगः । यथापथ्यमेव भोक्तव्यमिति ।

इदञ्चेदञ्चेति समुच्चयः। यथा मांसवर्गे एणहरिणलावतित्तिरिशारङ्गाः प्रधानमिति ॥

इदञ्चेति विकल्पः यथारसौदनः सघृता यवागूर्व्वा ॥

यदनिर्दिष्टं बुद्धिमता तदूह्यम् ॥ यथाभिहितमन्नपानविधौ चतुर्व्विधञ्चान्नमुपदिश्यते ।

भक्ष्यं भोज्यं लेह्यं पेयमेवञ्चतुर्व्विधे वक्तव्ये द्विविधमभिहितमतो ह्यमिति॥ अन्नपाने विशिष्टे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवति किञ्चान्यत्। अन्नेन भक्ष्यमवरुद्धं तन्नसाधर्म्यात् । पेयेन

लेह्यं द्रवसामर्थ्यात् चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति॥

द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारसमाश्रयाः।
मया सम्यग्विनिर्दिष्टाः शब्दन्यायार्थसंश्रुताः॥
योऽत्रैता निधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान्।
स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम्।

---

## षट्षष्टितमोऽध्यायः॥

अथातो दोषभेदविकल्पनामाध्यायं व्याख्यास्यामः॥

अष्टाङ्गायुर्वेदविदं दिवोदासं महामतिम्।
छिन्नशास्त्रार्थसन्देहं सूक्ष्मागाधमिवोदधिम्॥
निवृत्ताह्निकमन्त्रं श्रीमान् सुश्रुतः परिपृच्छति।
द्विषष्टिर्दोषभेदा ये पुरस्तात् परिकीर्त्तिताः॥
कति तत्रैकशो ज्ञेया द्विशो वाप्यथवा त्रिशः।
तस्य तद्वचनं श्रुत्वा संशयच्छिन्नतपाः॥
प्रीतात्मा नृपशार्दूलः सुश्रुतायाह तत्त्वतः।
त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च॥
देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः॥
पुरुषः षोडशकलः प्राणाश्चैकादशैव ये।
रोगाणाञ्च सहस्रं यच्छतं विंशतिरेव च॥
शतस्य पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम्।
व्यासतः कीर्त्तितं तद्धि भिन्नदोषास्त्रयो गुणाः।

द्विषष्टिधा वदन्त्येते भूयिष्ठमिति निश्चयः ।
त्रयएव पृथक् दोषा द्विशो नव समाधिकैः ॥
त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः ।
पञ्चाशदेवन्तु सङ्ख भवन्ति चयमागतैः ॥
क्षीणमध्याधिकक्षीणक्षीणद्वन्द्वैस्तथापरैः ।
द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा ।
मिश्रधातुमलैर्दोषा यान्त्यसंख्येयतां पुनः ॥
तस्मात्प्रसङ्गं संयम्य दोषभेदविकल्पनैः
रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः ॥
भिषक् कर्त्ताथ करणं रसा दोषास्तु कारणम् ।
कार्य्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा ॥
अध्यायानान्तु षट्षष्ट्या ग्रथितार्थपदक्रमम् ।
एवमेतदशेषेण तन्त्रमुत्तरमुत्तमम् ॥
स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम् ।
यथाविधि यथाप्रश्नं भवतां परिकीर्त्तितम् ॥

सहोत्तरं त्वेतदधीत्य सर्व्वं शास्त्रं विधानेन यथोदितेन ।
न हीयतेऽर्थान्मनसोऽभ्युपेताद्देतद्वचो शास्त्रमतीव सत्यम् ॥

इति सौश्रुते आयुर्व्वेदशास्त्रे उत्तरस्थानं समाप्तमिति ॥

समाप्तश्चायं ग्रन्थः ॥